कूर्मपुराण में लिखा है—जो व्यक्ति मोह या आलस्य से बिना देवपूजा किये भोजन करता है वह नरक जाता है और उसका जन्म सूअरयोनि में होता है। इस प्रकार देवपूजा कर माता पिता आदि गुरुओं की पूजा करे। श्रुति के अनुसार माधव कहते हैं—जिसकी देवता में उत्तम भक्ति होती है और जैसी देवता में होती है वैसी ही गुरु में भी होनी चाहिये।

## अथ दिनतृतीयभागे जीविकाविचारः

तृतीयभागे [1]पोष्यवर्गार्थं धनार्जनम्। यजनाध्ययनदानयाजनाध्यापनप्रतिग्रहाः षड् विप्रकर्माणि—

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च [2]प्रतिग्रहः॥

श्रीभागवते—

प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम्।
अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक् तयोः॥ इति।

तथा—वार्ता विचित्रा शालीनयायावरशिलोञ्छनम्।

विचित्रा वार्ता कृष्यादिः, शालीनमयाचितम्, यायावरं प्रत्यहं धान्ययाञ्चा, कणिशोपादानं कणोपादानं च शिलोञ्छनम्, अत्रोत्तरोत्तरा प्रशस्ता।

दिन के तृतीय भाग में पालन-पोषण-योग्य वर्ग के लिये धन का अर्जन करे। यज्ञ, अध्ययन, दान, यज्ञ कराना, पढ़ाना और प्रतिग्रह, ये छ कर्म ब्राह्मण के हैं। छ कर्मों में ब्राह्मण के तीन कर्म जीविका के हैं—याजन, अध्यापन और विशुद्ध कुल से प्रतिग्रह। भागवत में कहा है—प्रतिग्रह को तप, तेज और यश का नाशक मानता हुआ अन्य दो कर्मों ( याजन अध्यापन ) से ही जीविका करे या याजन अध्यापन में दोष-दृष्टि रखता हुआ शिलवृत्ति से जीविका चलावे। ऐसे ही विचित्र वार्ता ( कृषि ) शालीन ( अयाचित ) यायावर ( प्रतिदिन अन्न की याचना ) और शिलोञ्छन कण-कण बीनना और कण का लेना इनमें उत्तरोत्तर प्रशस्त हैं।

शिलोञ्छनं कलौ निषिद्धम्—

[3]कुसूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा।

---

१. दक्षः—'पिता माता गुरुर्भार्या प्रजा दीनाः समाश्रिताः। ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः॥ अन्येऽप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः।' न्यायागत धर्मार्जित और स्वकष्टसम्पादित द्रव्य से कुटुम्बियों का उदर-भरण करना चाहये—'न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धवत् सत्यवादी च गृहस्थोऽपि विमुच्यते॥' पराशरः—'गृहस्थस्तु यदा युक्तो धर्ममेवानुचिन्तयेत्। पोष्यधर्मार्थसिद्ध्यर्थं न्यायवर्ती सुबुद्धिमान्। न्यायोपार्जितवित्तेन कर्तव्यं जीवरक्षणम्। अन्यायेन तु यो जीवेत् सर्वकर्मबहिष्कृतः॥' इति।

२. याज्ञवल्क्यः—'इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च। प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥' इनमें प्रतिग्रह को छोड़कर अवशिष्ट सनियम अवश्य कर्तव्य हैं। गौतमः—'द्विजातीनामध्ययनमिज्यादानं च ब्राह्मणस्याधिकाः, प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमः' इति।

३. कुसूलं कोष्ठकं कुम्भी उष्ट्रिका, कुसूलं च कुम्भी च कुसूलकुम्भ्यौ ताभ्यां परिमितं धान्यं यस्य सः, कुसूलधान्यः कुम्भीधान्यो वा स्यादित्यर्थः। 'कुसूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा' इति याज्ञवल्क्यः।

कुटुम्बपोषणे द्वादशाहपर्याप्तधान्यः कुसूलधान्यः, षडहपर्याप्तधान्यः कुम्भीधान्यः।

न कुर्यात्कृषिवाणिज्यं [1]सेवावृत्तिं तथैव च।
ब्राह्मण्याद्धीयते तेन तस्मात्तानि विवर्जयेत्॥

इत्युक्तेर्वार्तावृत्तिरापद्विषया। पुत्रमांसं वरं भोक्तुं न तु राजप्रतिग्रह इति वाक्यमधर्मवर्तिराजप्रतिग्रहविषयम्।

कलियुग में शिलोञ्छन निषिद्ध है। कुसूलकुम्भीधान्य हो या तीन दिन खाने योग्य अन्न का संग्रह करने वाला हो अथवा आज के लिए रखे कल के लिये देखा जायगा ऐसा हो। कुटुम्ब के भरणार्थ बारह दिन पर्यन्त धान्य का संग्रह करनेवाला कुसूलधान्य कहलाता है। छ दिन के योग्य धान्य का संग्रह करने वाला कुम्भीधान्य कहलाता है। कृषि, वाणिज्य उसी प्रकार सेवा वृत्ति नहीं करे, क्योंकि इससे ब्राह्मणत्व से हीन होता है इसलिये इसका वर्जन करे। इस वचन से वार्ता वृत्ति आपत्ति समय के लिये है। पुत्र का मांसखाना श्रेष्ठ है किन्तु राजा का प्रतिग्रह श्रेष्ठ नहीं है, यह वाक्य अधर्मी राजा का प्रतिग्रह विषयक है।

## अथ आपद्वृत्तिः पक्वान्नभिक्षा च

वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतश्चायाज्ययाजनशूद्रप्रति ग्रहादिनापि पोषणीया इत्यप्यापदि। शाकपयोदधिपुष्पजलकुशभूमयः कुलटाषण्ढपतितभिन्नात् नीचादप्ययाचितप्राप्तग्राह्याः।

ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः।
अध्वगः क्षीणवृत्तिश्च षट् पक्वान्नस्य भिक्षुकाः॥

शूद्रस्य [2]द्विजशुश्रूषावृत्तिः। आपदि कृष्यादिः।

वृद्ध माता-पिता, पतिव्रता स्त्री, बालक पुत्र भी अयाज्ययाजन और शूद्र के प्रतिग्रह आदि से, भी पालन के योग्य हैं, यह भी वचन आपत् समय का है। साग, दूध, दही, पुष्प, बल, कुश, भूमि कुलटा तथा नपुंसक और पतित से भिन्न नीच से भी बिना मांगे मिलने पर ग्राह्य है। ब्रह्मचारी, संन्यासी, गुरु, पोषक, विद्यार्थी, राही, नष्ट वृत्ति, ये छ पक्वान्न के भक्षक हैं। शूद्र की द्विज-शुश्रूषा वृत्ति है। आपत्ति में खेती आदि है।

## अथ दिनचतुर्थभागे स्नानम्

चतुर्थभागे मध्याह्नस्नानम्। प्रातर्गोमयस्नानम्। मध्याह्ने मृत्तिकास्नानम्।

---

१. सेवा का तात्पर्य है वेतन लेकर परिचर्या (टहल) करना, इसे मनु ने निन्द्य बतलाया है—'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्।' आपत्ति काल में मनु ने सेवा आदि को विहित बतलाया है—'विद्याः शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः। गिरिर्भैक्षं कुसीदं च दश जीवन हेतवः॥' याज्ञवल्क्यः—'आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः। न लिप्येतैनसा विप्रो ज्वलनार्कसमा हि सः॥ कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः। सेवानूपं नृपो भैक्षमापत्तौ जीवनानि तु॥' इति।

२. मनुः—'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते।' जब द्विजों की शुश्रूषा से जीवन-यापन में कठिनाई हो तो देवलोक्त कृष्यादि कर्म करे—'शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलत्रादिपोषणं कर्षणपशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्यगीतवेणुवीणामुरजमृदङ्गवादनादीनि।' इति।

अनयोर्विधिः प्रायश्चित्ते उक्तः। शेषविधिः प्रातःस्नानवत्। ब्रह्मयज्ञाङ्गतर्पणात्प्राग् वस्त्रं न निष्पीड्यमिति विशेषः। ततो धृतपुण्ड्रो मध्याह्नसंध्यां कुर्यात्।

### अथ ऋग्वेदिनां मध्याह्नसन्ध्या

अध्यर्धयामादासायं संध्या माध्याह्निकीष्यते। तत्र विशेषः—सूर्यश्चेति स्थाने आपः पुनन्त्विति मन्त्राचमनम्। आपः पुनन्त्वित्यस्य नारायणयाज्ञवल्क्य आपः पृथिवीब्राह्मणस्पतिरष्टिः मन्त्राचमने विनियोगः।

ॐआपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्॥
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापो सतां च प्रतिग्रहꣳस्वाहा॥ इति पिबेत्।

चौथे भाग में मध्याह्न स्नान करे। प्रातः गोबर लगा कर मध्याह्न में मिट्टी लगा कर स्नान करे, इन दोनों की विधि प्रायश्चित्त में कही है। शेष विधि प्रातः स्नान की तरह है। ब्रह्मयज्ञांग तर्पण के पहिले वस्त्र को नहीं निचोड़ना चाहिये, इतना विशेष है। तदनन्तर पुण्ड्र धारण कर मध्याह्न सन्ध्या करे। आधे पहर से सायंकाल तक माध्याह्निकी सन्ध्या इष्ट है। उसमें विशेष यह है– 'सूर्यश्च' इस मन्त्र के स्थान में 'आपः पुनन्तु' इस मन्त्र से आचमन करे। 'आपः पुनन्तु' इस मन्त्र का नारायण याज्ञवल्क्य ऋषि, आपः पृथिवी ब्रह्मणस्पति देवता, रष्टि छन्द, यह मन्त्राचमन का विनियोग है। 'ॐ आपः पुनन्तु पृथिवीं पृथिवी' इत्यादि मन्त्र से आचमन करे।

अघमर्षणान्ते तिष्ठन् हंसः शुचिषदित्यस्य गौतमः सूर्यो जगती सूर्यार्घ्यदाने विनियोगः। ॐ हंसः शुचिषत्० एकार्घ्यम् अर्घ्यान्ते उपस्थानम्। ऊर्ध्वबाहुः उदुत्यमिति त्रयोदशर्चस्य प्रस्कण्वः सूर्यो गायत्री अन्त्याश्चतस्रोऽनुष्टुभः सूर्योपस्थाने०। केचिच्चित्रं देवानामिति षड्भिरप्युपतिष्ठन्ते। शेषमुपस्थानवर्ज्यं प्रातःसंध्यावत्। रात्रौ मध्याह्नसंध्यायाम् आकृष्णेनेत्यर्घ्यदानम्। गायत्र्या प्रायश्चित्तार्थं द्वितीयं दत्त्वा हविष्पान्तमिति पञ्चर्चोपस्थानम्।

अघमर्षण के अन्त में खड़ा होकर 'हंसः शुचिषत्' इस मन्त्र का गौतम ऋषि, सूर्य देवता, जगती छन्द, सूर्यार्घ्य दान में इसका विनियोग है। 'ॐ हंसः शुचिषत्' इससे एक अर्घ्य दे। अर्घ्य के अन्त में ऊपर हाथ उठाकर उपस्थान करे। 'उदुत्यं' इन तेरह ऋचाओं का प्रस्कण्व ऋषि, सूर्य देवता, गायत्री छन्द और अन्त की चार ऋचाओं का अनुष्टुप् छन्द है, सूर्योपस्थान में इसका विनियोग है। कुछ लोग 'चित्रं देवानां' इन छ ऋचाओं से भी उपस्थान करते हैं। बाकी उपस्थान को छोड़कर प्रातः सन्ध्या के सदृश है। रात्रि में मध्याह्न सन्ध्या करने पर 'आकृष्णेन' इस मन्त्र से अर्घ्यदान करे। प्रायश्चित्त के लिये गायत्री से दूसरा अर्घ्य देकर 'हविष्पान्तम्' इन पांच ऋचाओं से उपस्थान करे।

### अथ तैत्तिरीयाणां मध्याह्नसंध्या

आपः पुनन्त्वित्यपः पीत्वा दधिक्राव्णेति पूर्ववत्कृत्वा सूर्यायैकमर्घ्यं गायत्र्या

दत्त्वोर्ध्वबाहुस्तिष्ठन्नुपतिष्ठेत्। ॐ उद्वयं० ॐ उदुत्यं जातवेदसं० ॐ चित्रं देवानां० ॐ तच्चक्षुर्देवहितं पुरस्तात्० ॐ य उदगान्महतो०। ततो जपादि उपस्थानवर्ज्यं प्राग्वत्।

तैत्तिरीयों का—'आपः पुनन्तु' इस मन्त्र से आचमन कर 'दधिक्राव्ण' इस मन्त्र से पहिले की तरह करके सूर्य को गायत्री से एक अर्घ्य देकर ऊपर की ओर हाथ उठाकर खड़ा होकर उपस्थान करे। मंत्र ये हैं—'ॐ उद्वयं' 'ॐ उदुत्यं जातवेदसं०' 'ॐ चित्रं देवानां०' 'ॐ तच्चक्षुर्देवहितं पुरस्तात्०' 'ॐ य उदगान् महतो०'। इसके बाद उपस्थान को छोड़कर जप आदि पूर्ववत् है।

### अथ कातीयानां मध्याह्नसन्ध्या

आपः पुनन्त्विति प्राग्वत्। गायत्र्या एकार्घ्यम्। उद्वयमित्यादिचतुर्भिरुपस्थानम्। जपान्ते शक्तस्य पूर्वोक्तैर्विभ्राडित्यनुवाकादिभिरुपस्थानम्। शेषं प्राग्वत्।

कातीयों का—'आपः पुनन्तु' इस मन्त्र से पूर्ववत्, गायत्री से एक अर्घ्य तथा 'उद्वयं' इत्यादि चार मन्त्रों से उपस्थान है। जप के अन्त में शक्त पुरुष को पहिले कहे हुए 'विभ्राट्' इस अनुवाक आदि से उपस्थान करना चाहिये। शेष पूर्ववत् है।

### अथ ब्रह्मयज्ञः

'स च प्रातर्होमोत्तरं वा मध्याह्नसंध्योत्तरं वा वैश्वदेवान्ते वा सकृदेव कार्यः। भट्टोजिदीक्षितीये तु प्रातराहुतेरनन्तरकालः शाखान्तरविषयः। आश्वलायनैस्तु मध्याह्नसंध्योत्तरमेवानुष्ठेय[2] इत्युक्तम्।

ब्रह्मयज्ञ—प्रातः होम या मध्याह्न सन्ध्या के बाद अथवा वैश्वदेव के अन्त में एक बार करे। भट्टोजिदीक्षित के ग्रन्थ में तो प्रातः आहुति के अनन्तर काल कहा है, वह दूसरी शाखा वालों के लिये है। आश्वलायनों का तो मध्याह्न सन्ध्या के बाद ही अनुष्ठेय है, यह कहा है।

### अथ बह्वृचां ब्रह्मयज्ञः

शुष्कं वासस्तदभावे आर्द्रं त्रिर्विधुन्वन् परिधायाचम्य प्राणानायम्य 'श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञं करिष्ये, तदङ्गतया देवर्ष्याचार्यतर्पणं करिष्ये' मृतपितृकैः 'पितृतर्पणं च करिष्ये' इति संकल्प्य दर्भेषु दर्भपाणिः प्राङ्मुख एवोपविश्य वामजङ्घोपरि मूलदेशे दक्षिणपादं निधायाथ वा वामपादाङ्गुष्ठोपरि दक्षिणपादाङ्गुष्ठं निधायैवमुपस्थं कृत्वा दक्षिणजानुस्थे वामे करे उत्ताने प्रागग्राङ्गुलौ प्रागग्रे

---

१. ब्रह्मयज्ञ प्रातः होम के पश्चात् तर्पण के पूर्व अथवा वैश्वदेव के अन्त में करना चाहिये। बृहस्पतिः—'यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः। स चार्वाक् तर्पणात् कार्यः पश्चाद्वा प्रातराहुतेः॥ वैश्वदेवावसाने वा नान्यत्र ह्यनिमित्तकात्। याज्ञवल्क्यः—'हुत्वाऽग्नीन् सूर्यदैवत्यान् जपेन्मन्त्रान् समाहितः। वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च॥ वेदाथर्वपुराणानि सेतिहासानि शक्तितः। जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत्॥' इति।

२. आश्वलायनः—'स्वगृह्यविधिना कृत्वा ब्रह्मयज्ञं पुरो द्विजः। स्वाध्यायतर्पणाभ्यां च गृहमेत्याचरेत् परान्॥' इति।

द्वे पवित्रे धृत्वा दक्षिणकरेण तथैव संपुटीकृत्य द्यावापृथिव्योः संधिमीक्षमाणो निमीलिताक्षो वा ॐकारव्याहृतीः सकृदुच्चार्य गायत्रीं पच्छोर्धर्चशः सर्वामनवानामिति त्रिर्जपेत्।

सूखा वस्त्र इसके अभाव में गीला वस्त्र तीन बार फटकार के पहिनकर आचमन और प्राणायाम करके 'श्री परमेश्वर की प्रीति के लिये ब्रह्मयज्ञ करूँगा' उसका अंगभूत देवता ऋषि और आचार्य का तर्पण करूँगा' तथा जिनके पिता मर गये हैं वे 'और पितृतर्पण करूँगा' ऐसा संकल्प कर कुशों पर पूरब मुख ही बैठकर हाथ में कुश लेकर बायीं जंघा के ऊपर मूल देश में दाहिना पैर रखकर अथवा बायें पैर के अंगूठे के ऊपर दक्षिण पैर के अंगूठे को रखकर इस प्रकार उपस्थ को करके दक्षिण जानु पर उत्तान बायां हाथ करके पूर्वाग्र अंगुली में पूरब की ओर अग्रभाग वाले दो पवित्र धारण कर दाहिने हाथ से उसी प्रकार संपुट करके द्यावापृथिवी की संधि को देखते हुए अथवा आखें मूंदकर 'ॐकार व्याहृति' का एक बार उच्चारण कर गायत्री का एक-एक पाद आधी ऋचा तदनन्तर सब को 'अनवानाम्' इस मन्त्र को तीन बार जपे।

ततोग्निमीळ इति सूक्तं पठित्वा संहिताब्राह्मणषडङ्गानि। एकं समाप्यापरमिति अध्यायं सूक्तमृचं वा यथाशक्ति क्रमशः[1]पठेत्। मन्त्रब्राह्मणादीनि भागशः सर्वाणि यथाशक्ति प्रतिदिनं पठेदिति केचित्। एवं चतुर्वेदाध्यायी क्रमशश्चतुर्वेदान् भागशः सर्वानेव वा ऋग्वेदपूर्वकान् पठेत्। एकैकशाखाध्यायी तु स्वशाखामेव। शाखाध्ययनाभावे सूक्तमृचं वा पठित्वैकं यजुः साम चोपनिषदश्चेतिहासपुराणादींश्च पठेत्[2]।

तदनन्तर 'अग्निमीडे' इस सूक्त को पढ़कर संहिता, ब्राह्मण और षडंगों में एक को समाप्त कर दूसरे अध्याय अथवा ऋचा को यथाशक्ति क्रमशः पढ़े। कोई कहते हैं—मन्त्र ब्राह्मण आदि को भागशः सबको यथाशक्ति प्रतिदिन पढ़े। इसी प्रकार चारो वेद का पढ़ने वाला क्रमशः चारो वेदों को अंशतः या सम्पूर्ण को ऋग्वेदपूर्वक पढ़े। एक एक शाखा के पढ़ने वाले तो अपनी शाखा को ही पढ़ें। शाखाध्ययन के अभाव में सूक्त या ऋचा को पढ़कर एक यजुः, साम, उपनिषदों और इतिहास पुराण आदि को पढ़े।

पुरुषसूक्तमुक्त्वा नमो ब्रह्मणे नमो अस्त्वग्नय इति ऋचं त्रिः पठेत्। नात्र ऋष्यादिस्मरणम्। विद्युदसीत्यादेराद्यन्ते पाठस्तैत्तिरीयविषयः। उपविश्य पाठाशक्तस्तिष्ठन् व्रजन् शयानो वा पठेदित्याश्वलायनः। अनध्यायेष्वल्पं पठेत्।

पुरुषसूक्त कहकर 'नमो ब्रह्मणे नमो अस्त्वग्नय' इस ऋचा को तीन बार पढ़े। यहां ऋषि आदि के स्मरण की आवश्यकता नहीं है। 'विद्युदसि' इस मन्त्र का आदि अन्त में पढ़ना तैत्तिरीयों के लिये है। बैठकर पाठ करने में अशक्त पुरुष खड़ा होकर बैठकर चलता हुआ अथवा सोता हुआ पढ़े, ऐसा आश्वलायन का मत है। अनध्यायों में थोड़ा पढ़े।

---

१. याज्ञवल्क्यः—'यं यं क्रतुमधीतेऽसौ तस्य तस्याप्नुयात् फलम्।' अर्थात् जिस-जिस याग का प्रतिपादक वेद के एकदेश का प्रतिदिन स्वाध्याय करता है उस-उस याग का फल पाता है। 'नास्ति नित्येष्वनध्यायः' इस वचनसे इसमें अनध्याय नहीं है।

१. याज्ञवल्क्यः—'वेदाथर्वपुराणानि सेतिहासानि शक्तितः। जपयज्ञप्रसिद्ध्यर्थं विद्यां चात्मिकीं जपेत्॥'इति।

## अथ तर्पणम्

तत्र[1] सव्येन देवतीर्थेन दर्भाग्रैर्देवतर्पणम्। तद्यथा—साक्षतजलैर्देवर्षितर्पणम्। सतिलजलैराचार्यपितृतर्पणम्। प्रजापतिस्तृप्यतु ब्रह्मा तृप्य० वेदास्तृप्यन्तु देवास्तृप्यन्तु ऋषयस्तृप्यन्तु सर्वाणिच्छन्दांसि तृप्यन्तु ॐकारस्तृप्य० वषट्कारस्तृप्यं० व्याहृतयस्तृप्यं० सावित्री तृप्य० यज्ञास्तृप्यं० द्यावापृथिवी तृप्यताम् अन्तरिक्षं तृप्य० अहोरात्राणि तृप्यंतु सांख्यास्तृप्यं० सिद्धास्तृप्यं० समुद्रास्तृप्यं० नद्यस्तृप्यं० गिरयस्तृप्यं० क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसस्तृप्यं० नागास्तृप्यं० वयांसि तृप्यं० गावस्तृप्यं० साध्यास्तृप्यं० विप्रास्तृप्यं० यक्षास्तृप्यं० रक्षांसि तृप्यं० भूतानि तृप्यं० एवमन्तानि तृप्यंतु० २९।

उसमें देवतर्पण सव्य, देवतीर्थ और कुश के अग्रभाग से करे। वह इस प्रकार है—अक्षत और जल से देवर्षि तर्पण करे। तिलसहित जल से आचार्य तथा पितृ का तर्पण करे। प्रजापतिस्तृप्यतु, ब्रह्मा तृप्यतु, इत्यादि २९ देवताओं आदि के नामों के तर्पण के वाक्य मूल में पढ़ें।

अथ ऋषयः—निवीती कनिष्ठिकामूलेन दर्भमध्यैः—शर्तर्चिनस्तृप्यं० माध्यमास्तृप्यं० गृत्समदस्तृप्य० विश्वामित्रस्तृप्य० वामदेवस्तृप्य० अत्रिस्तृप्य० भरद्वाजस्तृप्य० वसिष्ठस्तृप्य० प्रगाथास्तृप्यं पावमान्यस्तृप्यं० क्षुद्रसूक्तास्तृप्यं० महासूक्तास्तृप्यं० १२ एकत्वद्वित्वबहुत्वेषु तृप्यतु तृप्यतां तृप्यंतु इति यथायथं वदेत्।

गले में यज्ञोपवीत करके कनिष्ठिका अंगुली के मूल में कुश रखकर शतर्चिनस्तृप्यन्तु, माध्यमास्तृप्यन्तु, इत्यादि मूलोक्त ऋषियों के १२ नामों में एकवचन द्विवचन और बहुवचन में 'तृप्यतु, तृप्यताम्, तृप्यन्तु' इस प्रकार जहां जैसा उचित हो कहे।

अथ प्राचीनावीती पितृतीर्थेन द्विगुणीकृतदर्भमूलाग्रैः सुमन्तुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यंतु जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डुकेयास्तृप्यंतु गर्गीवाचक्नवी तृप्य० वडवाप्रातीथेयी तृप्य० सुलभा मैत्रेयी तृप्य० कहोळं तर्पयामि० कौषीतकं त० महाकौषीतकं त० पैङ्ग्यं त० महापैङ्ग्यं त० सुयज्ञं तर्पया० सांख्यायनं त० ऐतरेयं त० महैतरेयं त० शाकलं त० बाष्कलं त० सुजातवक्त्रं त० औदवाहिं त० महौदवाहिं त० सौजामिं त० शौनकं त० आश्वलायनं त० ये चान्ये आचार्यास्ते

---

१ यज्ञोपवीतका सव्य उपवीति, अपसव्य प्राचीनावीती और माला की तरह रहना निवीती कहलाता है। मनुः—'उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीन आवीती निवीती कण्ठसज्जने॥' द्विज दाहिना हाथ उठाकर पहने गये अर्थात् बायें कंधे के ऊपर से दाहिनी कांख के नीचे लटकते हुये यज्ञोपवीत को 'उपवीति' (सव्य) बायां हाथ उठाकर पहने गये याने दाहिने कंधे के ऊपर से बांये कांख के नीचे लटकते हुये यज्ञोपवीत को 'प्राचीनावीती' (अपसव्य) और कंठ में माला की तरह लटकते हुये यज्ञोपवीत को 'निवीती' कहते हैं।

सर्वे तृप्यंतु २३ । ततो मृतपितृकः '[1]पितृत्रयीं मातृत्रयीं सपत्नीकमातामहत्रयीं पत्न्याद्येकोद्दिष्टगणांश्च महालयप्रकरणोक्तान्मृतांस्तर्पयेत् ।

अत्र अपसव्य होकर पितृतीर्थ से दुगुने किये कुशमूलाग्र से सुमन्तु-वैशंपायन-पैलसूत्र-भाष्य-भारत-महाभारत-धर्माचार्याःतृप्यन्तु इत्यादि २३ नामों के तर्पणवाक्य मूल में पढ़ें । इसके बाद जिसके पिता मर गये हों पितृत्रयी (पिता, पितामह, प्रपितामह) मातृत्रयी (माता, पितामही, प्रपितामही) सपत्नीक मातामहत्रयी ( नाना परनाना, वृद्ध परनाना सपत्नीक ) पत्नी आदि एकोद्दिष्ट गण महालय प्रकरण में कहे हुए मृतकों का तर्पण करे ।

## अथ तर्पणादिविचारः

सम्बन्धं[2] प्रथमं ब्रूयान्नामगोत्रमनन्तरम् ।
पश्चाद्रूपं विजानीयात्क्रम एष सनातनः ॥

[3]एकैकमञ्जलिं देवेभ्यो द्वौ द्वौ ऋषिभ्यस्त्रींस्त्रीन्पितृभ्य इति संख्याविशेषः आश्वलायनानां वैकल्पिकः, तत्सूत्रे संख्यानुक्तेः । येषां सूत्रे संख्योक्तिस्तेषां नित्य इति माधवः । मातृत्रयीभिन्नस्त्रीभ्य एकाञ्जलिः ।

तर्पण में पहले सम्बन्ध उसके बाद नाम और गोत्र कहे । इसके पीछे रूप का ज्ञान करे यह सनातन क्रम है । एक एक अंजुलि देवताओं को, दो दो ऋषियों को, तीन तीन पितरों को, यह संख्या विशेष आश्वलायनों के लिये वैकल्पिक है क्योंकि उनके सूत्र में संख्या नहीं कही गई है । जिनके सूत्र में संख्या कही गई है उनका नित्य है, ऐसा माधव कहते हैं । मातृत्रयी से भिन्न स्त्रियों को एक अंजुलि दे ।

एतावद्भिस्तत्तत्तर्पणाशक्तौ—

आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।

---

१. सङ्ग्रहे—'तातास्म्बात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादि तातजननी स्वभ्रातरः सस्त्रियः । तातास्म्बात्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥' अर्थात् पित्रादित्रय मात्रादित्रय सौतेली माता, सस्त्रीक मातामहादित्रय, स्त्री पुत्र, अविवाहित पुत्री, स्त्रीसहित पितामही का भाई, पिता माता की सन्तान और पतिसहित अपनी बहन, श्वशुर-गुरु-शिष्य और आप्त, ये महालय-तीर्थ और तर्पण में पितर हैं । स्मृत्यन्तर में सप्तगोत्र हैं—'पितुर्मातुश्च भार्याया भगिन्या दुहितुस्तथा । पितृष्वसामातृष्वस्रोर्गोत्राणां सप्तकं स्मृतम् ॥' इति ।

२. वसिष्ठोऽपि—'सम्बन्धमनुकीर्त्यैव नामगोत्रमनन्तरम् । वस्वादिरूपं सङ्कीर्त्य स्वधाकारेण तर्पयेत् ॥' बौधायनः—'शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥ चतुर्णामपि वर्णानां गोत्रत्वे पितृगोत्रता । पितृगोत्रं कुमारीणामूढानां भर्तृगोत्रता ॥' वृद्धयाज्ञवल्क्यः—'अन्वारम्भेन सव्येन पाणिना दक्षिणेन तु । सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत् ॥ तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना । आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशांश्च तान् ॥ सव्यजानुं तथा स्थाप्य पाणिभ्यां दक्षिणामुखः । तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा ॥' इति ।

३. व्यासोक्त अञ्जलि-दान का विचार—'एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियमेकैकमञ्जलिम् ॥' शाङ्खायनः—'मातृमुख्यास्तु यास्तिस्रस्तासां त्रींस्त्रीन् जलाञ्जलीन् । सपत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जली ॥' इति ।

तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥

इति त्रिस्त्रिर्दद्यात्। ततो—

ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥

इति परिधानवस्त्रं भूमौ निष्पीड्य[1] दद्यात् ।

इतना बड़ा विस्तृत तर्पण करने में अशक्त हो तो 'आ ब्रह्मस्तम्बपर्यन्तं देवर्षि पितृमानवाः तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥' इत्यादि मूलोक्त श्लोक पढकर तीन तीन बार दे। तदनन्तर 'ये के चास्मत्कुले जाता' इत्यादि से पहिनने के वस्त्र को भूमि में निचोड़ कर जल दे।

अत्र बह्वृचानां प्राचीनावीती अन्येषां निवीती। इदं गृहे निषिद्धम्। ब्रह्मयज्ञो ग्रामाद्बहिरुदकसमीपे विहितः। ग्रामे मनसाधीयीत। सव्यान्वारब्धदक्षिणेन वा अञ्जलिना वा तर्पणम्। तर्पणं बर्हिषाच्छन्ने स्थले[2] कार्यं न तु जले।

पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्ते न स्थले तु विबर्हिषि ॥
हेमरौप्यताम्रकांस्यमये [3]पात्रे न मृन्मये ।
यत्राशुचिस्थलं तत्र तर्पणं स्यान्नदीजले ॥
अनामिकाधृतं हेम तर्जन्यां रौप्यमेव च ।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः ॥

---

१. याज्ञवल्क्यः—'वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः। भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥' स्मृत्यन्तरे—'वस्त्रं चतुर्गुणीकृत्य पीडयेच्च जलाद्बहिः। वामप्रकोष्ठे निक्षिप्य द्विराचम्य शुचिर्भवेत् ॥' 'यावद्देवानृषींश्चैव पितृंश्चापि न तर्पयेत्। तावन्न पीडयेद् वस्त्रं येन स्नातो भवेन्नरः ॥' 'निष्पीडयति यः पूर्वं स्नानवस्त्रमतर्पिताः। निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥ द्वादश्यां पञ्चदश्यां च सङ्क्रान्तौ श्राद्धवासरे। वस्त्रं निष्पीडयेन्नैव न च क्षारेण योजयेत् ॥' इति।

२. हारीतः—'वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि। विधिज्ञस्तर्पणं कुर्यान्न पात्रेषु कदाचन ॥ पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत्। जलपूर्णेऽथवा गर्ते न स्थले तु विबर्हिषि ॥' शङ्खः—'उदके नोदकं दद्यात् पितृभ्यश्च कदाचन। उत्तीर्य च शुचौ देशे कुर्यादुदकतर्पणम् ॥'—

योगियाज्ञवल्क्य तो स्थल या जल में यथेच्छ तर्पण को विहित बतलाया है—'यथा शुचिस्थलं वा स्यादुदके देवताः पितॄन्। तर्पयेच्च यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥' जहां शुचिस्थल उपलब्ध न हो वहां यह वचन चरितार्थ होगा। इसप्रकार भिन्न मतों की एकवाक्यता होगी।

३. मरीचिः—'सौवर्णेन तु पात्रेण ताम्ररूप्यमयेन वा। औदुम्बरेण खड्गेन पितॄणां दत्तमक्षयम् ॥ विना रूप्यसुवर्णेन विना ताम्रमयेन वा। विना तिलैश्च दर्भैश्च पितॄणां नोपतिष्ठते ॥ यावद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄंस्तथा।' इति।

अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् ।
मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥

उद्धृतजलेन[1] पितृतर्पणे तिलान् संमिश्रयेज्जले । अनुद्धृतजलेन तर्पणे वामहस्ते तिला ग्राह्याः ।

इसमें बहृचों को अपसव्य से और दूसरों को गले में यज्ञोपवीत को माला की तरह करके तर्पण करना चाहिये । यह तर्पण घर में करना निषिद्ध है । ब्रह्मयज्ञ गांव से बाहर जल के समीप विहित है । ग्राम में मन से पढ़े । सव्य से आरम्भ कर या अंजलि से तर्पण करे । तर्पण, कुश बिछाये हुए जगह में करे जल में नहीं । अथवा पात्र से जल लेकर दूसरे शुभ पात्र में छोड़े । अथवा जलपूर्ण गड्ढे में छोड़े । बिना कुश के स्थल में न छोड़े । सोना, चांदी, तामा और कांस्यपात्र में तर्पण करे, मिट्टी के पात्र में नहीं । जहां अपवित्र स्थल हो वहां नदी-जल में तर्पण करे । अनामिका में सुवर्ण, तर्जनी में चांदी, कनिष्ठिका में खड्ग के धारण से मनुष्य पवित्र होता है । अंगुलियों के अग्रभाग में दैवतीर्थ, छोटी दोनों अंगुलियों के मूल में काय ( प्रजापति ) तीर्थ, अंगुष्ठ और अंगुलियों के मध्य में पितृ तीर्थ और अंगुष्ठ के मूल में तो ब्राह्म तीर्थ है । खींचे हुए जल से पितृतर्पण में जल में तिल मिला ले । बिना खींचे हुए जल से तर्पण में बायें हाथ में तिल रखे ।

### अथ तिलतर्पणनिषेधः

तिलतर्पणं गृहे निषिद्धम् । रविभृगुवारे सप्तमीनन्दासु कृत्तिकामघाभरणीषु मन्वादौ युगादौ च पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् । पित्रोः श्राद्धदिने नित्यतर्पणे तिला[2] निषिद्धाः । पर्वदिने[3] निषिद्धतिथिवारादिष्वपि तिलतर्पणम् ।

---

१ याज्ञवल्क्यः—'यद्युद्धृतं निषिञ्चेत्तु तिलान् सम्मिश्रयेज्जले । अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥ शुक्लैस्तु तर्पयेद्देवान् मनुष्याञ्छवलैस्तिलैः । पितॄंस्तु तर्पयेत् कृष्णैस्तर्पणे सर्वदा द्विजः ॥' इति ।

२. मरीचिः—'सप्तम्यां रविवारे च गृहे जन्मदिने तथा । निशासन्ध्यासु पुत्रार्थी न कुर्यात्तिलतर्पणम् ॥' गार्ग्यः—'भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च । पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥' बौधायनः—'विवाहे चोपनयने चौले सति यथाक्रमम् । वर्षमर्द्धं तदर्द्धं च नेत्येके तिलतर्पणम् ॥' वह्निपुराणे—'दर्शश्राद्धं गयाश्राद्धं तिलैस्तर्पणमेव च । न जीवत्पितृको भूप कुर्यात् कृत्वाऽवमाप्नुयात् ॥' कालादर्शे—'मन्वाद्यासु युगाद्यासु प्रदत्तः सतिलोऽञ्जलिः । सहस्रवार्षिकीं तृप्तिं पितॄणामावहेत्सदा ॥' अपि च—'आसु तोयमपि स्नात्वा तिलदर्भविमिश्रितम् । पितॄनुद्दिश्य यो दद्यात् स गतिं परमां लभेत् ॥'—

अतः संग्रह का—'नन्दायां भार्गवदिने कृत्तिकासु मघासु च । भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥ अयने द्वितये चैव मन्वादिषु युगादिषु । पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥' यह वचन चिन्त्य है ।

३. कात्यायनः—'उपरागे पितृश्राद्धे पातेऽमायां च सङ्क्रमे । निषेधेऽपीह सर्वत्र तिलैस्तर्पणमाचरेत् ॥' गर्गः—'कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् । पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ॥' स्नानसूत्रभाष्ये—'कठाः काण्वाश्च जाबाला ये च वाजसनेयिनः । निषिद्धेऽपि दिने कुर्युस्तर्पणं तिलमिश्रितम् ॥' पृथ्वीचन्द्रोदये—'तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके । निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥' याज्ञवल्क्यः—'तिलानामप्यभावे तु सुवर्णरजतान्वितम् । तदभावे निषिञ्चेत्तु दर्भैस्तोयैर्न चान्यथा ॥' इति ।

विकिरे पिण्डदाने च तर्पणे स्नानकर्मणि ।
आचान्तः सम्प्रकुर्वीत दर्भसंत्याजनं बुधः ॥ दर्भत्यागमन्त्रस्तु—
येषां पिता न च भ्राता न पुत्रो नान्यगोत्रिणः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैस्तथा ॥ इति ।

तिल-तर्पण घर में निषिद्ध है । रवि-शुक्रवार में, सप्तमी और नन्दातिथियों में, कृत्तिका मघा और भरणी नक्षत्रों में, मन्वादि और युगादि तिथियों में, पिण्डदान मृत्तिका से स्नान और तिल-तर्पण न करे । माता पिता के श्राद्धदिन और तर्पण में तिल निषिद्ध है । पर्वदिन और निषिद्ध-तिथि-वारादि में भी तिल-तर्पण निषिद्ध है । विकिर, पिण्डदान, तर्पण और स्नान में आचमन करके कुश का त्याग करे । कुश त्याग का मन्त्र तो 'येषां पिता न च भ्राता' इत्यादि मूल में देखें ।

## अथ हिरण्यकेशीयब्रह्मयज्ञस्तर्पणं च

अथ हिरण्यकेशीयानां संकल्पादित्रिर्गायत्रीजपान्तं प्राग्वत् । तत इषेत्वोर्जेत्वेति अध्यायमनुवाकं वा यथाशक्ति पठित्वा ऋचं सामषडङ्गेतिहासपुराणादीनि[1] पठित्वा नमो ब्रह्मण इत्येतया त्रिः परिदधाति ।

हिरण्यकेशियों को संकल्प से लेकर तीन बार गायत्री जप पर्यन्त पूर्ववत् है । तदनन्तर 'इषेत्वोर्जेत्वा' इस अध्याय या अनुवाक को यथाशक्ति पढ़कर सामवेद की ऋचा और षडंग-इतिहास-पुराणादि को पढ़कर 'नमो ब्रह्मणे' इस ऋचा से तीनवार परिधान करे ।

अथ तर्पणम्—तच्च तैत्तिरीयाणां ब्रह्मयज्ञाङ्गं न भवति । तेन ब्रह्मयज्ञोत्तरं व्यवहितकालेऽपि ब्रह्मयज्ञात्प्रागपि भवति । एवं काण्वमाध्यन्दिनामपि । अतो 'देवर्ष्याचार्यपितृतृप्तिद्वारा श्रीपरमेश्वर० देवर्ष्याचार्यपितृतर्पणं करिष्ये' इति पृथगेव संकल्पः ।

वह तर्पण तैत्तिरीयों के ब्रह्मयज्ञ का अंग नहीं होता । इससे ब्रह्मयज्ञ के बाद व्यवहित काल में भी और ब्रह्मयज्ञ के पहिले भी होता है । इसी प्रकार काण्व माध्यन्दिनों का भी । अतः 'देव-ऋषि-आचार्य और पितृतृप्ति द्वारा श्रीपरमेश्वर की प्रसन्नता के लिये देव-ऋषि-आचार्य और पितरों का तर्पण करूँगा' ऐसा अलग ही संकल्प है ।

पूर्ववदेकैकाञ्जलिना देवतर्पणम्—ब्रह्माणं तर्पयामि प्रजापतिं तर्प० बृहस्पतिं० अग्निं० वायुं० सूर्यं० चन्द्रमसं० नक्षत्राणि० इन्द्रꣳराजानं० यमꣳराजानं वरुणꣳराजानं सोमꣳराजानं० वैश्रवणꣳराजानं० वसून्० रुद्रान्० आदित्यान्० विश्वा-

१. याज्ञवल्क्यः—'वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः । इतिहासांस्तथा विद्याः शक्त्याऽधीते हि योऽन्वहम् ॥ मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् । करोति तृप्तिं कुर्याच्च पितृणां मधुसर्पिषा ॥ ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः । यं यं क्रतुमधीते च तस्य तस्याप्नुयात् फलम् ॥' वाकोवाक्यं = प्रश्नोत्तररूपं वेदवाक्यम् , पुराणं = ब्राह्माद्यष्टादशपुराणम् , नाराशंसीः = रुद्रदैवत्यान्मन्त्रान् , गाथिकाः = यज्ञगाथेन्द्रगाथाद्याः, इतिहासान् = महाभारतादीन् , विद्याः = वारुणाद्याः । तर्पणसम्बन्धी विवेचन के अन्यान्य मूलवचन इसके पूर्व सुधाविवृति में अङ्कित देखें ।

न्देवान्० साध्यान्० ऋभून्० भृगून्० मरुतः० अथर्वणः० अग्निरसस्तर्पया-
मीति २३ ।

पहिले की तरह एक एक अंगुलि से देवता का तर्पण करे—ब्रह्माणं तर्पयामि, प्रजापतिं त० इत्यादि २३ नामों के तर्पण वाक्य मूल में पढ़ें ।

निवीती उदङ्मुखः विश्वामित्रं० जमदग्निं० भरद्वाजं गौतमं० अत्रिं० वसिष्ठं० कश्यपं० अरुन्धतीं० अगस्त्यं० कृष्णद्वैपायनं० जातूकर्ण्यं० तरुक्षं० तृणबिन्दुं० वर्मिणं० वरूथिनं० वाजिनं० वाजिश्रवसं त० सत्यश्रवसं त० सुश्रवसं त० सुतश्रवसं० सोमशुष्मायणं० सत्त्ववन्तं० बृहदुक्थं० वामदेवं० वाजिरत्नं० हर्यज्ञायनं० उदमयं० गौतमं० ऋणंजयं० ऋतंजयं० कृतंजयं० धनंजयं० बभ्रुं० त्र्यरुणं० त्रिवर्षं० त्रिधातुं० शिबिं० पराशरं० विष्णुं० रुद्रं० स्कन्दं० काशीश्वरं० ज्वरं० धर्मं० अर्थं० कामं० क्रोधं० वशिष्ठं० इन्द्रं० त्वष्टारं० कर्तारं० धर्तारं० धातारं० मृत्युं० सवितारं० सावित्रीं तर्पं० ऋग्वेदं त० यजुर्वेदं० सामवेदं० अथर्ववेदं० इतिहासपुराणं त० ६१ इति द्वौ द्वावञ्जली ।

कण्ठ में यज्ञोपवीत करके उत्तर मुख बैठकर विश्वामित्रं० जमदग्निं० इत्यादि ६१ नामों से दो दो अंजलि दें । तर्पण-वाक्य मूल में पढ़ें ।

प्राचीनावीती दक्षिणामुखः—वैशम्पायनं० पिलिगुं० तित्तिरं त० उखं त० आत्रेयं पदकारं० कौण्डिण्यं वृत्तिकारं० सूत्रकारान्० सत्याषाढं त० प्रवचनकर्तॄन्० आचार्यान्० ऋषीन्० वानप्रस्थान्० ऊर्ध्वरेतसः० एकपत्नीस्तर्पयामीति १४ त्रींस्त्रीनञ्जलीनिति विशेषः । शेषं पितृतर्पणादिसर्वं प्रागुक्तमेव ।

अपसव्य होकर दक्षिण की ओर मुख करके वैशंपायनं० पिलिंगुं० इत्यादि मूलोक्त १४ नामों से तीन तीन अंजलि दे, इतना विशेष है । शेष पितृ तर्पण आदि सब पहिले कह ही चुके हैं ।

## अथापस्तम्बादीनां तर्पणम्

ब्रह्मादयो ये देवाः तांस्त० सर्वान्देवांस्त० सर्वान्देवगणांस्त० सर्वा देवपत्नीः० सर्वान्पुत्रां० सर्वान्पौत्रांस्त० भूर्देवां० भुवर्देवां० सुवर्देवां० भूर्भुवः सुवर्देवां० कृष्णद्वैपायनादयो ये ऋषयः तानृषीं० सर्वानृषीं० सर्वानृषिगणान्० सर्वा ऋषिपत्नीः० सर्वानृषिपुत्रां० सर्वानृषिपौत्रां० भूर्ऋषी० । एवं सोमः पितृमान्यमोऽङ्गिरस्वानग्निष्वात्ताः० तान्पितॄनित्यादयो दश पितृपर्याया ऊह्याः । एवमन्येषामप्यूह्यम् ।

आपस्तम्बादिकों का ब्रह्मादयो ये देवास्तान्० सर्वान् देवगणान्० इत्यादि भूर्ऋषीन् पर्यन्त नामों से तर्पण करे । इस प्रकार 'सोमः पितृमान् यमोऽङ्गिरस्वान् अग्निष्वात्ताः० तान् पितॄन्' इत्यादि दस पितृपर्यायों की कल्पना करे । एवं अन्य की भी कल्पना करे ।

## अथ कात्यायनानां ब्रह्मयज्ञस्तर्पणं च

प्राङ्मुख आचम्य 'पवित्रे धृत्वा प्राणानायम्य 'श्रीपर०र्थं ब्रह्मयज्ञेन यक्ष्ये' दर्भाञ्जलौ धृत्वा दक्षिणजानौ धृत्वा सूत्रान्तराद्गायत्रीं त्रिरुच्चार्यं इषेत्वेत्यादि आरभ्य संहिता ब्राह्मणं च पूर्वोक्तरीत्या पठेत्। अन्ते उपनिषदितिहासपुराणादि पठित्वा अन्ते[2] ॐ स्वस्तीति वदेत्। सूत्रान्तरोक्तत्वात् नमो ब्रह्मण इति त्रिः पठन्ति केचित्।

कात्यायनों का ब्रह्मयज्ञ—पूर्वाभिमुख बैठ आचमन कर दो पवित्री धारण कर प्राणायाम करके 'श्रीपरमेश्वर की प्रीति के लिये ब्रह्मयज्ञ से पूजन करूंगा'। कुशों की अंजलि और दक्षिण जानु में धारण कर दूसरे सूत्रों के अनुसार तीन बार गायत्री उच्चारण करके 'इषे त्वा' इत्यादि का आरंभ कर संहिता और ब्राह्मण को पहिले की रीति से पढ़े। अन्त में उपनिषत्, इतिहास, पुराण आदि को पढ़कर अन्त में 'स्वस्ति' ऐसा कहे। कोई—दूसरे सूत्रों के कहने से 'नमो ब्रह्मण' इस मन्त्र को तीन बार पढ़ते हैं।

अथ तर्पणम्—एतच्च प्रातः संध्योत्तरं वा मध्याह्ने ब्रह्मयज्ञोत्तरं वा सकृदेव कार्यम्। ब्रह्मयज्ञस्य वैकल्पिकं [3]कालत्रयमुक्तम्। तत्र 'देवर्षिपितृतर्पणं करिष्ये' इति संकल्प्यादौ पूर्वोक्तधर्मेण देवतर्पणम्। भूमौ ताम्रादिपात्रे वा दर्भानास्तीर्य विश्वेदेवास आगतेति देवानावाह्य विश्वेदेवाः शृणुतेममिति जपित्वा त्रीन्प्रागग्रान्[4]द-

---

१. लघुहारीतः—'जपे होमे तथा दाने स्वाध्याये पितृकर्मणि। अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः॥' हारीतः – 'द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद् बुधः।' अन्यत्र—'अनामिकामूलदेशे पवित्रं धारयेद् बुधः।' पवित्र में मार्कण्डेयोक्त दर्भ की संख्या—'चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम्। एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्॥ सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रथितं न वा। चतुर्भिः शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा॥ पैतृके तु त्रयो दर्भा द्वौ दर्भौ नित्यकर्मणि।' हारीतस्मृतिः—'आचामेत् प्रयतो नित्यं पवित्रेण द्विजोत्तमः। नोच्छिष्टस्तु भवेत्तत्र भुक्तोच्छिष्टं विवर्जयेत्॥'—

शारदातिलक में ताम्रादि के पवित्र की निर्माण-विधि यों है—'ताम्रतारसुवर्णानामर्कषोडशखेन्दुभिः। कृता त्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी॥ माषाणां षोडशादूर्ध्वं कुर्याद् हेमपवित्रकम्।' अर्थात् ताम्र के १२ चान्दी के १६ और सुवर्ण के १० भाग से निर्मित यह त्रिशक्ति की अंगूठी (पवित्र) तीव्र दरिद्रता को नाश करती है। केवल सुवर्ण का पवित्र (अंगूठी) सोलह माशे से अधिक का बनावे। कहीं 'कृता त्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी' का 'पुष्यार्करचिता मुद्रा दुःखदारिद्र्यनाशिनी' यह पाठान्तर है।

२. मनुः—'ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रवत्यनोङ्कृतं सर्वं पुरस्ताच्च विशीर्यति॥' अर्थात् वेद के स्वाध्याय में आरम्भ और अन्त में 'ॐ' का उच्चारण करना चाहिये। पूर्व में उसका उच्चारण नहीं करने पर अध्ययन नष्ट हो जाता है और अन्त में उच्चारण नहीं करने पर भी नष्ट हो जाता है।

३. याज्ञवल्क्यः—'स चार्वाक् तर्पणात् कार्यः पश्चाद्वा प्रातराहुतेः। वैश्वदेवावसाने वा नान्यत्र ह्यनिमित्तकात्॥' इति।

४. अग्निपुराणे—'प्रागग्रेषु सुरांस्तृप्येन्मनुष्यांश्चैव मध्यतः। पितॄंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन्॥' दक्षः—'प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान्। उदङ् मनुष्यांस्तृप्येत्तु पितॄन् दक्षिणतस्तथा॥ अग्रैस्तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः। पितॄंस्तु कुशमूलाग्रैर्विधिः कौशो यथाक्रमम्॥' इति।

भन्धृत्वा देवतीर्थेन ओंम् ब्रह्मा तृप्यतां विष्णुस्तृप्य० रुद्र० प्रजापतिः० देवास्तृ० छन्दांसि० वेदा० ऋषयः० पुराणाचार्या० गन्धर्वा० इतराचार्या० संवत्सरः सावयव० देव्यस्तृप्यन्तां० अप्सरसः० देवानुगा० नागा० सागरा० पर्वता० सरित० मनुष्या० यक्षा० रक्षांसि० पिशाचा० सुपर्णा० भूतानि० पशव० वनस्पतय० ओषधय० भूतग्रामश्चतुर्विधस्तृप्यतामिति २९ ।

यह तर्पण—प्रातः सन्ध्या के बाद या मध्याह्न में ब्रह्मयज्ञ के बाद एक बार करे। ब्रह्मयज्ञ का वैकल्पिक काल तीन कहा है। उसमें 'देवता ऋषि पितृ तर्पण करूंगा' ऐसा संकल्प कर आरंभ में पहिले कहे हुए प्रकार से देव-तर्पण करे। भूमि में या तामा आदि के पात्र में कुशों को बिछाकर 'विश्वेदेवास आगत' इस मन्त्र से देवताओं का आवाहन करके 'विश्वेदेवाः श्रृणुतेमम्' इस मन्त्र का जप करके तीन पूर्वाग्र कुशों को रख कर देवतीर्थ से 'ॐ ब्रह्मा तृप्यताम् विष्णुस्तृ०' इत्यादि मूलोक्त २९ नामों से तर्पण करे।

सर्वत्र सप्रणवं[1] प्रथमान्तं नामोच्चार्य तर्पयेत्। सप्तऋषय इति मन्त्रेणर्षीनावाह्य निवीती द्विर्द्विः सनकस्तृप्यतु सनन्दन० सनातन० कपिल० आसुरि० वोढुस्तृ० पञ्चशिख० ७ ।

यहां सर्वत्र प्रणव-सहित प्रथमान्त नाम का उच्चारण कर तर्पण करे। 'सप्त ऋषय' इस मन्त्र से ऋषियों का आवाहन कर कण्ठ में यज्ञोपवीत धारण करके दो दो अंजलि जल दे। सनकस्तृप्यतु सनन्दनः इत्यादि ७ नाम मूल में देखें।

अपसव्यम् उशन्तस्त्वेति पितॄनावाह्य आयन्तु नः पितर इति जपित्वा पितृतीर्थेन त्रिस्त्रिः कव्यवाडनलस्तृप्यताम् सोम० यम० अर्यमा० अग्निष्वात्ताः पितरस्तृप्यन्ताम् सोमपाः पितरः० बर्हिषदः० यमाय नमस्तर्पयामि धर्मराजाय० मृत्यवे० अन्तकाय० वैवस्वताय० कालाय० सर्वभूतक्षयाय० औदुम्बराय० दध्नाय० नीलाय० परमेष्ठिने० वृकोदराय० चित्राय० चित्रगुप्ताय० २१ ।

अपसव्य होकर 'उशन्तस्त्वा' इस मन्त्र से पितरों का आवाहन कर 'आयन्तु नः पितरः' इसको जप कर पितृतीर्थ से तीन तीन अंजलि जल दे। 'कव्यवाडनलः तृप्यतां सोमस्तृ०' इत्यादि चित्रगुप्त पर्यन्त २१ नाम मूल में देखें।

यमतर्पणं वैकल्पिकं, सूत्रे एके इत्युक्तेः। जीवत्पितृकस्य[2] मणिबन्धपर्यन्तमपसव्यं सर्वत्र। ततो मृतपितृकः पित्रादित्रयीं मात्रादित्रयीं च तर्पयित्वा उदी-

---

१. गोभिलः—'बह्वृचा देवपित्रर्षीस्तर्पयन्ति द्वितीयया। कात्यायनानां सर्वत्र तर्पणे प्रथमा मता ॥' कात्यायनानां = वाजसनेयब्राह्मणानाम्। 'ब्रह्माद्यानुपवीती तु देवतीर्थेन तर्पयेत्। निवीती कायतीर्थेन मनुष्यान् सनकादिकान् ॥' इति।

२. जीवन् विद्यमानः पिता जनको यस्य स तस्य जीवत्पितृकस्य मणिबन्धपर्यन्तमपसव्यं विहितम्। 'जीवत्पितृकोऽप्येतान्' इति पारस्करः। मणिबन्धपर्यन्त = कलाई तक। अर्थात् जीवित पिता वाले भी पूर्वोक्त ब्रह्मादि से चित्रगुप्तपर्यन्त का तर्पण करें। जीवत्पितृकव्यक्ति का इनके तर्पण में मणिबन्धपर्यन्त आधा ही अपसव्य कर्तव्य है।

रतामिति नवभिर्ऋग्भिस्तर्पणं जलस्थाने अञ्जलिना धारां निषिञ्चेत्। उदीरतां० अङ्गिरसोनः पितरो० आयन्तु नः० ऊर्जं वहन्तीरमृतं० पितृभ्यः स्वधा नमः० ये चेह० मधुवाता इति तिस्र इति ९ प्रत्यृचं प्रत्येकं कुर्यात् तृप्यध्वमिति च त्रिः सिञ्चेत्।

यम का तर्पण वैकल्पिक है, क्योंकि सूत्र में 'एके' ऐसा कहा है। जिसका पिता जीता हो उसका मणिवन्धपर्यन्त सर्वत्र अपसव्य है। तदनन्तर जिसके पिता मरे हों वह पित्रादित्रयी और मात्रादित्रयी को तर्पण करके 'उदीरता' इन नवों ऋचाओं से जल स्थान में अंजलि से धारा गिरावे। 'उदीरता०' 'अंगिरसो नः पितरो' 'आयन्तु न०ः' 'ऊर्जं वहन्तीरमृतं०' 'पितृभ्यः स्वधा नमः०' 'ये चेह०' और 'मधुव्वाता०' इन तीन प्रत्येक ऋचाओं से प्रत्येक का तर्पण करे और 'तृप्यध्वं' इसे तीन बार कह कर जल गिरावे।

ततो नमो वः पितर इत्यष्टौ यजूंषि पठित्वा मातामहादीनेकोद्दिष्टगणांश्च तर्पयेत्। देवागातु विद इति विसर्जयेत्। स्नानवस्त्रनिष्पीडनोदकदानादि प्राग्वत्। प्रातर्होमोत्तरं देवतार्चनं न कृतं चेच्चतुर्थभागे ब्रह्मयज्ञोत्तरं कार्यम्।

इसके बाद 'नमो वः पितर०' इन आठ यजुर्वेद मन्त्रों को पढ़कर मातामह आदि और एकोद्दिष्ट गणों का तर्पण करे। 'देवागातु विद' इस मन्त्र से विसर्जन करे। स्नान-वस्त्र का निचोड़ना और उदक-दान आदि पूर्ववत् करे। प्रातर्होम के बाद देवार्चन न किया हो तो चतुर्थ भाग में ब्रह्मयज्ञ के बाद करे।

## अथ दिनपञ्चमभागे वैश्वदेवः

वैश्वदेवः प्रकर्तव्यः पञ्चसूनापनुत्तये।
कण्डनी पेषणी चुल्ली जलकुम्भोऽथ मार्जनी॥

इति पञ्च हिंसास्थानानि पञ्च [1]सूनाः। वैश्वदेवस्य प्रातरेव प्रारम्भो न त्व-

१. सूनाः = जीव-हिंसा के स्थान। क्षारलवणरहित पकान्न से बलिवैश्वदेव कर्म करे। मनुः—'पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करी। कण्डनी चोदकुम्भी च तासां पापस्य शान्तये॥ पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्। पञ्चैतान् यो महायज्ञान् हापयति शक्तितः॥ स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते। वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम्॥ आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम्।' अङ्गिराः—'शालाऽग्नौ च पचेदन्नं लौकिके वाऽपि नित्यशः। यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते॥' अत्रिः—'वैदिके लौकिके वाऽपि हुतोच्छिष्टे जले क्षितौ। वैश्वदेवं प्रकुर्वीत पञ्चसूनाऽपनुत्तये॥' बृहत्पाराशरः—'लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात्।' छन्दोगपरिशिष्टे—'यस्मिन्नग्नौ भवेत्पाको वैश्वदेवस्तु तत्र वै।' मनुः—'शुनां च पतितानां च श्वपचां पापरोगिणाम्। वायसानां कृमीणां च शनकैर्निक्षिपेद् भुवि॥' आश्वलायन के—'अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्' इस वचन से वैश्वदेव का होम कात्यायन से भिन्न लोग सायं प्रातः काल में करें।—

गृह्ययज्ञकल्पावलि में वैश्वदेव के पात्र तथा कुण्ड का विचार यों है—'न चुल्ल्यामायसे पात्रे न भूमौ न च खर्परे। वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा॥ षडङ्गुलमथोच्छ्रायं गर्ते च चतुरङ्गुलम्। द्वादशाङ्गुलदीर्घं स्यात्कुण्डं तद्वैश्वदेविकम्॥ अपि ताम्रमयं प्रोक्तं कुण्डमत्र मनीषिभिः।' यज्ञपार्श्वे—'दशाङ्गुलं तु दैर्घ्येण विस्तारे चतुरङ्गुलम्। षडङ्गुलं तु उच्छ्राये मेखला द्व्यङ्गुला मता॥ वृत्तं वा चतुरस्रं वा कुण्डं स्याद् वैश्वदेविकम्।' इति।

ग्निहोत्रादिवत्सायम् । तेन प्रातः सायं वैश्वदेवेत्यादिरेव संकल्पः । पञ्चमहायज्ञा अहरहः कर्तव्याः । ते च ब्रह्मयज्ञदेवयज्ञभूतयज्ञपितृयज्ञमनुष्ययज्ञाख्याः । तत्र ब्रह्मयज्ञ उक्तः ।

पंचम भाग का कृत्य—पांच प्रकार के जीव वध की निवृत्ति के लिये वैश्वदेव करना चाहिये । कण्डनी, पेषणी, चुल्ही, जलकुम्भ और झाड़ू ये पांच हिंसा के स्थान पंचसूना कहे जाते हैं । वैश्वदेव का प्रातःकाल ही प्रारंभ होता है, अग्निहोत्र आदि की तरह सायंकाल नहीं होता । इससे प्रातः सायं वैश्वदेव इत्यादि का ही संकल्प करे। पंच महायज्ञ प्रतिदिन का कर्त्तव्य है । वे ब्रह्मयज्ञ, देवयज्ञ, भूतयज्ञ, पितृयज्ञ और मनुष्ययज्ञ नाम के हैं । उसमें ब्रह्मयज्ञ कह चुके ।

बह्वृचादीनां वैश्वदेवो देवयज्ञादियज्ञत्रयरूपः । मनुष्ययज्ञस्तु मनुष्येभ्योऽन्नदानम् ।

गृहपक्वहविष्यान्नैस्तैलक्षारादिवर्जितैः ।
जुहुयात्सर्पिषाभ्यक्तैर्गृह्येऽग्नौ लौकिकेऽपि वा ॥
यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते ।

वैश्वदेवान्तर्गतपितृयज्ञेनैव नित्यश्राद्धसिद्धेर्न नित्यश्राद्धार्थं विप्रभोजनम् । अनेनैव दर्शश्राद्धस्यापि सिद्धया दर्शश्राद्धमप्यशक्तैः संवत्सरमध्ये सकृदेव कार्यमिति भट्टोजीये । सूतके पञ्चमहायज्ञानां लोप इत्युक्तम् ।

बह्वृचादि का वैश्वदेव—देवयज्ञ-भूतयज्ञ-पितृयज्ञ स्वरूप है । मनुष्ययज्ञ तो मनुष्यों को अन्न देना है । तेल क्षार आदि से वर्जित घी मिलाकर गृह में पके हुए हविष्यान्न से गृह्य अग्नि अथवा लौकिक अग्नि में होम करे । जिस अग्नि में अन्न पकाया जाता है उसी में होम होता है । वैश्वदेव के अन्तर्गत पितृयज्ञ से नित्य श्राद्ध की सिद्धि होने से ब्राह्मणभोजन की आवश्यकता नहीं है । इसी से दर्शश्राद्ध की भी सिद्धि होने से दर्शश्राद्ध भी असमर्थ को साल में एक ही बार करना पड़ता है, ऐसा भट्टोजिदीक्षित के ग्रन्थ में लिखा है । सूतक में पंचमहायज्ञों का लोप होता है, यह कह चुके हैं ।

स चायं वैश्वदेव आत्मसंस्कारार्थोऽन्नसंस्कारार्थश्च[1] । तेनाविभक्तानां पाकैक्ये पृथग्वैश्वदेवो न । विभक्तानां तु पाकैक्येपि हविष्यान्तरेण पृथगेव । अविभक्तानां पाकभेदे पृथग् वैश्वदेवः कृताकृत इति भट्टोजीये । पाकासंभवे एकादश्यादौ

---

१. अत्र विज्ञानेश्वरः—इह केचिद् वैश्वदेवाख्यस्य कर्मणः पुरुषार्थत्वमन्नसंस्कारकर्मत्वं चेच्छन्ति 'अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्' इत्यन्नसंस्कारकर्मकता प्रतीयते ।' 'अथातः पञ्चमहायज्ञाः' इत्युपक्रम्य 'तानेतान् यज्ञानहरहः कुर्वीत' इति नित्यत्वाभिधानात्पुरुषार्थत्वं चावगम्यते' इति । तदयुक्तम् , पुरुषार्थत्वेऽन्नसंस्कारकर्मत्वानुपपत्तेः । तथा हि—द्रव्यसंस्कारकर्मत्वपक्षेऽन्नार्थता वैश्वदेवकर्मणः, पुरुषार्थत्वे वैश्वदेवकर्मार्थता द्रव्यस्येति परस्परविरोधात् पुरुषार्थत्वमेव युक्तम्—'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति ।

तण्डुलैर्वा पयोदधिघृतफलोदकादिभिर्वा[1] कार्यः।

हस्तेनान्नादिभिः कुर्यादद्भिरञ्जलिना जले।
कोद्रवं चणकं माषं मसूरं च कुलित्थकम्॥
क्षारं च लवणं सर्वं वैश्वदेवे विवर्जयेत्[2]।

यह वैश्वदेव अपने संस्कार और अन्न संस्कार के लिये भी है। उससे एक में रहने वाले भाइयों के एक पाक होने के कारण अलग वैश्वदेव नहीं करना होता। अलग हुये भाइयों का तो एक पाक होने पर भी दूसरे हविष्य से वैश्वदेव अलग ही होता है। जो अलग नहीं हुए हैं उनका पाकभेद से वैश्वदेव करना न करना बराबर है, ऐसा भट्टोजि का कथन है। रसोई न होने पर एकादशी आदि में चावल से या दूध, दही, घी, फल और जल आदि से वैश्वदेव करना चाहिये। अन्न आदि से हाथ से वैश्वदेव करे। जल से करना हो तो अंजलि से जल में करे। वैश्वदेव में कोदो, चना, उर्द, मसूर और कुरथी तथा सब प्रकार के क्षार, लवण का वर्जन करे।

प्रवसता गृहे पुत्रर्त्विगादिद्वारा वैश्वदेवः कारयितव्यः। गृहे कर्त्रन्तराभावे प्रवासे स्वयं कार्यः। वैश्वदेवो बह्वृचैस्तैत्तिरीयैश्च दिवा रात्रौ चेति द्विवारं कार्यः।

परदेश में रहने वालों को—घर में पुत्र, ऋत्विक् आदि के द्वारा कराना चाहिये। घर में कोई वैश्वदेव करने वाला न हो तो परदेश में स्वयं करे। बह्वृचों और तैत्तिरीयों को वैश्वदेव दिन और रात में दो बार करना चाहिये।

अशक्तैस्त्वेककाले एव द्विरावृत्त्या सह वा कार्यः। बह्वृचतैत्तिरीययोर्लौकिकाग्नौ पाको वैश्वदेवश्चेति प्रायेणाचारः।

असमर्थ तो एक कालमें भी दो आवृत्ति से या साथ ही करे। बह्वृच और तैत्तिरीय का लौकिकाग्नि में रसोई और वैश्वदेव दोनों होता है, प्रायः ऐसा आचार है।

### अथ प्रातः सायं वैश्वदेवस्य सहकरणपक्षे तन्त्रप्रयोगः

तत्र वैष्णवैर्भगवते [3]षोडशोपचारेषु दीपान्तानुपचारान्समर्प्य सर्वान्नात्पु-

---

१. विश्वामित्रकल्प में हवनीय द्रव्य—'फलैर्दधिघृतैः कुर्यान्मूलशाकोदकादिभिः। अलाभे येन केनापि काष्ठैर्मूलतृणादिभिः॥ जुहुयात्सर्पिषाऽभ्यक्तं तैलक्षारविवर्जितम्। दध्यक्तं पायसाक्तं वा तदभावेऽम्भसाऽपि वा॥ शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम्। संकल्पयेद्यमाहारं तेनाग्नौ जुहुयादपि॥' श्रौतोल्लासे—'घृतं वा यदि वा तैलं पयो वा यदि वा दधि। घृतस्थाने नियुक्तानां घृतशब्दो विधीयते॥' इति।

२. आह्निककारिकासु—'अन्नं पर्युषितं चैव परान्नं दूषितं तथा। दग्धमन्नं तथोच्छिष्टं वैश्वदेवे विवर्जयेत्॥' वैश्वदेव कर्म के न करने पर बृहत्पाराशरोक्त दोष यह है—'यदग्नौ हूयते नैव यस्य ग्रासो न दीयते। अभोज्यं तद् द्विजातीनां भुक्त्वा चान्द्रायणं चरेत्॥' इति।

३. रुद्रकल्पद्रुमादि में षोडशोपचारक्रम यह है—'आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। मधुपर्काचमनस्नानं वसनाभरणानि च॥ सुगन्धिः सुमनोधूपदीपनैवेद्य एव च॥ माल्यानुलेपने चैव नमस्कारो विसर्जनम्॥' विष्णुपुराणोक्त क्रम—'आवाहनासने पाद्यमर्घ्यमाचमनीयकम्। स्नानं वस्त्रोपवीते च गन्धमाल्यान्यनुक्रमात्॥ धूपो दीपश्च नैवेद्यं ताम्बूलं च प्रदक्षिणा। पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडश॥ फलेन सफलावाप्तिः साङ्गता दक्षिणार्पणम्।' तन्त्रग्रंथों में अनेक प्रकार का षोडशोपचारक्रम निर्दिष्ट है। उपचारों में कोई वस्तु दुर्लभ हो तो कुलोड्डीश तन्त्र में बतलाया है—'उपचारेषु सर्वेषु यत्किञ्चिद्दुर्लभं भवेत्। तत्सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत्॥' इति।

रुषाहारपर्याप्तं नैवेद्यं समर्प्य शेषान्नेन वैश्वदेवः कार्यः। वैष्णवभिन्नैस्तु वैश्वदेवान्ते तच्छेषेण नैवेद्यः कार्यः।

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते।

इत्यादिवचनानां वैष्णवविषयकत्वस्य निबन्धकारैरुक्तत्वात्।

उसमें वैष्णवों को भगवान् के लिये सोलहो उपचारों में दीपपर्यन्त उपचारों को समर्पण कर बचे हुए अन्न से वैश्वदेव करना चाहिये। वैष्णवेतर तो वैश्वदेव के अन्त में उससे बचे हुए का नैवेद्य करे। विष्णु को निवेदित अन्न से दूसरे देवता की पूजा करनी चाहिये। वह पितरों को भी दिया जाय तो अनन्त फल देने वाला होता है, क्योंकि इन वचनों को निबन्धकारों ने वैष्णव विषयक कहा है।

## अथ वैष्णवस्वरूपम्

अत्र वैष्णवा नारायणाष्टाक्षरादिवैष्णवमन्त्रदीक्षोपदेशजपवन्तो मुख्याः। 'उपदेशः कलौ युगे' इति स्मृत्योपदेशमात्रस्यापि दीक्षासमफलत्वात्। गौणश्च पारंपर्यागतारुणोदयविद्धैकादश्यनुपवासशुक्लकृष्णैकादश्युपवासादिर्यत्किंचिद्धर्ममात्रपरा मन्त्रोपदेशादिरहिताः।

यहां वैष्णव नारायण के अष्टाक्षर मन्त्र के दीक्षायुक्त और अष्टाक्षर मन्त्र के जापक मुख्य हैं, क्योंकि कलियुग में उपदेशमात्र से दीक्षा के समान फल होता है। गौण भी वैष्णव परम्परा से अरुणोदयविद्धा एकादशी में उपवास न करने वाले और शुक्ल कृष्ण एकादशी में उपवास आदि यत्किंचित् धर्ममात्र करने वाले मन्त्रोपदेश से रहित होते हैं।

ननु 'पञ्चरात्राद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः' इत्युक्तेः किंचिद्धर्ममात्रानुष्ठानेन कथं वैष्णवत्वमिति चेत्? गायत्र्यध्ययनादिक्षत्रियवैश्यसाधारणधर्मवतां याजनाध्यापनप्रतिग्रहरूपासाधारणधर्मशून्यानां पित्रादिपरंपरया वैश्यादिवृत्तिपराणामप्यव्यभिचरितैकगोत्रत्वादिर्यत्किंचिद्ब्राह्मणधर्ममात्रेण यथा ब्राह्मणत्वं तदुचितसूतकाद्याचारश्च, तथा कलियुगे किंचिद्धर्मेणापि वैष्णवत्वं तदुचिताचारश्च युज्यते।

पंचरात्र आदि आगम की कही हुई दीक्षा पाने वाले ही वैष्णव हैं, इस उक्ति से यत्किंचित् धर्ममात्र के अनुष्ठान से वैष्णवत्व कैसे होगा? इस शंका का समाधान है कि गायत्री अध्ययन आदि क्षत्रिय वैश्य साधारण धर्म से युक्त और यज्ञ कराना, पढ़ाना तथा प्रतिग्रह रूप असाधारण धर्म से रहित को पिता आदिकी परम्परा से वैश्य आदि वृत्तिमें तत्पर रहते हुये भी एक गोत्रत्वादि यत्किंचित् ब्राह्मणधर्ममात्र से जैसे ब्राह्मणत्व है एवं ब्राह्मणोचित आशौच आदि का पालन करते हैं वैसे कलियुग में किंचित् धर्म से भी वैष्णवत्व और वैष्णवोचित आचार भी युक्त है।

क्षत्रियाणां हि [1]पुरोहितभेदेन गोत्रभेदस्तेन यदुवंशेषु परस्परं विवाहो, नैवं ब्राह्मणेष्विति स्पष्टम्। एवं श्राद्धेऽपि नैवेद्यं समर्प्य पितृभ्योऽन्ननिवेदनं ज्ञेयम्।

---

१. 'क्षत्रियवैश्ययोस्तु पुरोहितगोत्रप्रवरावेवेति सर्वसिद्धान्त' इति निर्णयसिन्धुः। स्वगोत्राज्ञाने सत्याषाढः—'अथाज्ञातबन्धोः पुरोहितप्रवरेणाचार्यप्रवरेण वा' इति।

क्षत्रियों का पुरोहित के भेद से गोत्र भेद होता है। इससे यदुवंशियों में परस्पर विवाह होता है, ऐसा ब्राह्मणों में नहीं है, यह स्पष्ट है। उसी प्रकार श्राद्ध में भगवान् को नैवेद्य समर्पण करके पितरों को अन्न निवेदन करना जानना चाहिये।

## अथ आश्वलायननानां वैश्वदेवः

'ममात्मान्नसंस्कारपञ्चसूनाजनितदोषपरिहारद्वारा श्रीपर० प्रातर्वैश्वदेवं सायं वैश्वदेवं च सह तन्त्रेण करिष्ये'। कुण्डे स्थण्डिलादौ वा पचनाग्निं व्याहृतिभिः पावकनामानं प्रतिष्ठाप्य चत्वारि शृंगेति ध्यात्वा परिसमुह्य पर्युक्ष्य विश्वानि न इत्यर्चनादि विधाय घृताक्तमन्नमधिश्रित्य प्रोक्ष्योद्वास्याग्नेः पश्चान्निधाय त्रिधा विभज्य प्रथमभागं देवेभ्यो जुहुयात्।

'मेरे अपने अन्नसंस्कार और पंचसूना से उत्पन्न दोष की निवृत्ति द्वारा श्रीपरमात्मा की प्रीति के लिये प्रातःकालीन वैश्वदेव और सायंकालीन वैश्वदेव को तन्त्र से करूंगा'। कुण्ड अथवा स्थण्डिल आदि में व्याहृतियों से पावक नामक पचनाग्नि की स्थापना करके 'चत्वारि शृंगा' इत्यादि मन्त्र से ध्यान कर परिसमूहन पर्युक्षण करके 'विश्वानि न' इस मन्त्र से अर्चन आदि करके घृताक्त अन्न को अग्नि में पकाकर प्रोक्षण करके अग्नि से हटाकर अग्नि के पीछे रख तीन विभाग कर प्रथम भाग से देवताओं का होम करे।

तद्यथा—हृदि सव्यं करं निधायोत्तानहस्तेन सूर्याय स्वाहा सूर्यायेदं न मम प्रजापतये० सोमाय० वनस्पतये० अग्निषोमाभ्यां० इन्द्राग्निभ्यां० द्यावापृथिवीभ्यां० धन्वन्तरये० इन्द्राय० विश्वेभ्यो देवेभ्यः० ब्रह्मणे० इति दश प्रातर्वैश्वदेवाहुतयः। अथ सायं वैश्वदेवीयाः—अग्नये स्वाहेति हुत्वा प्रजापतय इत्यादि पुनर्नव जुहुयात्। एवं विंशत्याहुतीर्हुत्वा प्रायश्चित्तार्थं व्यस्तसमस्तव्याहृतिभिर्हुत्वा न हुत्वा वा परिसमूहनपर्युक्षणे कुर्यात्। ओं चम इत्युपतिष्ठेत्। इति देवयज्ञः।

वह इस प्रकार है—हृदय में बायां हाथ धरकर दक्षिण हाथ उत्तान करके 'सूर्याय स्वाहा, सूर्याय इदं न मम'। इत्यादि मूलोक्त इन मन्त्रों से प्रातःकाल में वैश्वदेव की ये दस आहुतियां हैं। सायंकाल में वैश्वदेव की आहुतियां—'अग्नये स्वाहा' इससे देकर प्रजापतये इत्यादि नव मन्त्रों से देवे। इस प्रकार बीस आहुति देने के बाद प्रायश्चित्त के लिये व्यस्त और समस्त व्याहृतियों से होम करके या न करके परिसमूहन और पर्युक्षण करे। 'ॐ चमे' इस मन्त्र से उपस्थान करे। देवयज्ञ समाप्त।

## अथ बलिहरणाख्यो भूतयज्ञः

द्वितीयभागाद्[1] गृहीत्वा शुद्धभूमौ सूर्याय स्वाहा सूर्यायेदं न ममेत्येवं दशाहुतीः प्राक्संस्था निरन्तरा हुत्वा मध्येऽन्तरालं त्यक्त्वा अद्भ्यः स्वाहा ओषधिवनस्पतिभ्यः० गृहाय० गृहदेवताभ्यः० वास्तुदेव० इति प्राक्संस्था हुत्वा अङ्घ्य आहुतेः पश्चात् इन्द्राय० तदुत्तरे इन्द्रपुरुषेभ्यः० अन्तरालस्य दक्षिणे यमाय०

---

१. याज्ञवल्क्यः—'देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत्।' अर्थात् स्वगृह्योक्त विधि से वैश्वदेव होम करके अवशिष्ट अन्न से भूतबलि दे।

तदुत्तरे यमपुरुषेभ्यः०, ब्रह्मण आहुतेः प्राक् वरुणाय० तदुत्तरे वरुणपुरुषेभ्यः० अन्तरालस्योत्तरे सोमाय० तदुत्तरे सोमपुरुषेभ्यः अन्तराले ब्रह्मणे० ब्रह्मपुरुषेभ्यः० विश्वेभ्यो देवेभ्यः० सर्वेभ्यो भूतेभ्यः० दिवाचारिभ्यः० सोमपुरुषोत्तरे रक्षोभ्यः० ।

द्वितीय भाग से अन्नग्रहण करके शुद्ध भूमि में 'सूर्याय स्वाहा, सूर्याय इदं न मम'। इस प्रकार प्राक्संस्थ निरन्तर दस आहुति से होम करके पुनः मध्य में अन्तराल का त्याग करके 'अद्भ्यः स्वाहा, ओषधिवनस्पतिभ्य०ः' इत्यादि से प्राक्संस्थ होम करके जल की आहुति के बाद इन्द्र के लिये आहुति दे। उसके उत्तर इन्द्र के पुरुषों को दे। अन्तराल के दक्षिण में यम और उसके उत्तर यमपुरुषों को आहुति दे। ब्रह्मा की आहुति के पहिले वरुण और उसके उत्तर की ओर वरुणपुरुषों, अन्तराल के उत्तर में सोम को, उसके उत्तर में सोमपुरुषों को, विश्वेदेवताओं को, सब जीवों को, दिन के चलने वालों को, सोम-पुरुष के उत्तर राक्षसों को आहुति दे।

एवमेव सूर्यस्थाने प्रथममग्नये हुत्वा प्रजापतय इत्यादि पूर्ववत्। सायं वैश्वदेवसम्बन्धि द्वितीयबलिहरणं कुर्यात्। तत्र दिवाचारिभ्य इत्यस्य स्थाने नक्तंचारिभ्यः स्वाहेति जुहुयादिति विशेषः। इति भूतयज्ञः।

इसी प्रकार सूर्य के स्थान में पहिले अग्नि के लिये होम करके प्रजापति इत्यादि के लिये पूर्ववत् करे। सायंकाल के वैश्वदेव सम्बन्धी द्वितीय बलिहरण करे। उसमें 'दिवाचारिभ्यः' के स्थान में 'नक्तंचारिभ्यः स्वाहा' इससे होम करे, इतना विशेष है। भूतयज्ञ समाप्त।

## अथ पितृयज्ञः

प्राचीनावीती तृतीयभागादादाय स्वधा पितृभ्यः इति यमबलेर्दक्षिणतो दत्त्वा पितृभ्य इदं न ममेति त्यक्त्वा द्वितीयबलेर्दक्षिणतः द्वितीयपितृयज्ञमेवं कुर्यात्। इति पितृयज्ञः।

अपसव्य होकर तीसरे भाग से अन्न लेकर 'स्वधा पितृभ्यः' इससे यम बलि के दक्षिण में देकर 'पितृभ्यः इदं न मम' इससे त्याग कर द्वितीय बलि के दक्षिण द्वितीय पितृयज्ञ इसीतरह करे। पितृयज्ञ समाप्त।

अपरे चक्राकारं बलिमाहुः। बलावनुद्धृतेनाद्यान्नोद्धरेच्च स्वयं बलिम्। ततो गृहाङ्गणे भूमावप आसिच्य—

ऐन्द्रवारुणवायव्यां याम्यां नैर्ऋतिकाश्च ये।
ते काकाः प्रतिगृह्णन्तु भूम्यां पिण्डं मयोज्झितम्॥ इति पितृयज्ञशेषेण दत्त्वा,
वैवस्वतकुले जातौ द्वौ श्यामशबलौ शुनौ।
ताभ्यां पिण्डो मया दत्तो रक्षेतां पथि मां सदा॥
ये भूताः प्रचरन्ति० इति द्वयं भूतयज्ञशेषेण दद्यात्।

अन्य लोग-बलि का आकार चक्र की तरह कहते हैं। बलि विना किये भोजन नहीं करे और न बलि का उद्धार स्वयं करे। इसके बाद घर के आंगन की भूमि में जल सींचकर ऐन्द्र वारुण वायव्य याम्य के जो राक्षस हैं और काक हैं वे मुझसे त्यक्त पिण्ड को ग्रहण करें। इस प्रकार पितृयज्ञ से बचे हुए को देकर वैवस्वत कुल में उत्पन्न काले और चितकबरे रंग के दो कुत्ते हैं उन्हें मैंने पिण्ड दिया, वे रास्ते में मेरी रक्षा करें। 'ये भूताः प्रचरन्ति' इससे दोनों को भूतयज्ञ के शेष अन्न से दे।

ये भूता इति मन्त्रे तन्त्रेण वैश्वदेवप्रयोगे दिवानक्तं बलिमिति पाठः। अह्नि रात्रौ च पृथक् प्रयोगे दिवाबलिमिच्छन्तो नक्तं बलिमिच्छन्त इति विभागेन पाठः। प्रक्षालितपाणिपाद आचम्य गृहं प्रविश्य शान्ता पृथिवीत्यादि जपित्वा विष्णुं स्मृत्वा कर्मार्पयेत्।

'ये भूता' इस मन्त्र में तन्त्र से वैश्वदेव प्रयोग करने पर 'दिवा नक्तं बलिं' ऐसा पढ़े। दिन और रात में वैश्वदेव बलि का पृथक्-पृथक् प्रयोग करने पर 'दिवा बलिमिच्छन्तः' और 'नक्तं बलिमिच्छन्तः' इस विभाग से पढना चाहिये। हाथ पैर धोकर आचमन करके घर में प्रवेश कर 'शान्ता पृथिवी' इत्यादि मन्त्र जप कर विष्णु का स्मरण करके कर्म का समर्पण करे।

### अथ मनुष्ययज्ञः

'अतिथिभोजनपर्याप्तं वा षोडशग्रासमितं वा ग्रासचतुष्टयं वा ग्रासमितं वान्नं सनकादिमनुष्येभ्यो हन्त इदं न ममेति दद्यात्। बहुषु भिक्षुकेष्वागतेष्वशक्तः त्रिभ्यो ग्रासत्रयं देयम्।

अतिथि के भोजन के लिये पर्याप्त अन्न या सोलह ग्रास या चार ग्रास या एक ग्रास अन्न 'सनकादिमनुष्येभ्यो हन्त इदं न मम' ऐसा कह कर दे। बहुत से भिक्षुकों के आने पर अशक्त पुरुष तीन भिक्षुक को तीन ग्रास दे।

### अथ तैत्तिरीयवैश्वदेवादयः

अथ तैत्तिरीयाणां श्राद्धदिने भिन्नपाकेनादौ वैश्वदेवः देवयज्ञादिचतुष्टयं च भवति। अपरे आदौ वैश्वदेवोऽन्ते पञ्च महायज्ञा इत्याहुः।

याजुषाः सामगाः पूर्वं मध्ये कुर्वन्त्यथर्वणाः।
बह्वृचाः श्राद्धशेषेण तत्राप्यादौ तु साग्निकाः॥

'स्वर्गपुष्ट्यर्थमात्मसंस्कारार्थं प्रातः सायं वैश्वदेवौ तन्त्रेण करिष्ये' औपासनाग्निं पचनाग्निं वा प्रतिष्ठापितमौपासनहोमवत्परिसमुह्य परिषिच्यान्नमग्नावधिश्रित्य प्रोक्ष्योद्वास्याभिघार्याग्निं संपूज्यान्नं त्रेधा विभज्य हस्तेन जुहुयात्—अग्नये स्वाहा विश्वेभ्यो देवेभ्यः० ध्रुवाय भूमाय० ध्रुवक्षितये० अच्युतक्षितये० अग्नये स्विष्टकृते०। परिसमुह्य पर्युक्ष्य अग्नेः पश्चादेकत्रैव देशे व्यजनाकारश्चक्राकारो वा बलिः।

तैत्तिरीयों के यहां श्राद्ध के दिन भिन्न पाक से आरंभ में वैश्वदेव और देवयज्ञ आदि चतुष्टय होते हैं। दूसरे लोग—आदि में वैश्वदेव अन्त में पंचमहायज्ञ करे, ऐसा कहते हैं। यजुर्वेदी,

---

१. मनुस्मृति में अतिथि का लक्षण है—'एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते॥ संप्राप्ताय त्वतिथये प्रदद्यादासनोदके। अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम्॥ तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥' याज्ञवल्क्यः—'अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः। अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः॥ सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च। भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवान्॥' इति।

सामवेदी और अथर्ववेदी पहिले मध्य में करते हैं और बह्वृच बचे हुए से, उसमें भी साग्निक आदि में करते हैं। 'स्वर्ग पुष्टि एवं आत्मसंस्कार के लिए प्रातः सायं दोनों वैश्वदेवों को तन्त्र से करूँगा'। औपासन अग्नि या पचनाग्नि को स्थापित कर औपासन होम की तरह परिसमूहन, अन्न का परिषेचन, अग्नि में अधिश्रयण, प्रोक्षण, उद्वासन, अभिघारण, अग्निपूजन और अन्न का तीन विभाग करके हाथ से होम करे—अग्नये स्वाहा विश्वेभ्यो देवभ्यः० ध्रुवाय भूमाय० ध्रुवक्षितये० अच्युतक्षितये० अग्नये स्विष्टकृते०। परिसमूहन पर्युक्षण करके अग्नि के पश्चिम एकदेश में व्यजनाकार या चक्राकार बलि दे।

तत्र देवता:—धर्माय स्वाहा धर्मायेदं० अधर्माय० अद्भ्यः० ओषधिवनस्पतिभ्यः० रक्षोदेवजनेभ्यः० गृह्याभ्यः० अवसानेभ्यः० अवसानपतिभ्यः० सर्वभूतेभ्यः० कामाय० अन्तरिक्षाय० यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा नाम्न इदं०। केचिद्वायव इदमिति त्यागमाहुः। पृथिव्यै स्वाहा अन्तरिक्षाय० दिवे० सूयय० चन्द्रमसे० नक्षत्रेभ्यः० इन्द्राय० बृहस्पतये० प्रजापतये० ब्रह्मणे० सर्वान्सकृत्परिषिच्य, पृथक् परिषेचनपक्षे—

द्वावेकं द्वे च चत्वारि प्रत्येकं त्रीणि चैव हि।
पृथिव्यादिदशस्वेकमत ऊर्ध्वं पृथक् क्रमात्॥ इति ज्ञेयम्।

प्राचीनावीती तद्दक्षिणतः स्वधा पितृभ्यः स्वाहा, तदुत्तरत उपवीती नमो रुद्राय पशुपतये स्वाहा, पितृरुद्रबली पृथक् परिषिञ्चेत्। इति वैश्वदेवः।

उसमें देवता—'धर्माय स्वाहा, धर्मायेदं० अधर्माय० अद्भ्यः० ओषधिवनस्पतिभ्यः० रक्षोदेवजनेभ्यः० गृह्याभ्यः० अवसानेभ्यः० अवसानपतिभ्यः० सर्वभूतेभ्य.० कामाय० अन्तरिक्षाय० यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा दाम्न इदं०'। कोई 'वायवे इदं' ऐसा कहकर त्याग कहते हैं। पृथिव्यै स्वाहा अन्तरिक्षाय० दिवे० सूर्याय० चन्द्रमसे० नक्षत्रेभ्यः० इन्द्राय० बृहस्पतये० प्रजापतये० ब्रह्मणे०, सबको एकबार परिषेचन करे। अलग अलग परिषेचन पक्ष में एक को दो, चार को दो और प्रत्येक को तीन, पृथिवी आदि दस में से एक को, इसके बाद क्रम अलग अलग जानना चाहिये। अपसव्य होकर उसके दक्षिण से 'स्वधा पितृभ्यः स्वाहा' उसके उत्तर सव्य होकर 'नमो रुद्राय पशुपतये स्वाहा', पृथिवी और रुद्र बलि का अलग परिषेचन करे। वैश्वदेव समाप्त।

## अथ देवयज्ञादिचतुष्टयम्

'देवयज्ञेन यक्ष्ये' इति संकल्प्याग्निं परिषिच्य देवेभ्यः स्वाहेत्यग्नौ हुत्वोत्तरपरिषेकः। प्राचीनावीती 'पितृयज्ञेन यक्ष्ये' दक्षिणतो भूमौ पितृभ्यः स्वधास्तु इति दत्त्वा त्यक्त्वा परिषिच्य, यज्ञोपवीती अपः स्पृष्ट्वा 'भूतयज्ञेन यक्ष्ये' भूतेभ्यो नम इति भूमौ दत्त्वा परिषिच्य, निवीती 'मनुष्ययज्ञेन यक्ष्ये' उक्तप्रमाणमन्नं मनुष्येभ्यो हन्तेति दद्यात्। सर्वयज्ञेषु आद्यन्तयोः क्रमेण विद्युदसि वृष्टिरसीति मन्त्रयोः पाठः प्रायेणैषाम्। बलिशिष्टमन्नं ये भूताः प्रचरन्तीति गृहाङ्गणे गत्वाकाशे उत्क्षिपेत्। ततो यथाचारं श्ववायसादिबलिः।

'देवयज्ञ से यजन करूँगा' ऐसा संकल्प करके अग्नि का परिषेचन कर 'देवेभ्यः स्वाहा' ऐसा कहकर अग्नि में होम के बाद उत्तर परिषेक करे। अपसव्य होकर 'पितृयज्ञ से पूजन करूँगा' ऐसा कहकर दक्षिण की भूमि में 'पितृभ्यः स्वधाऽस्तु' इससे देकर त्यागपूर्वक परिषेक करके सव्य होकर जल का स्पर्श कर 'भूतयज्ञ से पूजन करूँगा' 'भूतेभ्यो नमः' इससे भूमि में देकर और परिषेक कर गले में यज्ञोपवीत करके 'मनुष्य यज्ञ से पूजन करूँगा' उक्त प्रमाण के अन्न को 'मनुष्येभ्यो हन्त' ऐसा कहकर दे दे। सब यज्ञों में आदि और अन्त में क्रम से 'विद्युदसि विद्यरसि' इन दोनों मन्त्रों का पाठ करे। प्रायः पिण्डयज्ञों के बलि से बचा हुआ अन्न 'ये भूताः प्रचरन्ति' इस मन्त्र से घर के आंगन में जाकर आकाश में फेंक दे। पश्चात् आचार के अनुसार कुत्ता कौवा आदि को बलि दे।

## अथ कातीयानां वैश्वदेवः

तत्र 'साग्निकानामेकपाकेनैव श्राद्धदिने आदौ वैश्वदेवः, अन्येषामन्ते। आवसथ्योल्मुकं महानसे कृत्वा तत्र पाकं विधाय महानसस्थाङ्गारान् गृह्याग्नौ निधाय पाकादन्नं घृताक्तमादाय पूर्ववद् 'आत्म० संस्कारार्थं वैश्वदेवाख्यं कर्म करिष्ये' इति संकल्पः। अथवा 'देवभूतपितृमनुष्यान् वैश्वदेवान्नेन यक्ष्ये'। गृह्याग्निं मणिकोदकेन पर्युक्ष्य हस्तेनाग्नौ जुहुयात्—ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम। एवमग्रेऽपि प्रजापतये० गृह्याभ्यः० कश्यपाय० अनुमतये०। इति देवयज्ञः।

उसमें साग्निक कातीयों का एक ही पाक से श्राद्ध के दिन पहिले वैश्वदेव होता है, अन्य का अन्त में। आवसथ्य अग्नि से जलती हुई लकड़ी रसोई घर में रखकर उसमें पाक बनाकर रसोई घर के अंगारों को गृह्याग्नि में रखकर पाक से घृताक्त अन्न लेकर पहिले की तरह 'आत्मादि संस्कारार्थ वैश्वदेवनामक संस्कार करूँगा' ऐसा संकल्प करे। अथवा 'देव-भूत-पितृ-मनुष्यों का वैश्वदेव अन्न से पूजन करूँगा'। गृह्य अग्नि को मणिक के जल से पर्युक्षण करके हाथ से अग्नि में होम करे—ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम। इसी प्रकार आगे भी 'प्रजापतये० गृह्याभ्यः० कश्यपाय० अनुमतये०'। देवयज्ञ समाप्त।

---

१. हेमाद्रि में सालङ्कायनका वचन है—'श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः। एकादशादिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥' परिशिष्ट में—'सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च। अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि ॥' निरग्निक के लिये वसिष्ठ ने कहा है—'वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः। लौकिकेऽग्नौ हुते शेषः पितॄणां नोपतिष्ठते ॥' गौतमः—'पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः। अकृतं तद् भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥' फिर भी साङ्खायन के—'आदौ वृद्धौ क्षये चान्ते दर्शे मध्ये महालये। एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥' इस वचन से निरग्निक को आभ्युदयिक श्राद्ध के पूर्व ही में वैश्वदेव करना चाहिये। रेणुकारिका में भी है—'निर्णेजनान्तं निर्वर्त्य वैश्वदेवं ततो द्विजः। श्राद्धं करिष्ये संकल्प्य तत्कृत्वा पूर्ववत् स्थितः ॥'—

इन वचनों से प्रधान संकल्प के पूर्व ही वैश्वदेव का कर्तव्य प्रतीत होता है। यहां ऐसी व्यवस्था जाननी चाहिये—नान्दीश्राद्ध का पृथक् संकल्प करने पर मातृपूजा के अनन्तर वैश्वदेव करके तब नान्दीश्राद्ध करे। पुण्याहवाचनादि के साथ इसका संकल्प करने पर पुण्याहवाचन या गणपतिपूजन के पूर्व श्राद्धपाक से ही सभी को वैश्वदेव करना चाहिये। विस्तृत विचार कर्कभाष्यादि में देखें।

ततो मणिकसमीपे बलित्रयमुदक्संस्थम्—पर्जन्याय नमः स्वाहा इदं पर्जन्याय न मम अद्भ्यो न० पृथिव्यै न० । अथ द्वार्यंशाखयोः प्राक्संस्थं बलिद्वयम्-धात्रे० विधात्रे० । उदकेन चतुरस्रं कृत्वा तत्र पूर्वे वायवे० दक्षिणे वायवे० पश्चिमे वायवे० उत्तरे वायवे० । प्रागादिषु वायुबलेः प्रागुदग्वा प्राच्यै दिशे० दक्षिणस्यै दि० प्रतीच्यै दि० उदीच्यै दि० । मध्ये प्राक्संस्थं ब्रह्मणे० अन्तरिक्षाय० सूर्याय० । एषामुत्तरे विश्वेभ्यो देवेभ्यो० विश्वेभ्यो भूतेभ्यो० । अनयोरुत्तरे उषसे० भूतानां च पतये० । इति भूतयज्ञः ।

तदनन्तर मणिक के समीप में उत्तर तरफ तीन बलि रक्खे—'पर्जन्याय नमः स्वाहा, इदं पर्जन्याय न मम, अद्भ्यो न०, पृथिव्यै न० । अब दरवाजे के दोनों चौखटों पर पूर्व की तरफ दो बलि दे—धात्रे०, विधात्रे० । जल से चतुरस्र करके वहाँ पूर्व में-वायवे०, दक्षिण में-वायवे०, पश्चिम में-वायवे०, उत्तर में-वायवे० । पूर्व आदि में वायु-बलि से पूर्व या उत्तर प्राच्यै दिशे०, दक्षिणस्यै दिशे०, प्रतीच्यै दिशे०, उदीच्यै दिशे । बीच में प्राक्संस्थ ब्रह्मणे० अन्तरिक्षाय० सूर्याय० । इन सबके उत्तर में 'विश्वेभ्यो देवेभ्यो०' 'विश्वेभ्यो भूतेभ्यः०' । इन दोनों के उत्तर में 'उषसे०' 'भूतानां च पतये'० । भूतयज्ञ समाप्त ।

प्राचीनावीती ब्रह्मादिबलित्रयस्य दक्षिणे पितृतीर्थेन पितृभ्यः स्वधा नम इदं पितृभ्यो न ममेति दद्यात् । इति पितृयज्ञः ।

अपसव्य होकर ब्रह्मा आदि तीन बलि के दक्षिण में पितृतीर्थ से 'पितृभ्यः स्वधा नमः, पितृभ्यो न मम' यह कह कर जल दे । पितृयज्ञ समाप्त ।

पात्रं प्रक्षाल्य सव्येन ब्रह्मादिबलितो वायव्यां यक्ष्मैतत्ते निर्णेजनमिति तज्जलं निनयेत् । पूर्ववन्मनुष्ययज्ञः । निरग्निकस्तु लौकिकाग्निमाहृत्य पृष्टोदिवीति प्रतिष्ठाप्य तत्सवितु० ताꣳसवितु० विश्वानि देव० इति त्रिभिः सावित्रैः प्रज्वाल्य तत्र नित्योपासनहोमं कृत्वा पाकं पचेद्वैश्वदेवं च कुर्यादिति गदाधरः ।

पात्र का प्रक्षालन करके सव्य से ब्रह्मा आदि की बलि से वायव्य में 'यक्ष्मैतत्ते निर्णेजनं' यह कहकर उस जल को गिरा दे । पूर्ववत् मनुष्ययज्ञ करे । निरग्निक तो लौकिकाग्नि का आहरण करके 'पृष्टोदिवि' इस मन्त्र से स्थापन कर 'तत्सवितु०' 'ताꣳ सवितु'० 'विश्वानि देव०' इन तीन सावित्र मन्त्रों से अग्नि को प्रज्वलितकर उसमें नित्योपासनहोम करके पाक बनावे और वैश्वदेव करे, ऐसा गदाधर कहते हैं ।

अत्राप्यशक्तौ बह्वृचाद्युक्तरीत्या पचनाग्निं प्रतिष्ठाप्य ध्यात्वा संपूज्य तत्र पूर्वोक्तरीत्या वैश्वदेवस्तत्र अग्नये स्विष्टकृते स्वाहेति पञ्चाहुतीनामुत्तरं होमः । सर्वत्र निरग्नेरिति विशेषः । शेषं प्राग्वत् । कात्यायनानां दिवैवैको वैश्वदेवो न द्वितीयो रात्रौ । सामगाथर्वणैरपि स्वगृह्योक्तरीत्या [1]पञ्चमहायज्ञाः कार्याः ।

---

१. कात्यायनः—'देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् । महासत्राणि जानीयात्त एवेह महामखाः ॥' 'यत्फलं सोमयागेन प्राप्नोति धनवान् द्विजः । सम्यक् पञ्चमहायज्ञैर्दारिद्र्यथं नश्यते क्षणात् ॥' मनुः—'ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा । नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ॥'

इसमें भी अशक्त होने पर बह्वृच आदि के कहे प्रकार से पचनाग्नि की स्थापना कर ध्यान और पूजनकर उसमें पहले कहे प्रकार से वैश्वदेव करे। उसमें 'अग्नये स्विष्टकृते स्वाहा' इससे पांच आहुतियों के बाद होम करे। सर्वत्र निरग्निक के लिये इतना विशेष है। अवशिष्ट पहिले की तरह है। कात्यायनों को दिन में एक ही वैश्वदेव है, रात में दूसरा वैश्वदेव नहीं। सामवेदी और अथर्ववेदी को भी अपने गृह्य के कहे प्रकार से पंचमहायज्ञ करना चाहिये।

स्वगृह्यानुपलम्भे बह्वृचोक्तरीत्योपनयनादिसंस्काराः। पञ्चमहायज्ञादयश्च कार्याः।

शाखान्तरमतं सम्यगनालोच्य स्वधाष्टर्चतः।
शाखान्तराह्निकं प्रोक्तं ज्ञात्वा शोध्यं स्वशाखिभिः॥

अपने गृह्य के नहीं मिलने पर बह्वृचों के कहे प्रकार से यज्ञोपवीत आदि संस्कार और पंचमहायज्ञादि करना चाहिये। अपनी ढिठाई से दूसरे शाखा वालों के मत अच्छी तरह विना देखे अपनी शाखा वालों को दूसरे शाखा वालों के आह्निक का कहा जानकर शोधना चाहिये।

## अथ फलादिभक्षणे कृतेऽपि पञ्चमहायज्ञादिकरणे दोषाभावः

इक्षूनपः फलं मूलं ताम्बूलं पय औषधम्।
भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः॥

पञ्चमहायज्ञेष्वन्यतमस्य लोपे उपवासः। धनिकस्यातुरस्य च प्रतियज्ञं कृच्छ्रार्धम्। अन्ये त्वेकाहं लोपे मनस्वत्याहुतिः, द्व्यहं त्र्यहं लोपे तिसृभिस्तन्तुमतीभिर्होमो वारुणीनां चतसृणां जपो, द्वादशाहं लोपे तन्तुमतीस्थालीपाको वारुणीभिराज्यहोमश्चेत्याहुः।

ऊख, जल, फल, मूल, ताम्बूल, दूध और औषध खाकर भी स्नान दान आदि क्रियायें करनी चाहिये। पंचमहायज्ञों में किसी एक के न करने पर उपवास करे। बीमार और धनिक को प्रत्येक यज्ञ के लिये अर्धकृच्छ्र करना चाहिये। अन्य लोग तो एक दिन पंचमहायज्ञ नहीं करने पर मनस्वत्याहुति करें, दो तीन दिन नहीं करने पर तीन 'तन्तुमती' ऋचाओं से होम करे और चार

---

हमेशा वेदादिस्वाध्याय ऋषियज्ञ, पार्वणश्राद्धादि देवयज्ञ, बलिवैश्वदेवादि भूतयज्ञ, अतिथिभोजनादि मनुष्ययज्ञ और तर्पणश्राद्धादि पितृयज्ञ का यथाशक्ति त्याग न करे। 'एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः। अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति॥'—

अर्थात् यज्ञशास्त्रवेत्ता ऋषि यज्ञादि पंचमहायज्ञों को नहीं करते हुये नेत्र-जिह्वा-नासिका-त्वचा और कान इन पांच ज्ञानेन्द्रियों में होम करते हैं याने नेत्रादि पांच ज्ञानेन्द्रियों के विषय क्रमशः रूप-रस-गन्ध-स्पर्श और शब्द का ग्रहण है। नेत्रेन्द्रिय से सुन्दर या विकृत रूप को देखते हुये भी उसमें आसक्ति या घृणा नहीं करना ही नेत्रेन्द्रिय या इसी प्रकार अन्य इन्द्रियों का संयम करना ही इन्द्रियों में होम करना है। 'वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वथा। वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम्॥' अर्थात् वचन तथा प्राणों में यज्ञ के अक्षय फल का ज्ञाता कुछ गृहाश्रमी सर्वदा वचन में प्राणों का एवं प्राणों में वचनका होम करते हैं। 'ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा। ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा॥' अर्थात् दूसरे कुछ गृहाश्रमी सम्पूर्ण जगत् ब्रह्म है इस प्रकार के ज्ञान से इन पंचमहायज्ञों को भी ब्रह्मरूप से देखते हुये यज्ञों का फल प्राप्त करते हैं।

'वारुणी' ऋचाओं का जप करे, बारह दिन न करने पर 'तन्तुमती' ऋचा से स्थालीपाक और 'वारुणी' से घृतहोम करे, ऐसा कहते हैं।

## अथ सर्वसाधारणो भोजनादिविधिः

हैमे राजते पात्रे आम्रादिपत्रे वा भोजनं शस्तम्। 'एक एव तु भुञ्जीत-कांस्यपात्रे नान्योच्छिष्टे।

ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्॥

पलाशपर्णेषु यत्यादेः प्रशस्तम्। गृहिणस्तु चान्द्रायणम्[2]। इदं वल्लीपलाश-विषयमिति स्मृत्यर्थसारे। कदलीकुटजमधुजम्बूपनसाम्रचम्पकोदुम्बरपत्राणि शस्तानि। अर्काश्वत्थवटादिपत्राणि निषिद्धानि[3]।

सोने चांदी के पात्र अथवा आम आदि के पत्तों में भोजन करना अच्छा है। कांस्यपात्र में अकेला भोजन करे। अन्य के उच्छिष्ट पात्र में भोजन वर्जित है। ताम्बूल, अभ्यंजन और कांस्यपात्र में भोजन संन्यासी, ब्रह्मचारी और विधवा त्याग दे। पलाश के पत्तों में संन्यासी आदि का भोजन प्रशस्त है। गृहस्थ इनमें भोजन करे तो चान्द्रायण करे, यह वल्ली पलाश के विषयमें है; ऐसा स्मृत्यर्थसार में कहा है। केला, कुटज, महुआ, जामुन, कटहल, आम, चम्पा और गूलर के पत्तों में भोजन करना ठीक है। अर्क, पीपल, वड़ आदि के पत्ते निषिद्ध हैं।

चतुरस्रमण्डले[4] प्रक्षालितपात्रं निधाय पञ्चयज्ञावशिष्टं घृतादियुतं परिविष्ट-मन्नमस्माकं नित्यमस्त्वेतदिति वदन्नत्वा[5] ग्रन्थिरहितपवित्रयुतदक्षिणपाणिः

---

१. व्यासः—एक एव तु यो भुङ्क्ते गृहस्थः कांस्यभाजने। चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम्॥ भूमौ पात्रं प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः। भोजने भोजने चैव त्रिरात्रं फलमश्नुते॥' पैठीनसिः—'सौवर्णे राजते ताम्रे पद्मपालाशपत्रयोः। भाजने भोजने चैव त्रिरात्रं फलमश्नुते॥ पालाशपद्मपत्रेषु गृही भोजनमाचरेत्।' इति।

२. आह्निककारिकासु—'ब्रह्मपत्रेषु यो भुङ्क्ते मासमेकं निरन्तरम्। चान्द्रायणसमं पुण्यं कृतस्यापि चतुर्गुणम्॥' इति।

३. पैठीनसिः—'वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकजेषु च। श्रीकामो न तु भुञ्जीत कोविदार-करञ्जयोः॥' व्यासः—'मृन्मये पत्रपृष्ठे वा आयसे ताम्रभाजने। नाश्नीयादपि चेद् भुङ्क्ते नरकं प्रतिपद्यते॥' अत्रिः—'अपात्रे ह्यपि यद्दत्तं दहत्यासप्तमं कुलम्। हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा॥ आयसेन तु पात्रेण यदन्नमुपदीयते। यदन्नमपवित्रं स्यात्त्याज्यं वै सर्वकर्मणि।' इति।

४. ब्रह्मपुराणे—'उपलिप्ते समे स्थाने शुचौ श्लक्ष्णसमन्विते। चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम्॥ कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्।' शंखः—आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः। मण्डले तूपजीवन्ति तस्मात् कुर्वीत मण्डलम्॥' मण्डल का प्रमाण है—'वितस्तिमात्रं चतुरङ्गुलं वा कोणैश्चतुर्भिर्विदधीत मण्डलम्। प्राणाग्निहोत्रार्थमिदं समुक्तं महानुभावेन हि हारितेन॥ द्वादशाङ्गुलमानं तु व्रतिनां योगिनां सदा। चतुरङ्गुलं विधातव्यं त्रिकोणं प्रेतकर्मणि।' मण्डल नहीं करने पर मार्कण्डेयपुराण में दोष कहा है—'यातुधानाः पिशाचाश्च क्रूराश्चैव तु राक्षसाः। हरन्ति रस-मन्नं च मण्डलेन विवर्जितम्॥' इति।

५. ब्राह्मे—'अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिं कारयेत्ततः। अस्माकं नित्यमस्त्वेतदिति भक्त्याऽथ वन्दयेत्॥' इति।

पादाभ्यां पादेन वा भुवं स्पृशन् व्याहृतिभिर्गायत्र्या चाभिमन्त्र्य सत्यं त्वर्तेन परिषिञ्चामि इति दिवा, ऋतं त्वा सत्येन परिषिञ्चामीति रात्रौ परिषेचनं कृत्वा,

अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः।
त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णुः पुरुषः परः॥

पात्राद्दक्षिणे भूपतये नमः भुवनपतये नमः भूतानां पतये० इति त्रीन्बलीन्दद्यात्। यद्वा चित्राय० चित्रगुप्ताय० यमाय० यमधर्माय० सर्वेभ्यो भूतेभ्यः० इति वा व्यस्तसमस्तव्याहृतिभिर्वा चत्वारः धर्मराजाय चित्रगुप्तायेति द्वौ वा भूपत्यादित्रययुतावेताविति पञ्च वा देयाः।

चौकोन मण्डल में मांजा हुआ पात्र रख कर पंचमहायज्ञ से बचे हुए घृत आदि से युक्त परोसा हुआ अन्न हम लोगों को नित्य मिले, ऐसा कहता हुआ प्रणाम करके बिना गांठ के पवित्र को दाहिने हाथ में धारण किये दोनों पैरों से या एक पैर से पृथिवी का स्पर्श करता हुआ व्याहृति और गायत्री से अभिमन्त्रित कर दिन में 'सत्यं त्वर्तेन परिषिञ्चामि' इससे और रात्रि में 'ऋतं त्वा सत्येन परिषिंचामि' इससे परिषेचन करके 'अन्तश्चरति भूतेषु०' इत्यादि मूलोक्त मन्त्र पढ़ें। पात्र से दाहिनी ओर भूमि में भूपतये नमः, भुवनपतये नमः, भूतानां पतये नमः, इन मंत्रो से तीन बलियां दे। अथवा चित्राय०, चित्रगुप्ताय०, यमाय०, यमधर्माय०, सर्वेभ्यो भूतेभ्यः०, इनसे अथवा व्यस्त समस्त व्याहृतियों से चार बलि दे, अथवा धर्मराज और चित्रगुप्त के लिये दो बलि दे, या भूपति आदि तीन से युक्त इन्हीं दोनों से पांच बलि दे।

हस्तपादमुखार्द्रः[1] आपोशनार्थं जलमादाय अन्नं ब्रह्मरसो विष्णुः० अहं वैश्वानरो भूत्वेत्यर्थं ध्यात्वा वामकरेण पात्रं धृत्वा [2]अमृतोपस्तरणमसीत्यपः प्राश्य मौनी ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय० ॐ उदानाय० ॐ समानाय० इति सघृताः सक्षीरा वा पञ्चाहुतीः सर्वाङ्गुलिभिः सर्वं ग्रासं ग्रसन् मुखे जुहुयात्[3]। ॐ ब्रह्मणे स्वाहेति षष्ठी क्वचित्। प्राणाहुतिपर्यन्तं पात्रालम्भो मौनं च नियतमग्रे ऐच्छिकं द्वयम्।

---

१. व्यासः—'पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमाश्रितः। हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता॥' ग्रन्थान्तरे—'हस्तौ पादौ मुखं पात्रं मण्डलं चार्द्रपञ्चकः। प्रकुर्याद् भोजनं राजन् गृहस्थाश्रमतत्परः। दैवे कार्येऽथवा पित्र्ये उक्तवान् कमलापतिः॥' इति।

२. ब्राह्मे—'अमृतोपस्तरणमसि स्वाहेत्यपः पिबेत्। करेण सलिले विष्णुं ध्यात्वा ब्रह्म पिबेदपः॥ प्राणाग्निहोत्रं जुहुयाच्छेषं भुङ्क्ते द्विजोत्तमः। स्वाहान्ताः प्रणवाद्याश्च नाम्ना ,मंत्राः प्रकीर्तिताः॥ जिह्वया च ग्रसेदन्नं दन्तान्नैस्तन्न संस्पृशेत्। अनिन्द्यं भक्षयेदन्नं वाग्यतोऽन्नमकुत्सयन्॥ पञ्च ग्रासान्महामौनं प्राणाद्यांश्च समाचरेत्।' इति।

३. शौनकः—'तर्जनीमध्यमाङ्गुष्ठैर्लग्नात्प्राणाहुतिर्भवेत्। कनिष्ठानामिकाङ्गुष्ठैरपाने जुहुयाद्धविः॥ मध्यमाऽनामिकाऽङ्गुष्ठैर्व्यानाय जुहुयाद् बुधः। कनिष्ठातर्जन्यङ्गुष्ठैरुदानाय मुदाहृतम्। सर्वाङ्गुलीभिरादाय समानायाहुतं बुधैः। तथैव षष्ठीं दद्यात्तु चैतन्याय सदा बुधः॥' शंखः—'प्राणार्थं मनसा ध्यायेत्समासं पूजयेत् सदा। वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितम्॥'—

विश्वामित्रकल्प में प्राणाग्निहोत्र का फल है—'प्राणाग्निहोत्रं वक्ष्यामि सर्वयज्ञेषु दुर्लभम्। ये

हाथ पैर और मुख को जल से गीला करके आपोशन के लिये जल लेकर 'अन्नं ब्रह्म रसो विष्णुः०' 'अहं वैश्वानरो भूत्वा' इत्यादि के अर्थ को ध्यान करके बाएं हाथ से पात्र को पकड़ कर 'अमृतोपस्तरणमसि' इससे जलप्राशन करके मौन होकर 'ॐ प्राणाय स्वाहा' 'ॐ अपानाय स्वाहा' 'ॐ व्यानाय०' 'ॐ उदानाय०' 'ॐ समानाय०' इस प्रकार घी या दूध के साथ पांच आहुतियां सब अंगुलियों से ग्रास को निगलते हुए मुख में पांच आहुति दे। कहीं पर 'ब्रह्मणे स्वाहा' कह कर छठी आहुति भी कही है। प्राणाहुति तक पात्र का स्पर्श और मौन नियत है। उसके बाद दोनों ऐच्छिक हैं।

भोजनं प्राङ्मुखं प्रत्यङ्मुखं[1] वा शस्तं, दक्षिणामुखं यशः फलं काम्यम्, उदङ्मुखमधमं विदिङ्मुखं निषिद्धम्। कृत्स्नं ग्रासं ग्रसन्द्वात्रिंशदादिनियतग्रासमनियतग्रासं वा भुक्त्वा[2] अमृतापिधानमसीति गण्डूषार्धं भूमौ निनीय पवित्रं त्यक्त्वा मुखहस्तोच्छिष्टं सम्यक् प्रक्षालयेत्। तर्जन्या मुखं न शोधयेत्। किंचिद्गण्डूषोत्तरं हस्तप्रक्षालनं षोडशगण्डूषान्ते द्विराचामेत्।

भोजन पूर्वमुख या पश्चिममुख होकर करना अच्छा है। यश-फल के लिये दक्षिणमुख भोजन करना काम्य है। उत्तरमुख भोजन अधम है। कोण में भोजन निषिद्ध है। सम्पूर्ण ग्रास निगलते हुए बत्तीस आदि नियत ग्रास या अनियत ग्रास भोजन करके 'अमृतापिधानमसि' ऐसा कहते हुये आधा कुल्ला जल पीकर आधा भूमि में गिरा करके कुश-पवित्र को छोड़कर मुख और हाथ के उच्छिष्ट को सम्यक् प्रक्षालन करे। तर्जनी से मुंह को साफ नहीं करे। कुछ कुल्लों के बाद हस्त-प्रक्षालन और सोलह कुल्ला के बाद दो बार आचमन करना चाहिये।

## अथ भोजने विधिनिषेधाः

भोजनगृहे च नाचामेत्। अनाचान्तो मूत्रपुरीषौ न कुर्यात्। उत्तरापोश-

---

ज्ञात्वा मुच्यते जन्तुर्जन्ममृत्युजरादिभिः॥ विधिना भुज्यते येन मुच्यते च ऋणत्रयात्। कुलानुद्धरते विप्रो नरकानेकविंशतिः॥ सर्वयज्ञफलप्राप्तिः सर्वलोकेषु गच्छति। हृत्पुण्डरीकमरणिं मथेन्मथनसंज्ञकम्॥ वायुरज्ज्वा मथेदग्निमात्माऽध्वर्युः प्रकीर्तितः।' इति।

१. मनुः—'आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः। श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः॥' अर्थात् आयु की कामना से पूर्वमुख, यश की कामना से दक्षिणमुख, श्री की कामना से पश्चिममुख और सत्य की कामना से उत्तरमुख होकर भोजन करना चाहिये। स्मृत्यन्तरे—'पुत्रवांस्तु गृहे नित्यं नाश्नीयादुत्तरामुखः। सोमवारे तथाऽभ्यङ्गं वर्जयेत्तु सदा बुधः॥ प्रयोगपारिजाते—'पितरौ जीवमानौ चेन्नाश्नीयाद्दक्षिणामुखः। तयोस्तु जीवतोरेकस्तथैव नियमः स्मृतः॥ अनिशं मातृहीनानां यशस्यं दक्षिणामुखम्।'—

भोजन की आलोचना नहीं करे प्रत्युत प्रशंसापूर्वक उसे स्वीकार करे—'पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्। दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः॥' इसका फल मनु ने ही बतलाया है—'पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति। अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम्॥' इति।

२. देवलः—'भुक्तोच्छिष्टं समाघ्राय सर्वेभ्यो घृतवर्जितम्। उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद् भुवि॥ अमृतापिधानमसीत्यपः प्राप्य भुवि क्षिपेत्। अनन्तरं शिखां चैव बध्नीयाद् वामपाणिना॥ उत्थाय बहिरागत्य मुखहस्तादि शोधयेत्। आचम्य च ततः कुर्याद्दन्तकाष्ठस्य भक्षणम्॥ दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत्। न तत्र बहुशः कुर्याद्यत्नमुद्धरणं प्रति॥' इति।

नमकृत्वोत्थाने स्नात्वा शुद्धिः। हस्तौ संमृज्य प्रस्राव्याङ्गुष्ठेन नेत्रयोर्निषिञ्च्येष्ट-देवतां स्मरेत्। नाञ्जलिना पिबेत्। पालाशं दग्धमयोबद्धं च पीठं वर्जयेत्[1]। न शिशुभिः सह भुञ्जीत। भार्यया सह विवाहवर्जं न भुञ्जीत।

भोजन के घर में आचमन नहीं करे। विना आचमन किये पेशाब पाखाना नहीं करे। उत्तरा-पोशन नहीं करके उठने पर स्नान से शुद्धि होती है। दोनों हाथ अच्छी तरह से साफ करके हाथ का पानी पोंछ कर अंगूठे से दोनों आखों को साफ करके अपने इष्ट देवता का स्मरण करे। अंजलि से जल न पिये। पलाश के जले हुये और लोहे से बद्ध पीढ़े पर न बैठे। लड़कों के साथ नहीं खाय। विवाह को छोड़कर स्त्री के साथ भोजन न करे।

बालवृद्धेभ्योऽन्नमदत्त्वा न भुञ्जीत। न प्रौढपादो [2]नासनारूढपादो न प्रसा-रितपादो न विदिक्तुण्डो न दुष्टैकपंक्तौ न शून्याग्निपाकगृहे न देवालये भुञ्जीत। न संध्ययोर्न महानिशायां न यज्ञोपवीतहीनो न वामहस्तेन न शूद्रशेषं भुञ्जीत।

बालक और वृद्धों को अन्न न देकर भोजन न करे। पैर फैला कर आसन पर आरुढ़ होकर पैर पसार कर, कोने की ओर मुंह कर, दुष्ट की पंक्ति में, सूने रसोई घर में, देव मन्दिर में, भोजन न करे। दोनों सन्ध्याओं में, आधी रात में, विना यज्ञोपवीत के बाएं हाथ से और शूद्र से बचा हुआ भोजन न करे।

आदौ मधुरं[3] मध्ये लवणाम्लमन्ते तिक्तादि पूर्वं द्रवं मध्ये कठिनमन्ते द्रवम्। अष्टौ ग्रासा यतेः षोडश द्वात्रिंशद्वा गृहिणो वनस्थस्य षोडश यथेष्टं ब्रह्म-चारिणः। सर्वं सशेषमश्नीयान्निःशेषं घृतपायसम्। क्षीरं दधि मधु भुञ्जीत। दिवा रात्रौ चेति द्विवारमेव नान्तरा भोजनम्।

भोजनके प्रारम्भ में मीठा, बीच में नमकीन और खट्टा अन्त में तीता खाय। पहले रस वाला, बीच में कड़ा, अन्त में गीला भोजन करे। संन्यासी आठ ग्रास खाय, गृहस्थ को सोलह या बत्तीस ग्रास खाना चाहिये। वानप्रस्थ को सोलह ग्रास और ब्रह्मचारी को यथेष्ट भोजन करना चाहिये। घी दूध सब खा जाय, अन्य सब चीजों में से कुछ बचा दे। दूध, दही और मधु विना बचाये खाय। दिन और रात में दो बार ही खाय, दिन रात के मध्य में नहीं।

अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत्॥

---

१. प्रचेताः—'गोशकृन्मृन्मयं भिन्नं तथा पालाशपिप्पलम्। लोहबद्धं तथैवार्कं वर्जयेदासनं बुधः॥' इति।

२. पराशरः—'पादुकास्थो न भुञ्जीत पर्यङ्के संस्थितोऽपि वा। शुना चाण्डालदृष्टो वा भोजनं परिवर्जयेत्॥' लघुव्याससंहितायाम्—'यो भुङ्क्ते वेष्टितशिरा यस्तु भुङ्क्ते विदिङ्मुखः। सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम्॥ नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक्। न च भिन्नासनगतो न शयानः स्थितोऽपि वा॥ नोपानत्पादुकी चापि न च संविलपन्नपि॥' इति।

३. पुलस्त्यः—'अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरान्नकम्। लवणाम्लौ तथा मध्ये कटुतिक्ता-दिकं ततः॥' विष्णुपुराणे—'प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः। अन्ते पुनर्द्रवाशी तु बला-रोग्यैर्न मुञ्चति॥ जठरं पूरयेदर्धमन्नैर्भागं जलस्य च। वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत्॥' इति।

यस्तु पाणितले भुङ्क्ते यश्च फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यश्च तस्य गोमांसवच्च तत् ॥
नाजीर्णे भोजनं कुर्यात्कुर्यान्नातिबुभुक्षितः ।
नार्द्रवासा नार्द्रशिरा न पादारोपिते करे ॥

द्वादशी, अमावस्या और पूर्णिमा की रात में चतुर्दशी अष्टमी के दिन में और एकादशी को दिन रात में भोजन करने से चान्द्रायण प्रायश्चित्त से शुद्धि होती है। जो हाथ में लेकर खाता है, जो फूक फूक कर खाता है, जो फैलाई हुई अंगुलियों से खाता है उसका भोजन गोमांस के तुल्य है। अजीर्ण में भोजन न करे। बहुत भूख लगने पर भी भोजन नहीं करे। गीले वस्त्र पहिन कर, सिर गीला करके, पैर पर हाथ रख कर न खाय।

ग्रासशेषं च नाश्नीयात्पीतशेषं पिबेन्न च ।
शाकमूलफलादीनि दन्तच्छेदैर्न भक्षयेत् ॥
नोच्छिष्टो घृतमादद्यान्न पदा भाजनं स्पृशेत् ।
पिबतो यत्पतेत्तोयं भाजने मुखनिःसृतम् ॥ अभोज्यं तत् ।

पीतावशिष्टतोयपाने चान्द्रायणम् । हस्तनखस्पृष्टजलपाने वामहस्तोद्धृतजलपाने[1] च सुरापानसमम् । एकपंक्त्युपविष्टानां विप्राणां भुञ्जानानामेकस्मिन्नभ्युत्थिते आचान्ते वाऽन्यैर्न भोज्यम् । अत्रोत्थितस्य भोक्तुश्च दोषः । गुरोर्न दोषः ।

लवणं व्यञ्जनं चैव घृतं तैलं तथैव च ।
लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ॥

ग्रास में से बचे हुए को न खाय। पीने से बचे हुये को न पिये। शाक मूल, फल आदि को दाँत से काट कर न खाय। जूठे रहने पर घी न ले। पैर से भोजन पात्र का स्पर्श न करे। पानी पीते हुए जो जल मुख से पात्र में गिरे वह भोजन के अयोग्य है। पीने से बचे हुए जल के पीने में चान्द्रायण करना चाहिये। हाथ के नख से छुए हुए और बाँए हाथ से निकाले हुए जल को पीना मद्यपान के समान है। एक पांति में बैठकर भोजन करते हुए ब्राह्मणों में एक भी यदि उठ जाता है या अन्तिम आचमन कर लेता है तो अन्य को नहीं खाना चाहिए। इसमें उठने वाले और और खाने वाले दोनों को दोष है। गुरु को दोष नहीं है। नमक, तरकारी, घी, तेल, चाटने और पीने वाली विविध प्रकार की चीजें हाथ से दी हुई हों तो न खाय।

ताम्रे गव्यं कांस्ये नारीकेलेक्षुरसौ सगुडं दधि सगुडमार्द्रकं च मद्यसमम् । सैन्धवसामुद्रभिन्नप्रत्यक्षलवणभक्षणं मृद्भक्षणं च गोमांससमम् ।

---

१. आह्निककारिकायां विशेषः—'वामहस्ते जलं धृत्वा मणिबन्धे निधाय च । भुञ्जमानः पिबन् वारि नोच्छिष्टं मनुरब्रवीत् ॥' मणिबन्ध=कलाई । बृहस्पतिः—'न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन । न पादौ न शिरो वस्तिं न पदा भाजनं स्पृशेत् ॥' पराशरः—'एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने । यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ करमध्ये स्थिता देवाः करपृष्ठे तु राक्षसाः । तस्मात्तु करपृष्ठेन नान्नं कुर्यात्प्रदक्षिणम् ॥' इति ।

उदक्यामपि चाण्डालं श्वानं कुक्कुटमेव च ।
भुञ्जानो यदि पश्येत्तु तदन्नं तु परित्यजेत् ॥

भुञ्जानस्य गुदस्रावे उपवासः पञ्चगव्यं च । आपोशनोत्तरं प्राणाहुतेः प्राक् तत्स्रावे स्नानं षट् प्राणायामाः ।

ताम्रपात्र में गाय का दूध-दही-घी, कांसे के पात्र में नारियल और ऊख का रस, गुड़ के साथ दही और गुड़ के साथ आदी मद्य के समान है । सैंधव और सामुद्रिक से भिन्न लवण और मिट्टी का खाना गोमांस के समान है । भोजन करते हुए रजस्वला, चाण्डाल, कुत्ता, मुर्गा को देख ले तो उस अन्न का त्याग कर दे । भोजन करते समय पतला पाखाना हो जाय तो उपवास करे और पंचगव्य पिये । आपोशन के बाद प्राणाहुति के पहिले गुदस्राव हो जाय तो स्नान करके छ प्राणायाम करे ।

भुञ्जानस्याशौचप्राप्तौ ग्रासं त्यक्त्वा स्नानम् । ग्रासाशने उपवासः । सर्वाशने त्रिरात्रम् । विष्ठादिस्पर्शे स्नानं प्राणायामत्रयं च । चाण्डालपतितोदक्या वाक्यं श्रुत्वा भोजने एकोपवासः । स्नात्वा शतगायत्रीजपो वा । कलहघरट्टोलूखलमुसलानां यावच्छब्दस्तावदभोजनम् ।

अप्येकपंक्त्यां नाश्नीयाद् ब्राह्मणैः स्वजनैरपि ।
कोऽपि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥
ततोऽग्निना भस्मना च स्तम्भेन सलिलेन च ।
द्वारेणैव च मार्गेण पंक्तिभेदं चरेद् बुधः[१] ॥

भोजन करते हुए आशौच लग जाय तो मुँह का ग्रास त्याग कर स्नान करे । ग्रास खा लेने पर उपवास करे । सम्पूर्ण भोजन करने पर त्रिरात्र उपवास करे । विष्ठा आदि के छू जाने पर स्नान और तीन प्राणायाम करे । चाण्डाल, पतित और रजस्वला का वाक्य सुनकर भोजन करने में एक उपवास या स्नान करके सौ गायत्री का जप करे । झगड़ा, चर्खा, ओखल, और मूसर का शब्द जब तक होता रहे तब तक भोजन न करे । एक पंक्ति में भी बैठ कर ब्राह्मणों के साथ या अपने भाई बन्धु के साथ भोजन नहीं करे, क्या कोई किसी के छिपे हुए पाप को जानता है ? इसलिये विद्वान् अग्नि, भस्म, खम्भे, जल, द्वार या मार्ग से पंक्ति-भेद कर ले ।

केशपिपीलिकामक्षिकाभिः सह पक्वमन्नं त्यजेदेव । पाकोत्तरं केशपिपीलिकादिकीटकमक्षिकासंसृष्टे गवाघ्राते वान्ने सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये इति विज्ञानेश्वरः । शूद्रान्नं शूद्रदत्तब्राह्मणान्नं रात्रिपर्युषितं [२]रजस्वला-

---

१. गोभिलस्य वचनमेतत् । नागदेवः—'प्रक्षाल्य पाणी पात्रं तु भस्मना पंक्तिवारणम् ॥' इति ।

२. याज्ञवल्क्यः—'अनर्चितं वृथामांसं केशकीटसमन्वितम् । शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥ उदक्यास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् । गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः ॥' अत्र उदक्याग्रहणं चण्डालाद्युपलक्षणार्थम्, तथा च शंखः—'अमेध्यपतितचण्डालपुल्कसरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं वर्जयेत्' ॥—

पर्यायान्नं तु अन्यसम्बन्ध्यन्यव्यपदेशेन यद्दीयते तदुच्यते—'ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् । उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥' इति ।

चाण्डालपतितादिदृष्टं काकादिपक्ष्युच्छिष्टमभोज्यम्। स्नेहपक्वं [1]मण्डकादि च पर्युषितं ग्राह्यम्।

केश, चींटी और मक्खियों के साथ पका हुआ अन्न अवश्य त्याग दे। पकने के बाद केश, चींटी आदि कीड़े और मक्खी के संसर्ग से या गाय के सूंघने से, जल भस्म या मिट्टी शुद्धि के लिये उसमें डाल दे, ऐसा विज्ञानेश्वर कहते हैं। शूद्र का दिया हुआ ब्राह्मण का अन्न, रात का बासी, रजस्वला-चाण्डाल-पतित आदि से देखा हुआ तथा कौवा आदि पक्षी का जूठा अन्न भोजन योग्य नहीं है। तेल में पकाया हुआ मंडक ( बारा ) आदि बासी ग्राह्य होता है।

## अथ वर्ज्यक्षीराणि

अवत्साया गोरनिर्दशानां[2] गोमहिष्यजानां गर्भिण्या एककालान्तरितदोहाया यमलसूस्रवत्स्तन्योरजवर्जंद्विस्तनीनामुष्ट्रीवडवयोरारण्यकमृगादेरवेश्च क्षीराणि वर्ज्यानि। शिग्रुं हिङ्गुवर्ज्यं रक्तं वृक्षनिर्यासं[3]पुरीषस्थानोत्पन्नतण्डुलीयकादिकं देवाद्युद्देशं विना[4] कृतं संयावपायसापूपशष्कुलीकृसरं वर्जयेत्। शणकुसुम्भालावुवार्ताककोविदारवटादिफलानि मातुलिङ्गं च वर्ज्यम्।

बिना बछड़े की गाय का, दस दिन के भीतर ब्याई हुई गाय-भैंस-बकरी का, गाभिन का, एक समय दुही जाने वाली का, जिसके स्तन से अपने आप दूध चूता हो ऐसी गाय का, बकरी को छोड़ कर दो थन वाली का, ऊँटनी का, घोड़ी का, जंगली मृग आदि का और भेड़ का दूध वर्ज्य है। सहिजन और हींग को छोड़कर लाल रंग के वृक्ष का गोंद, पाखाने के स्थान पर उत्पन्न चावल आदि, देवता आदि के उद्देश्य के बिना बनाया हुआ हलुआ-खीर-पूआ-कचौड़ी-खिचड़ी का वर्जन करे। सन, कुसुम्भ, गोल लौकी, बैगन, कोविदार और बड़ आदि के फलों तथा बिजौरा नीबू का त्याग करे।

पलाण्डुलशुनगृञ्जनभक्षणे चान्द्रायणम। भुञ्जानेषु परस्परस्पर्शे पात्रस्थान्नभक्षणे स्नात्वाष्टोत्तरशतगायत्रीजपः। अधिकभोजने सहस्रम्। भुञ्जानस्याशुचिना

---

१. मण्डकसक्तुकिलाटकूर्चिकाद्या अस्नेहा अपि चिरकालसंस्थिता भोज्याः। तथा च याज्ञवल्क्यः—'अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्। अस्नेहा अपि गोधूमयवगोरसविक्रियाः॥' मनुः—'चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः। यवगोधूमजं सर्वं पयसश्चैव विक्रिया॥' इति।

२. मनु ने कहा है—'अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा। आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥' यहां 'विवत्सायाश्च'से जिस गौ का बच्चा मर गया हो उसी गाय के दूध छोड़ देने की विधि है, भैंस, बकरी आदि का दूध नहीं, इत्यादि मन्वर्थमुक्तावलीकार का अभिप्राय है।

३. मनु ने पांचवें अध्याय में बतलाया है—'लोहितान् वृक्षनिर्यासान् वृश्चनप्रभवांस्तथा। शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत्॥'

४. मनुः—'वृथा कृसरसंयावं पायसापूपमेव च। अनुपाकृतमांसानि देवान्नानि हवींषि च॥' यहां देवान्न को देवता के अर्पण के पश्चात् नैवेद्य रूप में और हविष्य को अग्नि में होम करके ग्रहण करने में दोष नहीं है। इस श्लोक में 'वृथा' का अर्थ है अपने उद्देश्य से बनाया गया। वृथा शब्द का कृसर से अपूपपर्यन्त सभी के साथ अन्वय है।

विप्रेण स्पर्शेऽन्नत्यागः। भुक्तोच्छिष्टस्पर्शे सवर्णे स्नानं जपो वा। असवर्णे तूपवासः। भुक्तोच्छिष्टस्य श्वशूद्रादिस्पर्शे उपोष्य पञ्चगव्यम्। रजकादिस्पर्शे त्रिरात्रम्। परिवेषणं कुर्वन्नुच्छिष्टस्पर्शे पयोदधिघृतादिलघुद्रव्यमत्यजन्नाचान्तः शुचिः। भक्ष्याद्यन्नस्य त्याग एव। वस्त्रे विकल्पः।

प्याज, लहसुन और गाजर के खाने में चान्द्रायण करे। भोजन करने वालों में परस्पर स्पर्श होने पर पात्रस्थित अन्न के खाने पर एक सौ आठ बार गायत्री का जप करे। अधिक भोजन करने पर सहस्र गायत्री का जप करे। भोजन करते समय अपवित्र ब्राह्मणसे स्पर्श होने पर अन्न का त्याग करे। भोजन के बाद उच्छिष्ट अवस्था में समान वर्ण से स्पर्श होने पर स्नान या जप करे। असवर्ण से स्पर्श होने पर उपवास करे। भोजनानन्तर उच्छिष्ट अवस्था में कुत्ता शूद्र आदि से स्पर्श होने पर उपवास करके पंचगव्य प्राशन करे। रजक आदिसे स्पर्श होने पर त्रिरात्र उपवास करे। परोसते हुए उच्छिष्ट के स्पर्श होने पर दूध, दही, घी आदि थोड़े द्रव्य का त्याग न कर आचमन करने से पवित्र हो जाता है। भक्ष्य आदि अन्न का तो त्याग ही है। वस्त्र में विकल्प है।

परिवेषणादिकाले रजोदृष्टौ तत्स्पृष्टान्नत्यागः। भोजनान्ते उच्छिष्टशेषान्नम्—

रौरवे पूयनिलये पद्मार्बुदनिवासिनाम्।
प्राणिनां सर्वभूतानामक्षय्यमुपतिष्ठतु ॥ इति दद्यात्।
आचान्तोप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम्[१]।
उद्धृतेप्यशुचिस्तावद्यावन्नोन्मृज्यते मही ॥

परोसने के समय में रज दिखाईं देने पर उससे छुये हुए अन्न का त्याग करे। भोजन के अन्त में उच्छिष्ट बचे हुए अन्न को—पूय का निलय रौरव-नरक में पद्म और अर्बुद वर्ष तक निवास करने वाले प्राणियों और सब जीवों को अक्षय उपस्थित हो, ऐसा कह कर दे दे। आचमन करने पर भी तब तक अपवित्र रहता है जब तक पात्र हटाया न जाय। हटाने पर भी तबतक अशुचि रहता है जब तक पृथिवी का शोधन नहीं किया जाय।

## अथ ताम्बूलभक्षणशैली

पर्णस्याग्रं च मूलं च शिरां चैव विशेषतः।
चूर्णपर्णं वर्जयित्वा[२]ताम्बूलं खादयेद् बुधः।
अनिधाय मुखे पर्णं पूगं वै भक्षयेन्न च ॥ इति पञ्चमभागकृत्यम्।

विद्वान् को चाहिये कि पान का अगला हिस्सा और मूल विशेषतः उसकी शिरा तथा चूर्णपर्ण को छोड़कर ताम्बूल खाय। मुख में ताम्बूल को न रखकर सुपारी नहीं खाय। पंचम भाग कृत्य समाप्त।

---

१. अत्रेर्वचनमेतत्। अस्य श्लोकस्याग्रे—'भूमावपि हि लिप्तायां तावत्स्यादशुचिः पुमान्। आसनादुत्थितस्तस्माद्यावन्न स्पृशते महीम् ॥' इति।

२. पीयूषधारा में ताम्बूल दान का फलादि—'ताम्बूलं सुष्ठु यो दद्याद् ब्राह्मणेभ्योऽतिभक्तितः। मेधावी सुभगः प्राज्ञो दर्शनाभश्च जायते ॥ फलेन तृप्यते ब्रह्मा पत्रेण भगवान् हरिः। चूर्णमीश्वरतृप्त्यै स्यात्ताम्बूलाशनदानतः ॥ एकद्वित्रिचतुःपञ्चषड्भिः पूगैः फलानि च। लाभालाभौ सुखं दुःखमायुर्मरणमेव च। पर्णमूले भवेद् व्याधिः पर्णाग्रे धनसंक्षयः। चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ पर्णाग्रं पर्णपृष्ठं वा चूर्णपर्णं द्विपर्णकम्। रात्रौ खदिरताम्बूलं शक्रस्यापि श्रियं

## अथ षष्ठभागादिकृत्यविचारः

इतिहासपुराणाद्यैः षष्ठसप्तमकौ [1]नयेत् ।
अष्टमे लोकयात्रा [2] तु बहिः संध्या ततः पुनः ॥

इतिहास और पुराण आदि से दिनके छठे सातवें भाग को बितावे। आठवें भाग में लोकयात्रा और उसके बाद बाहर में सन्ध्या करे।

## अथ सायं सन्ध्यादिविचारः

[3]सायंसंध्या प्रातःसंध्यावत्। ॐ अग्निश्च मामन्युश्च० यदह्ना पापमकार्षं० अहस्तदवलुम्पतु० सत्ये ज्योतिषि जुहोमि स्वाहेति मन्त्राचमने विशेषः। पश्चिमाभिमुखस्तिष्ठन् [4]अर्घ्यं दद्यात्। ऊर्ध्वजानुरुपविश्य प्रत्यङ्मुख एव गायत्रीं जपेत्। सायं होमस्तूक्त एव। सायं वैश्वदेवे पुनःपाकः।

---

हरेत् ॥ अशास्त्रविधिना पर्णपूगं खादति यो नरः। सप्तजन्मदरिद्रः स्यादन्ते विष्णुं न संस्मरेत् ॥' भोजनान्त में सौ पग चल लेने के बाद तांबूल खाने वालों को ताम्बूलभक्षण करना चाहिये—'भोजनान्ते शतपदं गत्वा ताम्बूलभक्षणम्। शयनं वामकुक्षौ चेद् भैषज्यं किं प्रयोजनम् ॥' भोजनानन्तर ताम्बूलभक्षण का गुण आयुर्वेदग्रन्थों में देखें। धन्वन्तरि ने शतपद गमन के सम्बन्ध में कहा है—'भुक्त्वा राजवदासीत यावदन्नक्लमो गतः। ततः शतपदं गत्वा वामपार्श्वे तु संविशेत् ॥' इति।

नारद ने भोजनानन्तर स्मरण योग्यों का निर्देश किया है—'अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम्। आहारपचनार्थाय स्मरेद् भीमं च पञ्चमम् ॥ आतापी मारितो येन वातापी च निपातितः। समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥ इत्युक्त्वा तु स्वहस्तेन परिमार्ज्यं निजोदरम्। अनायासप्रदायीनि कुर्यात् कर्माण्यतन्द्रितः ॥' इति।

१. दक्षस्य वचनमेतत्। अत्रिः—'इतिहासपुराणानि धर्मशास्त्राणि चाभ्यसेत्। वृथा विवादवाक्यानि परिवादांश्च वर्जयेत् ॥' इति।

२. ग्रन्थान्तरे—'ग्रामे च यान्यगाराणि देवतानां तदीक्षणात्। लोकयात्रेति कथिता तां कुर्वन् पुण्यभाग्भवेत् ॥' इति।

३. यमोक्त सायंसन्ध्या का काल—'रवेरस्तमयात्पूर्वं घटिकैका यदा भवेत्। सायं सन्ध्यानुपासीत कुर्याद्धोमं च पूर्ववत् ॥'भविष्ये—'शौचं कृत्वा यथान्यायमर्द्धास्तमितभास्करे। सायंसंध्यामुपस्थाय आसीनस्त्वथ वाग्यतः ॥' काल के अतिक्रमण होने पर जमदग्नि ने कहा है—'एकाहं चाप्यतिक्रम्य सन्ध्यावन्दनकर्म च। अहोरात्रोषितो भुक्त्वा गायत्र्या अयुतं जपेत् ॥ द्विरात्रे द्विगुणं प्रोक्तं त्रिरात्रे त्रिगुणं भवेत्। त्रिरात्रानन्तरं चेत्स्याच्छूद्र एव न संशयः ॥' मनूक्त सायंसन्ध्या की अवधि—'पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात्। पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥'—

सायंसन्ध्या में शौनकोक्त दिशा का विचार यों है—'दिशोऽष्टधा विभक्तायाः प्रतीच्या भागसप्तकम्। हित्वा दक्षिणतोऽन्यस्तु योऽष्टमो भाग उत्तरः ॥ अस्याभिमुखतो विप्रो भूत्वा प्रयतमानसः। जपन्नासीत सावित्री सन्ध्यां कृत्स्नामतन्द्रितः ॥' शौनक-निर्दिष्ट सायंसन्ध्या का आचमनमन्त्र है—'अग्निश्चेत्यनुवाकेन सायंकाले पिबेदपः।' बौधायनोक्त सायंसन्ध्या का फल—'यदुपस्थकृतं पापं यच्च योनिकृतं भवेत्। सायंसन्ध्यामुपस्थाय तेन तस्मात्प्रमुच्यते ॥' इति।

४. गृह्यपरिशिष्टे—'अथाचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमुद्धृत्यादित्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्वया सावित्र्या त्रिरर्घ्यं निवेद्य क्षिपेत्'। वसिष्ठः—'कालातिक्रमणे चैव त्रिसन्ध्यमपि सर्वदा। चतुर्थार्घ्यं प्रकुर्वीत भानोर्व्याहृतिपूर्वकम् ॥' इति।

सायंसन्ध्या प्रातःसन्ध्या के समान है। 'ॐ अग्निश्च मा मन्युश्च०' 'यदह्ना पापमकार्षं' 'अहस्तदवलुम्पतु' 'सत्ये ज्योतिषि जुहोमि स्वाहा' ये मन्त्राचमन में विशेष हैं। पश्चिमाभिमुख बैठकर अर्घ्य दे। ठेहुना ऊपर करके बैठकर पश्चिमाभिमुख ही गायत्री जपे। सायं होम तो कह ही चुका हूँ। सायं वैश्वदेव करने पर पुनःपाक आवश्यक है।

अतिथिं संपूज्य घटीत्रयानन्तरं सार्धयामात्प्राग् भुक्त्वा शयीत। भोजनकाले दीपनाशे पात्रमालभ्य सूर्यं स्मृत्वा पुनर्दीपं दृष्ट्वा पात्रस्थं भुञ्जीत नान्यत्। श्राद्धतत्पूर्वदिने पातधृतिसंक्रान्त्यादिषु न निशि भोजनम्।

चतुर्थप्रथमौ यामौ विद्याभ्यासैर्नयेन्निशि।
प्रहरद्वयशायी तु ब्रह्मभूयाय कल्पते॥

अतिथि की पूजा कर तीन घड़ी के बाद डेढ़ पहर से पहिले भोजन करके सोवे। भोजन के समय में दीप बुझ जाने पर पात्र का स्पर्श करके सूर्य का स्मरण कर पुनः दीप जलाकर पात्र में स्थित अन्न का भोजन करे, अन्य कुछ नहीं। श्राद्ध में और उसके पहिले दिन व्यतीपात, वैधृति और संक्रान्ति आदि में रात का भोजन नहीं करे। रात में विद्याभ्यास से चौथे और पहिले पहरों को बितावे। केवल दो प्रहर सोने वाला तो ब्रह्म हो जाता है।

[1]प्राक् प्रत्यग् दक्षिणस्यां शिरः कृत्वा शयीत, न कदाचिदुदक्शिराः। रात्रिसूक्तं[2] जप्त्वा सुखशायिनः स्मृत्वा विष्णुं नत्वा स्वप्यात्।

अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः॥

---

१. मार्कण्डेयः—'प्राक्शिराः शयने विन्द्याद्धनमायुश्च दक्षिणे। पश्चिमे प्रबला चिन्ता हानिर्मृत्युरथोत्तरे॥' गार्ग्यः—'स्वगृहे प्राक्शिराः शेते श्वाशुर्ये दक्षिणाशिराः। प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः॥' विष्णुपुराणे—'प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप। सदैव स्वपतः पुंसो विपरीतं तु रोगदम्॥'—

याज्ञवल्क्योक्त शयनकाल—'उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च। भृत्यैः परिवृतो भुक्त्वा नातितृप्याथ संविशेत्॥' धन्वन्तरिः—'पूर्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः। रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान्॥' मत्स्यपुराण में शयन की भूमि—'शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत्। वैदिकैर्गारुडैर्मन्त्रैरभिमन्त्र्य स्वपेत्ततः॥ माङ्गल्यं पूर्णकुम्भं च शिरःस्थाने निधापयेत्। रात्रिसूक्तं जपन् रात्रौ रात्रिक्षेमो भवेन्नरः॥' अन्यच्च—'उपानहौ वेणुदण्डमम्बुपात्रं तथैव च। ताम्बूलादीनि सर्वाणि समीपे स्थापयेन्निशि॥'—

शिल्पशास्त्र में शय्या का विचार—'चतुरशीतिपर्वाणि दैर्घ्येण परिकल्पयेत्। षष्ट्यङ्गुलानि विस्तारं मञ्चकं हस्तसम्मितम्॥ एवं शय्या विधातव्या सर्वेषां शयनोचिता। मानाधिक्ये दरिद्रः स्यान्मानहीने सुखक्षयः॥' विष्णुपुराण में अयोग्य शय्या—'न विशालां न वा भग्नां नासमां मलिनां न च। न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्॥' मार्कण्डेयपुराण में निषिद्ध शय्यागार—'नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः। नाकाशे सर्वतः शून्ये न च चैत्यद्रुमे तथा॥' इति।

२. मार्कण्डेयः—'रात्रिसूक्तं जपन् स्मृत्वा देवांश्च सुखशायिनः। नमस्कृत्याव्ययं विष्णुं समाधिस्थं स्वपेन्निशि॥' सुखशायिनः—'अगस्तिर्माधवश्चैव मुचुकुन्दो महाबलः। कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः॥' इति गोभिलः।

न संध्यायां न धान्ये न गोगृहे न [1]देवविप्रगुरूणामुपरि नोच्छिष्टो न दिवा न नग्नः शयीत । निद्राकाले[2] ताम्बूलं मुखात् स्त्रियं शयनाद् भालात्तिलकं शिरसः पुष्पं च त्यजेत् ।

पूरब, पच्छिम और दक्षिण की ओर सिर करके सोवे, उत्तर की ओर सिर करके कभी नहीं। रात्रिसूक्त जप कर सुखशायियों का स्मरण कर विष्णु को प्रणाम करके सो जाय। अगस्ति, माधव, मुचुकुन्द, कपिलमुनि और आस्तीक, ये पांच सुखशायी कहे जाते हैं। सन्ध्या में, धान पर, गौ के घर में, देवता-ब्राह्मण-गुरु के ऊपर भाग में, उच्छिष्टावस्था में, दिन में और नंगे होकर नहीं सोवे। निद्रा के समय मुंह से ताम्बूल, खटिया से स्त्री, माथे पर से तिलक और सिर से पुष्प त्याग दे।

गर्भाधानप्रकरणोक्तकाले सार्धयामोत्तरं दीपे सत्यसति वा निवीतं यज्ञोपवीतं कण्ठादौ कृत्वा पत्नीं गच्छेत्[3] ।

---

१. गार्ग्यः—'शून्यालये श्मशाने च एकवृक्षे चतुष्पथे। महादेवगृहे वाऽपि मातृवेश्मनि न स्वपेत् ॥ न यक्षनागायतने स्कन्दस्यायतने तथा। कूलच्छायासु च तथा शर्करालोष्ठपांसुषु ॥ न स्वपेच्च तथा भूमौ विना दीक्षां कथञ्चन। धान्यगोधनविप्राणां गुरूणां च तथोपरि ॥ मृतदन्तमये चैव विद्युद्दग्धे पलाशजे। न शयीत नरो धान्ये शयने पञ्चदारुजे ॥' इति।

२. दक्षः—'निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत्। पर्यङ्कात् प्रमदां भालात् पुण्ड्रं पुष्पाणि मस्तकात् ॥' गार्ग्यः—'यानि कानि च पुष्पाणि यत्किञ्चिदनुलेपनम्। अलक्ष्मीपरिहारार्थं नित्यं त्यज युधिष्ठिर ॥' इति।

३. स्त्रीगमन का याज्ञवल्क्योक्त फल है—'लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः। यस्मात्तस्मात् स्त्रियः सेव्या भर्तव्याश्च सुरक्षिताः ॥' स्त्रीगमन का काल—'षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्। ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥' ऋतुकाल में स्त्रीगमन नहीं करने पर पराशर ने पुरुष के लिये दोष बतलाया है—'ऋतौ स्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ अदुष्टां पतितां भार्यां यौवने यः परित्यजेत्। सप्तजन्म भवेत् स्त्रीत्वं वैधव्यं च पुनः ॥'—

इसी प्रकार स्त्री भी यदि पुरुष के पास न जाय तो उन्होंने स्त्री के लिये दोष बतलाया है—'ऋतुस्नाता तु या नारी भर्तारं नोपसर्पति। सा मृता नरकं याति विधवा च पुनः पुनः ॥' आचारार्क में—'धौतवस्त्रं च ताम्बूलं संयोगे च सुखावहम्। भर्तुः पादौ नमस्कृत्य पश्चाच्छय्यां समाविशेत् ॥ संस्मृत्य परमात्मानं पत्न्या जंघे प्रसारयेत्। रेतः सिञ्चेत्ततो योन्यां तस्माद् गर्भं बिभर्तिवति ॥' अन्यत्र—'उपचारक्रिया केलि स्पर्शो भूषणवाससाम्। एकशय्यासनक्रीडाश्चुम्बनालिङ्गने तथा ॥ कोपो रोषश्च निर्भर्त्सः सम्भोगे च न दोषभाक्। कञ्चुकेन समं नारी भर्तुः सङ्गं समाचरेत् ॥ त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम्।' शम्भुरहस्य में—'गवां पश्चाद् द्विजस्याङ्घ्रिर्योगिनां हृत्कवेर्वचः। परं शुद्धं विजानीयाद् मुखं स्त्रीवह्निशञ्जिनाम् ॥'—

स्त्रियों का शङ्खोक्त आचार है—'नानुक्त्वा गृहान्निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेन्न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यान्न हसेदपावृता भर्तारं तद्बन्धून् वा न द्विष्यान्न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुट्टककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत्संसर्गेण हि कुलस्त्रीणां चारित्रं दुष्यति' इति। सुश्रुतोक्तवर्ज्य स्त्री—'स्तोकां न तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम्। नातिबालां न कुपितामप्रशस्तां च गर्भिणीम् ॥' शिवसंहितायाम्—'मासे षष्ठे सप्तमे वाऽष्टमे वा प्राप्ते पत्न्या नैव कुर्यात् कदाचित्। होमं यानं देवयात्रां तथैव तस्या हस्तेनाशनं विप्रपुण्यम् ॥' इति।

अष्टम्यां च चतुर्दश्यां दिवा [1]पर्वणि मैथुनम् ।
कृत्वा सचैलं स्नात्वा तु वारुणीभिश्च मार्जयेत् ॥

पुनर्मामैत्विति जपश्चोक्त एव ।

गर्भाधान के प्रकरण के कहे हुए समय में डेढ़ पहर के बाद दीप रहे या न रहे यज्ञोपवीत को कण्ठ में करके स्त्रीगमन करे । अष्टमी और चतुर्दशी में दिन और पर्व में मैथुन करने पर वस्त्रसहित स्नान करके वारुणी ऋचाओं से मार्जन करे । और 'पुनर्मामैतु' इस मंत्र का जप तो कहा ही है ।

## अथ विधिनिषेधातिक्रमणे प्रायश्चित्तम्

एवं स्नानभोजनादिके बहुविधविधिनिषेधाकुले आह्निककर्मणि न्यूनाधिकदोषविधिनिषेधातिक्रमदोषपरिहारार्थं प्रायश्चित्ताज्ञाने तत्साङ्गतार्थं प्रायश्चित्तसाङ्गतार्थं च [2]श्रीविष्णुनामोच्चारणादिकं कार्यम् ।

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि च ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

इसी प्रकार स्नान भोजन आदि में अनेक प्रकार के विधिनिषेध से आकुल आह्निक कर्म में न्यूनाधिक दोष विधि-निषेध का अतिक्रमण रूप दोष की निवृत्ति के लिये प्रायश्चित्त नहीं जानने पर उसकी सांगता और प्रायश्चित्त की सांगता के लिये श्रीविष्णु आदि का नाम उच्चारण करे । तपः कर्मात्मक सम्पूर्ण जो प्रायश्चित्त हैं उन सबका परम प्रायश्चित्त श्रीकृष्ण का स्मरण करना है । जिसके स्मरण और नाम-कीर्तन से तप-यज्ञ-क्रिया आदि की कमी पूरी हो जाती है, उस अच्युत भगवान् को मैं सद्यः वन्दना करता हूँ ।

नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः ।
तावत्कर्तुं न शक्नोति पातकं पातकी जनः ॥

---

१. पर्व ये हैं—'चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥' मनुस्मृति में रतिवर्ज्य दिन हैं—'तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा । त्रयोदशी च शेषास्तु प्रशस्तास्त्वत्र रात्रयः ॥ अमावास्याष्टमी चैव पौर्णमासी चतुर्दशी । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥'—

ऋतुकाल के अतिरिक्त समय में स्त्री के इच्छानुसार याज्ञवल्क्य ने स्त्रीगमन का निर्देश किया है—'यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् । स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥' अर्थात् स्त्री रक्षणीय है इसलिये तन्मनस्क होकर इन्द्र के—'भवतीनां कामविहन्ता पातकी स्यात्' इस वर का स्मरण करते हुये भार्या की इच्छा का विघात न करे ।

२. गृह्यपरिशिष्टे—'प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथञ्चन । यतस्तदन्यथाभूतं तत एव समापयेत् । समाप्ते यदि जानीयान्मयैतदयथाकृतम् । तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥ प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः । तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया ॥' पुनरनुष्ठानासम्भवे याज्ञवल्क्य आह—'अज्ञानाद्यदि वा मोहात् प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥' इति ।

लौकिकं वैदिकं कर्मेश्वरेऽर्पणीयम् ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ इत्युक्तेः ।

पाप को हटाने के लिये भगवान् के नाम में जितनी शक्ति है उतना पाप पातकी पुरुष नहीं कर सकता । भगवान् को लौकिक और वैदिक कर्म का अर्पण करे । गीता में अर्जुन से भगवान् ने कहा है कि जो कुछ करो, जो कुछ खाओ, जो होम करो, जो दो और जो तपस्या करो उन सबका हे अर्जुन ! मुझे अर्पण कर दो ।

युगपत्सर्वकर्मार्पणे मन्त्रः—

कामतोऽकामतो वापि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥
अपारमाह्निकं कर्म गहनं बहुभेदयुक् ।
निःशेषमक्षमो वक्तुं यथामत्यवदल्लघु ॥
अनन्तोपाध्यायजनिः काशीनाथाभिधः सुधीः ।
तुष्यतां तेन भगवाञ्छ्रीनाथो विट्ठलः प्रभुः ॥

इति आह्निकाचारप्रकरणं समाप्तम् ।

एक ही काल में सब कर्मों के अर्पण में मन्त्र का यह आशय है—जानकर या बिना जाने शुभ-अशुभ जो कुछ करता हूँ वह आपको अर्पण करता हूँ, क्योंकि जितने काम करता हूँ आप ही की प्रेरणा से करता हूँ । आह्निक कर्म बहुत भेदयुक्त गहन और अपार है । अनन्तोपाध्यायात्मज काशीनाथ नामक पण्डित मैंने उसको सम्पूर्ण कहने में असमर्थ होकर अपनी बुद्धि के अनुसार थोड़ा कहा है, इससे लक्ष्मीनाथ प्रभु विट्ठल भगवान् प्रसन्न हों । आह्निकाचारप्रकरण समाप्त ।

---

## अथ काम्यनैमित्तिकविचारः

अवश्यं प्रत्यहं कृत्यमुक्त्वा तच्छेष उच्यते ।
काम्यं नैमित्तिकं चापि प्रायः सिन्धुक्रमादथ ॥

आवश्यक दैनिक कृत्य कह कर अब उसका शेष प्रायः निर्णयसिन्धु के क्रम से काम्य एवं नैमित्तिक कह रहा हूँ ।

## अथाधानविचारः

तत्राधाननक्षत्रादिकालविचारः प्रथमपरिच्छेदे उक्तः । [1]आवसथ्याधानं तु दारकाले दायविभागकाले वा ।

---

१. आवसथं गृहं तत्रस्थोऽग्निः आवसथ्य इत्युच्यते । तस्याधानं स्थापनमात्मसात्करणमात्म-निष्ठफलसाधनकर्मानुष्ठानसम्पादकसंस्कारविशिष्टत्वेन सम्पादनमिति यावत् । तद्दारकाले भवति । दार-कालशब्देन स्त्रियाः पाणिग्रहणमुच्यते । चतुर्थ्युत्तरकालं दारकाल इति सम्प्रदायः । पित्रा प्रत्तामादाय निष्क्रामतीत्येष दारकाल इति भर्तृयज्ञभाष्ये । दायविभागकाले वा=पैतृकद्रव्यस्य भ्रातृभिः सह धन-विभजनसमये वा, आवसथ्याधानं-गृह्याग्निस्थापनं कर्तव्यमित्यर्थः ।

अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।
पितर्युपरते[1] तेन गृहीतव्यः प्रयत्नतः ॥

गृह्याग्निहीनस्यान्नमभोज्यम् । पितरि ज्येष्ठभ्रातरि वा साग्निके कनिष्ठादेरविभक्तस्य निरग्निकत्वदोषो न । एवं ज्ञानाध्ययनादिनिष्ठस्यापि न दोषः, गृहस्थस्याप्यध्ययनोक्तेः । स्मार्ताधानमपि ज्येष्ठे भ्रातरि अकृताधाने सति न कार्यमिति निर्णयसिन्ध्वादौ [2]गार्ग्योक्तिः ।

उसमें आधान के नक्षत्र आदि काल का विचार प्रथम परिच्छेद में कहा हूँ । आवसथ्य अग्नि का आधान तो विवाह काल या दाय विभाग काल में होता है । विवाह काल की अग्नि को जिस प्रमादी ने नहीं ग्रहण किया वह प्रयत्न से उसका ग्रहण पिता के मरने के बाद करे, क्योंकि गृह्याग्नि हीन का अन्न भक्षणीय नहीं होता । पिता के साग्निक होने पर या बड़े भाई के साग्निक होने पर छोटा भाई आदि जो पृथक् नहीं हुआ हो उसका निरग्निकत्व दोष नहीं होता । इसी प्रकार ज्ञान अध्ययन आदि में तत्पर को भी दोष नहीं होता, क्योंकि गृहस्थ का भी अध्ययन कहा है । स्मार्त आधान भी जेठे भाई के आधान न करने पर नहीं करना चाहिये, यह गार्ग्य का कथन निर्णयसिन्धु आदि में है ।

अत्रैवं निर्णयो भाति—यत्र ज्येष्ठेन दायाद्यपक्षमवलम्ब्य 'विवाहकाले यावज्जीवमौपासनं करिष्ये' इत्येवं संकल्पपूर्वकं विवाहाग्निर्न गृहीतस्तद्विषयोऽयं कनिष्ठस्य निषेधः । येन ज्येष्ठेन विवाहकाले तथा संकल्पपूर्वकमग्निः परिगृहीतः स पश्चात्परिचरणाभावेनाविद्यमानाग्निकोऽपि उच्छिन्नाग्निरेव न त्वकृताधान इति तत्र कनिष्ठस्याधाने दोषो नेति ।

यहां ऐसा निर्णय उचित प्रतीत होता है कि—जहाँ जेठे भाई ने अग्न्याधान के लिये दायाद्य पक्ष का अवलम्बन कर विवाह काल में यावज्जीवन औपासनाग्नि का संकल्प कर विवाहाग्नि ग्रहण नहीं किया है उस छोटे भाई के लिये स्मार्त अग्न्याधान का निषेध है और जिस जेठे भाई ने विवाह काल में ऐसा संकल्पपूर्वक अग्नि का परिग्रहण किया है वह बाद में अग्नि का परिचरण नहीं करने से

---

१. यह आधान पिता के मरने पर ग्यारहवें अथवा बारहवें दिन करना चाहिये, ऐसा रेणुक दीक्षित ने कहा है—'एतद् गृहपतौ प्रेते कुर्यादेकादशेऽहनि । प्रागेवैकादशश्राद्धाद् वृद्धिश्राद्धविवर्जितम् ॥ एवं ज्येष्ठः समादध्यात् कनीयांश्च विवर्जयेत् । एकादशेऽह्नि कुर्वन्ति द्वादशे वा विचक्षणाः ॥'

मूल में उद्धृत—'पितर्युपरते तेन गृहीतव्यः प्रयत्नतः' के आगे कारिका का वचन है—'कृतदारो न तिष्ठेच्च क्षणमप्यग्निना विना । तिष्ठन् भवेद् द्विजो व्रात्यस्तथा च पतितो भवेत् ॥ पितृपाकोपजीवी स्याद् भ्रातृपाकोपजीवकः । ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना ॥ यथा सन्ध्या यथा स्नानं वेदस्याध्ययनं यथा । तथैवोपासनं प्रोक्तं न स्थितिस्तद्वियोगतः ॥ योऽग्निं स्मार्तमनादृत्य कर्म स्नानजपादिकम् । होमान् समाचारेद्विप्रो न स पुण्येन युज्यते ॥ यो दद्यात् काञ्चनं मेरुं पृथिवीं चससागराम् । तत्सायं प्रातर्होमस्य तुल्यं भवति वा न वा ॥ योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत् । प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥' तथा—'कालद्वयेऽपि चेद्येन नाधानं तु कृतं पुरा । स कृत्वाऽन्यतमं कृच्छ्रमग्निमध्याहरेत्ततः ॥' इति ।

२. तत्र गार्ग्यवचनं यथा—'सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम् । आवसथ्यं तथाऽऽधानं पतितस्तु तथा भवेत् ॥' इति ।

अविद्यमानाग्निक भी उच्छिन्नाग्निक ही है, न कि अकृताधान। इसलिये कनिष्ठ को आधान में दोष नहीं है।

अत्राधिकारिणोऽपि भ्रातुरनुज्ञया[1] कनिष्ठस्याधानं भवति, विवाहस्तु अनुज्ञयापि न। एवं पितुरनुज्ञयाप्याधानम्।

संन्यस्ते[2] छिन्नहस्तादौ यद्वा षण्ढादिदूषणे।
जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम्॥

इत्यादिविशेषः विवाहप्रकरणे परिवेत्तृप्रसङ्गे उक्तः।

इसमें भाई की आज्ञा से कनिष्ठ का अग्न्याधानाधिकार होता है। विवाह तो अनुज्ञा से भी नहीं होता। ऐसे ही पिता की अनुज्ञा से भी आधान होता है। संन्यासी होने और हाथ आदि के कट जाने या पिता के नपुंसक आदि दोष से दूषित होने पर पिता और सहोदर जेठे भाई के रहते कोई दूसरा क्रिया करे ही, इत्यादि विशेष विवाह प्रकरण में परिवेत्ता के प्रसंग में कहा है।

## अथ शूद्रसंस्कारविचारः

गर्भाधानपुंसवनानवलोभनसीमन्तोन्नयनजातकर्मनिष्क्रमणान्नप्राशनचौलोपनयनमहानाम्न्यादिव्रतचतुष्टयसमावर्तनविवाहा इति [3]षोडशसंस्कारा द्विजानाम्। जातकर्मनामकर्मनिष्क्रमणान्नप्राशनचूडाविवाहा इति षड् द्विजस्त्रीणाम्। तत्र विवाहः समन्त्रकोऽन्ये मन्त्ररहिताः। गर्भाधानसीमन्तौ स्त्रीपुरुषसाधारणौ।

गर्भाधान, पुंसवन, अनवलोभन, सीमन्त, उन्नयन, जातकर्म, निष्क्रमण, अन्नप्राशन, चौलकर्म, उपनयन, महानाम्नी आदि चार व्रत, समावर्तन और विवाह, ये सोलह संस्कार द्विजों के हैं। इनमें जातकर्म, निष्क्रमण, अन्नप्राशन, चूड़ा और विवाह, ये छ संस्कार द्विज की स्त्रियों के हैं। उनमें विवाह मन्त्र से होता है, अन्य पांच संस्कार विना मन्त्र के होते हैं। गर्भाधान और सीमन्त स्त्री और पुरुष दोनों के लिये साधारण हैं।

चूडान्ता नवविवाहश्चेति [4]दशामन्त्रकाः शूद्राणामिति बहुसंमतम्। शूद्र-

---

१. सुमन्तुः—'ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत्। अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा॥' वृद्धवसिष्ठः—'अग्रजस्तु यदाऽनग्निरादध्यादनुजः कथम्। अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि।' इति।

२. इसके पूर्व का त्रिकाण्डमण्डनोक्त वचनांश यों है—'दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम्। अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम्॥ न कुर्याज्जनके ज्येष्ठे सोदरे चाप्यकुर्वति। क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे॥ नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि चौरसे। पङ्ग्वन्धमूकबधिरपतितोन्माददूषणे॥ संन्यस्ते छिन्नहस्तादौ...' अत्र क्षेत्रजादौ ज्येष्ठेऽनीजाने विद्यमाने जीवति एकमातृतया सोदरे तत्कनिष्ठभ्रातरि नाधिकारविघातोऽस्तीति सम्बन्धः। अनीजानेऽयागमकुर्वाणे इत्यर्थः।

३. इन सोलह संस्कारों में अनवलोभन गर्भ से तीसरे मास में किया जाने वाला एक संस्कार और महानाम्नी तेरहवें वर्ष में किया जाने वाला एक व्रत है। महानाम्न्यादि में आदि पद से महाव्रत, उपनिषद्व्रत और गोदान व्रत का ग्रहण है। इन तीनों का विचार 'व्रतानि' शीर्षक में देखें।

४. व्यासः—'नवैताः कर्णवेधान्ता मन्त्रवर्जं स्त्रियाः क्रियाः। विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश॥' शार्ङ्गधरस्तु—'द्विजानां षोडशैव स्युः शूद्राणां द्वादशैव हि। पञ्चैव मिश्रजातीनां

कमलाकरे तु शूद्राणां पञ्चमहायज्ञा अप्युक्ताः। केचिदवैदिकमन्त्रेणोपनयनमप्याहुः। ब्राह्मे तु—'विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा' इत्युक्तम्। अत्र सदसच्छूद्र-गोचरत्वेन वा परम्पराप्राप्तप्रकारेण व्यवस्था।

चूड़ापर्यन्त नौ संस्कार और दसवां विवाह इसी प्रकार दस संस्कार विना मन्त्र के शूद्रों के होते हैं, यह बहु सम्मत है। शूद्रकमलाकर में शूद्रों के पञ्चमहायज्ञ भी कहे हैं। कुछ लोग शूद्रों का वेदरहित मन्त्रों से उपनयन भी कहते हैं। ब्रह्मपुराण में तो–शूद्र केवल विवाहमात्र संस्कार प्राप्त करे, ऐसा कहा है। इसमें सच्छूद्र और असच्छूद्र के भेद से या परम्परा से प्राप्त प्रकार की व्यवस्था करनी चाहिये।

### अथ शूद्रधर्मविचारः

अस्य द्विजसेवावृत्तिः। आपदि वाणिज्यशिल्पादि। शूद्रेण लवणादि विक्रेयं, मद्यं मासं च न।

कपिलाक्षीरपानेन ब्राह्मणीगमनेन च।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत्॥
शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना॥

इसकी जीविका द्विज की सेवा है। आपत्काल में वाणिज्य वृत्ति तथा शिल्प का अधिकारी है। शूद्र लवण आदि का विक्रय करे, मद्य मांस का विक्रय नहीं। कपिला गाय के दूध पीने, ब्राह्मणी-गमन और वेदाक्षरों के विचार करने से शूद्र चाण्डाल हो जाता है। शूद्र चौथा वर्ण होने से वेद-मन्त्र, स्वधा, स्वाहा और वषट्कार आदि के विना धर्म के योग्य है।

स्त्रीशूद्रधर्मेषु व्रतादिषु सर्वत्र विप्रेण मन्त्रः पठनीयः। सोऽपि पौराण एव। भारतपुराणयोः 'श्रवणे स्त्रीशूद्रयोरधिकारो न त्वध्ययने। श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः। शूद्रस्य पञ्चयज्ञश्राद्धादिकर्माणि कातीयसूत्रानुसारेणेति मयूखे। आगमोक्ता विष्णुशिवादिमन्त्रा नमोन्ताः प्रणवरहिताः। पुराणादिना श्रवणनिदि-ध्यासनादि कृत्वा ब्रह्मज्ञानमपि स्त्रीशूद्रैः संपाद्यम्।

स्त्री-शूद्र के धर्मों में और व्रत आदि में ब्राह्मण को मन्त्र पढ़ना चाहिये, वह भी पुराण का ही। क्योंकि भारत और पुराण के सुनने में स्त्री और शूद्र का अधिकार है, उसके पढ़ने का नहीं। ब्राह्मण को आगे करके चारो वर्णों को भारत आदि सुनावे। शूद्र को पंचमहायज्ञ और श्राद्धादि कर्म कातीयसूत्र के अनुसार प्राप्त है, ऐसा मयूख में लिखा है। आगम के कहे हुए विष्णु शिव आदि के ऐसे मन्त्र हैं, जिनके अन्त में नमः और जो प्रणव से रहित हैं। पुराण आदि का श्रवण और निदिध्यासन आदि करके स्त्री शूद्र ब्रह्मज्ञान का भी संपादन करें।

---

संस्काराः कुलधर्मतः॥ वेदव्रतोपनयनमहानाम्नीमहाव्रतम्। विना द्वादश शूद्राणां संस्कारा नाम-मन्त्रतः॥' व्यासः—'शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति। वेदमन्त्रस्वधास्वाहावषट्कारादिभि-र्विना॥' इति।

१. तदुक्तम्—'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचराः। इति भारतमाख्यानं कृपया मुनिना कृतम्॥' द्विजबन्धुः=संकरः।

उपनिषच्छ्रवणे तु नाधिकार इति शूद्रस्य तदनादरश्रवणादित्यधिकरणे। शूद्रस्य सर्वश्राद्धान्यामेनैव[1]। केचित्सर्वप्रजानां काश्यपत्वात्सर्वशूद्राणां काश्यपगोत्रं तच्च श्राद्ध एव कीर्तनीयं नान्यत्रेत्याहुः। एवं शान्तिकादावधिकारो विप्रद्वारैव।

उपनिषद् श्रवण में तो शूद्र का अधिकार नहीं है यह 'शूद्रस्य तदनादरश्रवणात्' ऐसा अधिकरण में है। शूद्र के सब श्राद्ध आमान्न ही से होते हैं। कुछ लोग तो सब प्रजा काश्यप की है और सब शूद्र का काश्यप गोत्र है और वह श्राद्ध ही में कहा जाता है अन्यत्र नहीं, ऐसा कहते हैं। इस प्रकार शान्ति आदि में ब्राह्मण के द्वारा ही शूद्र का अधिकार है।

यदि विप्रः शूद्रदक्षिणामादाय वैदिकमन्त्रैस्तदीयहोमाभिषेकादि करोति तदा तत्र शूद्रस्तत्पुण्यफलभाक्, विप्रस्तु महाप्रत्यवायीति माधवः। अहिंसासत्यास्तेयशौचेन्द्रियनिग्रहदानशमदमक्षमादयः शूद्रादिसर्वसाधारणा[2] धर्माः परपदप्रापकाः। स्वस्तिवाचनादिशूद्रकर्मणां प्रयोगास्तु शूद्रकमलाकरे ज्ञेयाः।

यदि ब्राह्मण शूद्र से दक्षिणा लेकर वैदिक मन्त्रों से उसका होम अभिषेक आदि करता है तब उसमें शूद्र उस पुण्य फल को पाता है, ब्राह्मण तो महाप्रायश्चित्ती होता है, ऐसा माधव कहते हैं। अहिंसा, सत्य, अस्तेय, शौच, इन्द्रियनिग्रह, दान, शम, दम, क्षमा आदि सबके लिए साधारण धर्म हैं तथा परम पद को पहुँचाने वाले हैं। स्वस्तिवाचन आदि शूद्र कर्मों के प्रयोग तो शूद्रकमलाकर में जानने योग्य हैं।

## अथ वापीकूपाद्युत्सर्गादिकालः

गृहग्रामयोराग्नेयदक्षिणनैर्ऋत्यवायव्येषु मध्ये च दुष्टफलः कूपः, शेषदिक्षु शुभः। वापीकूपतडागाद्युत्सर्गं उत्तरायणे माघादिमासषट्कस्य शुक्लपक्षेषु प्रशस्तः। जलक्षयसंभावनाया कार्तिकमार्गशीर्षयोरपि। 'न [3]कालनियमस्तत्र सलिलं तत्र कारणम्' इत्युक्तेः।

---

१. सुमन्तुः—'सदा चैव तु शूद्राणामामश्राद्धं विधीयते।' वृद्धपराशरः—'आमान्नेन तु शूद्रस्य तूष्णीं तु द्विजपूजनम्। कृत्वा श्राद्धं तु निर्वाप्य सजातीनाशयेदथ॥' स एव—'आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते॥' भविष्ये—'शूद्रस्तु गृहपाकेन न पिण्डान्निर्वपेत्तथा। सक्तु मूलं फलं तस्य पायसं वा भवेत् स्मृतम्॥' इति।

२. याज्ञवल्क्यः—'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः। दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥' अर्थात् प्राणियों को पीडित नहीं करना अहिंसा, कोई—प्राणिप्राणवियोगानुकूल व्यापार हिंसा और उसका अभाव अहिंसा यह अर्थ करते हैं। प्राणियों को पीडित नहीं करने वाला वचन सत्य, अदत्त वस्तु का अग्रहण अस्तेय, बाहरी और भीतरी शुद्धि शौच, ज्ञानेन्द्रिय-कर्मेन्द्रियों का नियत विषय में रहना इन्द्रियनिग्रह, प्राणियों का यथाशक्ति अन्नोदकादि के दान से पीडापरिहरण करना दान, अन्तःकरण का संयम दम, आपत्ति में पड़े हुये का रक्षण दया और अपकार करने पर भी चित्त का अविकृत न होना क्षान्ति, ये नव ब्राह्मणादि चाण्डालपर्यन्त पुरुषों के धर्म के साधन हैं।

३. मदनोद्धृत भविष्यपुराण में इसके पूर्व का वचनांश है—'तस्मिन् सतिलसम्पूर्णे कार्तिके च विशेषतः। तडागस्य विधिः कार्यः स्थिरनक्षत्रयोगतः॥ मुनयः केचिदिच्छन्ति व्यतीतेऽप्युत्तरायणे। न कालनियमस्तत्र...... ।' वह्निपुराण में—'वापीकूपतडागानां तस्मिन् काले विधिः

घर और गांव से आग्नेय, दक्षिण, नैर्ऋत्य और वायव्य दिशा में तथा मध्य में कूआं बनवाना दुष्टफल देने वाला है, शेष दिशाओं में अच्छा है। बावली, कूआं और तालाव आदि का उत्सर्ग उत्तरायण में माघ आदि छ महीनों के शुक्लपक्ष में प्रशस्त है। जल के न होने की सम्भावना में कार्तिक अगहन में भी अच्छा है। उसमें काल का कोई नियम नहीं है उसमें कारण जल है, ऐसा वचन है।

चतुर्षु विष्णुशयनमासेषु शुक्रास्तादौ च वर्ज्यम्। अश्विनीरोहिणीमृगपुष्यमघात्र्युत्तरामूलश्रवणादित्रयहस्तज्येष्ठानूराधारेवतीषु, द्वितीयातृतीयापञ्चमीसप्तमीदशम्येकादशीत्रयोदशीतिथिषु, बुधगुरुशुक्रसोमवारेषु जलोत्सर्गः शुभः। उत्सर्गाभावे जलं न ग्राह्यम्।

वापीकूपतडागादौ यज्जलं स्यादसंस्कृतम्।
न [1]स्पृष्टव्यं न पेयं च पीत्वा चान्द्रायणं चरेत्॥

[2]उत्सर्गप्रयोगोऽन्यतो ज्ञेयः।

विष्णुशयन के चारो महीने में और शुक्रास्त आदि में वर्जित है। अश्विनी-रोहिणी-पुष्य-मृगशिरा पुष्य-मघा-तीनों उत्तरा-मूल-श्रवण आदि तीन-हस्त-ज्येष्ठा-अनुराधा-रेवती नक्षत्रों में, द्वितीया-तृतीया-पंचमी-सप्तमी-दशमी-एकादशी-त्रयोदशी तिथियों में, बुध-गुरु-शुक्र सोमवार में, जलोत्सर्ग

---

स्मृतः। सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता॥ कर्कटे पुत्रलाभश्च सौख्यं तु मकरे भवेत्। मीने यशोऽर्थऽर्थलाभश्च कुम्भे वसुबहूदकम्॥ वृषे च मिथुने वृद्धिर्वृश्चिकेऽल्पजलं भवेत्। पितृतृप्तिस्तु कन्यायां तुलायां शाश्वती गतिः॥ सिंहो मेषो धनुर्नाशं लक्ष्म्याश्च द्विज यच्छति।' इति॥

१. भविष्ये—'सदा जलं पवित्रं स्यादपवित्रमसंस्कृतम्। कुशाग्रेणापि राजेन्द्र न स्प्रष्टव्यमसंस्कृतम्॥' इति।

२. इसके उत्सर्ग में पराशरोक्त देय-द्रव्य ये हैं—'वस्त्रयुग्मानि विप्रेभ्यछत्रिका मुद्रिकाः शुभाः। दद्याद् विप्रेभ्यः संतोष्य छत्रोपानहमेव च॥ सुहेमपुरुषसंयुक्तां शय्यां दद्याच्च शक्तितः। आसनानि च शस्तानि भाजनानि निवेदयेत्॥ प्रसादयेद् द्विजान् भक्त्या इच्छन् पूर्तफलं नरः। कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः॥ ब्रूयादेवं भवन्तोऽत्र सर्वे विप्रवपुर्धराः। तटं यूयं तारयध्वं ससारार्णवतो द्विजाः॥ आगता मम पुण्येन पूर्तधर्मप्रसाधकाः।' अत्र सुहेमपुरुषः = लक्ष्मीनारायणप्रतिमा।

वापी कूपादि के उत्सर्ग में वारुण मण्डल का निर्माण करना चाहिये। उसकी निर्माणविधि दानचन्द्रिका में यों है—'तत्राचार्यो वेद्यां मध्ये त्रिहस्तव्यासं चतुरस्रं प्रसाध्य प्रागपरदक्षिणोत्तरनवनवरेखाश्चतुष्षष्टिकोष्ठं कुर्यात्। तत्र कोष्ठानि प्रत्येकं नवनवाङ्गुलानि सम्पद्यन्ते। ततो बहिरन्त्यपंक्तिषु चतुर्दिक्षु मध्यकोष्ठानि चत्वारि चत्वारि मार्जयित्वा तदुपरि उपान्त्यपंक्तिषु पार्श्वयोस्तत्त्रयं त्यक्त्वा प्रतिदिशं मध्ये कोष्ठद्वयमार्जनेन चतुर्दिक्षु षट्षट्कोष्ठानि चत्वारि द्वाराणि सिद्ध्यन्ति। ततो मध्यस्थितषोडशकोष्ठानि मार्जयेत्। तथा च मध्यचतुरस्रपीठपादाः सिद्ध्यन्ति। ततो मध्याच्चत्वारि वृत्तानि कुर्यात्। तत्राद्ये चत्वार्यङ्गुलानि व्यासः, द्वितीयेऽष्टौ, तृतीये चतुर्विंशतिः, चतुर्थे षड्विंशतिरिति।

तच्चतुरङ्गुलं वृत्तं कर्णिकारूपं पीतेन रजसा पूरयित्वा कर्णिकावधिरेखां सितेन रजसा निर्माय तद्बहिरष्टात्मके वृत्ते पीतरक्तसितरजोभिः सम्पादितमूलमध्याग्राणि षोडशकेसराणि सम्पाद्य तत्केसरावधि रेखां सितेनैव रजसा अङ्गुलोन्नतां सम्पाद्य चतुर्विंशाङ्गुलात्मके तद्बहिर्वृत्ते सितेन रजसा अष्टदिक्षु अष्टौ पत्राणि रक्ताग्राणि कुर्यात्। ततो दलान्तररेखां सितेन रजसा विधाय दलान्तराणि कृष्णेन रजसा पूरयित्वा तद्बहिरेकाङ्गुलान्तरा बहिर्वृत्तरेखां सितेन रजसा सम्पाद्य वृत्तद्वयान्तरं परितोऽष्टदलाग्रतन्मध्य-

शुभ है। उत्सर्ग नहीं करने पर जल ग्रहण नहीं करे। बावली, कुंआं, तालाब आदि का जो जल संस्काररहित है उसका न तो स्पर्श करे न पिये और करर चान्द्रायण करे। उत्सर्ग का प्रयोग दूसरे ग्रन्थों से जानना चाहिये।

---

चिह्नैः षोडशधा विभज्य प्रतिभागं यवाकारान् श्यामपीतारुणश्वेतरजोभिः कल्पयित्वा तदन्तरा यथायोग्यं रजोभिः पूरयित्वा तद्बहिः सितपीतारुणश्यामहरिताः पंच रेखाः लिखेत्। तद्बहिः पीठक्षेत्रं चतुरस्रं यथा-

### वारुणमण्डलम्

८ १ २

७ ३

६ ५ ४




पूर्व आदि आठ दिशाओं में १ आदि संख्या के अनुसार वज्र आदि आठ आयुधों का और त्रिशूल के वामभाग में चक्र एवं दक्षिण भाग में पद्म का विन्यास करे। स्थानाभाव से यहां नहीं रखा है।

## अथ वृक्षादिरोपणकालः

अश्विनीरोहिणीमृगपुष्यमघोत्तरात्रयंहस्तचित्राविशाखानूराधामूलशततारका-रेवतीषु सत्तिथिवारेषु वृक्षलतारोपः [1]प्रशस्तः ।

आश्लेषायां सोमवारः सोमो लग्ने बलान्वितः ।
योगेऽस्मिन् रोपयेदिक्षुकदलीक्रमुकादिकान् ॥
नारीकेलान् वपेद् भूमावश्विन्यां लग्नगे रवौ ।
नागवल्लीं गुरौ लग्ने चन्द्रे स्वांशस्थिते सति ॥

अश्विनी-रोहिणी-मृगशिरा-पुष्य-मघा-तीनों उत्तरा-हस्त-चित्रा-विशाखा-अनुराधा-मूल-शतभिषा-रेवती नक्षत्रों में, शुभ तिथि तथा वार में, वृक्ष और लता का लगाना उत्तम है। आश्लेषा नक्षत्र में सोमवार हो और चन्द्रमा लग्न में बलयुक्त हो तो ऐसे योग में ऊख, केला, सुपारी आदि लगाना चाहिये । अश्विनी में लग्न के सूर्य हो तो भूमि में नारियल बोवे । गुरुवार को अपने अंश में चन्द्रमा के रहने पर पांन की लता लगावे ।

## अथ मूर्तिप्रतिष्ठाकालः

[2]प्रतिष्ठा सर्वदेवानां वैशाखज्येष्ठफाल्गुने ।
चैत्रे तु स्याद्विकल्पेन माघे विष्णवन्यमूर्तिषु ॥

---

शोभं रजोभिरलंकृत्य पीठावधिरेखां सितेन रजसा चतुरस्रां रचयेत् । द्वारक्षेत्राणि पूर्वादितः पीतश्या-मसितहरितरजोभिः पूरयेत् । आग्नेयादिकोष्ठचतुष्टय लोहितहरितश्यामधवलैः रजोभिः पूरयेत् । आग्ने-यादिपीठपादचतुष्टयं पंचकोष्ठात्मकं तु क्रमात् सितरक्तपीतकृष्णरजोभिः पूरयेत् । ततः सितेन रजसा अङ्गुलोन्नतेन बहिश्चतुरस्ररेखां कुर्यादिति मदनरत्नादयः ।

ठक्कुरमते तु चतुरस्रं चतुर्हस्तं, तत्र प्रत्येकं द्वादशाङ्गुलानि नवकोष्ठानि, वृत्तानि तु पञ्च । तथाद्यवृत्ते चत्वार्यङ्गुलव्यासः, द्वितीयेऽष्टौ, तृतीये विंशतिः, चतुर्थे चतुर्विंशतिः, पंचमेऽन्तश्चतुरस्र-बहिस्तनेऽष्टत्रिंशदिति पंचकोष्ठात्मकं पीठपादचतुष्टयम् आग्नेयादिक्रमेण रक्तहरितश्यामसितैः रजो-भिः पूरणीयम् । कोणकोष्ठचतुष्टयं प्रत्येकं त्रिभिस्त्रिभिर्वर्णैरिति विशेषः । इदमेव वारुणमण्डलं जलाशयो-त्सर्गादौ ज्ञेयम् । पुनस्तत्रैव—वज्रं प्रागुत्तरे भागे आग्नेय्यां शक्तिमुज्ज्वलाम् । आलिखेद्दक्षिणे दण्डं नैर्ऋत्यां खड्गमालिखेत् ॥ पाशं तु वारुणे लेख्यं ध्वजं वै वायुगोचरे । कौवेर्यां तु गदा लेख्या ईशान्यां शूलमालिखेत् ॥ शूलस्य वामदेशे तु चक्रं पद्मं च दक्षिणे । ततो महावेद्युपरि पञ्चवर्णं फलपुष्पोप-शोभितं वितानं कूटमण्डपे बध्नीयात् ॥' इति ।

१. चण्डेश्वरः—आदित्यचान्द्रपितृतिष्यविशाखपौष्णमूलोत्तरात्रयतुरङ्गमवारुणाश्च । एतेषु तारकगणेषु हितं नराणां वृक्षादिरोपणमिहोपदिशन्ति धीराः ॥' यहाँ आदि पद से लतौषधिपादप-रोपण का ग्रहण है, श्रीपतिः—'सावित्रतिष्याश्विनवारुणानि मूलं विशाखा च मृदुध्रुवाणि । लतौ-षधीपादपरोपणेषु शुभानि भानि प्रतिपादितानि ॥' इति ।

२. मात्स्ये-'चैत्रे वा फाल्गुने वाऽपि ज्येष्ठे वा माधवे तथा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥' वसिष्ठः—'आषाढमासादिचतुष्टयेऽपि कलत्रसन्तानविनाशदा स्यात् । ऊर्जे च कर्तुर्निधनप्रदा च सौम्ये सपौषेऽखिलदुःखदा स्यात् ॥ वलक्षपक्षः शुभदः समस्तः सदैव तत्राद्यदिनं विहाय । अन्त्य-त्रिभागं परिहृत्य कृष्णपक्षोऽपि शस्तः खलु पक्षयोश्च ॥ रिक्तामा त्यक्तदिनेष्वनन्वययोगेषु वैनाशक-वर्जितेषु । दिने महादोषविवर्जिते च शशाङ्कताराबलसंयुते च ॥'इति ।

प्रतिष्ठा में प्रतिपदादि तिथि-विशेष का मात्स्योक्त फल है—'दृढा धनकरी स्फीता तथा प्रतिपदि स्मृता । द्वितीयायां धनोपेता तृतीयायां धनप्रदा॥ चतुर्थ्यां नाशमाप्नोति यमस्य स्यात् सुखावहा। विनाय-

सौम्यायने शुभा प्रोक्ता निन्दिता [1]दक्षिणायने ।
मातृभैरववाराहनरसिंहत्रिविक्रमाः ॥
दक्षिणेऽप्ययने स्थाप्या देव्यश्चेत्यूचिरे परे ।
विष्णोः[2] शस्ताश्चैत्रमासाश्विनश्रावणका अपि ॥
माघफाल्गुनवैशाखज्येष्ठाषाढसहःसु च ।
श्रावणे च नभस्ये च [3]लिङ्गस्थापनमुत्तमम ॥
देव्या[4] माघेऽश्विने मासेप्युत्तमा सर्वकामदा ।

सब देवताओं की प्रतिष्ठा वैशाख, ज्येष्ठ और फाल्गुन में होती है। चैत्र में तो विकल्प से होती है। विष्णु को छोड़कर अन्य देवताओं की प्रतिष्ठा माघ में होती है। देव-प्रतिष्ठा उत्तरायण में शुभ है। दक्षिणायन में निन्दित है। मातृ, भैरव, वाराह, नरसिंह और त्रिविक्रम की प्रतिष्ठा दक्षिणायन में भी होती है और देवी की भी, ऐसा दूसरे कहते हैं। विष्णु क प्रतिष्ठा चैत्र, आश्विन, श्रावण, माघ, फाल्गुन, वैशाख, ज्येष्ठ, आषाढ़ और पूस में होती है। श्रावण और भाद्रपद में लिंग की स्थापना उत्तम है। माघ और आश्विन मास में देवीप्रतिष्ठा सवकामनाओं की देने वाली और उत्तम है।

अश्विनीरोहिण्युत्तरात्रयमृगपुनर्वसुपुष्यहस्तचित्रास्वात्यनूराधाश्रवणत्रयरेवतीषु शनिभौमान्यवासरे दर्शरिक्तान्यतिथौ सर्वदेवप्रतिष्ठा शुभा। श्रवणे कृत्तिकादि-विशाखान्तेषु च द्वादश्यां च [5]विष्णोः प्रशस्ता। चतुर्थी गणेशस्योक्ता। नवमी

---

कस्य देवस्य तथा तत्र हितप्रदा॥ पञ्चम्यां श्रीयुता कर्तुर्वरदा च तथा भवेत्। षष्ठयां लक्ष्मीयुता नित्यं सप्तम्यां रोगनाशिनी॥ अष्टम्यां धान्यबहुला नवम्यां च विनश्यति। भद्रकाल्याः कृता तत्र कर्तुर्भवति तुष्टये॥ धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा तिथौ। एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा। त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति। कृष्णपक्षे पञ्चदश्यां कर्तुः क्षयकरी भवेत्॥ पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत्। आषाढ़े द्वे तथा मूलमुत्तरात्रयमेव च॥ ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा। हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा॥ अनूराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते॥' इति।

१. शैवसिद्धान्तशेखर में मुक्ति की कामना वाले व्यक्तियों के लिए दक्षिणायन को श्रेष्ठ बतलाया है—'श्रेष्ठोत्तरे प्रतिष्ठा स्यादयने मुक्तिमिच्छताम्। दक्षिणे तु मुमुक्षूणां मलमासे न सा द्वयोः॥' वैखानस ने दक्षिणायन में उग्र देवता-देवी की प्रतिष्ठा को विहित बतलाया है—'मातृभैरववाराहनरसिंहत्रिविक्रमाः। महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने॥' इति।

२. विष्णु की प्रतिष्ठा के लिये वैखानसोक्त मास ये हैं—'मार्गशीर्षादिमासौ द्वौ निन्दितौ ब्रह्मणा पुरा। मासेषु फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव च॥ वृषे वाऽप्यश्वयुङ्मासे श्रावणे मासि वा भवेत्।'इति।

३. रत्नावलि में—'माघफाल्गुनवैशाखज्येष्ठाषाढेषु पञ्चसु। मासेषु शुक्लपक्षेषु लिङ्गस्थापन-मुत्तमम्॥'इति।

४. देवीपुराण का यह वचन है, इसके आगे का अंश है—'न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम्। सर्वकालं प्रकर्तव्यं कृष्णपक्षे विशेषतः॥' इति।

५. विष्णुप्रतिष्ठा के उपक्रम में बौधायनसूत्र में कहा है—'द्वादश्यां श्रोणायां वा यानि चान्यानि पुण्यनक्षत्राणि' इति। विष्णु आदि देवताओं के भेद से श्रीपति-कथित नक्षत्र ये हैं—'रोहिण्युत्तरपौष्णवैष्णवकरादित्याश्विनी वासवानूराधैन्दवजीवभेषु गदितं विष्णोः प्रतिष्ठापनम्। पुष्यश्रुत्यभिजित्सुरेश्वरकयोर्बिडौजसो घपस्कन्दयोर्मैत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकानां शुभम्॥ गणपरिवृढरक्षोयक्षभूतासुराणां

मूलभं च देव्याः । तथा स्वस्वनक्षत्राणि सर्वेषाम् । यथार्द्रा शिवस्य [1]हस्तः सूर्यस्येत्यादि ।

अश्विनी-रोहिणी-तीनों उत्तरा-मृगशिरा-पुनर्वसु-पुष्य-हस्त-चित्रा-स्वाती-अनुराधा-श्रवण से तीन नक्षत्र और रेवती में, शनि मंगल को छोड़कर अन्य वार में, अमावस्या रिक्ता को छोड़कर अन्य तिथियों में, सब देवताओं की प्रतिष्ठा शुभप्रद है। श्रवण में, कृत्तिका आदि विशाखापर्यन्त नक्षत्रों में, द्वादशी तिथि में, विष्णु-प्रतिष्ठा प्रशस्त है। चतुर्थी गणेश के लिये कही गई है। नवमी तिथि और मूल नक्षत्र देवी के लिये है। तथा सब देवताओं के अपने-अपने नक्षत्र हैं। जैसे शिव का आर्द्रा सूर्य का हस्त इत्यादि।

हन्त्यर्थहीना कर्तारं मन्त्रहीना तु ऋत्विजम् ।
स्त्रियं लक्षणहीना तु न प्रतिष्ठासमो रिपुः ॥

**अथ प्रतिष्ठाधिकारिणः**

ब्रह्मा तु ब्राह्मणैः स्थाप्यो गायत्रीसहितः प्रभुः ।
सर्ववर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः ॥

मातृभैरवाद्याः[2] सर्वैः । शिवलिङ्गं यतिनापि । पुराणप्रसिद्धजीर्णलिङ्गं स्त्रीशूद्रैरपि पूज्यम् । नूतनस्थापितं लिङ्गं स्त्री शूद्रो वापि न स्पृशेत् । शिवादिप्रतिष्ठायां स्त्रीशूद्र देर्नाधिकारः[3] ।

शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥

स्थिरप्रतिमाः प्राङ्मुखीरुदङ्मुखो[4] यजेत । चलप्रतिमासु प्राङ्मुखः ।

---

प्रथमफणिसरस्वत्यादिकानां च पौष्णे । 'श्रवसि सुगतनाम्नो वासवे लोकपानां निगदितमखिलानां स्थापनं च स्थिरेषु ॥ तेजस्विनी क्षेमकृदग्निदाहविधायिनी स्याद्धनदा दृढा च । आनन्दकृत्कल्पविनाशिनी च सूर्यादिवारेषु भवेत् प्रतिष्ठा ॥' इति ।

१. जैसे—अश्विनी अश्विनीकुमार का, भरणी यम का, कृत्तिका अग्नि का, रोहिणी ब्रह्मा का, मृगशिरा चन्द्रमा का, आर्द्रा शिव का, पुनर्वसु देवमाता अदिति का, पुष्य बृहस्पति का, आश्लेषा सर्प का, मघा पितर का, पूर्वा फाल्गुनी सूर्यविशेष भग का, उत्तरा फाल्गुनी सूर्यविशेष अर्यमा का, हस्त सूर्य का, चित्रा विश्वकर्मा का, स्वाती वायु का, विशाखा समुदित देवता अग्नि का, अनुराधा सूर्यविशेष मित्र का, ज्येष्ठा इन्द्र का, मूल निर्ऋति-राक्षस का, पूर्वाषाढ़ा उदक का, उत्तराषाढा विश्वेदेवा का, अभिजित् विधि का, श्रवण विष्णु का, धनिष्ठा अष्टवसु का, शतभिषा वरुण का, पूर्वाभाद्रपदा सूर्यविशेष अजचरण का, उत्तराभाद्रपदा सूर्यविशेष अहिर्बुध्न्य का और रेवती सूर्यविशेष पूषा का अपना-अपना नक्षत्र है।

२. देवीपुराण में—'चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः । भैरवोऽपि चतुर्वर्णैरन्त्यजानां तथा मतः ॥ मातरः सर्वलोकैस्तु स्थाप्याः पूज्याः सुरोत्तमाः । लिङ्गं गृही यतिर्वापि संस्थाप्य तु यजेत् सदा ॥' इति ॥

३. बृहन्नारदीय में स्कान्दोक्तिः—'स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर । स्थापने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य वा ॥ यः शूद्रसंस्कृतं लिङ्गं विष्णुं वाऽपि नमेन्नरः । इहैवानन्तदुःखानि पश्यत्यामुष्मिके किमु ॥' इति ।

४ गौतमः— 'शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ।' गृह्यपरिशिष्टे—'प्रतिमाः प्राङ्मुखीरुदङ्मुखो यजेतान्यत्र प्राङ्मुखः' इति । अचल-प्रतिमा की पूजा उत्तरमुख और अन्य प्रतिमा की पूजा पूर्वमुख होकर करे, इस प्रकार इन दोनों वचनों की एकवाक्यता है।

अर्थ से हीन प्रतिष्ठा यजमान को मारती है, मन्त्र से हीन ऋत्विज को, लक्षण से हीन स्त्री को, प्रतिष्ठा के समान दूसरा शत्रु नहीं है। ब्राह्मणों को गायत्री के साथ ब्रह्मा की स्थापना करनी चाहिये। इसी प्रकार सुख चाहने वाले सब वर्णों को विष्णु की प्रतिष्ठा करनी चाहिये। मातृ भैरव आदि की प्रतिष्ठा सभी करें। शिवलिंग की स्थापना संन्यासी भी कर सकते हैं। पुराण-प्रसिद्ध जीर्ण-लिंग का पूजन स्त्री शूद्र भी कर सकते हैं। नये स्थापित लिंग का स्पर्श स्त्री शूद्र न करें। शिव आदि की प्रतिष्ठा में स्त्री शूद्र आदि का अधिकार नहीं है। शूद्र या अनुपनीत, स्त्री अथवा पतित, केशव या शिव का स्पर्श करके नरक प्राप्त करते हैं। पूरबमुख वाली स्थिर प्रतिमा का पूजन उत्तरमुख होकर करे। चल प्रतिमा में पूरबमुख होकर पूजन करे।

### अथ प्रतिमानिर्माणविचारः

सौवर्णी राजती ताम्री मृन्मयी प्रतिमा भवेत्।
पाषाणधातुमुक्ता[1] वा कांस्यपित्तलयोरपि ॥
अङ्गुष्ठपर्वमानात्सा वितस्तिं यावदेव तु।
गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ॥

मृद्दारुलाक्षागोमेदमधूच्छिष्टेन च क्वचित्।

प्रतिमा—सोना, चांदी, तामा और मिट्टी की होती है। अथवा धातु, पाषाण, मोती या कांसा और पीतल की होती है। अंगूठे की ग्रंथि से लेकर एक बित्ता तक की मिट्टी की प्रतिमा होती है। बित्तेभर से अधिक प्रतिमा को पण्डित लोग अच्छा नहीं कहते। कहीं मिट्टी, लकड़ी, लाख, गोमेद और मोम से प्रतिमा बनाना कहा है।

श्रीमद्भागवते तु—

शैली दारुमयी लौही लेप्या लेख्या च सैकती।
मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥

लौही सौवर्णी, दारु[2] मधूकवृक्षस्यैव। सप्ताङ्गुलाधिका द्वादशाङ्गुलपर्यन्ता गृहे प्रतिमेति देवीपुराणे[3]।

अर्चकस्य तपोयोगादर्चनस्यातिशायनात्।
आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति ॥
प्रतिमापट्टयन्त्राणां[4] नित्यं स्नानं न कारयेत्।
कारयेत्पर्वदिवसे यदा च मलधारणम् ॥

पार्थिवलिङ्गपूजादिविचारो द्वितीयपरिच्छेदे उक्तः।

---

१. भविष्यपुराण का यह वचन है पाठ में थोड़ा भेद है—'सौवर्णी राजती ताम्री मृन्मयी च तथा भवेत्। पाषाणधातुयुक्ता वा रीतिकांस्यमयी तथा ॥ शुद्धदारुमयी वापि देवतार्चा प्रशस्यते।' इसके आगे 'अङ्गुष्ठपर्वादारम्य' से समान पाठ है।

२. वाराहपुराण में—'तत्र काष्ठेषु मधुकमानीय च वसुन्धरे। कृत्वा तत्प्रतिमां चैव प्रतिष्ठाविधिनाऽर्चयेत् ॥' इति ॥

३ देवीपुराण का वचन यों है—'सप्ताङ्गुलं समारभ्य यावच्च द्वादशाङ्गुलम्। गृहेष्वर्चा समाख्याता प्रासादे वा शुभाधिका ॥' इति।

४. प्रतिमापट्ट से प्रतिमा का धारण किये वस्त्रों और यन्त्र से देवी-देवताओं के तन्त्रोक्त यन्त्रों का, यह अर्थ है।

श्रीमद्भागवत में पत्थर, लकड़ी, लोहे, लेप्य, लेख्य, बालू, मनोमयी और मणि की, इस प्रकार आठ प्रकार की प्रतिमा कही गई है। देवीपुराण में लोहे, सोने और महुये की लकड़ी की ही प्रतिमा सात अंगुल से लेकर बारह अंगुल तक की घर में उत्तम होती है, ऐसा कहा है। पूजा करने वाले के तपोयोग से पूजा के आतिशय्य और बिम्बों के अभिरूपता से प्रतिमा में देवता का सान्निध्य प्राप्त होता है। पट्ट और यन्त्रों की प्रतिमा का स्नान प्रतिदिन नहीं करावे। जब ज्यादा मैली हो जाय तो पर्व के दिन स्नान करावे। पार्थिवलिंग के पूजा आदि का विचार द्वितीय परिच्छद में कह चुका हूँ।

## अथ पञ्चसूत्रीनिर्णयः

लिङ्गोच्चता लिङ्गविस्तारो लिङ्गस्थौल्यं पीठविस्तारः प्रनालिकामानं चेति पञ्चसूत्राणि। तत्र लिङ्गमस्तकविस्तारं लिङ्गोच्चतातुल्यं कृत्वा तद्द्विगुणसूत्रवेष्टनार्हं लिङ्गस्थौल्यं कृत्वा लिङ्गात्सर्वतो लिङ्गसमविस्तारं पीठं वर्तुलं कुर्यात्। पीठोच्चता लिङ्गोच्चद्विगुणा, पीठाद्बहिः पीठोत्तरभागे लिङ्गसमदीर्घा, मूले दैर्घ्यसमविस्तारा, अग्रे तदर्धविस्तारा प्रनालिका। लिङ्गोच्चत्वत्रिगुणा पीठोच्चतेति केचित्।

लिंग की ऊँचाई, लिंग का विस्तार, लिंग की स्थूलता, आसन का विस्तार तथा नाली का मान, ये ही पंचसूत्र हैं। उसमें लिंग के मस्तक का विस्तार लिंग की ऊँचाई के समान करके उसके दुगुने सूत के लपेटने योग्य लिंग की स्थूलता करके लिंग से चारो ओर लिंग के समान विस्तृत गोल पीठ बनावे। पीठ की ऊँचाई लिंग की ऊँचाई से दुगुनी, पीठ से बाहर पीठ के उत्तरभाग में लिंग के समान लम्बी, मूल में लम्बाई के समान चौड़ाई, आगे उसके आधे विस्तार की नाली बनावे। कोई कहते है कि लिंग की ऊँचाई से तिगुनी पीठ की ऊंचाई हो।

अथ पीठमध्यभागे लिङ्गाद् द्विगुणस्थूलं पीठोच्चतातृतीयांशेन कण्ठं कुर्यात्। कण्ठस्योर्ध्वाधोभागयोः समं वप्रद्वयं कृत्वा पीठोपरि लिङ्गविस्तारषष्ठांशेन मेखलां कृत्वा तदन्तः संलग्नं तत्समं खातं कुर्यात्। प्रनालिकायामपि विस्तारतृतीयांशेन खातः पीठवन्मेखला च कार्येति[1]।

पीठ के मध्यभाग में लिंग से दुगुना मोटा पीठ की ऊंचाई के तृतीय भाग से कण्ठ बनावे। कंठ के ऊपर तथा नीचे वाले भाग के समान दो वप्र बनाकर पीठ के ऊपर लिंग के विस्तार के छठे भाग से मेखला बनाकर उसके मध्य से लगा हुआ उसी के समान खात करे। नाली में भी विस्तार के तीसरे भाग से खात और पीठ के सदृश मेखला बनावे।

## अथ लिङ्गशालग्रामादिपूजाविचारः

गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा।
द्वे चक्रे द्वारकायास्तु नार्च्ये सूर्यद्वयं तथा॥

---

१. गौतमी तन्त्र में पंचसूत्र का विधान—'लिङ्गमस्तकविस्तारो लिङ्गोच्छ्रायसमो मतः। परिधिस्तत्त्रिगुणितस्तद्वत्पीठं व्यवस्थितम्॥ प्रणालिका तथैव स्यात्पंचसूत्रविनिर्णयः।' पार्थिवलिंग में पंचसूत्र विधान अविचारणीय है—'पञ्चसूत्रविधानं च पार्थिवे न विचारयेत्। यथाकथञ्चिद्विधिना रमणीयं प्रकल्पयेत्।' इसके अतिरिक्त अन्य विस्तृत विवेचन एवं पार्थिवलिंग पर अर्पित नैवेद्यादि निर्माल्य के ग्राह्यत्व का वचन सिद्धान्तशेखर आदि ग्रन्थों में द्रष्टव्य है।

शक्तित्रयं त्रिविघ्नेशं द्वौ शङ्खौ नार्चयेत्सुधीः। अन्यत्र तु—
चक्राङ्कमिथुनं पूज्यं नैकं चक्राङ्कमर्चयेत्। इत्युक्तं तेन विकल्पः।

नार्चयेच्च तथा मत्स्यकूर्मादिदशकं गृहे।
अग्निदग्धाश्च भग्नाश्च न पूज्याः प्रतिमा गृहे॥
भग्ना वा स्फुटिता वापि शालग्रामशिला शुभा।
शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि॥
विषमा नैव पूज्यन्ते विषमेष्वेक एव हि।

घर में दो लिंग या दो शालग्राम की पूजा नहीं करे। द्वारका के दो चक्र तथा दो सूर्य का पूजन नहीं करे। तीन गणेश तथा तीन शक्ति का और दो शंखों का पूजन न करे। दूसरी जगह तो—चक्र चिह्नित जोड़े की पूजा करे और चक्रांकित एक की पूजा नहीं करे ऐसा कहा है, इसलिये विकल्प है। इसी प्रकार मत्स्य, कूर्म आदि दस अवतारों का घर में पूजन न करे। आग से जले और टूटो हुई प्रतिमा की पूजा घर में न करे। किन्तु टूटी फूटी भी शालग्राम की शिला पूज्य है। सम शालग्राम की पूजा होती है, सम में दो की नहीं। विषम की पूजा नहीं की जाती, किन्तु विषम में एक की पूजा होती है।

ससुवर्णशालग्रामदाने[1] पृथ्वीदानफलम्। शतशालग्रामपूजनेऽनन्तफलम्। अविभक्तानामपि भ्रातॄणां देवतार्चनमग्निहोत्रं संध्या ब्रह्मयज्ञश्च पृथगेव[2]। स्त्री शूद्रो वा स्पर्शसहितं[3] शालग्रामचक्राङ्कितबाणलिङ्गानि नार्चयेत्।

शूद्रो वाऽनुपनीतो वा सधवा विधवाङ्गना।
दूरादेवास्पृशन् पूजां प्रकुर्याच्छिवकृष्णयोः॥

सुवर्णसहित शालग्राम का दान करने पर पृथिवीदान का फल होता है। सौ शालग्राम की पूजा करने में अनन्त फल होता है। एक में रहने वाले भी भाइयों का देवपूजन, अग्निहोत्र, सन्ध्या और ब्रह्मयज्ञ अलग ही होता है। स्त्री या शूद्र स्पर्श करके शालग्राम-चक्रांकित-बाणलिंग की पूजा न करे। शूद्र या अनुपनीत द्विज तथा सधवा या विधवा स्त्री स्पर्श नहीं करते हुए दूर ही से शिव और कृष्ण की पूजा करे।

शालग्रामबाणयोरेव स्पर्शननिषेधो न तु प्रतिमादौ।

---

१. वाराहे—'दद्याद् भक्ताय यो देवि शालग्रामशिलां नरः। सुवर्णसहितां दिव्यां पृथ्वीदानफलं लभेत्॥' तत्रैव—'यः पुनः पूजयेद् भक्त्या शालग्रामशिलाशतम्। तत्फलं नैव शक्तोऽहं वक्तुं वर्षशतैरपि॥' इति।

२. प्रयोगपारिजात में आश्वलायन ने कहा है—'पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजातिनाम्। अग्निहोत्रं सुरार्चा च सन्ध्या नित्यं भवेत् पृथक्॥' इति।

३. वाराह के कथन से स्त्री शूद्रों को स्पर्शरहित पूजा करनी ही चाहिये—'शालग्रामं न स्पृशेत्तु हीनवर्णो वसुन्धरे। स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः॥ मोहाद्यः संस्पृशेच्छूद्रो योषिद्वाऽपि कदाचन। स्वपते नरके घोरे यावदाभूतसंप्लवम्॥। यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे। दूरादेवास्पृशन् पूजां कारयेत् सुसमाहितः॥' इति।

सर्ववर्णैस्तु संपूज्याः प्रतिमाः सर्वदेवताः ।
लिङ्गान्यपि तु पूज्यानि मणिभिः[1] कल्पितानि च ॥ इत्युक्तेः ।
शालग्रामशिला क्रीता मध्यमा याचिताऽधमा ।
उक्तलक्षणसंपन्ना पारंपर्यक्रमागता ॥
उत्तमा सा तु विज्ञेया गुरुदत्ता तु तत्समा ।
तत्राप्यामलकीतुल्या पूज्या सूक्ष्मैव या भवेत् ॥
यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् ।
यवमात्रं तु गर्तः स्याद्यवार्धं लिङ्गमुच्यते ॥
शिवनाभिरिति ख्यातस्त्रिषु लोकेषु दुर्लभः ।

शालग्राम और बाणलिंग की ही पूजा में स्पर्श का निषेध है, प्रतिमा आदि में नहीं। सब देवताओं की प्रतिमाएँ सब वर्णों के लिये पूज्य हैं और मणियों से बनाए हुये लिंग पूजा के योग्य हैं, ऐसा वचन है। खरीदी हुई शालग्राम की शिला मध्यम, मांगी हुई अधम और कहे हुये लक्षणों से सम्पन्न एवं परंपरा से आई हुई शिला उत्तमा होती है। गुरु की दी हुई तो उत्तम के समान होती है। उसमें भी आंवला के समान छोटी ही शालग्राम की शिला पूजनीय होती है। जैसे-जैसे शालग्राम शिला छोटी होगी वैसे-वैसे उसका फल अधिक होगा। गर्त जौ के बराबर होता है। जव का आधा लिंग कहा जाता है, वह शिवनाभि नाम से विख्यात तीनों लोक में दुर्लभ है।

शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ॥
महापूजां तु कृत्वादौ पूजयेत्तां ततो बुधः ।
बाणलिङ्गानि[2] राजेन्द्र ख्यातानि भुवनत्रये ॥
न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथा ।

वासुदेवसंकर्षणप्रद्युम्नानिरुद्धा विप्राद्यैः क्रमेण पूज्याः । तल्लक्षणं तु—पञ्चचक्रो वासुदेवः, षड्भिश्चक्रैः प्रद्युम्नः, सप्तभिः संकर्षणः, एकादशभिरनिरुद्ध इति ।

प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ॥

शालग्राम शिला की तो प्रतिष्ठा नहीं होती। आरंभ में उसकी महापूजा करके नित्यपूजा की जाती है। हे राजेन्द्र! बाणलिंगों की तो ख्याति तीनों भुवन में है। इसकी प्रतिष्ठा, संस्कार और

---

१. विष्णुधर्म में नव प्रकार की प्रतिमायें—'तयोरसम्भवेऽर्चा वै सा चेह नवधा स्मृता। रत्नजा हेमजा चैव राजती ताम्रजा तथा। रैतिक्यर्चा तथा लौही शैलजा द्रुमजा तथा। अधमाऽधमा च विज्ञेया मृन्मयी प्रतिमा च या ॥' वृद्धपराशरः—'शैलीं दारुमयीं हैमीं धात्वाद्याकारसम्भवाम्। प्रतिष्ठां वै प्रकुर्वीत प्रासादे वा गृहे नृप ॥' इति।

२. भविष्यपुराण का 'बाणलिङ्गानि०' और स्कन्दपुराण का 'शालग्रामशिलायास्तु०' यह वचन है। भरतमाला में मार्कण्डेयका वचन है—'कम्बुश्चक्रं शैलभवा नार्मदेयाऽब्जिनीपती। बाणो विष्णुशिला चैषां प्रतिष्ठां नैव कारयेत् ॥' पुराणसंग्रह में बाणलिङ्ग का स्वरूप बतलाया है—'पक्वजम्बुफलाकारं कुक्कुटाण्डसमाकृति। भुक्तिमुक्तिप्रदं चैव बाणलिङ्गमुदाहृतम् ॥' इति।

आवाहन नहीं होता। ब्राह्मण आदि के क्रम से वासुदेव, संकर्षण,प्रद्युम्न और अनिरुद्ध पूज्य होते हैं। उनका लक्षण तो—पांच चक्र वाले वासुदेव, छः चक्र वाले प्रद्युम्न, सात चक्रों से युक्त संकर्षण और ग्यारह चक्रों वाले अनिरुद्ध होते हैं। प्रणव के उच्चारण से, शालग्राम शिला के पूजन और ब्राह्मणी गमन से शूद्र चाण्डालत्व प्राप्त करता है।

## अथ शूद्रस्य विप्रद्वारा शालग्रामपूजा

दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः।
कर्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनम्॥
विष्णुप्रीतिकरं नित्यं तुलसीकाष्ठचन्दनम्।
कार्तिके केतकीपुष्पं येन दत्तं हरेः कलौ॥
दीपदानं च देवर्षे तारितं तेन वै कुलम्।

मद्य नहीं पीने वाले और दीक्षायुक्त शूद्र, शालग्राम शिला का पूजन ब्राह्मण के द्वारा करावें। तुलसी काष्ठ और चन्दन प्रतिदिन विष्णु को प्रसन्न करने वाले हैं। जिसने कार्तिक के महीने में केवड़े का पुष्प तथा भगवान् को दीप अर्पित किया उसने कलियुग में अपने कुल को तार दिया।

शालग्रामसम्बन्धि तोयवच्चक्राङ्कशिलातोयस्यापि पानविधानात्सापि शालग्रामसन्निधौ पूज्या।

अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम्।
शालग्रामस्य संस्पर्शात्सर्वं याति पवित्रताम्॥
मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत्।
अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत्॥
विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः॥

शालग्राम सम्बन्धी जल की तरह चक्रचिह्नित शिला जल का भी पीने का विधान होने से वह शिला भी शालग्राम के समीप पूजा योग्य है। शिवनिर्माल्य—पत्र, पुष्प, फल और जल जो अग्राह्य हैं वे शालग्राम के स्पर्श से पवित्र हो जाते हैं। मध्यमा और अनामिका के बीच में पुष्प रख कर पूजा करे। अंगुष्ठ और तर्जनी के अग्रभाग से निर्माल्य को हटावे। त्रिपुण्ड्र भस्म तथा रुद्राक्ष की माला के विना पूजित भी महादेव पूजा करने वाले को फलप्रद नहीं होते।

विना मन्त्रं न बिभृयाद् रुद्राक्षान् भुवि मानवः।
पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत्॥
रुद्राक्षस्य प्रतिष्ठायां मन्त्रं पञ्चाक्षरं तथा।
त्र्यम्बकादिकमन्त्रं च तथा तत्र प्रयोजयेत्॥
अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशदेव तु।
सप्तविंशतिमाना वा माला हीना न युज्यते॥

[1]सप्तविंशतिरुद्राक्षमालया देहसंस्थया ।
यः करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् ॥

मनुष्य, भूलोक में बिना मन्त्र के रुद्राक्ष धारण न करे । स्नान समय में पंचामृत और पंचगव्य का प्रयोग करे । रुद्राक्ष की प्रतिष्ठा में पंचाक्षर मन्त्र अथवा त्र्यम्बक आदि मन्त्र का प्रयोग करे । रुद्राक्षमाला एक सौ आठ या पचास अथवा सत्ताईस दाने की बनावे, इससे हीन दानों की माला ठीक नहीं है । सत्ताईस रुद्राक्ष की माला को जो देह में धारण करता है वह पुरुष जो भी पुण्य करता है वह कोटिगुण फल देता है ।

## अथ रुद्राक्षतुलस्यादिसर्वजपमालानां संस्कारः

कुशोदकसहितैः पञ्चगव्यैर्मालां प्रक्षाल्य ॐ ह्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं क्षं इत्येतानि पञ्चाशन्मातृकाक्षराणि अश्वत्थपत्रस्थापितमालायां विन्यस्य ओं सद्यो जातं० ओं वामदेवाय० ओं अघोरेभ्यो० ओं तत्पुरुषाय० ओं ईशानः सर्वविद्यानां० इति पञ्च मन्त्रान् जपित्वा सद्योजातमिति मन्त्रेण मालां पञ्चगव्येन प्रोक्ष्य शीतजलेन प्रक्षाल्य वामदेवायेति चंदनेनाघृष्याघोरेति मालां धूपयित्वा तत्पुरुषायेति चन्दनकस्तूर्यादिना लेप-

---

१. यहाँ प्रजापति-कथित कामना विशेष से रुद्राक्ष की संख्या यों है—'मोक्षार्थी पंचविंशत्या धनार्थी त्रिंशता जपेत् । पुष्ट्यर्थी पंचविंशत्या पंचदश्याभिचारिके ॥ सप्तविंशतिरुद्राक्षमालया देहसंस्थया । यत्करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् ।। कहीं 'सप्तविंशति' की जगह 'सप्तविंशतिमाना वा ततो हीनाऽधमाः स्मृताः' ऐसा पाठान्तर है ।

शिवरहस्य में एकमुखी द्विमुखी आदि रुद्राक्ष धारण की विशेषता बतलायी है—'एकवक्त्रः शिवः साक्षाद् ब्रह्महत्यां व्यपोहति । अवध्यत्वं प्रतिस्रोतो वह्निस्तम्भं करोति च ॥ द्विवक्त्रो हरगौरी स्याद् गोवधाद्यघनाशकृत् । त्रिवक्त्रो ह्यग्निजन्माथ पापराशिं प्रणाशयेत् ॥ चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति । पञ्चवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् ॥ षड्वक्त्रस्तु गुहो ज्ञेयो भ्रूणहत्यादि नाशयेत् । सप्तवक्त्रस्त्वनन्तः स्यात् स्वर्णस्तेयादिपापहृत् ॥ विनायकोऽष्टवक्त्रः स्यात् सर्वानृतविनाशकृत् । भैरवो नववक्त्रस्तु शिवसायुज्यकारकः॥ दशवक्त्रः स्मृतो विष्णुर्भूतप्रेतभयापहः । एकादशमुखो रुद्रो नानायज्ञफलप्रदः ॥ द्वादशास्यस्तथादित्यः सर्वरोगनिबर्हणः । त्रयोदशमुखः कामः सर्वकामफलप्रदः ॥ चतुर्दशास्यः श्रीकण्ठो वंशोद्धारकरः परः ।'—

रुद्राक्षगुटिका का प्रमाण—'जातीफलप्रमाणेन जप्यं मद्दुदाहृतम् । बदरास्थिप्रमाणेन स्वल्पकं तदुदाहृतम् ॥' व्यासोक्त जप का प्रकार—'तर्जन्या न स्पृशेदक्षं जपयेन्न विधूनयेत् । अङ्गुष्ठस्य तु मध्यस्य परिवर्तं समाचरेत् ॥ मध्यमाकर्षणं त्वस्याः सर्वसिद्धिप्रदायकम् ।' आह्निककारिका में 'मध्यमादिद्वयं पूर्वं जपकाले तु वर्जयेत् । तं वै मेरु विजानीयात् कथितं ब्रह्मणा पुरा ॥'—

सम्मोहनतन्त्र में माला का स्थापन—'गोमुखादौ ततो मालां गोपयेन्मातृजारवत् । कौशेयं रक्तवर्णं च पीतवस्त्रं सुरेश्वरि ॥ अथ कार्पासवस्त्रेण यत्नतो गोपयेत् सुधीः । वाससाऽऽच्छादयेन्मालां सर्वमन्त्रं महेश्वरि ॥ न कुर्यात् कृष्णवर्णं तु न कुर्याद्बहुवर्णकम् । न कुर्याद्रोमजं वस्त्रमुक्तवस्त्रेण गोपयेत ॥' माला के स्पर्शादि का नियम है—'वामेन न स्पृशेन्मालां न स्पृशेत्तामदीक्षितः । भूमौ न विन्यसेन्मालां नान्यमन्त्रं जपेत्तथा । अनामाङ्गुष्ठमाक्रम्य जपं कुर्यादुपांशुकम् ।' इति ।

यित्वेशान इति मन्त्रेण प्रतिमणिं शतवारं दशवारं वाभिमन्त्र्य अघोर इति मन्त्रेण मेरुं शतवारमभिमन्त्रयेत्। तत एतैरेव पञ्चभिर्मन्त्रैर्मालां पञ्चोपचारैः पूजयेदिति बोपदेवः।

कुशजलसहित पंचगव्य से माला का प्रक्षालन करके 'ॐ ह्रीं अं आं इं ईं इत्यादि मूल में लिखे पचास मातृकाक्षर का पीपल के पत्ते पर स्थापित माला में न्यास करके 'ॐ सद्यो जातं०' 'ॐ वामदेवाय०', 'ॐ अघोरेभ्य०', 'ॐ तत्पुरुषाय०', 'ॐ ईशानः सर्व०' इन पांचों मन्त्रों को जपकर 'सद्योजातं' इस मन्त्र से माला को पंचगव्य से प्रोक्षण करके ठंढे जल से प्रक्षालन करके 'वामदेवाय' इस मन्त्र से चन्दन से घर्षण करके 'अघोरेभ्यो' इस मन्त्र से माला को धूपित करके 'तत्पुरुषाय' इस मन्त्र से चन्दन कस्तूरी आदि का लेपन करके 'ईशान' मन्त्र से प्रत्येक मनियों को सौ बार या दस बार अभिमंत्रित करके माला-मेरु का 'अघोरेभ्यो' इस मन्त्र से सौ बार अभिमन्त्रण करे। तदनन्तर इन्हीं पाचों मन्त्रों से माला की पांचों उपचार से पूजा करे, यह बोपदेव का कथन है।

## अथ रुद्राक्षधारणसंख्या

रुद्राक्षान्कण्ठदेशे दशनपरिमितान्मस्तके विंशती द्वे
षट्षट्कर्णप्रदेशे करयुगुलकृते द्वादश द्वादशैव।
बाह्वोरिन्दोः कलाभिर्नयनयुगकृते एकमेकं शिखायां
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः॥

रुद्राक्षदानाद्[1] रुद्रपदप्राप्तिः।

कंठ में रुद्राक्ष की माला बत्तीस दाने की, मस्तक पर चालिस की, दोनों कानों पर छ छ दाने की, दोनों हाथों में बारह बारह दाने की, दोनों बाहुओं में सोलह दाने की, दोनों आंखों के लिये एक एक दाना, शिखा में एक और छाती पर एक सौ आठ की जो पहनता है वह स्वयं नीलकण्ठ हो जाता है। रुद्राक्ष के दाने से रुद्रपद की प्राप्ति होती है।

## अथ शिवविष्णुस्नानविचारः

पञ्चविंशत्पलं लिङ्गेष्वभ्यङ्गं कारयेदथ।
स्नापयेत्तिलतैलैश्च करयन्त्रोद्भवैः शिवम्॥
स्नानं पलशतं ज्ञेयमभ्यङ्गः पञ्चविंशतिः॥
पलानां द्विसहस्रेण महास्नानं जलेन तत्।
पयोदधिघृतक्षौद्रशर्कराद्यैस्ततः क्रमात्॥

---

१. प्रजापतिः—'यो ददाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्मुखम्। तस्य प्रीतो भवेद्रुद्रः स्वपदं च प्रयच्छति॥' वाचस्पति में रुद्राक्षधारण का फल है—'रुद्राक्षा यस्य गात्रेषु ललाटे च त्रिपुण्ड्रकम्। स चाण्डालोऽपि सम्पूज्यः सर्ववर्णोत्तमो भवेत्॥ अभक्तो वा विभक्तो वा नीचो नीचतरोऽपि वा। रुद्राक्षान् धारयेद्यस्तु मुच्यते सर्वपातकैः॥ सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः। तं नमन्ति सुराः सर्वे यथा रुद्रस्तथैव सः॥'—

रुद्राक्षधारण नहीं करने पर दोष बतलाया है—'अरुद्राक्षो जपः पुंसां तावन्मात्रफलप्रदः। यस्याङ्गे ह्यस्ति रुद्राक्ष एकोऽपि बहुपुण्यदः॥ विभूतिर्यस्य नो भाले नाङ्गे रुद्राक्षधारणम्। न हि वाण्यां शिवोचारस्तं त्यजेदन्त्यजं यथा॥' इति।

शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन वै।
तावता मधुना चैव दध्ना च पयसापि च॥
पलसार्धसहस्रेण रसेनैवैक्षवेण च।
भक्त्या चोष्णोदकैः शीतोदकैः संस्नापयेच्छिवम्।
श्रीविष्णुं क्षीरदध्याद्यैः क्रमाद्दशगुणोत्तरैः[1]।
स्नापयेत्केचिदूचुश्च क्षीराद्यैः पञ्चभिः समैः॥

पच्चीस पल का अभ्यंग लिंगों में करे। शंकर को कोल्हू में पेरे हुए तिल के तेल से नहवावे। सौ पल तेल से स्नान और पच्चीस पल तेल से अभ्यंग करावे। दो हजार पल जल से महास्नान करावे। उसके बाद क्रम से दूध, दही, घी, मधु और शक्कर आदि से स्नान करावे। भक्तिपूर्वक शंकर का सौ पल घृत से तथा उतने ही मधु, दूध, दही से एवं डेढ़ हजार पल ऊख के रस से गरम और ठंडे जल से स्नान करावे। श्रीविष्णु को उत्तरोत्तर क्रम से दशगुणित दूध दही आदि से नहवावे। कुछ लोग कहते हैं कि दूध आदि पांचों सम भाग से स्नान करावे।

## अथ श्रीविष्ण्वादिपञ्चायतनानि

विष्णुर्मध्ये शिवेभास्यसूर्यार्या ईशदिक्क्रमात्।
शम्भौ मध्ये विष्णुसूर्यगजास्यार्यास्तथा क्रमात्॥
रवौ मध्यगते रुद्रगणेशाच्युतशक्तयः।
मध्ये देवीविष्णुशिवगणेशरवयः क्रमात्॥
मध्ये गणपतिर्विष्णुशिवसूर्याम्बिकास्तथा।
ईशानदिक्क्रमेणैव[2] पञ्चायतनपञ्चकम्॥

---

१. स्कान्दे—'क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम्। घृताद्दशगुणं क्षौद्रं क्षौद्राच्चैक्षवजं तथा॥' ब्राह्मे—'देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत्। पलानि तत्र देयानि श्रद्धया पञ्चविंशतिः॥' इति।

२. वाचस्पति में पञ्चायतन देवता ये हैं—'आदित्यं गणनाथं च देवीं रुद्रं च केशवम्। पञ्चदैवत्यमित्युक्तं सर्वकर्मसु पूजयेत्॥' पंचायतनसन्निवेश का वोपदेवोक्त क्रम है—'शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करेभास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः। देव्यां विष्णुहरेभवक्त्ररवयो लम्बोदरेऽजेश्वरेनाम्बाः शङ्करभागतोऽतिसुखदा व्यस्तास्तु हानिप्रदाः॥'—

ज्ञानमालायाम्—

शिवपंचायन

| विष्णु | | सूर्य |
|---|---|---|
| | शिव | |
| देवी | | गणेश |

—'यदा तु शंकरं मध्ये ऐशान्यां श्रीपतिं यजेत्। आग्नेय्यां च तथा हंसं नैर्ऋत्यां पार्वतीसुतम्॥ वायव्यां च सदा पूज्या भवानी भक्तवत्सला।' अर्थात् शिवपंचायन हो तो—मध्य में शंकर, ईशान में विष्णु, अग्निकोण में सूर्य, नैर्ऋत्य में गणेश और वायव्य में पार्वती को स्थापित करे।

विष्णुपंचायतन

| शिव | | गणेश |
|---|---|---|
| | विष्णु | |
| देवी | | सूर्य |

—'यदा तु मध्ये गोविन्दमीशान्यां शंकरं यजेत्। आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा॥ वायव्यामम्बिकां चैव यजेन्नित्यं समाहितः।' अर्थात् विष्णुपंचायतन हो तो—मध्य में विष्णु, ईशान में शिव, अग्निकोण में गणेश, निर्ऋति में सूर्य और वायव्य में देवी को स्थापित करे।

यदि मध्य में विष्णु हैं तो ईशान कोण के क्रम से शंकर-सूर्य-देवी-गणेश, शंकर मध्य में हैं तो ईशान कोण के क्रम से विष्णु-सूर्य-गणेश-देवी, सूर्य मध्य में हों तो ईशानादि क्रम से शिव-गणेश-विष्णु-देवी, मध्य में देवी रहें तो ईशानादि क्रम से विष्णु-शिव-गणेश-सूर्य और मध्य में गणेश रहें तो ईशानादि क्रम से विष्णु-शिव-सूर्य-देवी की स्थापना करे। ईशानादि दिशा के क्रम से ये पांच पंचायतन होते हैं।

---

सूर्यपंचायतन




—'सहस्रांशुर्यदा मध्ये ऐशान्यां पार्वतीपतिम्। आग्नेय्यामेकदन्तं च नैर्ऋत्यामच्युतं तथा॥ वायव्यां पूजयेद्देवीं भोगमोक्षैकमूलिकाम्।' अर्थात् सूर्यपंचायतन हो तो—मध्य में सूर्य, ईशान में शिव, अग्निकोण में गणेश, निर्ऋति में विष्णु और वायव्य में देवी को स्थापित करे।

देवीपंचायतन




—'भवानीं तु यदा मध्ये ऐशान्यां माधवं यजेत्। आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम्। प्रद्योतनं तु वायव्यामाचार्यस्तु प्रपूजयेत्।' अर्थात् देवीपंचायतन हो तो—मध्य में देवी, ईशान में विष्णु, अग्निकोण में शिव, निर्ऋति में गणेश और वायव्य में सूर्य को स्थापित करे।

गणेशपंचायतन




—'हेरम्बं तु यदा मध्ये ऐशान्यामच्युतं यजेत्। आग्नेय्यां पंचवक्त्रं तु नैर्ऋत्यां द्युमणिं यजेत्॥ वायव्यामम्बिकां चैव यजेन्नित्यमतन्द्रितः।' अर्थात् गणेशपंचायतन हो तो—मध्य में गणेश, ईशान में विष्णु, अग्निकोण में शिव, निर्ऋति में सूर्य और वायव्य में देवी को स्थापित करे।

रामपंचायतन



रामार्चनचन्द्रिकायाम्—'रामचन्द्रं यजेन्मध्ये वामे जनकनन्दिनीम्। दक्षिणे लक्ष्मणं चैव अग्रतो मारुतिं तथा॥' अर्थात् श्रीराम को बीच में, इनके वामभाग में श्रीसीता और शत्रुघ्न, दक्षिणभाग में लक्ष्मण और भरत को स्थापित कर पूजे। कहीं राम-सीता के पीछे की ओर सेवकभाव से लक्ष्मण और भरत को स्थापित कर पूजते हैं।

इस प्रकार स्थापित एवं पूजित होने पर ये सुखदायक और व्यतिक्रम से स्थापित एवं पूजित होने पर हानिकारक होते हैं।

ग्रन्थान्तर में शंकर के पारिपार्श्वक—'बाणरावणचण्डीशनन्दीभृङ्गीरिटादयः। सदाशिवप्रसादं ते सर्वे गृह्णन्तु शाम्भवाः॥' विष्णु के पारिपार्श्वक—'विष्वक्सेनोद्धवाक्रूराः सनकाद्याः शुकादयः। महाविष्णुप्रसादं ते सर्वे गृह्णन्तु वैष्णवाः॥' सूर्य के पारिपार्श्वक—'माठरः पिङ्गलो दण्डः चण्डांशोः पारिपार्श्वकाः। प्रभाकरप्रसादं ते सर्वे गृह्णन्तु पार्षदाः॥' देवी के पारिपार्श्वक—'शक्तिरुच्छिष्टचाण्डाली गणेशः सविता शची। महादेवीप्रसादं ते सर्वे गृह्णन्तु पार्षदाः॥' गणेश के पारिपार्श्वक—'गणेशो गालवो गार्ग्यो मङ्गलश्च सुधाकरः। गणेशस्य प्रसादं ते सर्वे गृह्णन्तु गाणपाः॥' इति।

## अथ केशवादिचतुर्विंशतिमूर्तिलक्षणानि

अथ केशवादिचतुर्विंशतिमूर्तिनिर्णायकबोपदेवश्लोकः सिन्धौ व्याख्यातः, तस्यायं संग्रहः—

केशवादेश्चतुर्बाहोर्दक्षिणोर्ध्वकरक्रमात् ।
शङ्खचक्रगदापद्मायुधैः केशव उच्यते ॥
नारायणः पद्मगदाचक्रशङ्खायुधैः क्रमात् ।
माधवश्चक्रशङ्खाभ्यां पद्मेन गदया भवेत् ॥
गोविन्दो गदया पद्मशङ्खचक्रैः क्रमाद्भवेत् ।
विष्णुः पद्मेन शङ्खेन चक्रेण गदया क्रमात् ॥
शङ्खपद्मगदाचक्रैर्मधुसूदन ईरितः ।
त्रिविक्रमो गदाचक्रशङ्खपद्मैरनुक्रमात् ॥
वामनः शङ्खचक्राभ्यां पद्मेन गदयापि च ।
चक्रेण गदया शङ्खपद्माभ्यां श्रीधरः स्मृतः ॥
हृषीकेशः स्मृतश्चक्रपद्मशङ्खगदायुधैः ।
पद्मनाभः पद्मचक्रगदाशङ्खैः क्रमात्स्मृतः ॥

केशव आदि चौबीस मूर्त्ति का निर्णय करने वाला बोपदेव का श्लोक निर्णयसिन्धु में विख्यात है, उसका यह संग्रह है—चार बाहु वाले केशव आदि के दाहिने ऊपर वाले हाथ के क्रम से शंख चक्र, गदा, पद्म के आयुधों से केशव कहलाते हैं। पद्म, गदा, चक्र और शंख के आयुधों के क्रम से नारायण कहलाते हैं। चक्र, शंख, पद्म और गदा धारण से माधव कहलाते हैं। गदा, पद्म, शंख और चक्र के क्रम से धारण करने पर गोविन्द नाम वाले होते हैं। पद्म, शंख, चक्र और गदा क्रम से धारण करने पर विष्णु नाम से ख्यात होते हैं। शंख, पद्म, गदा और चक्र धारण करने से मधुसूदन कहलाते हैं। क्रमानुसार गदा, चक्र, शख और पद्म के धारण से त्रिविक्रम नाम पड़ा है। शंख, चक्र, पद्म तथा गदा से वामन भगवान् होते हैं। चक्र, गदा, शंख और पद्म से श्रीधर नामधारी होते हैं। चक्र, पद्म, शंख और गदायुध होने से हृषीकेश नाम होता है। पद्म, चक्र, गदा और शंख से पद्मनाभ भगवान् होते हैं।

दामोदरः शङ्खगदाचक्रपद्मैरुदीर्यते ।
संकर्षणः शङ्खपद्मचक्रायुधगदायुधैः ॥
वासुदेवश्चक्रगदापद्मशङ्खाख्यलक्षणैः ।
प्रद्युम्नः स्याच्छङ्खगदापद्मचक्रैः क्रमाद्धृतैः ॥
अनिरुद्धो गदाशङ्खपद्मचक्रैरनुक्रमात् ।
पद्मशङ्खगदाचक्रायुधैः स्यात्पुरुषोत्तमः ॥
अधोक्षजो गदाशङ्खचक्रपद्मैः करस्थितैः ।
नरसिंहः पद्मगदाशङ्खचक्रायुधैर्भवेत् ॥

अच्युतः पद्मचक्राभ्यां शङ्खेन गदया क्रमात् ।
जनार्दनश्चक्रशङ्खगदापद्माढ्यबाहुभिः ॥
उपेन्द्रो गदया चक्रपद्मशङ्खान्वितैः करैः ।
चक्रपद्मगदाशङ्खैः करस्थैः स्यात् क्रमाद्धरिः ॥
श्रीकृष्णाख्यो गदापद्मचक्रशङ्खैर्मतो विभुः ।
इति प्रोक्ताः केशवादिचतुर्विंशतिमूर्तयः ॥

शंख, गदा, चक्र और पद्म से दामोदर नाम होता है। शंख, पद्म, चक्र और गदायुध होने से संकर्षण नाम वाले होते हैं। चक्र, गदा, पद्म और शंख के लक्षण से वासुदेव कहलाते हैं। शंख, गदा, पद्म और चक्र को क्रम से धारण करने पर प्रद्युम्न संज्ञा होती है। क्रम से गदा, शंख, पद्म और चक्र से भूषित अनिरुद्ध नाम वाले होते हैं। पद्म, शंख, गदा और चक्रायुध से पुरुषोत्तम संज्ञा होती है। गदा, शंख, चक्र और कमल के हाथ में रहने से भगवान् को अधोक्षज नाम से पुकारते हैं। पद्म, गदा, शंख और चक्रायुध होने से नरसिंह नाम होता है। क्रम से पद्म, चक्र, शंख और गदा से अच्युत होते हैं। चक्र, शंख, गदा और पद्म से सुशोभित बाहु वाले जनार्दन होते हैं। गदा, चक्र, पद्म और शंख युक्त हाथों से उपेन्द्र संज्ञा होती है। क्रम से हाथों में चक्र, पद्म, गदा और शंख के रहने पर प्रभु का नाम हरि होता है। गदा, पद्म, चक्र और शंख वाले विभु की श्रीकृष्ण ऐसी आख्या होती है। केशव आदि चौबीस मूर्तियों के ये लक्षण कहे हैं।

## अथ सिन्ध्वनुसारेण देवप्रतिष्ठाप्रयोगः

यजमानो द्वादशादिहस्तं 'मण्डपं कृत्वा आग्नेये पूर्वतो वा हस्तमात्रं कुण्डं स्थण्डिलं वा कृत्वा मध्ये वेदीं तदुपरि सर्वतोभद्रं ग्रहचिकीर्षायां पूर्वत ईशान्यां वा ग्रहवेदीं प्रासादसंस्कारे मण्डपसंस्कारे वा चिकीर्षिते नैर्ऋते वास्तुपीठं कृत्वा 'अस्यां मूर्तौ लिङ्गे वा देवतासान्निध्यार्थं दीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षय्यसुखकामोऽमुकदेवमूर्तिप्रतिष्ठां करिष्ये' इति संकल्प्य स्वस्तिवाचनादिनान्दीश्राद्धान्ते आचार्यं वृत्वाष्टौ चतुरो वा ऋत्विजो वृत्वा पूजयेत् ।

---

१. देवप्रतिष्ठा-जलाशयाद्युत्सर्ग-महारुद्रादि याग-तुलादानादि में कर्मोपयुक्त ८, १०, १२, १४, १६, १८, २०, २४, २८, ३२ आदि हाथ की लम्बाई चौड़ाई का बाहर में बारह मध्य में चार स्तम्भयुक्त मध्य में ऊच्च चारो दिशाओं में जिसका पटल ढलता हुआ चतुरस्र और वितान ध्वजपताकादियुक्त मण्डप बनाना चाहिये। कोटिहोम में मण्डप का स्तम्भप्रमाण—'मण्डपे मध्यमाः स्तम्भा मण्डपार्धप्रमाणतः। समन्ततस्त्रिभागेन परितो द्वादशापरे॥ शालवृक्षोद्भवाः स्तम्भाः मण्डपार्धप्रमाणतः। समन्ततस्त्रिभागेन द्वादशान्ये च वेदितः॥' पंचरात्रे—'मण्डपाः कर्मसु प्रोक्ता अल्पा मध्या तथोत्तमाः। यथादेशं यथाकालं प्रयोज्यास्ते विचक्षणैः॥' 'गृहे देवालये वापि संकीर्णं यत्र दृश्यते। तत्र कार्यं मण्डपज्ञैः सश्लिष्टं मण्डपद्वयम्॥' सिद्धान्तशेखरे—'स्थलादर्काङ्गुलोच्छ्रायं मण्डपस्थलमीरितम्।' महाकपिलपञ्चरात्रे तु—'उच्छ्राये हस्तमात्रं स्यात्सुसमं च सुशोभनम्॥' मात्स्ये समभूमौ मण्डपरचनोक्ता अतो मण्डपभूम्युच्छ्रितेः कृताकृतमिति प्रतिष्ठेन्दुः। गोविन्दार्चनचन्द्रिकायाम्—'मण्डपोपरि बध्नीयादतिश्वेतं वितानकम्। अलंकुर्यात्पुष्पमालादिभिरेनं तु वेष्टयेत्॥ अंशैः समुन्नतां वाऽपि तारतम्यं विलोक्य च। सामग्र्यादेः समावेशो यथा स्यादिति मण्डपः॥' अलङ्करणासम्भवे पुष्पमालापल्लवैर्वा मण्डपालङ्कारोऽवश्यं सम्पादनीय इति रुद्रकल्पद्रुमः। मण्डपादिसम्बन्धी विशेषविचार अन्यत्र देखें।

यजमान बारह आदि हाथ का मण्डप और आग्नेय या पूर्व दिशा में एक हाथ का कुण्ड या स्थण्डिल बनाकर बीच में वेदी उसके ऊपर सर्वतोभद्र, ग्रहों के पूजन करने की इच्छा हो तो पूर्व या ईशान में ग्रहवेदी, प्रसाद संस्कार या मण्डप-संस्कार की इच्छा हो तो नैर्ऋत्य दिशा में वास्तुपीठ बनाकर 'इस मूर्ति या लिंग में देवतासान्निध्य के लिये दीर्घ आयु, लक्ष्मी, सम्पूर्ण कामनाओं की समृद्धि और अक्षय सुख की कामना से अमुक देवमूर्ति की प्रतिष्ठा करूँगा' ऐसा संकल्पपूर्वक स्वस्तिवाचन आदि नान्दीश्राद्धपर्यन्त करके आचार्य और आठ या चार ऋत्विजों का वरण कर पूजा करे।

आचार्यो यदत्रेति सर्षपान् विकीर्यापोहिष्ठेति कुशोदकैर्भूमिं प्रोक्ष्य देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्वेति भूमौ प्रादेशं कृत्वा मण्डप-प्रतिष्ठां कृत्वा न कृत्वा वा मूर्तिं पञ्चगव्यहिरण्ययवदूर्वाश्वत्थपलाशपर्णान्युदकुम्भे प्रक्षिप्य ताभिरद्भिरापोहिष्ठेति तिसृभिः,

आचार्य 'यदत्र' इस मन्त्र से सरसों को बिखेर कर 'आपोहिष्ठा' इस मन्त्र से कुशोदक से भूमि का प्रोक्षण कर 'देवा आयान्तु, यातुधाना अपयान्तु, विष्णो देवयजनं रक्षस्व' इस मन्त्र से भूमि में प्रादेशमात्र रेखा खींच कर मण्डप प्रतिष्ठा करके या न करके मूर्त्ति को पंचगव्य, सुवर्ण, जव, दूब और पीपल के पत्तों को जल-कुम्भ में छोड़कर उस जल से, 'आपोहिष्ठा' इन तीन ऋचाओं से,

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳस्योना भवन्तु ॥१॥

यासाꣳराजा वरुणो याति मध्ये सत्यानृते अवपश्यं जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता० ॥ २ ॥

यासां देवादि विकृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्तान० ॥ ३ ॥

शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोपस्पृशत त्वचं मे। सर्वाꣳअग्नी-ꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त ॥ ४ ॥

पवमानः सुवर्जनः। पवित्रेण विचर्षणिः। यः पोता स पुनातु मा। पुनन्तु मा देवजनाः। पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः। जातवेदः पवित्रवत्। पवित्रेण पुनाहि मा। शुक्रेण देवदीद्यत्। अग्ने क्रत्वाक्रतूꣳरनु ॥ १ ॥

यत्ते पवित्रमर्चिषि। अग्ने विततमन्तरा। ब्रह्म तेन पुनीमहे। उभाभ्यां देव-सवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे। वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु। वयꣳस्याम पतयो रयीणाम् ॥२॥

वैश्वानरो रश्मिभिर्मा पुनातु। वातः प्राणेनेषिरो मयोभूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीताम्। बृहद्भिः सवितस्तृभिः। वर्षिष्ठै-र्देवमन्मभिः। अग्ने दक्षैः पुनाहि मा। येन देवा अपुनत। येनापो दिव्यंकशः। तेन दिव्येन ब्रह्मणा ॥ ३ ॥

इदं ब्रह्म पुनीमहे । यः पावमानीरध्येति । ऋषिभिः संभृतꣳरसम् । सर्वꣳस-पूतमश्नाति । स्वदितं मातरिश्वना । पावमानीर्यो अध्येति । ऋषिभिः संभृतꣳर-सम् । तस्मै सरस्वतीदुहे । क्षीरꣳसर्पिर्मधूदकम् । पावमानीः स्वस्त्ययनीः ॥ ४ ॥

सुदुघाहि पयस्वतीः । ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृतꣳहितम् । पाव-मानीर्दिशंतु नः । इमं लोकमथो अमुम् । कामान्त्समर्धयन्तु नः । देवीर्देवैः समाभृ-ताः । पावमानीः स्वस्त्ययनीः । सुदुघाहि घृतश्चुतः । ऋषिभिः संभृतो रसः ॥ ५ ॥

ब्राह्मणेष्वमृतꣳहितम् । येन देवाः पवित्रेण । आत्मानं पुनते सदा । तेन सहस्रधारेण । पावमान्यः पुनंतु मा । प्राजापत्यं पवित्रम् । शतोद्यामꣳहिरण्मयम् । तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे । इन्द्रः सुनीती सह मा पुनातु । सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ॥ ६ ॥

इत्यनुवाकेन चाभिषिच्य व्याहृतिभिरिदं विष्णुरिति च फलयवदूर्वाः समर्प्य रक्षोहणमिति देवहस्ते कङ्कणं बध्वा वाससाच्छाद्य अवते हेळो उदुत्तम-मिति जलेऽधिवासयेत् ।

तथा 'हिरण्यवर्णाः शुचयः०' 'या सा०राजा वरुणो०' 'या सां देवादि विकुण्वन्ति' 'शिवेन मा चक्षुषा' 'पवमानः सुवर्जनः' 'यत्ते पवित्रमर्चिषि' 'वैश्वानरो रश्मिभिर्मा पुनातु' 'इदं ब्रह्म पुनीमहे' 'सुदुघाहि पयस्वतीः' 'ब्राह्मणेष्वमृतꣳ हितं' मूलोक्त इन अनुवाकों से अभिषेक करके व्याहृतियों और 'इदं विष्णु' से फल, यव और दूर्वा समर्पण करके 'रक्षोहणं' इस मन्त्र से देवता के हाथ में कंकण बांधकर वस्त्र से आच्छादन करके 'अवते हेडो उदुत्तमं' इससे जलाधिवासन करे ।

अथ चलप्रतिष्ठायामग्निं प्रतिष्ठाप्य ध्यात्वा ग्रहादिपक्षे ग्रहान् वास्तुदेवताश्च प्रतिष्ठाप्यान्वादध्यात् । चक्षुषी आज्येनेत्यन्ते ग्रहादिहोमपक्षे ग्रहानधिदेवतादींश्च समिच्चर्वाज्येन वास्तुपीठदेवताश्चान्वाधाने उद्दिश्य इन्द्रं पृथिवीं शर्वम् अग्निम् अग्निमूर्तिं पशुपतिं यमं यजमानमूर्तिम् उग्रं निर्ऋतिं सूर्यमूर्तिं रुद्रं वरुणं जलमूर्तिं भवं वायुं वायुमूर्तिम् ईशानं कुबेरं सोममूर्तिं महादेवम् ईशानम् आकाशं भीमम् एताः लोकपालमूर्तिमूर्तिपतिदेवताः, पलाशोदुम्बराश्वत्थशम्यपामार्गसमिद्भिराज्या-हुतिभिस्तिलाहुतिभिश्च प्रतिदैवतं प्रतिद्रव्यमष्टाष्टसंख्याकाभिः, स्थाप्यदेवताममुकां पलाशोदुम्बराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैः प्रतिद्रव्यमष्टोत्तरसहस्रमष्टोत्तर-शतमष्टाविंशतिसंख्यया वा अग्निर्यजुर्भिरित्यनुवाकेन विश्वान्देवांस्तिलाज्यभ्यां दशदशाहुतिभिः ।

चलप्रतिष्ठा में अग्नि की स्थापना कर ध्यान करके ग्रहादि पक्ष में ग्रहों और वास्तुदेवता की भी प्रतिष्ठा कर अन्वाधान करे । चक्षुषी आज्येन के बाद ग्रहादि होम पक्ष में ग्रहों और ग्रहों के अधिदेवता आदि को समिधा, चरु और घी से और वास्तुपीठ देवता को अन्वाधान का उद्देश कर

इन, पृथिवी, शर्व, अग्नि और अग्निमूर्ति, पशुपति, यम, यजमान मूर्ति, उग्र, निर्ऋति, सूर्यमूर्ति, रुद्र, वरुण, जलमूर्ति, भव, वायु, वायुमूर्ति, ईशान, कुबेर, सोममूर्ति, महादेव, ईशान, आकाश और भीम, इन सब को और लोकपाल मूर्ति मूर्तिपति देवता को पलाश, गूलर, शमी और अपामार्ग की समिधा से, घृत की आहुति और तिल की आहुतियों से प्रतिदेवता को प्रत्येक द्रव्य की आठ संख्याओं से, स्थाप्य देवता को पलाश, गूलर, पीपल, शमी, अपामार्ग की समिधा, तिल, चरु और घृत से, प्रतिद्रव्य एक सौ आठ, एक हजार आठ या अट्ठाइस संख्या से 'अग्निर्यजुर्भिः' इस अनुवाक से सम्पूर्ण देवताओं को तिल घृत से दस दस आहुति दे।

एवं द्वितीये पर्याये एता एव देवतास्तत्तत्संख्याकैस्तैरेव द्रव्यैः। एवं तृतीये पर्याये एता एव देवतास्तत्तत्संख्याकैस्तैरेव द्रव्यैर्ब्रह्मादिमण्डलदेवतास्तिलाज्याहुतिभिः प्रतिदैवतं दश दश संख्याकाभिः। शेषेण स्विष्टकृतमित्यादि।

इसी प्रकार दूसरे पर्याय में इतने ही देवता को पूर्वोक्त संख्या और उन्हीं द्रव्यों से एवं तीसरे पर्याय में इन्हीं सब देवताओं को उन्हीं-उन्हीं संख्या और द्रव्यों से ब्रह्मादिमण्डलदेवता को तिल घृत की आहुतियों से प्रत्येक देवता को दस दस संख्या से आहुति दे। शेष से स्विष्टकृत् आदि करे।

शूर्पे प्रधानदेवतार्थं तूष्णीं चतुरो मुष्टीन्निरुप्य होमपर्याप्तं गृहीत्वा तथैव प्रोक्ष्य गोक्षीरे नीवारचरुं श्रपयेदाज्यभागान्ते यजमानः इदमुपकल्पितमन्वाधानोक्तद्रव्यजातमन्वाधानोक्ताहुतिसंख्यापर्याप्तमन्वाधानोक्ताभ्यो यक्ष्यमाणाभ्यो देवताभ्योस्तु न ममेति त्यागं कुर्यात्। गृहसिद्धान्नादिना ग्रहादिहोमं विधाय लोकपालमूर्तिमूर्तिपतिभ्यः समित्पञ्चकं तिलाज्ये[1] च जुहुयात्।

सूप में प्रधान देवता को मौन होकर चार मुट्ठी रख कर होम के योग्य लेकर उसी प्रकार प्रोक्षण कर गाय के दूध में नीवार का चरु पकावे। आज्य भाग के अन्तमें यजमान-'यह सामने रखा हुआ अन्वाधानोक्त द्रव्य समूह अन्वाधानोक्त संख्या के पर्याप्त अन्वाधानोक्त देवताओं के लिये हैं मेरा नहीं' इस प्रकार त्याग करे। घर में बने हुए अन्न आदि से ग्रह आदि का होम करके लोकपाल मूर्ति और मूर्तिपति के लिये पांच समिधा, तिल और घृत से होम करे।

प्रतिद्रव्यहोमान्ते देवं पादनाभिशिरःसु स्पृशेत्। आज्यहोमे चोत्तरतः सजलकुम्भे संपातान्नयेत्। तेषां मन्त्राः—इन्द्रायेन्दो इतीन्द्रस्य, स्योनेति पृथिवीमूर्तेः, अघोरेभ्य इति तत्पतेः शर्वस्य, अग्न आयाहीत्यग्नेः, अग्निं दूतमित्यग्निमूर्तेः, नमः शर्वाय च पशुपतये चेति पशुपतेः, यमाय सोममिति यमस्य, असिहि वीरेति यजमानमूर्तेः, स्तुहि श्रुतमिति तत्पतेरुग्रस्य, असुन्वन्तमिति निर्ऋतेः, आकृष्णेनेति सूर्यमूर्तेः।

प्रत्येक द्रव्य के होम के बाद देवता के पैर, नाभि और सिर का अच्छी तरह से स्पर्श करे। घृतहोम में उत्तर की ओर जलसहित कुम्भ में संपातों को छोड़े। उनके मन्त्र ये हैं—

---

१. होम में ईश्वरसंहितोक्त तिल आज्यका महत्त्व—'सर्वथा होमकर्मार्थं तिलमाज्यं न लोपयेत्। तिलाज्ययोरभावे तु हवनं स्यान्निरर्थकम्॥' इति।

'इन्द्रायेन्दो' यह इन्द्र का, 'स्योना' यह पृथिवीमूर्त्ति का, 'अघोरेभ्यः' यह मूर्त्तिपति शर्व का, 'अग्न आयाहि' यह अग्नि का, 'अग्निन्दूतं' यह अग्निमूर्त्ति का, 'नमः शर्वाय च पशुपतये च' यह पशुपति का, 'यमाय सोमं' यह यम का, 'असिहि वीर' यह यजमान मूर्त्तिका, 'स्तुहि श्रुतं' यह मूर्त्तिपति उग्रका, 'असुन्वन्तं' यह निर्ऋति का और 'आकृष्णेन' यह सूर्यमूर्त्ति का मंत्र है।

यो रुद्रो अग्नाविति तत्पते रुद्रस्य, इमं मे० वायोः वरुणस्य, शन्नोदेवी० जलमूर्तेः, नमो भवाय चेति भवस्य, आनो नियुद्भिः० वायोः, वात आवातु० वायुमूर्तेः, तमीशानं० ईशानस्य, आप्यायस्व० कुबेरस्य, वयं सोम० सोममूर्तेः, तत्पुरुषाय० महादेवस्य, अभित्वादे० ईशानस्य, आदित्प्रत्नस्य० आकाशस्य, नम उग्राय चेति भीमस्य।

'यो रुद्रो अग्नौ' यह मूर्त्तिपति रुद्र का, 'इमं मे०' यह वरुण का, 'शन्नो देवी०' यह जलमूर्त्ति का, 'नमो भवाय च' यह भव का, 'आनो नियुद्भिः' यह वायु का, 'वात आवातु०' यह वायुमूर्ति का, 'तमीशानं०' यह ईशान का, 'आप्यायस्व' यह कुबेर का, 'वयं सोम०' यह सोममूर्ति का, 'तत्पुरुषाय०' यह महादेव का, 'अभित्वादे०' यह ईशान का, 'आदित्प्रत्नस्य' यह आकाश का और 'नम उग्राय च' यह भीम का मन्त्र है।

ततः स्थाप्यदेवमन्त्रेण समित्पञ्चकपायसचरुतिलाज्यहोमः। प्रतिद्रव्यहोमान्ते देवे पादनाभिशिरःस्पर्शः। देवमन्त्रश्च तान्त्रिको मूलमन्त्रो देवगायत्री वा वैदिको वा ग्राह्यः। ॐ अग्निर्यजुर्भिः सवितास्तोमैः इन्द्र उक्थामदैः मित्रावरुणा वाशिषा अङ्गिरसो धिष्णियैरग्निभिः मरुतः सदो हविर्धानाभ्यां आपः प्रोक्षणीभिः ओषधयो बर्हिषा अदितिर्वेद्या सोमो दीक्षया त्वष्टेध्मेन विष्णुर्यज्ञेन वसव आज्येन आदित्या दक्षिणाभिः विश्वेदेवा ऊर्जा पूषा स्वधाकारेण बृहस्पतिः पुरोधसा प्रजापतिरुद्गीथेन अन्तरिक्षं पवित्रेण वायुः पात्रैः अहꣳश्रद्धया स्वाहेत्यनुवाकेन तिलाज्ययोर्दश दशाहुतयः।

तदनन्तर स्थापना की जाने वाली देवता के मन्त्र से पांच समिधा से खीर-चरु-तिल-घृत से होम करे। प्रत्येक द्रव्य के होम के बाद देवता के पैर, नाभि और सिर का स्पर्श करे। देवता का मन्त्र तान्त्रिक, मूलमन्त्र, देवगायत्री या वैदिक ग्राह्य है। 'ॐअग्निर्यजुर्भिः सविता स्तोमैः' इत्यादि मूलोक्त अनुवाक से तिल घृत की दस दस आहुति दे।

ततो देवस्य पादौ स्पृशेत्। संपातजलेन देवमभिषिञ्चेत्। एवमेव द्वितीयपर्यायेण हुत्वा देवस्य नाभिं स्पृशेत्। एवं तृतीयपर्यायेण हुत्वा शिरः स्पृशेत्। प्रतिपर्यायं संपाताभिषेकः। एकपर्याये आहुतिसंख्या पलाशसमिधः १९२ उदुम्बर. १९२ अश्वत्थ. १९२ शमी. १९२ अपामार्ग. १९२ आज्यम्. १९२ तिलाः १९२। स्थाप्यदेवस्याष्टाविंशतिपक्षे समित्पञ्चकं १४० चर्वाज्यतिलाः ८४ अनुवाक २० मिलिताः १५८८ पर्यायत्रये ४७६४।

तदनन्तर देवता के चरणों का स्पर्श करे और संपातजल से देवता का अभिषेक करे। इसी प्रकार दूसरे पर्याय से होम करके देवता की नाभि का स्पर्श करे। तीसरे पर्याय में भी होम करके

सिर का स्पर्श करे। प्रति पर्याय में संपात से अभिषेक करे। एक पर्याय में आहुति की संख्या पलाश समिधा की १९२, गूलर की १९२, पीपल की १९२, शमी की १९२, अपामार्ग की १९२, घृत की १९२, तिल की १९२। स्थाप्य देवता के अट्ठाइस संख्या के पक्ष में पांचों समिधा की १४०, चरु-घृत-तिल की ८४, अनुवाक २०, सबका जोड़ १५८८ और तीनों पर्याय में ४४६४ हुआ।

एवं हुत्वार्चां शोधयेत्, देवं नत्वा—

स्वागतं देव देवेश विश्वरूप नमोस्तु ते।
शुद्धेऽपि त्वदधिष्ठाने शुद्धिं कुर्मः सहस्व ताम्॥

इति प्रार्थ्य उत्तिष्ठ ब्रह्मणस्पत इति सर्त्विगुत्थाप्याग्न्युत्तारणं कुर्यात्। अग्निः सप्तिमिति सूक्तमग्निपदहीनं पठित्वा तत्सहितं पुनः पठेत्। एवमष्टशतमष्टाविंशतिवारं वा पठन् जलं पातयेत्।

इस प्रकार होम करके अर्चा का शोधन करे। देवता को प्रणाम करके हे देव देवेश! हे विश्वरूप! आपको प्रणाम और आपका स्वागत करता हूँ। आपका स्थान यद्यपि शुद्ध है फिर भी मैं शुद्धि करता हूँ इसको सहन कीजिये। इस प्रकार प्रार्थना कर 'उत्तिष्ठ ब्रह्मणस्पते' इस मन्त्र से ऋत्विज सहित मूर्ति को उठाकर अग्न्युत्तारण करे। 'अग्निस्सप्तिम्' इस सूक्त को अग्नि पद से रहित पढ़कर पुनः अग्निपद सहित पढ़े। इस प्रकार एक सौ आठ बार या अट्ठाइस बार पढ़ते हुए जल गिरा दे।

ततोऽर्चां द्वादशवारं मृदा जलेन च प्रक्षाल्य मन्त्रैः 'पञ्चगव्यं कृत्वा—

पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः।
पयस्वतीः प्रदिशः सन्तु मह्यम्॥

आवो राजानमिति च संस्नाप्य आप्यायस्वेति पञ्चमन्त्रैः[2] पञ्चामृतेन संस्नाप्य लिङ्गं चेन्नमस्ते रुद्र इत्यष्टाभिः संस्नाप्य घृताभ्यङ्गमुद्वर्तनम्[3] उष्णोदकेन क्षालनं च कृत्वा गन्धं दत्त्वा संपातोदकैरभिषिच्य सपल्लवैश्चतुर्भिः कुम्भैः क्रमेण ॐआपो हिष्ठा० ॐ योवः० ॐ तस्मा० ॐ आकलशेषु० इति संस्नाप्य समुद्रज्येष्ठा इति चतसृभिराकलशेष्विति च मिलितचतुःकुम्भैः संस्नाप्य औदुम्बरादिपीठेऽर्चामुपवेश्य परितोऽष्टदिक्षु सजलकुम्भेषु गन्धपुष्पदूर्वाः क्षिप्त्वा,

---

१. कृत्यकल्पतरौ—'पञ्चगव्यं पवित्रं तु आहरेत्ताम्रभाजने। गायत्र्या चैव गोमूत्रं गन्धद्वारेण गोमयम्॥ आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि। तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम्॥' इति।

२. धन्वन्तरि का कहा हुआ मिलित पंचामृत—'गव्यमाज्यं दधि क्षीरं माक्षिकं शर्कराऽन्वितम्। एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम्॥' अथवा—'दुग्धं दधि क्षौद्रमाज्यं शर्करा च तथैव हि। तस्य तस्य च मन्त्रेण तत्तद् द्रव्यं समर्पयेत्॥' इस वचन के अनुसार प्रत्येक वस्तु से पृथक् पृथक् स्नान करावे।

३. उद्वर्तन की औषधियाँ—'रजनी सहदेवी च शिरीषं लक्ष्मणाऽपि च। सहभद्रा कुशाग्राणि उद्वर्तनमिहोच्यते॥' इति।

इसके बाद प्रतिमा को बारह बार मिट्टी और जल से प्रक्षालन कर मन्त्रों से पंचगव्य बनाकर 'पयः पृथिव्यां पय०' इस मन्त्र से और 'आवो राजानं०' इससे स्नान कराकर 'आप्यायस्व' इन पांच मन्त्रों से पंचामृत से स्नान कराकर यदि लिंग की प्रतिष्ठा हो तो 'नमस्ते रुद्र' इन आठ ऋचाओं से स्नान कराकर घृताभ्यंग और उबटन लगा तथा गर्म जल से प्रक्षालन करके गन्ध देकर संपात के जल से अभिषेक कर पल्लवसहित चारो कुम्भों से क्रमशः 'ॐ आपोहिष्ठा०' 'ॐ योवः०' 'ॐ तस्मा०' 'ॐ आकलशेषु०' इन मन्त्रों से स्नान कराकर 'समुद्रज्येष्ठा०' इन चार ऋचाओं से और 'आकलशेषु' इस मन्त्र से मिलित चारो कुम्भों से नहलाकर गूलर आदि के आसन पर प्रतिमा को बैठाकर सब ओर आठों दिशाओं में जलयुक्त कुम्भों में गन्ध, पुष्प और दूर्वा छोड़े।

आद्यकुम्भे [1]सप्तमृदः, द्वितीये पुष्करपर्णशमीविकङ्कताश्मन्तकत्वचः पल्लवांश्च, तृतीये [2]सप्तधान्यानि, चतुर्थे [3]पञ्चरत्नानि, पञ्चमे फलपुष्पाणि[4], षष्ठे कुशदूर्वालोचनाः, सप्तमे संपातोदकम्, अष्टमे [5]सर्वौषधीः क्षिप्त्वा क्रमेणापोहिष्ठेति त्रिभिः हिरण्यवर्णाः शुचय इति चतुर्भिः पवमानानुवाकेन चाभिषिच्य एककुम्भे शमीपलाशवटखदिरबिल्वाश्वत्थविकङ्कतपनसाम्रशिरीषोदुम्बराणां पल्लवान् कषायांश्च क्षिप्त्वाऽश्वत्थे व इत्यभिषिच्य पञ्चरत्नोदकेन हिरण्यवर्णाः शुचय इति संस्नाप्य वाससी दत्त्वोपरि वितानं बध्नन्ति केचित्।

पहिले कुम्भ में सप्तमृत्तिका, दूसरे में कमल के पत्ते, शमी, विकंकत और अश्मन्तक की छाल और पल्लव, तीसरे में सप्तधान्य, चौथे में पंचरत्न, पाँचवें में फल-पुष्प, छठे में कुश-दूर्वा-गोरोचन, सातवें में संपात जल और आठवें में सर्वौषधि छोड़कर क्रम से 'आपोहिष्ठा' इन तीन ऋचाओं से 'हिरण्यवर्णाः शुचयः०' इन चार मन्त्रों से और पवमान अनुवाक

---

१. सप्तमृत्तिका—'अश्वस्थानाद् गजस्थानाद् वल्मीकात् सङ्गमाद् ह्रदात्। राजद्वाराच्च गोष्ठाच्च मृद आनीय निक्षिपेत् ॥' कोई पञ्चमृत्प्रक्षेपण मानते हैं, उनके मत में ह्रदान्त मृत्तिका का प्रक्षेप है।

२. सप्तधान्यम्—'यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च। श्यामाकाश्चणकाश्चैव सप्तधान्यानि संविदुः ॥' मतान्तर में—यव-व्रीहि-तिल उड़द-कंगु-सांवा-मूंग ये सप्तधान्य हैं।

३. कालिकापुराण में पंचरत्न ये हैं—'कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम्। एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुः ॥' मदनरत्नोक्त पंचरत्न ये हैं—'सुवर्णं रजतं मुक्ता लाजावर्तं प्रवालकम्। रत्नपञ्चकमाख्यातं समस्तसुरवल्लभम् ॥' धन्वन्तरिनिघण्टु में—'नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम्। प्रवालं चेति विज्ञेयं पञ्चरत्नं मनीषिभिः ॥' पंचरत्न के अभाव में मदन रत्न में कहा है—'अभावे सर्वरत्नानां हेम सर्वत्र योजयेत्।' इति।

४. पुष्पशब्द से देवीपुराणोक्त पंचपुष्प का ग्रहण करना चाहिये—'चम्पकाम्रशमीपद्मकरवीरं च पञ्चकम्।' पुष्प के अभाव में भविष्यपुराण में कहा है—'अलाभे तु सुपुष्पाणां पत्राण्यपि निवेदयेत्। पत्राणामप्यलाभे तु तृणगुल्मौषधीरपि ॥ औषधीनामलाभे तु भक्त्या भवति पूजनम्। यत्पुण्यं प्रतिपुष्पे तद्दशा स्वर्णविनिर्मिते ॥' इति।

५. सर्वौषधिः—'मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शटी चम्पकमुस्ते च सर्वौषध्यो दश स्मृताः ॥' अर्थात् मोरवेल-जटामांसी-वच-कूट-छरीला-हल्दी-दारुहल्दी-कचूर-चम्पा-नागरमोथा, ये दस सर्वौषधि हैं।

से अभिषेक करके एक कुम्भ में शमी, पलाश, बड़, खैर, बेल, पीपल, विकंकत, कटहल, आम, शिरीष और गूलर के पत्तों को तथा सब प्रकार के कषायों को छोड़कर 'अश्वत्थे वो०' इस मन्त्र से अभिषेक करके 'हिरण्यवर्णाः शुचयः' इस मन्त्र से पंचरत्न के जल से स्नान कराकर जोड़ा वस्त्र देवे। कुछ लोग ऊपर चंदवा भी बांधते हैं।

यज्ञोपवीतगन्धपुष्पधूपदीपान् दत्त्वा ॐ हिरण्यगर्भः० १ ॐ य आत्मदा० २ ॐ यः प्राणतो० ३ ॐ यस्येमे० ४ ॐ येन द्यौ० ५ ॐ यं क्रन्दसी० ६ ओं आपोहयत्० ७ ओं यश्चिदापो० ८ इत्यष्टौ पीठदीपान्दत्त्वा सुवर्णशलाकया तैजसपात्रस्थं मधुघृतं च गृहीत्वा ओं चित्रं देवाना० ओं तेजोसि शुक्रमस्यमृतमसि धामनामासि। प्रियं देवानामनाधृष्टं देवयजनमसि॥ इति मन्त्राभ्याम्, ओं नमो भगवते तुभ्यं शिवाय हरये नमः। हिरण्यरेतसे विष्णो विश्वरूपाय ते नम इति च दक्षिणसव्ये देवनेत्रे मन्त्रावृत्त्या लिखेत्।

यज्ञोपवीत, गन्ध, पुष्प, धूप और दीप देकर 'हिरण्यगर्भः०' 'ॐ य आत्मदा०' 'ॐ यः प्राणतो०' 'ॐ यस्येमे०' 'ॐ येन द्यौ०' 'ॐ यं क्रन्दसी०' 'ॐ आपोहयत्०' 'ॐ यश्चिदापो०' इस प्रकार आठ पीठ-दीपों को देकर सोने की शलाका से तैजस पात्र में रखा हुआ मधु घृत को लेकर 'ॐ चित्रं देवानां०' 'ॐ तेजोसि शुक्रमस्यमृतमसि' इन दोनों मन्त्रों से और 'नमो भगवते तुभ्यं शिवाय' इत्यादि से देवता के दाहिने बाएं नेत्र को मन्त्र की आवृत्ति करके लिखे।

ओं अञ्जन्ति त्वेत्यञ्जनेनाङ्क्त्वा ओं देवस्यत्वा सवितुः प्रसवे० इन्द्रस्येन्द्रियेणानज्मीति मध्वाज्यशर्कराभिरङ्क्त्वा अञ्जनेन पुनरञ्जयेत्। तत आदर्शभक्ष्यादि दर्शयेत्। अत्र कर्ताऽऽचार्याय गामृत्विग्भ्यो [1]दक्षिणां दद्यात्।

'ॐ अञ्जन्ति त्वा' इस मन्त्र से आंजन लगा कर 'ॐ देवस्यत्वा सवितुः प्रसवे०' 'इन्द्रस्येन्द्रियेणानज्मि' इस मन्त्र से मधु, घी, शक्कर से अंजन करके, अंजन से फिर अंजन करे। तदनन्तर ऐनक और खाने पीने की वस्तु दिखावे। इसमें यजमान आचार्य को गौ और ऋत्विजों को दक्षिणा दे।

आचार्यः प्रत्यृचमादौ प्रणवं वदन्पुरुषसूक्तेन स्तुत्वा वंशपात्रस्थपञ्चवर्णौदनेन देवं नीराजयित्वा रुद्राय चतुष्पथादौ दद्यात्। मन्त्रस्तु—ओं नमो रुद्राय सर्वभूताधिपतये दीप्तशूलधरायोमादयिताय विश्वाधिपतये रुद्राय वै नमो नमः। शिवमगर्हितं कर्मास्तु स्वाहा' इति अश्वत्थपर्णे भूतेभ्यो नम इति।

आचार्य प्रति ऋचा के आदि में प्रणव कहते हुए पुरुषसूक्त से स्तुति करके बांस के पात्र में रखे हुए पांच रंग के भात से देवता का नीराजन करके रुद्र के लिये चौराहे आदि में दे दे। इसका मन्त्र तो—'ॐ नमो रुद्राय सर्वभूताधिपतये०' इत्यादि मूल में है। 'शिवमगर्हितं कर्मास्तु' इस मन्त्र से पीपल के पत्ते पर 'भूतेभ्यो नमः' कहकर दे।

---

१. आचार्य की दक्षिणा—'दातव्या धेनुरेका वै हेमशृङ्गादिसंयुता। आचार्याय सुवर्णं च तथाऽन्नवसनादिकम्॥' ब्रह्मवैवर्ते—'दक्षिणां विप्रमुद्दिश्य तत्कालं चेन्न दीयते। एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत्॥' तथा—'न ददाति यदा दाता ग्रहीता नैव याचते। उभौ तौ नरकं यातो यावच्चन्द्रदिवाकरौ॥' इति।

अथाचार्यः 'सर्वतोभद्रे देवता आवाहयेत्—मध्ये ब्रह्माणम्, पूर्वादिदिक्षु इन्द्रादिलोकपालान्, ईशानेन्द्राद्यन्तरालेषु वसून् १ रुद्रान् २ आदित्यान् ३ अश्विनौ ४ विश्वान् देवान् ५ पितॄन् ६ नागान् ७ स्कन्दवृषौ ८ ब्रह्मेशानाद्यन्तरालेषु दक्षं १ विष्णुं २ दुर्गां ३ स्वधाकारं ४ मृत्युरोगान् ५ समुद्रान् सरितः ६

सर्वतोभद्र



१. स्कन्दपुराण में सर्वतोभद्र-मण्डल का निर्माण प्रकार—'प्रागुदीच्यायता रेखाः कुर्यादेकोनविंशतिः। खण्डेन्दुस्त्रिपदः कोणे शृङ्खलाः पञ्चभिः पदैः॥ एकादशपदा वल्ली भद्रं तु नवभिः पदैः। चतुर्विंशत्पदा वापी परिधिर्विंशतिः पदैः॥ मध्ये षोडभिः कोष्ठैः पद्ममष्टदलं स्मृतम्। श्वेतेन्दुः शृङ्खला कृष्णा वल्ली नीलेन पूरयेत्॥ भद्रारुणा सिता वापी परिधिः पीतवर्णकः। बाह्यान्तरदलश्वेता कर्णिका पीतवर्णिका॥ परिध्या वेष्टितं पद्मं बाह्ये सत्त्वं रजस्तमः। तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरोत्तमान्॥' इति।

चतुर्-
लिंगतोभद्र



चतुर्लिङ्गतोभद्र का निर्माण प्रकार—'रेखास्त्वष्टादश प्रोक्ताश्चतुर्लिङ्गसमुद्भवे। कोणेन्दुस्त्रिपदः श्वेत स्त्रिपदैः कृष्णशृङ्खला॥ वल्ली सप्तपदा नीला भद्रं रक्तचतुष्पदम्। भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः॥ शिवस्य पार्श्वतो वापीं कुर्यात् पञ्चपदां सिताम्। पदमेकं तथा पीतं भद्रं वाप्योस्तु मध्यतः॥ शिरसि शृङ्खलाश्चैव कुर्यात् पीतं पदत्रयम्। लिङ्गानां स्कन्धतः कोष्ठा विंशतिः रक्तवर्णकाः॥ परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृतः। पदैस्तु नवभिः पश्चाद्रक्तं वर्णं सकर्णिकम्॥'इति। लिङ्गोद्भव मण्डल का एकलिङ्गतोभद्र-द्वादशलिङ्गतोभद्र आदि अन्य प्रकार भद्रमार्तण्ड में देखें।

मरुतः ७ गणपतिं ८ मध्ये पृथिवीं मेरुं स्थाप्यदेवं चावाह्य प्रागादिषु वज्रं शक्तिं दंडं खड्गं पाशम् अंकुशं गदां शूलम् ।

इसके बाद आचार्य सर्वतोभद्र में देवता का आवाहन करे—बीच में ब्रह्मा का, पूर्वादि दिशाओं में इन्द्रादि देवताओं का, ईशान इन्द्रादि के अन्तराल में वसु, रुद्र, आदित्य, अश्विनी-

---

पंचरात्र में सर्वतोभद्रादि के कोष्ठ को भरने के लिये वर्ण का विनिर्णय—'रजांसि पञ्चवर्णानि मण्डलार्थं हि कारयेत् । शालितण्डुलचूर्णेन शुक्लं वा यवसम्भवम् ॥ रक्तं कुसुम्भसिन्दूरगैरिकादिसमुद्भवम् । हरितालोद्भवं पीतं रजसा सम्भवं क्वचित् ॥ कृष्णं दग्धयवैः कार्यं हरितं पीतकृष्णजम् ।' अथवा—'श्वेतत्वे तण्डुलाः प्रोक्ताश्चणकान्नं तु पीतके । रक्तवर्णे मसूराश्च गोधूमा वा स्मृता बुधैः ॥ अथवा रक्तवर्णं तु कुङ्कुमाक्ताक्षताः स्मृताः । हरिद्वर्णे च मुद्गान्नं माषान्नं कृष्णवर्णके ॥ वर्गत्रयेण परिधिः कार्यो न्यूनाधिको न हि ।' अन्यत्र—'शालिचूर्णोद्भवं श्वेतं कौसुम्भं लोहितं भवेत् । पीतं निशाभवं ज्ञेयं कृष्णं त्रैदेयसम्भवम् ॥ हरितं बिल्वपत्रोत्थं मण्डले च रजः स्मृतम् ।' ये वर्ण असमर्थों के लिये हैं । समर्थ तो मोती-मूंगा-पुखराज-नीलम आदि रत्नों से या इनके चूर्ण से भरें ।

भद्रमार्तण्ड में देवताभेद से भद्र का विचार करते हुये उन-उन देवताओं के अपने-अपने भद्रमण्डल के अलाभ आदिमें सर्वतोभद्रमण्डल का विधान बतलाया है—'ग्रहस्य मण्डलं भानोः सर्वतोभद्रमर्चने । लक्ष्म्याश्च सर्वतोभद्रं पूजने मण्डलं तथा ॥ शैवव्रतं विना सर्वव्रतोद्यापनकर्मसु । कार्यं सुधाखद्दष्ट्या च सर्वतोभद्रमण्डलम् ॥ गणपतिव्रते प्रोक्तं भद्रं वैनायकाभिधम् । देव्या व्रते गौरीभद्रं सूर्ये सूर्यस्य मण्डलम् ॥ शैवे च लिङ्गतोभद्रं सर्वतोभद्रकं हरेः । स्वस्वभद्रालाभके तु कार्यं वै हरिमण्डलम् ॥' इति । हरिमण्डलं=सर्वतोभद्रमण्डलम् ।—

हेमाद्रि कालोत्तर में शिवरात्रि व्रत के प्रसंग में लिङ्गतोभद्र अथवा सर्वतोभद्र के निर्माण का विकल्प से निर्देश किया है—'ईश्वर उवाच—श्रृणु षण्मुख तत्त्वेन लोकानां हितकाम्यया । चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम् ॥ एकभक्तं त्रयोदश्यां चतुर्दश्यामुपोषणम् । सम्पाद्य सर्वसम्भारान् मण्डपं तत्र कारयेत् ॥ वस्त्रैः पुष्पैः समाच्छन्नं पट्टकूलैश्च शोभितम् । तन्मध्ये लेखयेद्दिव्यं लिङ्गतोभद्रमण्डलम् ॥ अथवा सर्वतोभद्रं मण्डपान्तः प्रकल्पयेत् । शोभोपशोभासंयुक्तं दीपैः सर्वत्र सोज्ज्वलम् ॥' —

भद्रमार्तण्ड में सर्वतोभद्रमण्डलादि पूजन के असामर्थ्य में अष्टदल का विधान है—'भद्रेण पूजनाशक्तौ कार्यमष्टदलं शुभम् । गोधूमान्नेन तत्कार्यं तण्डुलेनाथवा शुभम् ॥ मध्ये पितामहं सम्पूज्योत्तरादिक्रमेण च । अष्टदिक्षु न्यसेद्देवान् पंचपंचाशतः परम् ॥ ततश्च सर्वतोभद्रदेवतापूजनं भवेत् ।' वहीं अष्टदलमण्डल का प्रकार बतलाया है-'आद्यात्तृतीयं तृतीयाच्च भूतं भूताद् द्वितीयं द्वितीयाच्चतुर्थम् । तुरीयात्तथाद्यं पुनरेव कृत्वा दलाष्टकं तण्डुलपूरितं च ॥' इति ।

अष्टदल में देवता का क्रम—मध्ये ॐ ब्रह्मणे नमः १ मध्यादुत्तरे—सोमाय० २ ध्रुवाय० ३ अनिलाय० ४ अजैकपदे० ५ कुबेराय० ६, मध्यादीशान्याम्—महारुद्राय ७ धात्रे० ८ भृगाय० ९

अष्टदल कमल



पूष्णे० १० मित्राय० ११, मध्यात्पूर्वे-पर्जन्याय० १२ विवस्वते० १३ त्वष्ट्रे० १४ विष्णवे० १५ वासवाय० १६, मध्यादाग्नेय्याम्—प्रत्युषे० १७ क्रतवे०१८ सत्याय० १९ कालाय० २० भृशाय० २१, मध्याद्दक्षिणे—शूलपाणये० २२ यमाय० २३ प्रचेतसे० २४ अद्भ्यो० २५ धर्माय० २६, मध्यान्नैर्ऋत्ये--सर्पाय० २७ वास्तोष्पतये० २८ सवित्रे० २९ पितृभ्यो० ३० कमलासनाय० ३१, मध्यात्पश्चिमे—अंशुमते० ३२ वरुणाय० ३३ चित्रगुप्ताय० ३४ त्रिविक्रमाय० ३५ शेषाय ३६, मध्याद् वायव्ये—अहिर्बुध्न्याय० ३७ विरूपाक्षाय० ३८ ईश्वराय० ३९ प्रभासाय० ४० हरये० ४१ । ब्रह्मणः पादमूले कर्णिकाधः—पृथिव्यै०

कुमार, विश्वेदेव, पितर, नागों, स्कन्द और वृष का, ब्रह्मा और ईशान आदिके अन्तरालमें दक्ष, विष्णु, दुर्गा, स्वधाकार, मृत्युरोग, समुद्र और नदियां, मरुत और गणपति का, मध्य में पृथिवी और मेरु का। इन स्थाप्य देवताओं का आवाहन कर पूर्व आदि में वज्र, शक्ति, दण्ड, खड्ग, पाश, अंकुश, गदा और शूल का आवाहन करे।

तद्बाह्ये गौतमं भरद्वाजं विश्वामित्रं कश्यपं जमदग्निं वसिष्ठमत्रिम् अरुन्धतीं च। तद्बाह्ये नवग्रहान्। तद्बाह्ये ऐन्द्रीं कौमारीं ब्राह्मीं वाराहीं चामुण्डां वैष्णवीं माहेश्वरीं वैनायकीम्। एता नामभिरावाह्य सम्पूज्य प्रतिमायां देवं तन्मन्त्रेणावाह्य मण्डलमध्ये प्रतिमां सुप्रतिष्ठितो भवेति निवेश्य संपूज्य वह्नौ मण्डलदेवतानां नामभिस्तिलाज्येन[1] दशदशाहुतीर्हुत्वा पुष्पाञ्जलिं समर्प्य नमो महदिति देवं नत्वा मण्डलादुत्तरतः स्वस्तिके मञ्चकं तदुपरि शय्यां कृत्वा उत्तिष्ठेति देवमुत्थाप्य मङ्गलघोषैः शय्यायां देवमुपवेश्य पुरुषसूक्तोत्तरनारायणाभ्यां स्तुत्वा देवे न्यासं कुर्यात्।

उसके बाहर में गौतम, भरद्वाज, विश्वामित्र, कश्यप, जमदग्नि, वशिष्ठ, अत्रि और अरुन्धती का, उसके बाहर नवग्रहों का, उससे बाह्य में ऐन्द्री, कौमारी, ब्राह्मी, वाराही, चामुण्डा, वैष्णवी, माहेश्वरी और वैनायकी का, इनके नामों से आवाहन और पूजा करके प्रतिमा में देवता का उनके मन्त्र से आवाहन कर मण्डल के मध्य में प्रतिमा को 'सुप्रतिष्ठितो भव' यह कहके रखकर पूजा करके अग्नि में मण्डल देवताओं को उनके नामों से, तिल घृत से दस दस आहुति होम करके पुष्पांजलि समर्पण कर 'नमो महत्' इससे देवता को नमस्कार करके मण्डल के उत्तर स्वस्तिक पर मंचक, उसके ऊपर शय्या रखकर 'उत्तिष्ठ' इससे देवता को उठाकर मङ्गल शब्दों से शय्या पर देवता को बैठाकर पुरुषसूक्त और उत्तर नारायण से स्तुति करके देवता में न्यास करे।

---

४२ सप्तसागरेभ्यो० ४३ सप्तसरिद्भ्यो० ४४ मेरुपर्वताय० ४५, पूर्वादिक्रमेण – इन्द्राय० ४६ अग्नये० ४७ यमाय० ४८ निर्ऋतये० ४९ वरुणाय० ५० वायवे० ५१ कुवेराय० ५२ ईश्वराय० ५३, ऊर्ध्वं-ब्रह्मणे० ५४ अधः–अनन्ताय० ५५, ईशानेन्द्रयोर्मध्ये–द्वादशादित्येभ्यो० ५६, इन्द्राग्निमध्ये–अश्विभ्यां० ५७, अग्नियममध्ये–विश्वेभ्यो देवेभ्यो० ५८, यमनिर्ऋतिमध्ये–सप्तयक्षेभ्यो० ५९ निर्ऋतिवरुणमध्ये–भूतनागेभ्यो० ६० वरुणवायुमध्ये–गन्धर्वाप्सरोभ्यो० ६१ वायुसोममध्ये–अष्टवसुभ्यो० ६२ सोमेशानमध्ये–एकादशरुद्रेभ्यो० ६३ ब्रह्मेन्द्रमध्ये–दुर्गायै० ६४ ब्रह्माग्निमध्ये–स्वधायै० ६५ ब्रह्मयममध्ये–मृत्युरोगाय० ६६ ब्रह्मनिर्ऋतिमध्ये–गणपतये ६७ ब्रह्मवरुणमध्ये–अद्भ्यो० ६८ ब्रह्मवायुमध्ये-मरुद्भ्यो० ६९ ब्रह्मसोममध्ये–स्कन्दाय० ७० ब्रह्मेशानमध्ये–दक्षादिसप्तगणेभ्यो० ७१ पूर्वादिक्रमेण-वज्राय० ७२ शक्त्यै० ७३ दण्डाय० ७४ खड्गाय० ७५ पाशाय० ७६ अङ्कुशाय० ७७ गदायै० ७८ त्रिशूलाय० ७९, ततो बाह्ये उत्तरादिक्रमेण–गौतमाय० ८० भरद्वाजाय० ८१ विश्वामित्राय० ८२ कश्यपाय० ८३ जमदग्नये० ८४ वसिष्ठाय० ८५ अत्रये० ८६ अरुन्धत्यै० ८७, तद्बाह्ये पूर्वादिक्रमेण-ऐन्द्र्यै० ८८ कौमार्यै० ८९ ब्राह्म्यै० ९० वाराह्यै० ९१ चामुण्डायै० ९२ वैष्णव्यै० ९३ माहेश्वर्यै० ९४ वैनायक्यै० ९५, पुनः पूर्वे–ऋग्वेदाय० ९६ दक्षिणे-यजुर्वेदाय० ९७ पश्चिमे–सामवेदाय० ९८ उत्तरे-अथर्ववेदाय० ९९, मण्डलमध्ये-सर्वव्यापिश्रीपरब्रह्मणे नमः १०० इति अष्टदलदेवताः संस्थाप्य मध्ये प्रधानदेवतां संस्थाप्य षोडशोपचारैः पूजयेत्।

१. आज्यमिश्रिततिलैरित्यर्थः। ईश्वरसंहिता में तिल और आज्य की प्रधानता—'सर्वथा होमकर्मार्थं तिलमाज्यं न लोपयेत्। तिलाज्ययोरभावे तु हवनं स्यान्निरर्थकम्॥' इति।

तथा हि—ओं पुरुषात्मने नमः ओं प्राणात्मने० ओं प्रकृतितत्त्वाय० ओं बुद्धितत्त्वाय० ओं अहंकारतत्त्वाय० ओं मनस्तत्त्वाय० इति सर्वाङ्गेषु ओं प्रकृतितत्त्वाय० ओं बुद्धितत्त्वाय० हृदि, ओं शब्दतत्त्वाय० शिरसि, ओं स्पर्शतत्त्वाय० त्वचि, ओं रूपतत्त्वाय० हृदि। एवं हृद्येव रसगन्धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थपृथिव्यप्तेजोवाय्वाकाशसत्त्वरजस्तमोदेहतत्त्वानि विन्यसेत्।

वह ऐसे—'ॐ पुरुषात्मने नमः' 'ॐ प्राणात्मने०' ॐ प्रकृतितत्त्वाय०' 'ॐ बुद्धितत्त्वाय० 'ओं अहंकारतत्त्वाय०' 'ओं मनस्तत्त्वाय०' इनसे सब अंगों में, 'ओं प्रकृतितत्त्वाय०' 'ओं बुद्धितत्त्वाय०' हृदय में, 'ॐ शब्दतत्त्वाय०' सिर में, 'ॐ स्पर्शतत्त्वाय०' त्वचा में, 'ॐ रूपतत्त्वाय०' हृदय में। इसी प्रकार हृदय में ही रस, गन्ध, श्रोत्र, त्वक्, चक्षु, जिह्वा, घ्राण, वाक्, पाणि, पाद, पायु, उपस्थ, पृथ्वी, अप्, तेज, वायु, आकाश, सत्त्व, रज, तम, इन देहतत्त्वों का विन्यास करे।

ततः पुरुषसूक्ताद्यं ऋग्द्वयं करयोः, तदुत्तरद्वयं पादयोः, तदुत्तरद्वयं जानुनोः, तदुत्तरद्वयं कट्योः, ततस्तिस्रो नाभिहृत्कण्ठेषु। ततो द्वयं बाह्वोः, तत एकां नासयोः, तत एकामक्ष्णोः, अन्त्यां शिरसि, ततः सुखशायी भवेति शय्यायां देवं स्वापयित्वा मण्डलशय्ययोरन्तरा न गन्तव्यमिति प्रैषं दत्त्वा स्विष्टकृदादिहोमशेषं समाप्य मण्डलदेवताभ्यो नामभिश्चरुणा बलीन्दद्यात्। नीवारचरुशेषेण दिग्बलिम्। ततो धामन्त इति पूर्णाहुतिं जुहुयात्। इत्यधिवासनम्।

तदनन्तर पुरुषसूक्त के आदि की दो ऋचाओं से दोनों हाथों में, उसके बाद की दो ऋचाओं से दोनों पैरों में, उसके बाद की दो ऋचाओं से दोनों जानुओं में, उसके बाद की दो ऋचाओं से दोनों कटि में, उसके बाद की तीन ऋचाओं से नाभि, हृदय और कण्ठ में, उसके बाद की दो ऋचाओं से दोनों बाहों में, तदनन्तर एक ऋचा से नाक के दोनों छिद्रों में, इसके बाद एक ऋचा से दोनों आखों में, अन्त वाली ऋचा से सिर में न्यास करे। इसके अनन्तर 'सुखपूर्वक शयन करें' ऐसा कहकर शय्या पर देवता को शयन कराकर 'मण्डल और शय्या के बीच से नहीं जायं' ऐसा आदेश देकर स्विष्टकृत् आदि शेष होम को समाप्त कर मण्डलदेवताओंके नामोंसे चरु से बलि देवे। नीवार चरु के शेष से दिशाओं को बलि दे। पश्चात् 'धामन्त' इस मन्त्र से पूर्णाहुति होम करे। अधिवासन समाप्त।

## अथ स्थिरार्चायां क्रमो विशेषश्च

संकल्पादि जलाधिवासान्तं कृत्वा देवं नत्वा स्वागतं देवदेवेशेत्यादिप्रार्थनोत्थापनाग्न्युत्तारणादिनेत्रोन्मीलनान्तं पूर्ववत्। तत्र स्थिरे शिवलिङ्गे स्वर्णसूच्या गन्धेन। ओं नमो भगवते रुद्राय हिरण्यरेतसे पराय परमात्मने विश्वरूपायोमाप्रियाय नम इत्युक्त्वा अञ्जनादिनाञ्जयेदिति नेत्रोन्मीलने लिङ्गे विशेषः। ततः सूक्तस्तुत्यादिमण्डलदेवतास्थापनान्तम्। ततो मण्डले मूर्तिनिवेशस्ततः शय्यायां देवतारोहणं ततः स्तुतिः पूर्वोक्तन्यासाः ततः शय्यायां देवशयनम्।

संकल्प से जलाधिवास तक करके देवता को नमस्कार कर 'स्वागतं देवदेवेश' इत्यादि प्रार्थना से उत्थापन अग्न्युत्तारण आदि नेत्रोन्मीलनपर्यन्त कर्म पहिले के समान है। उसमें स्थिर शिवलिंग में सोने की सूई और गन्ध से ॐ नमो भगवते रुद्राय हिरण्यरेतसे पराय परमात्मने। विश्वरूपायोमाप्रियाय नम' इससे अंजन आदि से अंजन करे, इतना लिंग के नेत्रोन्मीलन में विशेष है। तदनन्तर सूक्त से स्तुति आदि मण्डलदेवता के स्थापन तक कर्म करे। पश्चात् मण्डल में मूर्ति का निवेश, इसके बाद शय्यापर देवता का आरोहण, उसके बाद स्तुति, पहिले का कहा हुआ न्यास, तत्पश्चात् शय्यापर देवता को शयन करावे।

ततोऽग्निस्थापनादि। पूर्वोक्तान्वाधाने विष्णौ नारायणं षोडशाज्याहुतिभिः, शिवश्चेत् यात इषुः द्रापे सहस्राणीत्यनुवाकस्थऋग्भी रुद्रमाज्येनेति प्रधानोत्तरमूह इति विशेषः। लोकपालमूर्तिमूर्तिपतिहोमान्तं पूर्ववत्। स्थाप्यदेवताहोमे नैवारश्चरुर्नास्ति सप्तैव हवींषि। ततश्च विष्णोः स्थिरार्चायां पूर्वोक्तसमित्तिलाज्यहोमोत्तरं पुरुषसूक्तेन प्रत्यृचमाज्यं हुत्वा इदं विष्णुरिति पादौ स्पृष्ट्वा पुनस्ता एव हुत्वा अतो देवा इति शिरः स्पृष्ट्वा पुनस्ता एव हुत्वा पुरुषसूक्तेन सर्वाङ्गं स्पृशेत्।

तदनन्तर अग्निस्थापन आदि करे। पहिले कहे हुए अन्वाधान में विष्णु में नारायण को सोलह घृताहुतियों से, यदि शिव हों तो 'यात इषुः, द्रापे, सहस्राणि' इन अनुवाकों की ऋचाओं से रुद्र को घृत से, इतना प्रधान के बाद ऊह करे, यह विशेष है। लोकपाल मूर्ति और मूर्तिपति होम तक कर्म पूर्ववत् है। स्थाप्य देवता के होम में नीवार चरु नहीं है, सात ही हवि है। इसके बाद विष्णु की स्थिर प्रतिमा में पहिले कहे समिधा-घृत-तिल-होम के बाद पुरुषसूक्त की प्रत्येक ऋचा से घृत की आहुति देकर 'इदं विष्णुः' इस मन्त्र से पैरों का स्पर्श करके पुनः उन्हीं का होम करके 'अतो देवाः' इससे सिर का स्पर्श करके पुनः उन्हीं का होम करके पुरुषसूक्त से सब अंगों का स्पर्श करे।

स्थिरं लिङ्गं चेत्समिदाज्यतिलहोमान्ते यात इषुरित्यनुवाकान्ते द्रापे इति सहस्राणीत्यनुवाकाभ्यां च प्रत्यृचमाज्यं हुत्वा सर्वो वै रुद्र इति मूलं स्पृशेत्। पुनस्ता एव हुत्वा कद्रुद्रायेति मध्यं पुनस्ता एव हुत्वा नमो हिरण्यबाहव इत्यग्रं स्पृशेत्। पुनस्ता एव हुत्वा सर्वरुद्रेण सर्वाङ्गं स्पृशेत्, इत्यधिवासने विशेषः।

यदि स्थिर लिंग हो तो समिधा-घृत-तिल से होम के अन्त में 'यात इषुः' इस अनुवाक के अन्त में 'द्रापे' और 'सहस्राणि' इन दोनों अनुवाकों की प्रत्येक ऋचा से घृत से होम करके 'सर्वो वै रुद्र' इससे लिंग-मूल का स्पर्श करे। फिर उन्हीं का होम करके 'कद्रुद्राय' इससे लिंग के मध्य का स्पर्श करके फिर उन्हीं का होम करके 'नमो हिरण्यबाहवे' इससे लिंगाग्र का स्पर्श करे। फिर उसी का होम कर सब रुद्री से सम्पूर्ण अंग का स्पर्श करे, इतना अधिवासन में विशेष है।

परेद्युः पीठिकां स्नापयित्वा ओं महीमूष्वित्यावाहय ओं अदितिर्द्यौरिति स्तुत्वा ओं ह्रीं नम इति संपूज्य तेनैव पूर्णाहुतिं हुत्वा उत्तिष्ठ ब्रह्मणस्पत इति देवमुत्थाप्य पुष्पाञ्जलिं दत्त्वा पुरुषसूक्तेन स्तुत्वा उदुत्यमित्युत्थाप्य कनिक्रददिति सूक्तेन विष्णुं, सद्योजातमिति पञ्चानुवाकैर्लिङ्गं गृहं प्रवेश्य पीठिकायामिन्द्रादिनामभिरष्टरत्नानि क्षिप्त्वा सप्तधान्यरौप्यमनःशिलाः क्षिप्त्वा पायसेन संलिप्य प्रणवेनाङ्गन्यासं कृत्वा सुवर्णशलाकामन्तरितां कृत्वा सुलग्ने ओं प्रतितिष्ठ पर-

मेश्वरेति उक्त्वाऽतो देवेति विष्णुं रुद्रेण लिङ्गं च स्थापयेत्। ततश्चरुहोमप्राण-प्रतिष्ठादि, इति स्थिरार्चायामधिवासने परेद्युःकृत्ये च विशेषोऽन्यत्सर्वमुक्त-वक्ष्यमाणचलार्चावदेव।

दूसरे दिन पीठिका को नहलाकर 'ॐ महीमूषु' इससे आवाहन कर 'ॐ अदितिर्द्यौः' इससे स्तुति कर 'ॐ ह्रीं नमः' इससे पूजकर उसी से पूर्णाहुति होम करके 'उत्तिष्ठ ब्रह्मणस्पते' इस मन्त्र से देवता को उठाकर पुष्पांजलि देकर पुरुषसूक्त से स्तुति कर 'उदुत्यं' इससे उठाकर 'कनिक्रदत्' इस सूक्त से विष्णु को और 'सद्योजातं' इन पांचों अनुवाकों से लिंग को गृह में प्रवेश कराकर पीठिका में इन्द्रादि के नामों से अष्टरत्न, सप्तधान्य, मैनसिल डालकर खीर से लेपकर प्रणव से अंगन्याय करके सुवर्ण शलाका बीच में रखकर शुभ लग्न में 'ॐ प्रतितिष्ठ परमेश्वर' ऐसा कहकर 'अतो देवा' इससे विष्णु की और 'रुद्रेण' इससे लिंग की स्थापना करे। तदनन्तर चरु से होम और प्राणप्रतिष्ठा आदि करे, यह स्थिरार्चा के अधिवासन में और दूसरे दिन के कृत्य में विशेष है अन्य सब कहे हुये और कहे जाने वाली चल प्रतिमा के समान है।

अथ चलप्रतिष्ठायामधिवासनान्ते परेद्युरेकाहपक्षे सद्यो वा उत्तिष्ठ ब्रह्मण इति देवमुत्थाप्य पुरुषसूक्तोत्तरनारायणाभ्यां स्तूयात्।

चल प्रतिष्ठा में अधिवासन के अन्त में एक दिन की प्रतिष्ठा के पक्ष में दूसरे दिन या तुरन्त ही 'उत्तिष्ठ ब्रह्मणः' इस मन्त्र से देवता को उठाकर पुरुषसूक्त और उत्तरनारायण से स्तुति करे।

### अथ प्रायः स्थिरचलार्चयोः साधारणः प्रयोगः

'प्रतिष्ठाङ्गं परेद्युर्होमं करिष्ये' इति संकल्प्य चक्षुषी आज्येनेत्यन्ते स्थाप्यदेवं तन्मन्त्रेण घृतपक्वव्रीहिचरुणा दशाहुतिभिरग्निं सोमं धन्वन्तरिं कुहूमनुमतिं पर-मेष्ठिनं ब्रह्माणमग्निं सोमम् अग्निमन्नादम् अग्निमन्नपतिं प्रजापतिं विश्वान्देवान् सर्वान्देवानग्निं स्विष्टकृतम्। पूजाङ्गहोमे विष्णुश्चेत्संकर्षणादिद्वादशदेवताः शार्ङ्गिणं श्रियं सरस्वतीं विष्णुं कृसरेणैकैकयाहुत्या विष्णुं षड्वारं कृसरेण।

'प्रतिष्ठा का अंगभूत दूसरे दिन होम करूंगा' ऐसा संकल्प करके चक्षुषी आज्येन इसके अन्त में स्थाप्य देवता को उनके मन्त्र से घृतपक्व व्रीहिचरु की दस आहुतियों से अग्नि, सोम, धन्व-न्तरि, कुहू, अनुमति, परमेष्ठी, ब्रह्मा, अग्नि, अन्नाद, अग्नि, अन्नपति, प्रजापति, विश्वेदेव, सब देवता, अग्नि और स्विष्टकृत् का होम करे। पूजा के अंग होम में यदि विष्णु हों तो संकर्षण आदि बारह देवताओं को और शार्ङ्गी, श्री, सरस्वती, विष्णु को खिचड़ी की एक-एक आहुति से और विष्णु को छ बार खिचड़ी से होम करे।

शिवश्चेद्भवं शर्वम् ईशानं पशुपतिं रुद्रमुग्रं भीमं महान्तं कृसरेणैकैकया०। भवस्य देवस्य पत्नीमित्याद्यष्टौ गुडौदनेनैकैकया०। भवस्य देवस्य सुतमित्यादि ८ हरिद्रौदनेन एकै०। रुद्रं सप्तदशवारं शिवं शंकरं सहमानं शितिकण्ठं कपर्दिनं ताम्रमरुणमपगुरमाणं हिरण्यबाहुं सस्पिञ्जरं बभ्लुशं हिरण्यमेताः कृसरेणैकैकया०। शेषेण स्विष्टकृतमित्यादि। शूर्पे तूष्णीं स्थाप्यदेवतायै चतुर्मुष्टीनग्न्यादिषोडशदेवता-भ्यो नाम्ना चतुश्चतुर्मुष्टीन्निरुप्य तथैव प्रोक्ष्य सघृतजले श्रपयित्वा स्रुच्यावदानध-र्मेण स्थाप्यदेवमन्त्रेण दशाहुतीर्हुत्वा नामभिर्जुहुयात्।

यदि शिव हों तो भव, शर्व, ईशान, पशुपति, रुद्र, उग्र, भीम और महान् को खिचड़ी की एक एक आहुतिसे 'भवस्य देवस्य पत्नी' इत्यादि आठ को गुड़ भात की एक-एक आहुति दे। 'भवस्य देवस्य सुतं' इत्यादि आठ को हरदी और भात की एक-एक आहुति दे। रुद्र को सत्रह बार, शिव, शंकर, सहमान, शितिकण्ठ, कपर्दी, ताम्र, अरुण, अपगुरमाण, हिंरण्यबाहु, सस्पिंजर, बभ्लुश, और हिरण्य, इन सब को खिचड़ी की एक-एक आहुति दे। शेष से स्विष्टकृत् इत्यादि करे। सूप में चुप चाप स्थाप्य देवता के लिये चार मुट्ठी औरअग्नि आदि सोलह देवताओं के नाम से चार-चार मुट्ठी रखकर उसी प्रकार प्रोक्षण कर घृतसहित जल में पका कर स्रुची से अवदान धर्म से स्थाप्य देवता के मन्त्र से दस आहुति देकर उनके नामों से होम करे।

अग्नये स्वाहा १ सोमाय० २ धन्वन्तरये० ३ कुह्वै० ४ अनुमत्यै० ५ प्रजापतये० ६ परमेष्ठिने० ७ ब्रह्मणे० ८ अग्नये० ९ सोमाय० १० अग्नयेऽन्नादाय० ११ अग्नयेऽन्नपतये० १२ प्रजापतये० १३ विश्वेभ्यो देवेभ्यः १४ सर्वेभ्यो देवेभ्यः० १५ भूर्भुवः स्वः अग्नये स्विष्टकृते स्वाहा १६ इति।

सप्त ते अग्ने समिधः सप्तजिह्वाः सप्तधामप्रियाणि।
सप्त होत्राः सप्त धात्वा यजन्ति सप्त योनीरापृणस्वाघृतेन॥
पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथयज्ञैः।
घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः॥

इति मन्त्राभ्यां पूर्णाहुतिं कृत्वाचार्यो या ओषधीरिति पुष्पफलसर्वौषधीः समर्प्य संपातोदकं ताम्रपात्रे आदाय देवमन्त्रेण शतवारमभिमन्त्र्य तेन देवशिरसि सिञ्चेत्।

'अग्नये स्वाहा' (इत्यादि होम के १६ नाममन्त्र मूल में देखें) 'सप्त ते अग्ने समिधः' 'पुनस्त्वादित्या रुद्रा' इत्यादि मूलोक्त इन दोनों मन्त्रों से पूर्णाहुति करके आचार्य 'या ओषधीः' इस मन्त्र से पुष्प, फल और सर्वौषधि को समर्पण कर संपात के जल को ताम्रपात्र में लेकर देवता के मन्त्र से सौ वार अभिमन्त्रण करके उसे देवता के सिर पर सिंचन करे।

तत उत्तिष्ठ ब्रह्मण इति देवमुत्थाप्य विश्वतश्चक्षुरित्युपतिष्ठेत्। एते उत्थापनोपस्थाने चलार्चायामेव। देवं ध्यात्वा जपेत्—ब्रह्मणे नमः विष्णवे नमः रुद्राय० इन्द्रादीनष्टौ० ८ वसुभ्यो० रुद्रेभ्यो० आदित्येभ्यो० अश्विभ्यां० मरुद्भ्यो० कुबेराय० गङ्गादिमहानदीभ्यो० अग्नीषोमाभ्यां० इन्द्राग्निभ्यां० द्यावापृथिवीभ्यां० धन्वन्तरये० सर्वेशाय० विश्वेभ्यो देवेभ्यो० ब्रह्मण इति।

इसके बाद 'उत्तिष्ठ ब्रह्मण' इस मन्त्र से देवता को उठाकर 'विश्वतश्चक्षुः' इससे उपस्थान करे। ये उत्थापन और उपस्थान, चलार्चा में ही होते हैं। देवता का ध्यान कर जप करे—ब्रह्मणे नमः विष्णवे नमः (इत्यादि ब्रह्मणे नमः पर्यन्त मंत्र मूल में देखें।

ततः संपातोदकेन यजमानाभिषेकः। देवं ध्यात्वा प्रतितिष्ठ परमेश्वरेति पुष्पाञ्जलिं दत्त्वा—सच्चिदानन्दं ब्रह्मैव भक्तानुग्रहाय गृहीतविग्रहं स्वायुधाढ्यं निजवाहनाद्युपेतं निजहृत्कमलेऽवस्थितं सर्वलोकसाक्षिणमणीयांसं परमेष्ठ्यसि परमां

श्रियं गमयेति मन्त्रेण पुष्पाञ्जलावागतं विभाव्यार्चायां विन्यस्य प्राणप्रतिष्ठां कुर्यात् ।

तदनन्तर संपात के जल से यजमान का अभिषेक करे। देवता का ध्यान करके 'प्रतितिष्ठ परमेश्वर' ऐसा कह कर पुष्पांजलि देकर—सच्चिदानन्द ब्रह्म ही भक्तों पर अनुग्रह करने के लिये स्वरूप ग्रहण किये हैं, अपने आयुधों से आढय, अपने वाहनों से युक्त, अपने हृदय कमल में स्थित, सब लोगों के साक्षी सूक्ष्म से सूक्ष्म आप परमेष्ठी हैं। उत्कृष्ट लक्ष्मी को मुझे प्राप्त करावें' इस आशय के मन्त्र से पुष्पांजलि में आये हुए देव की भावना कर प्रतिमा में विन्यास करके प्राणप्रतिष्ठा करे।

यथा—श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः, ऋग्यजुःसामानिच्छदांसि, क्रियामयवपुः, प्राणाख्या देवता, आं बीजं क्रौं शक्तिः प्राणप्रतिष्ठायां विनियोगः। ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि, ऋग्यजुःसामच्छन्दोभ्यो० मुखे, प्राणाख्यदेवतायै० हृदि, आं बीजाय० गुह्ये, क्रौं शक्त्यै० पादयोः।

जैसे—इस श्री प्राण प्रतिष्ठा मन्त्र का ब्रह्मा विष्णु और रुद्र ऋषि, ऋग् यजुः और साम छन्द, क्रियामय शरीर, प्राण नाम की देवता, आम् बीज, क्रौं शक्ति, प्राण प्रतिष्ठा में इसका विनियोग करे। 'ब्रह्मविष्णुरुद्रऋषिभ्यो नमः' सिर में, ऋग्यजुःसामच्छन्देभ्यो नमः' मुख में, 'प्राणाख्यदेवतायै नमः' हृदय में, 'आं बीजाय नमः' गुह्य में, 'क्रौं शक्त्यै नमः' पैरों में, स्पर्श करे।

ॐ कं खं गं घं ङं अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय०। ओं चं छं जं झं ञं इं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा। ओं टं ठं डं ढं णं उं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट्। ओं तं थं दं धं नं एं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुम्। ओं पं फं बं भं मं ओं वचनादानविहरणोत्सर्गानन्दात्मने औं नेत्रत्रयाय वौषट्। ओं यं रं लं वं शं षं सं हं क्षं अं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय फट्।

'ॐ कं खं गं घं ङं अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः' इससे हृदय का, 'ॐ चं छं जं झं ञं इं शब्दरसरूपगन्धात्मने ईं शिरसे स्वाहा' इससे शिर का, 'ॐ टं ठं डं ढं णं उं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने उं शिखायै वषट्' इससे शिखा का, 'ॐ तं थं दं धं नं एं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुम्' इससे दोनों बाहुओं का, 'ओं पं फं बं भं मं ओं वचनादानविहरणोत्सर्गानन्दात्मने औं नेत्रत्रयाय वौषट्' इससे तीनों नेत्र का स्पर्श करे। 'ॐ यं रं लं वं षं सं हं क्षं अं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय फट्' इससे अस्त्रमुद्रा से थपोड़ी बजावे।

एवमात्मनि देवे च कृत्वा देवं स्पृष्ट्वा जपेत्—ओं आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य प्राणाः। आं ह्रीं० हंसः देवस्य जीव इह स्थितः। ओं आं ह्रीं० हंसः देवस्य सर्वेन्द्रियाणि। ओं आं ह्रीं० हं सः देवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखेन सुचिरं तिष्ठन्तु स्वाहा। अर्चाहृद्यङ्गुष्ठं दत्वा जपेत्।

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च।
अस्यै देवत्वमर्चायै मामहेति च कश्चन॥

इसी प्रकार अपने और देवता में न्यास करके देवता का स्पर्श करके जपे–ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य प्राणाः इह प्राणाः। आं ह्रीं हं सः देवस्य जीव इह स्थितः। ओं आं ह्रीं० हं सः देवस्य सर्वेन्द्रियाणि। ॐ आं ह्रीं० हं सः देवस्य वाङ्मनस्त्वक्चक्षुः-श्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखेन सुचिरं तिष्ठन्तु स्वाहा'। प्रतिमा के हृदय में अंगुष्ठ लगाकर जपे—'अस्यै प्राणाः प्रतिष्ठन्तु०' इत्यादि मूल में देखें।

प्रणवेन संरुद्धय सजीवं ध्यात्वा ध्रुवाद्यौरिति त्यृचं जप्त्वा कर्णे गायत्रीं देवमन्त्रं च जप्त्वा पुरुषसूक्तेनोपस्थाय पादनाभिशिरः स्पृष्ट्वा इहैवैधीति त्रिर्जपेत्। ततः कर्ता—

स्वागतं देवदेवेश मद्भाग्यात्त्वमिहागतः।
प्राकृतं त्वमदृष्ट्वा मां बालवत्परिपालय॥
धर्मार्थकामसिद्ध्यर्थं स्थिरो भव शिवाय नः।
सान्निध्यं तु सदा देव स्वार्चायां परिकल्पय॥
यावच्चन्द्रावनीसूर्यास्तिष्ठन्त्यप्रतिघातिनः।
तावत्त्वयात्र देवेश स्थेयं भक्तानुकम्पया॥
भगवन्देवदेवेश त्वं पिता सर्वदेहिनाम्।
येन रूपेण भगवंस्त्वया व्याप्तं चराचरम्॥
तेन रूपेण देवेश स्वार्चायां सन्निधो भव। इति नमेत्।

प्रणव से प्राण वायु को रोककर सजीव का ध्यान कर 'ध्रुवा द्यौः' इन तीन ऋचाओं को जप कर देवता के कान में गायत्री और देवमन्त्र को जप कर पुरुषसूक्त से उपस्थान कर पैर नाभि और सिरको स्पर्श करके 'इहैवैधि' इसको तीन बार जपे। तदनन्तर कर्ता कहे—हे देवदेवेश! मेरे भाग्य से आप यहाँ आये हैं, आप का स्वागत है। आप मुझे प्राकृत न देखकर बालक की तरह मेरा पालन करें। धर्मार्थकाम की सिद्धि और मेरे कल्याण के लिये स्थिर हों। अपनी प्रतिमा में सदैव सान्निध्य करें। बिना प्रतिघात के जब तक चन्द्रमा, पृथिवी और सूर्य यहां ठहरें, हे देवेश! भक्त पर दया कर आप यहां रहें। हे भगवन् देवदेवेश! सब जीवों के आप पिता हैं। हे भगवन्! जिस रूप से आप चराचर में व्याप्त हैं हे देवेश! उस रूप से आप अपनी प्रतिमा में सन्निहित हों। इस आशय के मन्त्र को कह कर प्रणाम करे।

अथाचार्यः कर्ता वा लिङ्गमर्चां वा ओं भूः पुरुषमावाहयामि,[1] ओं भुवः पुरुषमा०, ओं स्वः पुरुषः०, ओं भूर्भुवः स्वः पुरुष०, इत्यावाह्य प्रणवेनासनं दत्त्वा दूर्वाश्यामाकविष्णुक्रान्तापद्ममिश्रं पाद्यम्। ओं इमा आपः शिवसमाः पूताः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्यास्ता जुषतां प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नम इति पाद्यम्। भगवान् महादेवो रुद्राय नम इति लिङ्गे। एवं देवतान्तरेषूह्यम्।

---

१. आवाहनादिषोडशोपचार सम्बन्धी विचार के मूलवचन कृष्णजन्माष्टमी पूजा प्रयोगः की सुधाविवृति में देखें।

आचार्य या कर्ता लिंग या प्रतिमा में 'ॐ भूः पुरुषमावाहयामि' 'ॐ भुवः पुरुषमा०' 'ॐ स्वः पुरुष०' 'ॐ भूर्भुवः स्वः पुरुष०' इससे आवाहन कर प्रणव से आसन देकर दूब, सावां, विष्णुक्रान्ता और कमल से मिले हुए पाद्य को 'ॐ० इमा आपः शिवतमाः पूताः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्यास्ता जुषतां प्रतिगृह्यतां प्रतिगृह्णातु भगवान् महाविष्णुर्विष्णवे नमः' यह कह कर पाद्य दे। लिंग में 'भगवान्महादेवो रुद्राय नमः' ऐसा कहे। इसी प्रकार अन्य देवताओं में कल्पना करे।

इमा आपः शिव० आचमनीयास्ता जुषतां प्रतिगृह्य० इत्याचमनम्। इमा आ० अर्घ्यास्ता इत्यर्घ्यम्। [1]पञ्चामृतस्नानम्। देवमन्त्रैः संस्नाप्य इदं विष्णुरिति विष्णौ, नमो अस्तु नीलग्रीवायेति लिङ्गे। कङ्कणं विसृज्य वस्त्रं यज्ञोपवीतं च दत्त्वा,

इमे गन्धाः शुभा दिव्याः सर्वगन्धैरलंकृताः।
पूता ब्रह्मपवित्रेण पूताः सूर्यस्य रश्मिभिः॥ इति गंधम्।

इमे माल्याः शुभा दिव्याः सर्वमाल्यैरलंकृताः। पूता इत्यादि, इति मालाः। इमे पुष्पा इति पुष्पाणि।

'इमा आपः शिव० आचमनीयास्ता जुषतां प्रतिगृह्य०' इससे आचमन दे। 'इमा आ० अर्घ्यास्ता' इससे अर्घ्य दे। पंचामृत से स्नान करावे। देवमन्त्रों से नहलाकर 'इदं विष्णुः' इससे विष्णु में और 'नमो अस्तु नीलग्रीवाय' इससे लिंग में। कंकण का विसर्जन कर वस्त्र और यज्ञोपवीत को देकर—सब गन्धोंसे अलंकृत, दिव्य, शुभ, पवित्र, पवित्र वेद से सूर्य की किरणों से पूत ये गन्ध हैं, इस आशय के मंत्र से गन्ध दे। सब माल्योंसे अलंकृत दिव्य शुभ पवित्र इत्यादि आशय के मंत्र से माला अर्पण करे। 'इमे पुष्पा' इससे पुष्प का अर्पण करे।

वनस्पतिरसो धूपो० धूपोऽयं प्रतिगृह्यताम्। प्रतिगृह्णातु भगवानित्यादि। ज्योतिः शुक्रं च तेजश्च देवानां सततं प्रियम। भास्करः सर्वभूतानां दीपो०ताम्। प्रतिगृह्णातु भगवानिति दीपं दत्त्वा, विष्णौ संकर्षणादिद्वादशनामभिः पुष्पाणि समर्प्य तैरेव तर्पणं कृत्वा पायसगुडौदनचित्रौदनानि पवित्रं ते विततमिति निवेद्य संकर्षणादिनामभिर्द्वादशगृहसिद्धान्नकृसराहुतीर्हुत्वा, कृसरेणैव शार्ङ्गिणे० श्रियै० सरस्वत्यै० विष्णवे० इति हुत्वा, ॐ विष्णोर्नुकं० ॐ तदस्य प्रियम० ॐ प्रतद्विष्णु० ॐ परो मात्रया० ॐ विचक्रमे० ॐ त्रिर्देवः पृथिवीं० इति षड् मन्त्रैर्जुहुयात्।

वनस्पतिरसो धूपो० इत्यादि मंत्र से धूप दे। सब जीवों का सूर्य, ज्योतिरूप, देवताओं का शुक्र और तेज, देवताओं का निरंतर प्रिय, इस दीप को आप ग्रहण करें, इस प्रकार दीप देकर विष्णु में संकर्षण आदि बारह नामों से पुष्प का समर्पण कर उन्हीं नामों से तर्पण करके खीर गुड़ भात और चित्र विचित्र भात को 'पवित्रं ते विततं' इससे निवेदन कर संकर्षण आदि नामों से गृह सिद्ध अन्न खिचड़ी से बारह आहुति होम करके खिचड़ी ही से

---

१. कौलावलीनिर्णये—'घृतं क्षीरं तथा नीरं शर्करामधुसंयुतम्। पञ्चामृतमिदं ख्यातं प्रत्येकं तु पलं पलम्॥' महानिर्वाणतन्त्रे—'शर्करा मधु दुग्धं च घृतं दधि समांशकम्। पञ्चामृतमिदं प्रोक्तं देहशुद्धौ विधीयते॥' इति।

शार्ङ्गिणे० श्रियै० सरस्वत्यै० विष्णवे० इनसे होम करके 'ॐ विष्णोर्नुकं' 'ॐ तदस्य प्रियम०' 'ॐ प्रतद्विष्णु०' 'ॐ परो मात्रया०' 'ॐ विचक्रमे०' 'ॐ त्रिर्देवः पृथिवीं०' इन मन्त्रों से छ आहुति दे।

लिङ्गे तु दीपान्तं कृत्वा भवाय देवाय० शर्वाय देवाय० ईशानाय देवाय० पशुपतये देवाय० रुद्राय देवाय० उग्राय देवाय० भीमाय देवाय० महते देवाय नम इति पुष्पाणि दत्त्वा तैरेव तर्पणं कृत्वा पवित्रं ते इति पायसं गुडौदनं च निवेद्य भवाय देवाय स्वाहेत्याद्यष्टभिः [1]कृसरं जुहुयात्। तिलमिश्रौदनः कृसरः। भवस्य देवस्य पत्न्यै स्वाहेत्याद्यष्टभिर्गुडौदनं हुत्वा भवस्य देवस्य सुताय स्वाहेत्याद्यष्टभिर्हरिद्रौदनं हुत्वा, ओं त्र्यम्बकं० ओं मानो महान्तं० ओं मानस्तोके० ओं आरात्ते० ओं विकिरिद० ओं सहस्राणि सहस्र० इति [2]द्वादशऋचः। एतैः कृसरं हुत्वा शिवाय० शंकराय० सहमानाय० शितिकण्ठाय० कपर्दिने० ताम्राय० अरुणाय० अपगुरमाणाय० हिरण्यबाहवे० सस्पिञ्जराय० बभ्लुशाय० हिरण्यायेति द्वादशनामभिर्हरिद्रौदनं जुहुयात्।

लिंग में तो दीप पर्यन्त करके 'भवाय देवाय०' 'शर्वाय देवाय०' 'ईशानाय देवाय०' 'पशुपतये देवाय०' 'रुद्राय देवाय०' 'उग्राय देवाय०' 'भीमाय देवाय०' 'महते देवाय नमः' इस प्रकार पुष्प देकर उन्हीं मन्त्रों से तर्पण करके 'पवित्रं ते' इससे खीर और गुड़ भात निवेदन कर 'भवाय देवाय स्वाहा' इत्यादि आठ मन्त्रों से खिचड़ी का होम करे। तिल मिले हुए भात को कृसर कहते हैं। 'भवस्य देवस्य पत्न्यै स्वाहा' इत्यादि आठ मन्त्रों से गुड़ भातसे होम करके 'भवस्य देवस्य सुताय स्वाहा' इन आठ से हरदी भात का होम करके 'ॐ त्र्यम्बकं०' 'ओं मानो महान्तं०' ॐ मानस्तोके०' 'ओं आरात्ते०' 'ओं विकिरिद०' 'ओं सहस्राणि सहस्र०' ये बारह ऋचायें हैं। इनसे कृसर (तिल मिले हुए भात) का होम करके शिवाय० शंकराय० सहमानाय० शितिकण्ठाय० कपर्दिने० ताम्राय० अरुणाय० अपगुरमाणाय० हिरण्यबाहवे० सस्पिंजराय० बभ्लुशाय० हिरण्याय० इन बारह नामों से हरदी भात का होम करे।

स्विष्टकृदादिहोमशेषं समाप्य पूर्वोक्तसर्वहविर्भिर्विष्णवे लिङ्गाय वा बलिं दद्यात्। मन्त्रस्तु—

त्वामेकमाद्यं पुरुषं पुरातनं नारायणं विश्वसृजं यजामहे।
त्वमेव यज्ञो विहितो विधेयस्त्वमात्मनात्मन्प्रतिगृह्णीष्व हव्यम्॥

---

१. कृसर का स्वरूप—'ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः। तिलकल्कान् विनिक्षिप्य श्रृतो वा कृसरो भवेत्॥' अन्यत्र—'तिलतण्डुलसम्मिश्रः कृसरः सोऽभिधीयते॥ इति।

२. प्रचलितरुद्राध्याये दशऋच एव, द्वादशऋचो न सन्ति। हस्तलिखितरुद्राध्याये मदनमहार्णवे च ऋग्द्वयमधिकमवलोक्यते, अतस्तद्द्वयमधो विलिख्यते। 'ये तीर्थानि प्रचरन्ति० तेषाᳩ सहस्रयोजने० इत्यस्याग्रे—'ये वनान्युपसर्पन्ति तेभ्यो वृष्टिरुदायते। तेषाᳩ सहस्रयोजने वधन्वानि तन्मसि॥ ११॥ ये ग्राम्यानुपसर्पन्ति यो व्युष्टिमुपासते। तेषाᳩ सहस्रयोजने वधन्वानि तन्मसि॥१२॥' इति निर्णयसिन्धुटिप्पणीकाराः श्रीकृष्णशास्त्रिणः।

लिङ्गे तु नारायणपदे रुद्रं शिवमिति वदेत्। अश्वत्थपर्णे भूर्भुवः स्वरोमिति हुतशेषं निधाय प्रदक्षिणीकृत्य, विश्वभुजे नमः सर्वभुजे० आत्मने० परमात्मने नम इति नत्वाचार्याय द्वादश तिस्र एकां वा गां दत्त्वा ऋत्विग्भ्यो दक्षिणां दत्त्वा शतं द्वादश वा विप्रान्भोजयेदिति। प्रासादे नूतने जलाशयोक्तप्रतिष्ठाविधिः कार्यः। तत्र गोरुत्तारणपात्रीप्रक्षेपादि न कुर्यात्। वारुणहोमस्थाने वास्तुहोमः। इति स्थिरार्चाचलार्चयोः प्रतिष्ठाप्रयोगः।

स्विष्टकृत् आदि होम को समाप्त कर पहिले कहे सब हवि से विष्णु अथवा लिंग को बलि दे। मन्त्र है–एक, आद्य, पुरातन पुरुष, विश्वसृज नारायण की हम लोग पूजा करते हैं। आप ही विहित-यज्ञ हैं, आप ही विधेय हैं, आप अपने से अपने हव्य को ग्रहण करें, इस आशय के मन्त्र से बलि दे। लिंग में तो पूर्वोक्त मंत्र में नारायण पद के स्थान में 'रुद्र' अथवा 'शिव' कहे। पीपल के पत्ते पर 'भूर्भुवः स्वरोम्' इससे होम का शेष रख कर प्रदक्षिणा करके 'विश्वभुजे नमः, सर्वभुजे नमः, आत्मने नमः, परमात्मने नमः' इस प्रकार नमस्कार कर आचार्य को बारह, तीन अथवा एक गाय और ऋत्विजों को दक्षिणा देकर सौ या बारह ब्राह्मणों को भोजन करावे। नये प्रासाद में जलाशय की कही हुई प्रतिष्ठा विधि करनी चाहिये उसमें गायका उत्तारण पात्री प्रक्षेप आदि न करे। वारुण होम के स्थान में वास्तु होम करे। स्थिरार्चा चलार्चा प्रतिष्ठा का प्रयोग समाप्त।

## अथातोपि संक्षिप्त एकाध्वरविधानेन चलप्रतिष्ठाप्रयोगः

संकल्पादिनान्दीश्राद्धान्तं प्राग्वत्। एकमाचार्यं वृणुयात्। आचार्यः'अमुकदेवप्रतिष्ठाकर्म करिष्ये' इत्यादिसर्षपविकिरणान्ते सर्वतोभद्रमण्डले प्राग्वन्नामभिर्ब्रह्मादि मण्डलदेवता आवाह्य संपूज्य यथागृह्यमग्निं प्रतिष्ठाप्यान्वादध्यात्।

संकल्प से लेकर नान्दीश्राद्ध पर्यन्त पूर्ववत् करे। एक आचार्य का वरण करे। आचार्य 'अमुक देवता की प्रतिष्ठा करूंगा' इत्यादि संकल्प करे। सरसों का विकिरण करके सर्वतोभद्रमण्डल में पहिले की तरह नाम मन्त्रों से ब्रह्मादिमण्डलदेवता का आवाहन करके पूजाकर गृह्य के अनुसार अग्नि की स्थापना करके आधान करे।

आज्यभागान्ते स्थाप्यदेवतां सहस्रमष्टोत्तरशतं वा समिदाज्यचरुतिलद्रव्यैर्ब्रह्मादिमण्डलदेवताः प्रत्येकं दशदशतिलाज्याहुतिभिः, शेषेणेत्यादि। तूष्णीं निर्वापप्रोक्षणे। आज्यभागान्ते तडागनदीतीरगोष्ठचत्वरपर्वतगजाश्वह्रदवल्मीकसंगमेति दशमृद्भिरष्टवारं देवं संस्नाप्य पञ्चगव्यैः क्रमेण स्नापयित्वा दूर्वासिद्धार्थपल्लवोपेतैरष्टकलशैरापोहिष्ठादिमन्त्रैरभिषिच्याग्न्युत्तारणं कुर्यात्।

आज्यभाग के अन्त में स्थाप्य देवता का एक हजार आठ या एक सौ आठ बार समिधा, घृत, चरु और तिल द्रव्यों से और ब्रह्मादिमण्डलदेवता को प्रत्येक को तिल घृत से दस-दस आहुति दे। शेषेण इत्यादि पूर्ववत् है। विना मन्त्र के निर्वाप और प्रोक्षण करके आज्यभाग के अन्त में तालाब, नदी, तीर, गोष्ठ, चौराहा, पर्वत, गजस्थान, अश्वस्थान, ह्रद, वल्मीक और नदीसंगम की मिट्टी से आठ बार देवता को नहलाकर पंचगव्य से क्रम से स्नान कराकर दूब, सरसो के पल्लवों से युक्त आठ कलशों से 'आपोहिष्ठा' आदि मन्त्रों से अभिषेक करके अग्न्युत्तारण करे।

सर्वतोभद्रपीठे देवमुपवेश्य नाम्ना वस्त्रगन्धधूपादि दत्त्वाऽष्टदिक्षु पल्लवादियुतोदकुम्भानष्टौ [1]दीपांश्च संस्थाप्य प्राग्वन्नेत्रोन्मीलनम्। चित्रान्नेन बलिं दत्त्वा पुरुषसूक्तेन स्तुत्वोक्तद्रव्यचतुष्टयं स्थाप्यदेवमन्त्रेण हुत्वा एकैकद्रव्यहोमान्ते देवं स्पृशेत्। आज्यहोमे कुम्भे सम्पातान् क्षिपेत्। मण्डलदेवताभ्यो हुत्वा होमशेषं समाप्य पूर्णाहुतिं कुर्यात्।

सर्वतोभद्रपीठ पर देवता को बैठा कर नाम से वस्त्र-गन्ध-धूप देकर आठों दिशाओं में पल्लवादियुक्त सजलकुम्भों और आठ दीपों को स्थापित करके पहिले के समान नेत्रोन्मीलन करे। चित्रान्न से बलि देकर पुरुषसूक्त से स्तुति करके कहे हुए चार द्रव्यों से स्थाप्य देवता के मन्त्र से होम करके एक एक द्रव्य के होम के अन्त में देवता को स्पर्श करे। घृत होम में कुम्भ में संपातों को छोड़े। मण्डलदेवता के लिये होम करके होम शेष को समाप्त करके पूर्णाहुति करे।

ततः पूर्वोक्तरीत्या सूक्तन्यासावाहनप्राणप्रतिष्ठान्तं कृत्वा इहैवैधीति त्र्यृचं पुरुषसूक्तं च जप्त्वा [2]मूलमन्त्रादिनावाहनादिपञ्चामृतस्नानान्ते संपातोदकैरिमा आपः शिवतमा इत्यादिनाभिषेकः। वस्त्रादिनैवेद्यान्तं प्राग्वत्। ताम्बूलफलदक्षिणानीराजननमस्कारप्रदक्षिणादि विधाय पुष्पाञ्जलिं दत्त्वा साचार्यः कर्ता देवं नत्वा क्षमाप्याचार्यदक्षिणान्तेऽष्टकुम्भोदकैर्यजमानाभिषेकः। विष्णुं स्मृत्वा कर्मेश्वरेऽर्पयेदिति संक्षेपः।

तदनन्तर पहिले की रीति से सूक्त, न्यास, आवाहन और प्राणप्रतिष्ठा पर्यन्त करके 'इहैवैधि' इन तीनों ऋचाओं और पुरुषसूक्त को जप कर मूल मन्त्र आदिसे आवाहन आदि पंचामृत स्नान तक संपात के जल से 'इमा आपः शिवतमा' इत्यादि मन्त्र से अभिषेक करे। वस्त्र आदि नैवेद्यपर्यन्त पूर्ववत् करे। ताम्बूल, फल, दक्षिणा, नीराजन, नमस्कार और प्रदक्षिणा आदि करके पुष्पांजलि देकर आचार्य सहित कर्ता देवता को नमस्कारपूर्वक अपराध क्षमापन कर दक्षिणा के अन्त में आचार्य आठ कुम्भों के जल से यजमान का अभिषेक और विष्णु का स्मरण कर कर्म को ईश्वरार्पण करे, यह संक्षेप है।

## अथ पुनः प्रतिष्ठा

[3]मद्यचाण्डालस्पृष्टा वह्निदग्धा विप्ररक्तदूषिता शवपापिस्पृष्टा च प्रतिमा पुनः संस्कार्या। खण्डिते स्फुटिते स्थानभ्रंशे पूजनाभावेऽश्वगर्दभादिस्पर्शे पतितरजस्व-

---

१. कालिकापुराणे—'न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम्। घृतेन दीपकं नित्यं तिलतैलेन वा पुनः॥ ज्वालयेन्मुनिशार्दूल सन्निधौ जगदीशितुः। कार्पासवर्तिका ग्राह्या न दीर्घा न च सूक्ष्मका॥' मन्त्रमहोदधौ—'घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः। सितवर्तियुतो दक्षे वामेऽङ्गे रक्तवर्तिकः॥' अपि च—'दीपं न स्थापयेद् भूमौ घृततैले न मिश्रयेत्। पात्रं तस्य न भग्नं स्याद् वर्तिका चाप्यदूषिता॥ देवस्य दक्षिणे पार्श्वे दीपं दद्याद् यथाविधि। साधारं स्थापयेद्दीपमन्यथा ह्यशुभं भवेत्॥'इति।

२. पाद्मे—'प्रणवादिनमोऽन्तं तच्चतुर्थ्यन्तं च सत्तम। देवतायाः स्वकं नाम मूलमन्त्र उदाहृतः॥' जैसे-'ओं कृष्णाय नमः, ओं रामाय नमः' आदि। मन्त्रों में प्रणव का महत्त्व—'प्रणवेन विहीनं यत्तन्मन्त्रं प्राणहीनकम्। सर्वमन्त्रेषु मन्त्राणां प्राणः प्रणव उच्यते॥' इति।

३. हयशीर्षपञ्चरात्रे—'चाण्डालमद्यसंस्पर्शदूषिता वह्निनाऽथवा। अपुण्यजनसंस्पृष्टा विप्रक्ष-

लाचोरैः स्पर्शे च पुनःप्रतिष्ठा । खण्डितां भग्नां विधिनोद्धृत्यान्यां संस्थाप्य 'अर्चाया भङ्गचौर्यादौ तद्दिने उपवासः । ताम्रादिधातुमूर्तीनां चोरचाण्डालादिस्पर्शे ताम्रादिधातूक्तशुद्धिं[2] कृत्वा पुनःप्रतिष्ठा । पूर्वं प्रतिष्ठितस्याबुद्धिपूर्वकमेकरात्रमेकमासं द्विमासं वार्चनादिविच्छेदे शूद्ररजस्वलाद्युपस्पर्शने वा जलाधिवासं कृत्वा कलशेन स्नापयेत् ।

मद्य और चाण्डाल से स्पर्श की हुई, आग से जली हुई, ब्राह्मण के रक्त से दूषित, मुर्दा और पापी से स्पर्श की हुई प्रतिमा का पुनः संस्कार करना चाहिये । खण्डित होने, फूट जाने, स्थान-भ्रंश होने, पूजा नहीं करने, घोड़ा गदहा आदिसे स्पर्श होने और पतित रजस्वला तथा चोर से स्पर्श होने पर भी पुनः प्रतिष्ठा की जाती है । खण्डित और भग्न प्रतिमा को विधि से हटा करके दूसरी प्रतिमा की स्थापना करे और प्रतिमा के भंग तथा चोरी हो जाने आदि में उस दिन उपवास करे । ताम्र आदि धातु की मूर्त्तियों के चोर और चाण्डाल आदि के स्पर्श में ताम्र आदि धातु की कही हुई शुद्धि करके पुनः प्रतिष्ठा करे । पूर्व प्रतिष्ठित मूर्ति का अज्ञानपूर्वक एक रात एक महीना या दो महीना तक पूजा आदि न होने पर अथवा शूद्र रजस्वला आदि से स्पर्श होने पर जलाधिवास करके कलश से नहवावे ।

ततः पंचगव्येन स्नापयित्वाऽष्टसहस्रमष्टशतमष्टाविंशतिसंख्यं वा कलशैः शुद्धोदकेन पुरुषसूक्तेन स्नापयेत् । गन्धपुष्पादिना पूजयित्वा गुडौदनं निवेदयेदिति शुद्धिः । बुद्धिपूर्वं पूजनविच्छेदे शूद्रस्पर्शादौ च पुनःप्रतिष्ठयैव शुद्धिः । अन्ये तु—

एकाहपूजाविहतौ कुर्याद् द्विगुणमर्चनम् ।
द्विरात्रे तु महापूजां संप्रोक्षणमतः परम् ॥

---

तजदूषिता ॥' अपि च—'अग्निदग्धे तु दम्भोलिपतने देवमन्दिरे । पुनः प्रतिष्ठा कर्तव्या आर्ते च निःस्वनेऽपि वा ॥ सम्प्रोक्षणविधानेन कुर्यादेवमतन्द्रितः । स्थानसंचलने वाऽपि शवसूतकिसंस्पृशे ॥ चण्डालपुल्कसोदक्यापतिताद्यभिमर्शने । एवमाद्येषु जातेषु तदा सम्प्रोक्षयेद् गुरुः ॥ सम्प्रोक्षणविधाने तु न कालनियमस्तथा । पुण्याहं वाचयित्वा च ब्राह्मणैरुच्चारयेत् ॥' इति ।

पञ्चरात्रे—'खण्डिता स्फुटिता दग्धा यस्मादर्चा भयावहा । तस्मात्समुद्धरेत्तां तु पूर्वोक्तविधिना नरः ॥' पदार्थादर्शे—'खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते । यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु ॥ अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते । दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः ॥' पशुः=गर्दभादिः । सिद्धान्तशेखरे—'चौरचण्डालपतितश्वोदक्यास्पर्शने सति । शवाद्युपहतौ चैव प्रतिष्ठां पुनराचरेत् ॥' इति ।

१. अर्चायाः—प्रतिमायाः, विष्णुधर्मोक्तिः—'न राज्ञो विप्लवेऽश्नीयात् सुरार्चाविप्लवे तथा ।' इति ।

२. शुद्धिविवेक में विष्णु का वचन है—'द्रव्यवत्कृतशौचानां देवतार्चानां भूयः प्रतिष्ठापनेन शुद्धिः' तद्द्रव्यस्य ताम्रादेरुक्तशौचं कृत्वा पुनः प्रतिष्ठां कुर्यादित्यर्थः । ताम्रादि की शुद्धि—'ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च । शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः ॥' मनु के इस वचन में अम्लोदकादि से ताम्रादि का शुद्धि-कथन नियमार्थक नहीं है इसीलिये अन्यत्र सामान्यतः कहा है—'मलसंयोगजं तज्जं यस्य येनोपहन्यते । तस्य तच्छोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृत् ॥' इति ।

मासादूर्ध्वं पूजाविहतौ पुनःप्रतिष्ठा प्रोक्षणविधिर्वा कार्यं इत्याहुः। पुनःप्रतिष्ठादि मलमासशुक्रास्तादावपि कार्यम्।

उसके बाद पंचगव्य से नहला कर एक हजार आठ या एक सौ आठ, अथवा अट्ठाइस कलशों से शुद्धोदक के द्वारा पुरुषसूक्त से नहवावे। गन्ध पुष्प आदि से पूजा करके गुड़ भात निवेदन करे, इस प्रकार शुद्धि होती है। ज्ञानपूर्वक पूजा नहीं होने पर शूद्र से स्पर्श आदि में पुनः प्रतिष्ठा से ही शुद्धि होती है। अन्य लोग तो एक दिन पूजा न होने पर द्विगुण पूजा करे, दो रात्रि पूजा नहीं करने पर महापूजा करे, इसके बाद प्रोक्षण करे, महीने से ऊपर पूजा न होने पर पुनः प्रतिष्ठा या प्रोक्षण विधि करे, ऐसा कहते हैं। पुनःप्रतिष्ठा आदि मलमास और शुक्रास्तादि में भी करना चाहिये।

## अथ देवालयादिभङ्गे विचारः

देवालयवापीकूपतडागभेदने आरामसेतुसभाभङ्गे इदं विष्णुर्मानस्तोके विष्णोः कर्माणि पादोस्येति चतस्र आज्याहुतीर्हुत्वा ब्राह्मणान् भोजयेदिति।

देवमन्दिर, बावली, कुआं और तालाब के टूटने पर, बगीचा पुल और सभा के भंग होने पर 'इदं विष्णु' 'मानस्तोके' 'विष्णोः कर्माणि' और 'पादोस्य' इन चार ऋचाओं से घृत की आहुति से होम करके ब्राह्मणों को खिलावे।

## अथ प्रोक्षणविधिः

देवमुद्वास्य पञ्चवारं मृज्जलैः प्रक्षाल्य पंचगव्यैः स्नापयित्वा कुशोदकैर्विशोध्य मूलेनाष्टोत्तरशतवारं प्रोक्ष्य मूलेन मूर्धादिपीठान्तं संस्पृश्य तत्त्वन्यासलिपिन्यासमन्त्रन्यासपूर्वकं प्राणप्रतिष्ठां कृत्वा महापूजां कुर्यात्। पूजाहीनादिषु ह्येष संप्रोक्षणविधिः स्मृतः।

देवता का उद्वासन कर मिट्टी जल से प्रक्षालन करके पंचगव्य से स्नान कराके कुश जल से शोधन करके मूल मन्त्र से एक सौ आठ बार प्रोक्षण कर मूर्धादि पीठपर्यन्त स्पर्श करके तत्त्वन्यास, लिपिन्यास और मन्त्रन्यासपूर्वक प्राणप्रतिष्ठा करके महापूजा करे। पूजाहीन आदि में यह सप्रोक्षण विधि कही गई है।

## अथ जीर्णोद्धारविधिः

स च लिङ्गादौ भग्ने दग्धे वा कार्यः। अयं चानादिसिद्धप्रतिष्ठितलिङ्गादौ भङ्गादिदोषेऽपि न कार्यः, तत्र तु महाभिषेकः कार्यः। कर्ता 'अमुकदेवस्य जीर्णोद्धारं करिष्ये' इत्युक्त्वा नान्दीश्राद्धान्तं कृत्वाचार्यं वृत्वा पीठे मण्डलदेवता आवाह्य लिङ्गे ओं व्यापकेश्वरहृदयाय नमः ओं व्यापकेश्वरशिरसे स्वाहेत्यादि षडङ्गं कृत्वा देवतान्तरे [2]मूलमन्त्रेण षडङ्गं कृत्वाऽर्चयेत्।

---

१. शङ्ख और लिखित ने विशेष कहा है—'प्रतिमारामकूपसंक्रमध्वजसेतुनिपानभङ्गेषु तत्समुत्थानं प्रतिसंस्कारोऽष्टशतं च निपातितानाम्' इति। समुत्थानं = प्रतिक्रिया, प्रतिसंस्कारः = पुनःप्रतिष्ठा, अष्टशतं पणा दण्डश्चेत्यर्थः।

२. पद्मपुराण के—'प्रणवादिनमोऽन्तं तच्चतुर्थ्यन्तं च सत्तम। देवतायाः स्वकं नाम मूलमन्त्र उदाहृतः॥' इस वचन के अनुसार 'ॐ विष्णवे नमः, ॐ विश्वनाथाय नमः' इत्यादि मूलमन्त्र का स्वरूप जानना चाहिये।

जीर्णोद्धार—लिंग आदि के फूटने पर या जलने पर किया जाता है। इसे अनादि-सिद्ध प्रतिष्ठित लिंग आदि के टूटने आदि दोष में भी नहीं करे। उसमें तो महाभिषेक करना चाहिये। कर्ता 'अमुक देवता का जीर्णोद्धार करूंगा' ऐसा कहकर नान्दीश्राद्धपर्यन्त करके आचार्यवरण और पीठ में मण्डलदेवता का आवाहन कर लिंग में 'ॐ व्यापकेश्वरहृदयाय नमः' 'ॐ व्यापकेश्वरशिरसे स्वाहा' इत्यादि षडंगन्यास करके दूसरे देवताओं में मूलमन्त्र से षडंगन्यास करके पूजा करे।

अघोरेति मन्त्रमष्टोत्तरशतं जप्त्वाग्निं प्रतिष्ठाप्य अघोरेण घृताक्तसर्षपैः सहस्रं हुत्वेन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णं देवं प्रणवेन संपूज्य साज्यतिलैर्मण्डलदेवताहोमं कृत्वा प्रार्थयेत्—

'अघोर' इस मन्त्र को एक सौ आठ बार जप कर अग्नि की स्थापना करके अघोर मन्त्र से घृताक्त किये सरसो से एक हजार आहुति देकर इन्द्र आदि को नाम मंत्र से वलि देकर जीर्ण देव को प्रणव से पूजा कर मन्त्रसहित तिलों से मण्डल देवता को होम करके प्रार्थना करे—

जीर्णंभग्नमिदं चैव सर्वदोषावहं नृणाम्।
भस्योद्धारे कृते शान्तिः शास्त्रेऽस्मिन्कथिता त्वया ॥
जीर्णोद्धारविधानं च नृपराष्ट्रहितावहम्।
तदधस्तिष्ठतां देव प्रहरामि तवाज्ञया ॥

जीर्ण और भग्न आपका यह शरीर मनुष्यों के सब दोष को देने वाली है। इसके उद्धारार्थ इस शास्त्र में आपने शान्ति कही है। जीर्णोद्धार का विधान राजा और राष्ट्रहित के लिये होता है। आप नीचे रहें, हे देव! आप की आज्ञा से प्रहार करता हूँ।

क्षीराज्यमधुदूर्वासमिद्भिर्देवमन्त्रेणाष्टोत्तरशतं हुत्वा तिलैः सहस्रं हुत्वा पायसेन शतं हुत्वा लिङ्गं प्रार्थयेत्—

लिङ्गरूपं समागत्य येनेदं समधिष्ठितम्।
यायास्त्वं संमितं स्थानं संत्यज्यैव शिवाज्ञया ॥
अत्र स्थाने च या विद्या सर्वविद्येश्वरैर्युता। शिवेन सह संतिष्ठ...

इति मन्त्रितजलेनाभिषिच्य विसर्जयेत्। अस्त्रमन्त्रितेन खनित्रेण खात्वा लिङ्गमादाय वामदेवमन्त्रेण नद्यादौ क्षिपेत्। मूर्तिं प्रणवेन क्षिपेत्।

दूध, घी, मधु और दूब की समिधा से देवता के मन्त्र से एक सौ आठ और तिलों से एक हजार तथा खीर से सौ बार होम करके लिंग की प्रार्थना करे—जिसने लिंगरूप में आकर इसको अधिष्ठित किया है ऐसे शंकर की आज्ञा से सम्मित-स्थान को छोड़कर आप जायं। इस स्थान में सब विद्येश्वरों से युक्त जो विद्या है शिव के साथ रहें। इस प्रकार अभिमन्त्रित जल से अभिषेक कर विसर्जन करे। अस्त्रमन्त्रित इस खनित्र (कुदाल, खनती) से लिंग को खोदकर लिंग को लेकर वामदेव के मन्त्र से नदी आदि में फेंक दे। मूर्ति हो तो प्रणव से फेंके।

दारुजं मधुनाभ्यज्याघोरेण दहेत्। हेमादिमयं योग्यं कृत्वा तत्रैव स्थापयेत्। ततः शान्त्यर्थमघोरेण घृतक्षीरमध्वक्तैस्तिलैः सहस्रं हुत्वा प्रार्थयेत्—

भगवन्भूतभव्येश लोकनाथ जगत्पते ।
जीर्णलिङ्गसमुद्धारः कृतस्तवाज्ञया मया ॥
असिना दारुजं दग्धं क्षिप्तं शैलादिकं जले ।
प्रायश्चित्ताय देवेश अघोरास्त्रेण तर्पितम् ॥
ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि ।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर ॥

लकड़ी की मूर्ति हो तो मधु लगाकर 'अघोर' मन्त्र से जला दे। सुवर्ण आदि से योग्य मूर्ति बनाकर उसी स्थान में स्थापित करे। उसके बाद शान्ति के लिये 'अघोर' मंन्त्र से घी, दूध, मधु से भीगे हुए तिलों से एक हजार आहुति देकर प्रार्थना करे—हे भगवन्! भूतभव्य के प्रभु! हे जगत्पते! हे लोकनाथ! मैंने जीर्ण लिंग का समुद्धार आपकी आज्ञा से किया है। लकड़ी की मूर्ति आग से जला दी है। पत्थर आदि की मूर्ति को जल में फेंक दिया है। हे देवेश! प्रायश्चित्त के लिये 'अघोर' अस्त्र से तर्पित किया है। ज्ञान अथवा अज्ञान से जैसा कहा है वैसा मैंने यदि नहीं किया है तो हे महेश्वर! वह आपके प्रसाद से पूर्ण हो।

अथ यजमानः प्रार्थयेत्—

गोविप्रशिल्पिभूपानामाचार्यस्य च यज्वनः ।
शान्तिर्भवतु देवेश अच्छिद्रं जायतामिदम् ॥ मूर्तौ तु विशेषः—
त्वत्प्रसादेन निर्विघ्नं देहं निर्मापयत्यसौ ।
वासं कुरु सुरश्रेष्ठ तावत्त्वं चाल्पके गृहे ॥
वस क्लेशं सहित्वेह मूर्तिं वै तव पूर्ववत् ।
यावत्कारयते भक्तः कुरु तस्य च वाञ्छितम् ॥

ततो नवां मूर्तिं लिङ्गं वा कृत्वोक्तविधिना प्रतिष्ठाकालानपेक्षया मासादर्वाक् स्थापयेत्। इति जीर्णोद्धारः।

तदनन्तर यजमान प्रार्थना करे—गौ-ब्राह्मण-शिल्पी और राजा, यज्ञ कराने वाले तथा आचार्य की हे देवेश! शान्ति हो यह कार्य दोषरहित हो। मूर्ति में तो यह विशेष है—आपके प्रसादसे शिल्पी विघ्नरहित देह निर्माण करे। हे सुरश्रेष्ठ! तब तक इस छोटे गृह में आप निवास करें। कष्ट सहकर यहां आप रहें जब तक भक्त आपकी पूर्ववत् मूर्ति नहीं बनवा लेता भक्त के मनोभिलाषा को पूरा करें। इसके बाद नई मूर्ति या नया लिंग बनवाकर उक्त विधि से प्रतिष्ठा काल की अपेक्षा न करके महीने पर से पूर्व ही स्थापित कर दे। जीर्णोद्धार समाप्त।

## अथ प्रतिमादिभंगे शान्तिः

प्रतिमाशिवलिङ्गे प्रासादकलशादिभङ्गे स्वामिनो मरणं भवेत्। तत्र शान्तिः—

कुण्डं कृत्वा विधानेन ततो होमं समाचरेत् ।
चरुं च यमदैवत्यं साधयित्वा विधानतः ॥
दधिक्षौद्रघृताक्तानामश्वत्थसमिधां ततः ।

जुहुयादष्टशतं प्राज्ञ इमा रुद्रेति मन्त्रवित् ॥
माषैर्मुद्गैस्तिलैश्चैव घृतेन मधुनापि च ।
एभिः पञ्च सहस्राणि शक्तिबीजेन होमयेत् ॥ शक्तिबीजं ह्रीं बीजम् ।
भूमिं धेनुमनड्वाहं स्वर्णं धान्यं सदक्षिणम् ।
दत्वाथ पञ्चगव्येन स्नायाद्देवालये द्विजः ॥
बलिं दद्याद्यमायाथ कृसरैः पायसैस्तथा ।
ईशानाय बलिं दत्त्वा कृतकृत्यो भवेन्नरः ॥ अत्र मूलं कमलाकरे ।

प्रतिमा-शिवलिंग-प्रासाद-कलश आदि के भंग होने पर स्वामी का मरण होता है । उसमें शान्ति करे—विधान से कुण्ड बनवाकर तब होम करे । यम देवता के चरु को विधान से बना कर दही, मधु, घृत से भिगोकर पीपल की समिधा से 'इमा रुद्र' इत्यादि मन्त्र से एक सौ आठ बार आहुति दे । उर्द, मूंग, तिल, घी और मधु, इन पांचों से शक्तिबीज से पांच हजार होम करे । शक्ति का बीज 'ह्रीं' है । भूमि, धेनु, बैल, सोना और दक्षिणासहित धान्य देकर पंचगव्य से देव-मन्दिर में ब्राह्मण स्नान करे । यम को खिचड़ी से बलि दे । खीर से ईशान को बलि देकर मनुष्य कृतकृत्य हो जाता है । इसका मूल कमलाकर में है ।

### अथ पुष्पाणां ग्राह्याग्राह्यविचारः

[1]अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ।
आत्मारामोद्भवैर्मुख्यैर्भक्त्या संपूजयेत्सुरान् ॥
त्यजेत्कीटावपन्नानि शीर्णपर्युषितानि च ।
स्वयंपतितपुष्पाणि मलाद्युपहतानि च ॥
मुकुलैर्नार्चयेद्देवमपक्वैः कृमियुक्फलैः ।
पुष्पाभावे पत्रपूजा पत्रालाभे फलैरपि ॥
निवेदयेत्फलालाभे [2]तृणगुल्मौषधीरपि ।
समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ॥
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ।
लक्षपुष्पार्चनं क्रयक्रीतैरपि ।

---

१. स्मृत्यन्तर में अपर्युषित होने की दिन संख्या—'पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम् । एकादशाहं तुलसी नैव पर्युषिता भवेत् ॥' स्कान्दे—'पालाशं दिनमेकं तु पंकजं च दिनत्रयम् । पञ्चाहं बिल्वपत्रं च दशाहं तुलसीदलम् ॥' पाद्मे—'तुलसी पर्युषिता नैव बिल्वं तु त्रिदिनावधि । पद्मं पञ्चदिनात्त्याज्यं शेषं पर्युषितं विदुः ॥' भविष्ये—'प्रहरं तिष्ठते जाती करवीरमहर्निशम् । तुलस्यां बिल्वपत्रेषु सर्वेषु जलजेषु च ॥ न पर्युषितदोषोऽस्ति मालाकारगृहेऽपि च ।' मात्स्ये—'बिल्वपत्रं च माध्यं च तमालामलकीदले । कह्लारं तुलसी चैव पद्मं च मुनिपुष्पकम् ॥ एतत्पर्युषितं न स्यात् कुशाश्च कलिकास्तथा ।' इति ।

२. भविष्ये—'अलाभे तु सुपुष्पाणां पत्राण्यपि निवेदयेत् । पत्राणामप्यलाभे तु तृणगुल्मौषधीरपि ॥ औषधीनामलाभे तु भक्त्या भवति पूजनम् ॥' इति ।

ताजे, छिद्ररहित, जीवों से वर्जित, धोये हुए, अपने बगीचे में पैदा हुए, मुख्य फूलों से भक्तिपूर्वक देवताओं की पूजा करे। कीड़े लगे हुए, जमीन में गिरे हुए, बासी, मल आदि लगे हुए और कली से देवता की पूजा नहीं करे। बिना पके और कीड़े लगे हुए फलों से देवता की पूजा नहीं करे। फूल के अभाव में पत्ते से पूजा करे। पत्ता न मिलने पर फलों से पूजा करे। फल न मिलने पर तृण, गुल्म और औषधियों को भी निवेदित करे। समिधा, पुष्प, कुश आदि को ब्राह्मण स्वयं लावे। शूद्र से लाये हुए और खरीदे हुए फूलों से कर्म करता हुआ पतित होता है। लाख फूलों से खरीदे हुए फूलों से भी पूजन होता है।

केचित्तु—

धर्मार्जितधनक्रीतैर्यः कुर्यात्केशवार्चनम्।
न पर्युषितदोषोऽस्ति मालाकारगृहेषु च॥

इत्याद्युक्तेर्मालाकारानीतैः क्रयक्रीतैपि पुष्पपत्रैः पूजयन्ति। नित्यपूजार्थं परोपवनादेरपि पुष्पादिग्रहे चौर्यदोषो न। पूजार्थं पुष्पादि न याचेत्।

समित्पुष्पकुशादीनि वहन्तं नाभिवादयेत्।
तद्धारी चैव नान्यान् हि निर्माल्यं तद्भवेत्तयोः॥

देवोपरि धृतं वामहस्तेऽधोवस्त्रे च धृतं जलेऽन्तःक्षालितं च पुष्पं [1]निर्माल्यम्।

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम्।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं तीर्थजं जलम्॥
प्रहरं तिष्ठते जाती करवीरमहर्निशम्।
नैव पर्युषितं पद्मं तुलसीबिल्वपत्रकम्॥
कुन्दं च दमनं चैवागस्त्यं च कलिका तथा।

कोई-धर्म से अर्जित धन से खरीदे हुए पुष्पों से जो भगवान् की पूजा करते हैं उसमें बासी का दोष और माली के घर का दोष नहीं लगता इत्यादि वचन से माली के लाये और खरीदे हुए पुष्पों पत्रों से भी पूजा करते हैं। नित्य पूजा के लिये दूसरे के बगीचे आदि से भी पुष्प आदि लेने में चोरी आदि का दोष नहीं होता। पूजा आदि के लिये फूल आदि की याचना नहीं करे। समिधा, पुष्प और कुश आदि लिये हुए को प्रणाम नहीं करे और उनको स्वयं लिये हुये दूसरे को प्रणाम नहीं करे, क्योंकि उन दोनों का वह निर्माल्य हो जाता है। देवता के ऊपर चढ़ाया हुआ, बाएं हाथ या धोती में रखा हुआ और जल में धोया हुआ पुष्प निर्माल्य है। बासी फूल, बासी जल वर्जित है। बासी तुलसी और बासी तीर्थका जल वर्जित नहीं है। जूही का फूल एक पहर ठहरता है। करवीर दिन रात ठहरता है। कमल, तुलसी, बिल्वपत्र, कुन्द, दमन, अगस्त का फूल तथा कली, ये बासी नहीं होते।

बिल्वादेरपर्युषितत्वदिनसंख्या—बिल्वः ३० अपामार्गः ३ जाती १ तुलसी ६ शमी ६ शतावरी ११ केतकी ४ भृङ्गराजः ९ दूर्वा ८ मन्दारः १ पद्मं १

---

१. भविष्ये—'तथा देवोपरि धृतं वामहस्ते धृतं च यत्। अधोवस्त्रधृतं चैव जलेन क्षालितं च यत्॥ देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम्।' अपि च—'वस्त्रानीतं करानीतं स्वयं पतितमेव च। एरण्डपत्रैरानीतं न तस्य फलभाग्भवेत्॥' इति।

नागकेसरः २ दर्भाः ३० अगस्त्यः ३ तिलः १ मल्लिका ४ चम्पकः ९ करवीरं ८। एतेषामेतद्दिनोत्तरं पर्युषितत्वम्।

बेल आदि के बासी नहीं होने की दिन-संख्या यह है—बेल ३० दिन, अपामार्ग ३ दिन, जूही १ दिन, तुलसी ६ दिन, शमी ६ दिन, शतावरी ११ दिन, केवड़ा ४ दिन, भृंगराज ९ दिन, दूर्वा ८ दिन, मन्दार १ दिन, कमल १ दिन, नागकेशर २ दिन, कुश ३० दिन, अगस्त ३ दिन, तिल १ दिन, मल्लिका ४ दिन, चम्पा ९ दिन, करवीर ८ दिन। इन सब का उक्त दिनों के बाद बासीपन हो जाता है।

### अथ तुलसीग्रहणकालः

वैधृतौ च व्यतीपाते भौमभार्गवभानुषु।
पर्वद्वये च संक्रान्तौ द्वादश्यां सूतकद्वये॥
तुलसीं[1] ये विचिन्वन्ति ते छिन्दन्ति हरेः शिरः।
नैव च्छिन्द्याद्रवौ दूर्वां तुलसीं निशि संध्ययोः॥
धात्रीपत्रं कार्तिके च पुण्यार्थी मतिमान्नरः।
द्वादश्यां च दिवास्वापस्तुलस्यवचयस्तथा॥
विष्णोश्चैव दिवास्नानं वर्जनीयं सदा बुधैः।

अत्र दिवानिषेधाद्रात्रौ स्नानादिषोडशोपचारैः पूजा कार्या। दिवा तु गन्धादिपुष्पाञ्जल्यन्ता एवोपचारा इति कमलाकराह्निके।

वैधृति और व्यतीपात में, मंगल-शुक्र-रविवार को, अमा पूर्णिमा दोनों पर्व में, संक्रान्ति में, द्वादशी में, जनन मरण दोनों सूतक में, जो तुलसी को तोड़ते हैं वे भगवान् के सिर को काटते हैं। दूब रविवार को न तोड़े। तुलसी रात और दोनों सन्ध्या में न तोड़े। आवलें का पत्ता कार्तिक में न तोड़े। द्वादशी को दिन में न सोवे और तुलसी का पत्ता न तोड़े तथा विष्णु का दिन में स्नान विज्ञजनों से सदा त्याज्य हैं। यहां दिन में निषेध है इसलिये रातमें स्नान आदि षोडशोपचार से पूजा करे। दिन में तो गन्ध आदि पुष्पांजलिपर्यन्त ही उपचार हैं, यह कमलाकर के आह्निक में लिखा है।

विष्णोर्द्वादश्यां निर्माल्यापनयनमपि न कार्यमिति तन्त्रान्तरे स्मर्यते। एतदपवादः पुरुषार्थचिन्तामणौ नारदीये—

पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम्।
द्वादश्यां पयसा स्नाप्य हरिसायुज्यमश्नुते॥
देवार्थे तुलसीछेदो होमार्थे समिधां तथा।
इन्दुक्षये न दुष्येत गवार्थं तु तृणस्य च॥

द्वादशी के दिन विष्णु का निर्माल्य भी नहीं हटाना चाहिये, ऐसा दूसरे तन्त्रों में कहा है। इसका अपवाद पुरुषार्थचिन्तामणि के नारदीय में यह कहा है—भगवान् को एकादशी

---

१. पाद्मे–'द्वादश्यां तुलसीपत्रं धात्रीपत्रं च कार्तिके। लुनाति स नरो गच्छेन्निरयानविगर्हितान्॥' विष्णुधर्मोत्तरे—'संक्रान्तावर्कपक्षान्ते द्वादश्यां निशि सन्ध्ययोः। यैश्छिन्नं तुलसीपत्रं तैश्छिन्नं हरिमस्तकम्॥' इति।

में पंचामृत से और द्वादशी में दूध से नहलाकर विष्णु का सादृश्य प्राप्त करता है। देवता के लिये तुलसी तोड़ने, होम के लिये समिधा तोड़ने और गाय के लिये तृण काटने में अमावस्या का दोष नहीं होता है।

### अथ तुलसीग्रहणमन्त्रः

तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये।
केशवार्थं विचिन्वामि वरदा भव शोभने॥

जातिमल्लिकाकरवीराशोकोत्पलचम्पकबकुलबिल्वशमीकुशा 'एतानि सर्वदेवतानां विहितानि[1]। अथ विहितप्रतिषिद्धत्वाद्वैकल्पिकानि[2]—पाटला शमीपत्रं च दुर्गायाः। कुन्दपलाशबकुलदूर्वाः शिवस्य। कुमुदतगरे सूर्यस्य। तुलसीभृङ्गराजतमालपत्राणि शिवदुर्गयोः। अगस्तिमाधवीलतालोध्रपुष्पं विष्णुशिवयोः। धत्तूरमन्दारौ विष्णुसूर्ययोः। इति विकल्पतानि।

तुलसी ग्रहण का मन्त्रार्थ यह है--हे केशवप्रिये तुलसि! अमृत से तुम्हारा जन्म है। केशव के लिये तुमको तोड़ता हूँ। हे शोभने! आप वर देने वाली हो। जाती, मल्लिका, करवीर, अशोक, कमल, चम्पा, मौलसिरी, बेल, शमी और कुश, इतने सब देवताओंको विहित हैं। विहित और प्रतिषिद्ध होने से वैकल्पिक हैं—पाटल और शमी का पत्र दुर्गा के लिये, कुन्द-पलाश-मौलसिरी-दूब, शिव के लिये, कुमुद और तगर सूर्य के लिये, तुलसी-भृंगराज-तमालपत्र शिव और दुर्गा के लिये, अगस्त-माधवीलता-लोध्र पुष्प विष्णु और शिव के लिये, धत्तूर-मन्दार विष्णु और सूर्य के लिये हैं। ये वैकल्पिक हैं।

### अथ विष्णोः प्रियपुष्पाणि

मालतीजातीकेतकीमल्लिकाशोकचम्पकपुन्नागबकुलोत्पलकुन्दकरवीरपाटलातगरपुष्पाणि अन्यानि च सुरभीणि विष्णोः प्रियाणि। अपामार्गभृङ्गराजखदिरशमीदूर्वाकुशदमनकबिल्वतुलसीपत्राण्युत्तरोत्तराधिकप्रियाणि। तुलसी सर्वाधिका। जातिपुष्पसहस्रेण मालार्पणे कल्पकोटिसहस्रं विष्णुपुरे वासः। आम्रमञ्जर्या पूजने गोकोटिदानफलम्।

विष्णु के प्रिय पुष्प ये हैं—मालती, जाती, केतकी, मल्लिका, अशोक, चम्पक, पुन्नाग, मौलसिरी, कमल, कुन्द, करवीर, पाटला और तगर। अन्य भी सुगन्धित पुष्प विष्णु को प्रिय हैं। अपामार्ग, भृंगराज, खदिर, शमी, दूर्वा, कुश, दमनक, बेल और तुलसीपत्र उत्तरोत्तर अधिक प्रिय हैं। तुलसी सबसे अधिक प्रिय है। हजार जाती पुष्प की माला अर्पण करने वाले का कल्प-कोटि-सहस्र विष्णुपुर में वास होता है। आम की मंजरी से पूजन में कोटि गोदान का फल होता है।

---

१. स्मृत्यन्तर में सभी देवताओं के लिये समानरूप से विहित पुष्प ये हैं—'जाती शमी कुशाः कङ्कु मल्लिका करवीरजम्। नागपुन्नागकाशोकरक्तनीलोत्पलानि च॥ चम्पकं बकुलं चैव पद्मं बिल्वं पवित्रकम्। एतानि सर्वदेवानां संग्राह्याणि समानि च॥' इति।

२. ज्ञानमालायाम्—'नाक्षतैरर्चयेद् विष्णुं न तुलस्या गणाधिपम्। न दूर्वया यजेद् देवीं बिल्वपत्रैश्च भास्करम्॥ उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यं सदा बुधैः। फलं च कृमिसंयुक्तं प्रयत्नात्तद् विवर्जयेत्॥' इति।

## अथ शिवस्य प्रियपुष्पाणि

चतुर्णां पुष्पजातीनां गन्धमाघ्राति शंकरः ।
अर्कस्य करवीरस्य बिल्वस्य बकुलस्य च ॥

दशसुवर्णदानफलं श्वेतार्कपुष्पम् । ततः सहस्रगुणं बकुलपुष्पम् । एवं धत्तूरशमीपुष्पद्रोणपुष्पनीलोत्पलानामुत्तरोत्तराणां सहस्रगुणत्वम् ।

मणिमुक्ताप्रवालैस्तु रत्नैरप्यर्चनं कृतम् ।
न गृह्णामि विना देवि बिल्वपत्रैर्वरानने ॥
सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम् ।

श्रीशंकर चार जाति अर्क, करवीर, बेल और मौलसिरी के फूलों के गन्ध को ग्रहण करते हैं । दस सुवर्ण दान का फल श्वेत अर्कपुष्प को चढ़ाने से होता है । इसी प्रकार धत्तूर, शमीपुष्प, द्रोणपुष्प और नीलकमल उत्तरोत्तर सहस्र-गुण-फल देते है । श्रीशंकर पार्वती से कहते हैं—मणि, मोती, मूंगा और रत्नों से मेरा पूजन किया जाय फिर भी हे वरानने देवी ! मैं विना बिल्व पत्र के उन्हें ग्रहण नहीं करता । बिल्वपत्र दारिद्र्य का विनाशक और सब मनोरथ देने वाला होता है ।

नीलोत्पलसहस्रेण मालार्पणे कल्पकोटिसहस्रं शिवपुरे वासः । धत्तूरैर्बृहतीपुष्पैश्च पूजने गोलक्षफलम् । पाटलामन्दारापामार्गजातीचम्पकोशीरतगरनागकेसरपुन्नागजपामल्लिसहकारकुसुम्भपुष्पाणि शिवप्रियाणि ।

धत्तूराणि कदम्बानि रात्रौ देयानि शंकरे ।
मदनरत्ने केतकानि कदम्बानीति पाठः ।

अभावे पुष्पपत्राणामन्नाद्येनाभिपूजयेत् ।
शालितण्डुलगोधूमयवैर्वापि समाचरेत् ॥

हजार नीले कमल की माला चढ़ाने से कल्प-कोटि-सहस्र शिवपुर में वास होता है । धत्तूर और बृहती के फूलों से पूजा करने से लाख गोदान का फल होता है । शिव के प्रिय पुष्प ये हैं—पाटला, मन्दार अपामार्ग, जाती, चम्पक, उशीर, तगर, नागकेशर पुन्नाग, जपा, मल्लिका, सहकार और कुसुम्भ । धत्तूर और कदम्ब के पुष्प रात में शंकर को अर्पण करना चाहिये । मदनरत्न में 'धत्तूराणि' की जगह 'केतकानि कदम्बानि' ऐसा पाठ है । पुष्प पत्र के नहीं मिलने पर खाने लायक अन्नों से भी पूजा करे । साठी का चावल गेहूँ और जव से भी पूजा करे ।

## अथ निषिद्धपुष्पाणि

बन्धूककुन्दातिमुक्तकेतकीकपित्थबकुलशिरीषनिम्बानि ।
'पुष्पपत्रादिकं स्वाभिमुखमुत्तानमर्पयेत् ।
पत्रं पुष्पं फलं चैव यथोत्पन्नं तथाऽर्पयेत् ॥ इति वचनात् ।

---

१. पाद्मे—'पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् । यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ॥' इति ।

बिल्वपत्रं तु स्वाभिमुखाग्रं न्युब्जमर्पयेत्। पक्वाम्रफलस्य शिवार्पणे वर्षायुतं शिवपुरे वासः। 'सव्यं व्रजेत्ततोऽसव्यं प्रणालीं नैव लङ्घयेदित्यादिस्थिरलिङ्गे प्रदक्षिणाप्रकारः, चरे तु सव्येनैव।

निषिद्ध पुष्प ये हैं—बन्धूक, कुन्द, अतिमुक्त, केतकी, कपित्थ, बकुल, शिरीष और निम्ब। पुष्प पत्र आदि अपने सम्मुख उत्तान अर्पित करे, क्योंकि पुष्प और फल जैसे उत्पन्न होते हैं वे वैसे अर्पित करे, ऐसा वचन है। बिल्वपत्र तो अपने संमुख औंधा करके अर्पण करे। श्रीशिव को पके आम के फल को अर्पण करने पर दस हजार वर्ष शिवपुर में वास होता है। बाएं से चले फिर बाएं से लौट आवे शिव के प्रणाल ( जल मार्ग के बहने ) का लंघन न करे इत्यादि। यह स्थिर लिंग में प्रदक्षिणा का प्रकार है। चर में तो सव्य ही से प्रदक्षिणा करे।

## अथ देवीप्रियपुष्पाणि

देव्या अपि बकुलकुन्दादिसहितान्येतान्येव प्रियाणि।

धान्यानां सर्वपत्रैश्च पुष्पैर्देवीं प्रपूजयेत्।
दूर्वाकुन्दैः सिन्दुवारैर्बन्धूकागस्तिसंभवैः॥

देवी को भी बकुलकुन्दसहित ये ही पुष्प प्रिय हैं। देवी की पूजा धान्य के सब पत्तों और पुष्पों से, दूर्वा, कुन्द, सिन्दुवार, बन्धूक तथा अगस्त के फूलों से करे।

## अथ राजसूयादियज्ञफलदायकानि

बिल्वपत्रैः पूजने राजसूयफलम्। करवीरस्रजाऽग्निष्टोमस्य। बकुलस्रजा वाजपेयस्य। द्रोणस्रजा राजसूयस्येति। एवं सूर्यविघ्नेशादेरपि प्रायो विष्णुवत् ज्ञेयानि।

बिल्वपत्रों से पूजन करने पर राजसूय का फल होता है। करवीर की माला से अग्निष्टोम का, मौलसिरी की माला से वाजपेय का और द्रोण की माला से राजसूय यज्ञ का फल मिलता है। इसी प्रकार सूर्य और गणेश आदि के भी पुष्प प्रायः विष्णु की तरह जानना चाहिये।

## अथ शिवनिर्माल्यग्रहणविचारः

[2]अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम्।
शालग्रामशिलासंगात्सर्वं याति पवित्रताम्॥

शैवसौरनैवेद्यभक्षणे चान्द्रायणम्। अभ्यासे द्विगुणम्। मत्याऽभ्यासे सांतपनम्।

---

१. यह अग्निपुराण का वचन है। बह्वृचपरिशिष्ट में प्रदक्षिणा का विचार यों है—'एकां विनायके कुर्याद् द्वे सूर्ये तिस्र ईश्वरे। चतस्रः केशवे कुर्यात् सप्ताश्वत्थे प्रदक्षिणाः॥' अन्यत्र—'एका चण्ड्या रवेः सप्त तिस्रः कार्या विनायके। हरेश्चतस्रः कर्तव्याः शिवस्यार्धं प्रदक्षिणाः॥ वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम्। चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम्॥ अपसव्यं यतीनां तु सव्यं तु ब्रह्मचारिणाम्॥' 'सव्यापसव्यं गृहिणामेवं शम्भोः प्रदक्षिणा।' इति।

२. हेमाद्रिपरिशिष्टोद्धृत तिथितत्त्व में यह वचन है। शिवपुराणे—'ये वीरभद्रशपिताः शिवभक्तिपराङ्मुखाः। शम्भोरन्यत्र देवेषु ये भक्ता ये न दीक्षिताः॥ तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्।'

अन्यनिर्माल्येप्यनापद्येवम् । इदं ज्योतिर्लिङ्गस्वयंभूलिङ्गसिद्धप्रतिष्ठातिरिक्तस्थावरलिङ्गविषयम्[१] ।

शिव का नैवेद्य–पत्र, पुष्प, फल और जल अग्राह्य हैं किंतु शालग्राम शिला में संग से सब पवित्र हो जाते हैं। शिव और सूर्य का नैवेद्य खाने में चान्द्रायण करे। अभ्यास में दूना चान्द्रायण करे। ज्ञानपूर्वक अभ्यास में सान्तपन करे। अन्य के निर्माल्य में भी आपद् रहित काल में ऐसा ही जानना चाहिये। यह ज्योतिर्लिंग,स्वयम्भूलिंग और सिद्धों से प्रतिष्ठापित लिंग के अतिरिक्त स्थावर लिंग के विषय में है।

ज्योतिर्लिङ्गादौ तु पूजकेन दत्तं फलतीर्थादिकं भक्त्या शुद्ध्यर्थं ग्राह्यं न लोभेन। पञ्चायतनस्थितलिङ्गेषु चरेषु प्रतिमासु चान्नादेरपि स्वयंग्रहणेऽपि न दोषः। ज्योतिर्लिङ्गाद्यन्यस्थिरलिङ्गेषु तीर्थोदकचन्दनमात्रं श्रद्धावद्भिः शिवोपासकैरेव ग्राह्यम्। ज्योतिर्लिङ्गादौ पूजकदत्तमन्नमपि भक्ष्यमिति केचित्।

ज्योतिर्लिंगादि में तो पूजक का दिया हुआ फल तीर्थ जल आदि शुद्धि के लिये भक्ति से ग्रहण करे, लोभ से नहीं। पंचायतनस्थित चर लिंगों में और प्रतिमाओं में अन्न आदि का भी स्वयं ग्रहण करने में दोष नहीं है। ज्योतिर्लिंगादि से भिन्न स्थिर लिंगों में तीर्थोदक और चन्दनमात्र श्रद्धालु शिव के उपासक ही ग्रहण करें। ज्योतिर्लिंगादि में पूजक का दिया अन्न भी भक्षणीय है, ऐसा कुछ लोग कहते हैं।

## अथ नक्षत्रसंज्ञा

त्र्युत्तरा रोहिणी ध्रुवम्। मघा भरणी पूर्वात्रयं क्रूरम्। श्रवणत्रयपुनर्वसुस्वात्यश्चरम्। अश्विनीहस्तपुष्यं क्षिप्रम्। अनूराधारेवतीमृगचित्रं मृदु। कृत्तिकाविशाखे मिश्रम्। मूलाश्लेषाज्येष्ठार्द्रास्तीक्ष्णम्। इति नक्षत्रसंज्ञाः।

यत्र नोक्ता तिथिस्तत्र ग्राह्या रिक्तामामां विना।
वारोऽपि यत्र न प्रोक्तस्तत्रार्कार्किकुजान्विना॥

तीनों उत्तरा और रोहिणी ध्रुवसंज्ञक हैं। मघा, भरणी और तीनों पूर्वा क्रूरसंज्ञक हैं। श्रवण से तीन नक्षत्र, पुनर्वसु और स्वाती नक्षत्र चरसंज्ञक हैं। अश्विनी, हस्त और पुष्य क्षिप्रसंज्ञक हैं। अनुराधा, रेवती, मृगशिरा और चित्रा, ये मृदुसंज्ञक हैं। कृत्तिका और विशाखा मिश्रसंज्ञक हैं। मूल, आश्लेषा, ज्येष्ठा और आर्द्रा तीक्ष्णसंज्ञक हैं। ये नक्षत्र की संज्ञायें हैं। जहां तिथि नहीं कही गई है वहां रिक्ता और अमावास्या को छोड़कर तिथि ग्राह्य है। वार भी जहां नहीं कहा है वहां रवि-शनि-मंगलवार को छोड़कर ग्रहण करना चाहिये।

---

१. भविष्ये—'ज्योतिर्लिङ्गं विना लिङ्गं यः पूजयति सत्तमः। तस्य नैवेद्यनिर्माल्यभक्षणात्तसकृच्छ्रकम्॥ शालग्रामोद्भवे लिङ्गे बाणलिङ्गे स्वयंभुवि। रसलिङ्गे तथार्षे च सुरसिद्धप्रतिष्ठिते॥ हृदये चन्द्रकान्ते च स्वर्णरौप्यादिनिर्मिते। शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते॥' यहां स्वर्णरौप्यादि में आदि पद से पार्थिवलिङ्ग का ग्रहण है अतः पार्थिवलिंग का नैवेद्यादि ग्राह्य है। तथा—'बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते। चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम्॥ लिङ्गे स्वयंभुवे बाणे रत्नजे रसनिर्मिते। सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत्॥ यत्र चण्डाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः। चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः॥' त्रैविक्रम्याम्—'बाणलिङ्गे च लौहे च सिद्धलिङ्गे स्वयंभुवि। प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत्॥' इति।

## अथ कृषिमुहूर्ताः

चरमृदुक्षिप्रध्रुवमूलविशाखामघासु सकुजे शुभवारे भूकर्षणं हितम्। सूर्यत्यक्तनक्षत्रात्त्र्यष्टनवाष्टसु अशुभं शुभमशुभं शुभमिति हलचक्रम्। अत्रैव नक्षत्रे शनिभौमभिन्नवारे बीजवापः सस्यारोपणं च धान्यच्छेदश्च । क्षीरवृक्षजन्यः खलमध्ये स्तम्भः। धान्यानां मर्दनं ज्येष्ठामूलमघाश्रवणरेवतीरोहिण्यनूराधाफल्गुनीद्वये शुभम्। धान्यसंग्रहः क्षिप्रध्रुवचरमृदुमूलेषु ज्ञगुरुशुक्रेषु चरभिन्नलग्ने शुभः।

चर, मृदु, क्षिप्र, ध्रुव, मूल, विशाखा और मघा में मंगलसहित शुभवार में भूकर्षण (हल चलाना) शुभ होता है। सूर्य के छोड़े हुए नक्षत्र से तीसरे, आठवें, नवें और आठवें नक्षत्र में, अशुभ, शुभ, अशुभ, शुभ इस प्रकार हलचक्र होता है। इसी नक्षत्र में शनि भौम से भिन्न वार में बीज बोना, धान रोपना और धान काटना विहित है। दूध वाले वृक्ष का खलिहान के बीच में खम्भा गाड़ना तथा धान्यों का मर्दन करना ज्येष्ठा, मूल, मघा, श्रवण, रेवती, रोहिणी, अनुराधा और दोनों फाल्गुनी में शुभप्रद है। धान्य का संग्रह—क्षिप्र, ध्रुव, चर और मृदु नक्षत्र और मूल में, बुध, गुरु और शुक्रवार में, चर से भिन्न लग्नों में शुभप्रद है।

## अथ धान्यवृद्धिकरणमन्त्रः

ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहेति मन्त्रं लिखित्वा धान्यागारे क्षिपेत्, तेन 'धान्यवृद्धिः।

'ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा' इस मन्त्र को लिखकर कोठार में डाल दे। इससे धान्य की वृद्धि होती है।

बुधमन्ददिने नैव धनधान्यव्ययः शुभः।
अद्यान्नवान्नं सद्वारे मृदुक्षिप्रचरे दिवा।

बुध और शनि के दिन धन धान्य का खर्च शुभकारक नहीं है। नया अन्न शुभ वार और मृदु क्षिप्र-चर नक्षत्र में दिन में खाय।

## अथ वस्त्रभूषणादिधारणविचारः

वस्त्रभूषणविधिर्ध्रुवाश्विनीहस्तपञ्चकपुनर्वसुद्वये ।
पौष्णवासवभयोश्च सत्तिथौ मन्दभौमशशिवासरान्विना ॥
अनुक्तेऽपीष्टदं वस्त्रं विप्राज्ञोत्सवलब्धिषु।
ध्रुवपुष्यादितौ योषिद्धत्ते या वस्त्रभूषणे।
न प्राप्नोति पतिप्रीतिं स्नाति वारुणभे च या।
पादुकासनशय्यादेर्भोगः सत्तिथिवासरे ॥
ध्रुवक्षिप्रमृदुश्रोत्रभरणीषु पुनर्वसौ।
चेन्नव्यवस्त्रं मध्यांशे दग्धस्फुटितपङ्क्तिम ॥

---

१. चण्डेश्वरः—'लेखयित्वा इमं मन्त्रं धान्यागारे निधापयेत्। सस्यवृद्धिं परां कुर्यात् पूजितां प्रतिपूजयेत् ॥' इति।

तत्यजेच्छान्तिकं कुर्यात्त्यजेदेवान्त्यभागयोः ।
विज्ञेयमेतच्छय्यायामास्तृतौ पादुकास्वपि ॥

वस्त्र और भूषण का धारण—ध्रुव, अश्विनी, हस्त से पांच नक्षत्र और पुनर्वसु से दो नक्षत्रों में, रेवती-धनिष्ठा नक्षत्रों में, शुभ तिथियों में, शनि मंगल और सोमवार को छोड़कर शुभ है। नहीं कहे हुए नक्षत्रों में भी ब्राह्मण की आज्ञा से तथा उत्सव में वस्त्र धारण करना अभीष्टदायकहै। जो स्त्री ध्रुव नक्षत्र, पुष्य और अदिति नक्षत्र में वस्त्र और भूषण धारण करती है और वारुण नक्षत्र में नहाती है वह पति को प्रीति नहीं प्राप्त करती। खड़ाऊँ, आसन तथा शय्या आदि का उपभोग शुभ तिथि और वार में तथा ध्रुव, क्षिप्र, मृदु, श्रवण, भरणी और पुनर्वसु में होता है। यदि नया वस्त्र मध्यभाग में जल जाय फट जाय और पंकयुक्त हो जाय तो उसका त्याग करे, शान्ति करे और अन्त्यके दोनों भाग का त्याग ही कर दे। यही बात शय्या के बिछौने और पादुकाओं में भी जानना चाहिये।

सूचीकर्मानुराधाश्विचित्रामृगपुनर्वसौ ।
वस्त्रं क्षाल्यं धारणोक्ते काले बुधदिनं विना ॥
भोजनं भाजने रौप्यस्वर्णकांस्यादिनिर्मिते ।
कुर्यादमृतयोगेषु चरक्षिप्रमृदुध्रुवैः ॥
स्याद् भूषणानां घटनं चरक्षिप्रमृदुध्रुवैः ।
शुभवारे रत्नवतां मिश्रभेऽपि रवौ कुजे ॥ इति वस्त्रादिविचारः ।

सीने का काम—अनुराधा, अश्विनी, चित्रा, मृगशिरा और पुनर्वसु नक्षत्र में करे। वस्त्र धारण के कहे समय में बुध दिन को छोड़कर वस्त्र का प्रक्षालन करे। चांदी, सोने, कांसे आदि के बने वर्तन में चर-क्षिप्र-ध्रुव-मृदु संज्ञक-नक्षत्रों में तथा अमृत योगों में भोजन करे। चर-क्षिप्र-मृदु-ध्रुव-संज्ञक नक्षत्रों में गहनों का बनवाना शुभप्रद है। रत्नवाले भूषणों का बनवाना शुभवार में और मिश्र नक्षत्र तथा रविवार मंगलवार को भी होता है। यह वस्त्रादि का विचार है।

## अथ शस्त्रघटनधारणमुहूर्तः

शस्त्राणां घटनं क्रूरमिश्राश्विमृगतीक्ष्णभे ।
शस्त्रं धार्यं ध्रुवक्षिप्रमृदुज्येष्ठाविशाखके ॥

शस्त्र का बनवाना—क्रूर-मिश्र-संज्ञक-नक्षत्र तथा अश्विनी, मृगशिरा, तीक्ष्णसंज्ञक नक्षत्र में ठीक है। शस्त्र धारण—ध्रुव, क्षिप्र और मृदु नक्षत्रों में तथा ज्येष्ठा और विशाखा में करे।

## अथ सेवाकरणमुहूर्तः

सेवा कार्या क्षिप्रमैत्रध्रुवैर्ज्ञेज्यार्कभार्गवे ।
मन्देऽपि चेत्सेवकर्क्षं स्वामिभान्न द्वितीयकम् ॥

क्षिप्र, अनुराधा, ध्रुव नक्षत्रों में बुध, बृहस्पति, रवि और शुक्रवार में सेवा ( नौकरी ) करे। यदि सेवक का नक्षत्र स्वामी के नक्षत्र से दूसरा न हो तो शनिवार में भी सेवा करे।

## अथ वाहनारोहणमुहूर्तः

हस्तषट्कध्रुवश्रोत्ररेवतीपुष्यभे शुभम् ।
पुनर्वसौ च शिबिकागजाश्वादिषु रोहणम् ॥

हस्त से छ नक्षत्र, ध्रुव नक्षत्र, श्रवण, रेवती, पुष्य और पुनर्वसु में पालकी, हाथी और घोड़ा आदि पर चढ़ना शुभ है।

## अथ राजदर्शननृत्यमुहूर्तः

राज्ञां विलोकनं क्षिप्रश्रुतिद्वयमृदुध्रुवे ।
नृत्यारम्भः पुष्यमृगध्रुवज्येष्ठाधनिष्ठयोः ॥

क्षिप्र-मृदु-ध्रुव-नक्षत्रों में, श्रवण से दो नक्षत्रों में, पुष्य, मृगशिर, ध्रुवसंज्ञक नक्षत्र, ज्येष्ठा और धनिष्ठा में राजदर्शन करे। अनुराधा, शतभिषा, हस्त नक्षत्र तथा शुभवार में नृत्य-शिक्षण का आरंभ करे।

## अथ विपणिक्रयविक्रयमुहूर्तः

अनूराधाशतभिषग्घस्ते स्याच्छुभवासरे ।
विपणिः स्यान्मृदुक्षिप्रध्रुवै रिक्ताकुजान्विना ॥
क्रयः कार्योऽश्विनीस्वातीश्रवश्चित्राशतान्त्यभे ।
विक्रयो भरणीपूर्वात्रयाश्लेषासु मिश्रभे ॥

मृदु-क्षिप्र-ध्रुव नक्षत्र में, रिक्ता तिथि और मंगलवार को छोड़कर व्यापार करे। अश्विनी, स्वाती, चित्रा, शतभिषा और रेवती में खरीदने का काम करे। भरणी, तीनों पूर्वा, आश्लेषा तथा मिश्र नक्षत्र में बेचने का काम करे।

## अथ सेतुबन्धपशुक्रयादिमुहूर्तः

सेतुबन्धो ध्रुवे स्वात्यां जीवार्कशनिवासरे ।
नानापशुक्रिया हस्तपुष्यार्द्रामृगमिश्रभे ॥
पुनर्वसौ धनिष्ठाश्विपूर्वाज्येष्ठाशतान्त्यभे ।
त्यक्त्वार्कभौमेन्दुशनीन् श्रुतिचित्राध्रुवाणि च ॥
अमारिक्ताष्टमीश्चापि गतिक्रयमुखाः शुभाः ।

ध्रुव नक्षत्र और स्वाती में, गुरु-रवि-शनिवार में पुल बनावे। हस्त, पुष्य, आर्द्रा, मृगशिरा तथा मिश्र नक्षत्र में अनेक प्रकार की पशुक्रिया करे। पुनर्वसु, धनिष्ठा, अश्विनी, तीनों पूर्वा, ज्येष्ठा, शतभिषा और रेवती में श्रवण, चित्रा, ध्रुव नक्षत्र, रवि-भौम-सोम-शनिवार, अमावास्या और रिक्ता अष्टमी को छोड़कर पशु का खरीदना और ले जाना शुभ है।

## अथ धनग्रहणादिमुहूर्तः

द्रव्यं लघुचरैर्योज्यं वृद्ध्यर्थं चरलग्नके ॥
ऋणं भौमे न गृह्णीयाद्वृद्धियोगेऽर्कसंक्रमे ।
धनिष्ठापञ्चके हस्ते त्रिपुष्करद्विपुष्करे ॥
भौमादिषु ऋणच्छेदं कुर्याच्च धनसंग्रहम् ।
बुधे धनं न प्रदेयं संग्रहस्तु बुधे शुभः ॥

लघु और चर नक्षत्रों में चर लग्न में वृद्धि के लिये द्रव्य को लगावे। मंगल को ऋण ग्रहण न करे। वृद्धियोग, रवि-संक्रान्ति, धनिष्ठा से पांच नक्षत्र तथा हस्त में त्रिपुष्कर और द्विपुष्कर योग में ऋण न ले। भौमवार आदि में ऋण का चुकता और धन का संग्रह करे। बुध को धन नहीं दे। धन का संग्रह बुध को शुभ है।

## अथ त्रिपुष्करद्विपुष्करयोगस्तत्फलं च

शन्यर्कारैस्त्रिपादर्क्षे भद्रातिथ्यां त्रिपुष्करः ।
मृगचित्राधनिष्ठासु तत्तिथ्यह्नि द्विपुष्करः ॥
शुभाशुभेषु त्रिगुणं द्विगुणं च फलं क्रमात् ।

शनि, रवि और मंगलवार को त्रिपाद नक्षत्र और भद्रातिथि ( द्वितीया, द्वादशी, सप्तमी ) में त्रिपुष्कर योग होता है। मृगशिरा-चित्रा-धनिष्ठा नक्षत्र और पूर्वोक्त तिथि के दिन में द्विपुष्कर योग होता है। त्रिपुष्कर में शुभ और अशुभ कर्म का फल तिगुना और द्विपुष्कर में दूना होता है।

## अथ नष्टवस्तुलाभालाभविचारः

मिश्रक्रूरेषु तीक्ष्णेषु स्वात्यां द्रव्यं न लभ्यते ॥
दत्तं प्रयुक्तं निक्षिप्तं नष्टं चेत्याह नारदः ।
अन्धं मन्दं च चिबिटं सुलोचनमिति क्रमात् ॥
गणनीयं रोहिणीभादन्धे नष्टं लभेद् द्रुतम् ।
मन्दे यत्नाल्लभेतैव चिबिटस्वक्षयोर्न हि ।
अन्विष्यं पूर्वतोन्धेषु नन्दसंज्ञेषु दक्षिणे ।
प्रतीच्यां चिबिटाख्येषु सुलोचन उदग्दिशि ॥

मिश्र, क्रूर और तीक्ष्ण नक्षत्र तथा स्वाती में दिया हुआ, प्रयोग में लगाया हुआ, निक्षेप किया हुआ और खोया हुआ द्रव्य नहीं मिलता, ऐसा नारद ने कहा है। रोहिणी नक्षत्र से क्रमशः गिनने से अन्ध, मन्द, चिबिट और सुलोचनसंज्ञक नक्षत्र होते हैं। अन्ध नक्षत्र में नष्ट धन शीघ्र मिलता है। मन्द में यत्न से मिलता है। चिबिट और सुलोचन में नष्ट हुआ धन नहीं मिलता। अन्ध में पूरब, मन्दसंज्ञक नक्षत्र में दक्षिण, चिबिट नाम के नक्षत्र में पश्चिम और सुलोचन में उत्तर दिशा की ओर ढूँढ़े।

## अथ नृपाभिषेकमुहूर्तः

राजाभिषेकः श्रवणे ध्रुवर्क्षे ज्येष्ठामृदुक्षिप्र उदग्रवौ स्यात् ।
त्यक्त्वाररिक्ताधिकचैत्ररात्रीश्चन्द्रेज्यशुक्राभ्युदये शुभाय ॥

श्रवण नक्षत्र, ध्रुव, मृदु, क्षिप्रसंज्ञक नक्षत्रों और ज्येष्ठा में, उत्तरायण में, मंगलवार, रिक्ता तिथि, अधिक चैत्र और रात्रि को छोड़कर सोमवार गुरुवार, और शुक्रवार को राज्याभिषेक अभ्युदय और शुभ के लिये होता है।

## अथ जलाशयखननमुहूर्तः

जलाशयानां खननं मघापुष्यध्रुवे मृगे ।
पूर्वाषाढानुराधान्त्यधनिष्ठाशतहस्तभे ॥
जलराशिगते चन्द्रे लग्नस्थे च बुधे गुरौ ।

जल राशि में चन्द्रमा हो, लग्न में बुध और गुरु हों, मघा, पुष्य, ध्रुव नक्षत्र, मृगशिरा, पूर्वाषाढ़ा, अनुराधा, रेवती, धनिष्ठा, शतभिषा और हस्त नक्षत्र में जलाशयों का खोदना शुभ है।

## अथ क्षौरकर्मविचारः

क्षौरं चौलोक्तनक्षत्रवारादिषु शुभं जगुः ॥
पञ्चमे पञ्चमे राज्ञां दिनेऽन्येषां यदृच्छया ।
श्मश्रुकर्म भवेन्नैव नवमे दिवसे क्वचित् ॥
क्षौरं भूते रतं दर्शे वर्जयेच्च जिजीविषुः ।
क्षौरं न कुर्युरभ्यक्तभुक्तस्नातविभूषिताः ॥
प्रयाणसमरारम्भे न रात्रौ न च सन्ध्ययोः ।
श्राद्धाहप्रतिपद्रिक्ताव्रताह्नि च न वैधृतौ ॥
प्रशस्तं[१] जन्मनक्षत्रं सर्वकर्मसु कीर्तितम् ।
क्षौरप्रयाणभैषज्यविवादेषु न शोभनम् ॥
षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमी तथा ।
आसु सन्निहितं पापं तैलेषु स्त्रीभगे क्षुरे ॥

चौल के कहे नक्षत्रों और वारों में क्षौर कर्म शुभ कहा है । राजा का क्षौर कर्म पांचवें पांचवें दिन में और दूसरों का स्वेच्छा से होता है । श्मश्रु कर्म नवमें दिन कभी नहीं होता । जीने की इच्छा करने वाला पुरुष चतुर्दशी को क्षौर और अमावास्या को स्त्रीप्रसंग त्याग दे । तेल लगाकर, भोजन के बाद, स्नान करके, भूषित होकर, यात्रा के समय, लड़ाई के आरंभ में, रात में और दोनों सन्ध्याओं में, श्राद्ध के दिन, प्रतिपदा में, रिक्ता तिथि में, व्रत के दिन और वैधृति में क्षौर न करावे । जन्म नक्षत्र सब कर्मों में प्रशस्त कहा है किन्तु क्षौर, यात्रा, औषध और विवाद में अच्छा नहीं है । षष्ठी, अमावास्या, पूर्णिमा, व्यतीपात, चतुर्दशी तथा अष्टमी, इन तिथियों में तेल, स्त्री के भग और छुरे में पाप सन्निहित रहता है ।

राजकार्यनियुक्तानां नराणां भूपजीविनाम् ।
श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनम् ॥
क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
यज्ञे मृतौ बन्धमोक्षे नृपविप्राज्ञयापि च ॥

राजकार्य में नियुक्त पुरुषों और राजा से जीने वाले पुरुषों को दाढ़ी, बाल और नख कटवाने में समय की शुद्धि अपेक्षित नहीं है । नैमित्तिक में क्षौर का निषेध रहते हुए भी क्षौर अवश्य करावे । यज्ञ में, मरने में, जेल से छूटने में, राजा और ब्राह्मण की आज्ञा से निषेध में भी क्षौर करावे ।

प्राग्वयस्कैः सपितृकैर्न कार्यं मुण्डनं सदा ।
मुण्डनस्य निषेधेऽपि कर्तनं तु विधीयते ॥
उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥

---

१. राजमार्तण्ड में जन्मनक्षत्रादि का निषेध—'देवकार्ये पितुः श्राद्धे स्वेरंशपरिक्षये । क्षौर-कर्म न कुर्वीत जन्ममासे च जन्मभे ॥' त्रिस्थलीसेतु में वृद्धगार्ग्योक्त निषिद्ध वारादि—'रव्यारसौरवारेषु रात्रौ पाते व्रताहनि । श्राद्धाहः प्रतिपद्रिक्ताभद्राः क्षौरेषु वर्जयेत् ॥' इति ।

आनर्तोहिच्छत्रः पाटलिपुत्रोऽदितिर्दितिः श्रीशः ।
क्षौरे स्मरणादेषां दोषा नश्यन्ति निःशेषाः ॥

पितृजीवी जवान सदा मुण्डन न करावे। मुण्डन के निषेध होते हुए भी कर्तन विहित है। बुद्धिमान् पुरुष उत्तर मुंह या पूर्व मुंह बैठकर मुण्डन करावे। केश, दाढ़ी, नख, उत्तरसंस्थ करके मुड़वावे। आनर्त, अहिच्छत्र, पाटलिपुत्र, अदिति, दिति और लक्ष्मीश्वर विष्णु के स्मरण से क्षौर के समस्त दोष नष्ट होते हैं।

## अथ रोगोत्पत्तौ नक्षत्रफलम्

अश्विन्यां[1] रोगोत्पत्तौ एकाहं नवदिनानि वा पञ्चविंशतिदिनानि वा पीडा १। भरण्यामेकादशैकविंशतिर्वा मासं वा मृत्युर्वा २। कृत्तिकायां दश नव वैकविंशतिर्वा ३। रोहिण्यां दश वा नव वा सप्त वा त्रीणि वाहानि ४। मृगे पञ्च नव वा त्रिंशद्वा ५। आर्द्रायां मृत्युर्वा दशाहं वा मासं वा ६। पुनर्वसौ सप्त नव वा मृत्युर्वा ७। पुष्ये सप्त वा मृत्युर्वा ८। आश्लेषायां मृत्युर्विंशतिस्त्रिंशद्वा नव वा दिनानि पीडा ९।

अश्विनी नक्षत्र में रोग की उत्पत्ति होने पर एक दिन या नव दिन अथवा पच्चीस दिन पीड़ा होती है १। भरणी में ग्यारह या इक्कीस या महीना भर अथवा मृत्यु होती है २। कृत्तिका में दस दिन या नव दिन अथवा इक्कीस दिन ३, रोहिणी में दस या नव या सात या तीन दिन ४, मृगशिरामें पांच या नव या तीस दिन ५, आर्द्रा में मृत्यु या दस दिन या महीने भर ६, पुनर्वसु में सात, नौ या मृत्यु ७, पुष्य में सात दिन या मृत्यु ८, आश्लेषा में मृत्यु या बीस दिन या तीस दिन या नव दिन पीड़ा होती है ९।

मघायां मृत्युर्वा सार्धमासं वा मासं वा विंशतिदिनानि वा पीडा १०। पूर्वाफल्गुन्यां मृत्युर्वाब्दं मासं वा पीडा पञ्चदश वा षष्टिर्वा दिनानि ११। उत्तरायां सप्तविंशतिः पञ्चदश सप्त वा दिनानि १२। हस्ते मृत्युरष्ट वा नव वा सप्त वा पञ्चदश वाहानि १३। चित्रायां पक्षमष्ट वा दश वा एकादश वाहानि १४।

मघा में मृत्यु या डेढ़ माह या एक माह या बीस दिन १०, पूर्वा फाल्गुनी में मृत्यु या वर्षभर या महीने भर या पन्द्रह दिन या साठ दिन ११, उत्तरा में सत्ताईस दिन या पन्द्रह दिन या सात दिन १२, हस्त में मृत्यु या आठ दिन या नव दिन या सात या पन्द्रह दिन १३, चित्रा में एक पक्ष या आठ या दस या ग्यारह दिन पीड़ा होती है १४।

---

१. श्रीपतिः—'स्वात्याश्लेषारौद्रपूर्वासु शाक्रे रोगोत्पत्तिर्जायते यस्य पुंसः। तद्भैषज्यव्यापृतो निष्प्रयत्नः स्याद् दुग्धाब्धेर्लब्धजन्मापि वैद्यः॥ व्याध्युत्पत्तिर्यस्य पौष्णे समैत्रे प्राणत्राणं जायते तस्य कृच्छ्रात्। वैश्वे सौम्ये रोगमुक्तिस्तु मासाद् विंशत्या स्याद् वासराणां मघासु॥ पक्षाद् हस्ते वासवे सद्विदैवे मूलाश्विन्योरग्निधिष्ण्ये नवाहात्। याम्ये त्वाष्ट्रे वैष्णवे वारुणे च नैरुज्यं स्यान्नूनमेकादशाहात्॥ आहिर्बुध्न्ये तिष्यसंज्ञे यमाख्ये प्राजापत्यादित्ययोः सप्तरात्रात्। रोगान्मुक्तिर्जायते मानवानां निःसन्दिग्धं जल्पितं गर्गमुख्यैः॥' इति।

स्वात्यां मृत्युर्वैकद्वित्रिचतुःपञ्चमासैर्वा दशदिनैर्वा रोगनाशः १५। विशाखायां मासं वा पक्षं वाष्टदिनं विंशतिदिनं वा पीडा १६। अनूराधायां दशरात्रमष्टाविंशतिरात्रं वा १७। ज्येष्ठायां मृत्युर्वा पक्षं वा मासं वैकविंशतिरात्रं वा पीडा १८। मूले मृत्युः पक्षं नवरात्रं विंशतिरात्रं वा पीडा १९।

स्वाती में मृत्यु या एक, दो, तीन, चार या पांच महीने या दस दिनों में रोग का नाश होता है १५। विशाखा में एक महीना, एकपक्ष या आठ दिन या बीस दिन पीड़ा होती है १६। अनुराधा में दस रात या अट्ठाइस रात १७, ज्येष्ठा में मृत्यु या एक पक्ष या एक मास या बीस रात तक पीड़ा होती है १८। मूल में मृत्यु या एक पक्ष या नव रात या बीस रात तक पीड़ा होती है १९।

पूर्वाषाढायां मृत्युर्वा द्वित्रिषडादिमासैर्विंशतिदिनैः पक्षेण वा रोगनाशः २०। उत्तराषाढायां सार्धमासं विंशतिरात्रं वा मासं वा २१। श्रवणे पञ्चविंशतिं दश वा एकादश वा षष्टिर्वाहानि २२। धनिष्ठायां दशरात्रं पक्षं मासं त्रयोदशरात्रं वा २३। शततारायां द्वादशैकादश वा २४। पूर्वाभाद्रपदायां मृत्युर्वा द्वित्र्यादिमासं वा दशरात्रं वा २५। उत्तराभाद्रपदायां सार्धमासं पक्षं सप्ताहं दशाहं वा २६। रेवत्यां ज्वराद्युत्पत्तौ दशाहमष्टाविंशतिरात्रं वा पीडा २७।

पूर्वाषाढ़ा में मरण या दो, तीन, छ आदि महीनों में, बीस दिन या एक पक्ष में, रोग का नाश होता है २०। उत्तराषाड़ा में डेढ़ माह या बीस रात या महीने भर में रोग का नाश होता है २१। श्रवण में पचीस या दस या ग्यारह या साठ दिन २२, धनिष्ठा में दस रात, एक पक्ष या एक महीना या तेरह रात २३, शतभिषा में बारह या ग्यारह दिन २४, पूर्वाभाद्रपदा में मृत्यु, या दो तीन आदि महीने या दस रात २५, उत्तराभाद्रपदा में डेढ़ महीना, एक पक्ष, एक सप्ताह या दस दिन २६, रेवती में ज्वर आदि की उत्पत्ति होने पर दस दिन या अट्ठाइस रात तक पीड़ा होती है २७।

जन्मनक्षत्रे जन्मराशौ अष्टमचन्द्रे रोगोत्पत्तौ मृत्युः। 'अर्कादिवारे क्रमेण मघाद्वादश्यौ विशाखैकादश्यौ पञ्चम्यार्द्रे तृतीयोत्तराषाढे शततारापष्ठ्यौ अष्टम्यश्विन्यौ पूर्वाषाढानवम्यौ चेति त्रयाणां योगे मृत्युः।

जन्मनक्षत्र, जन्मराशि और अष्टम चन्द्रमा में रोग का आरंभ होने पर मृत्यु होती है। रविवार आदि में क्रम से अर्थात् रविवार को मघा द्वादशी, सोमवार को विशाखा एकादशी, मंगलवार को पंचमी आर्द्रा, बुधवार को तृतीया उत्तराषाढ़ा, बृहस्पतिवार को शतभिषा षष्ठी, शुक्रवार को अष्टमी अश्विनी, शनिवार को पूर्वाषाढ़ा नवमी इन तीन तीन के योग में रोगी की मृत्यु होती है।

एवमकादौ अनूराधाभरण्यौ आर्द्रोत्तराषाढे मघाशततारे विशाखाश्विन्यौ ज्येष्ठामृगौ श्रवणाश्लेषे पूर्वाभाद्रपदाहस्तौ चेन्मृत्युयोगः। अत्रोक्तास्तिथिवारनक्ष-

---

१. दैवज्ञमनोहर में मरणयोग कहा है—'उरगवरुणरौद्रा वासवेन्द्रत्रिपूर्वा यमदहनविशाखाः पापवारेण युक्ताः। तिथिषु नवमिषष्ठी द्वादशी वा चतुर्थी भवति मरणयोगो रोगिणां कालहेतुः॥' यहां चतुर्थी चतुर्दशी का उपलक्षण है। यथाह वसिष्ठः—'आश्लेषार्द्रात्रिपूर्वायमवरुणमरुच्छक्रतारानलाः स्युर्द्वादश्यां स्कन्दरिक्तातिथिषु च रविजार्कारवारेषु येषाम्। रोगः संजायते ते यमपुरमचिरात् प्राप्नुवन्त्येव चन्द्रे जन्मन्यष्टाख्यबन्धुव्ययभवनगते मृत्युलग्ने च राशौ॥' इति।

त्रशान्तयो विस्तृताः कार्याः। येषु नक्षत्रेषु मरणमुक्तं तत्र शान्तिरावश्यकी। अन्यत्र कृताकृता।

इसी तरह रविवार आदि में क्रम से अर्थात् रविवार को अनुराधा-भरणी, सोमवार को आर्द्रा-उत्तराषाढ़, मंगलवार को मघा-शतभिषा, बुध को विशाखा-अश्विनी, गुरुवार को ज्येष्ठा मृगशिरा, शुक्रवार को श्रवण आश्लेषा, शनि को पूर्वाभाद्रपदा-हस्त हो तो मृत्यु हो। इसमें कही हुई, तिथिवार और नक्षत्र की शान्ति विस्तार से करनी चाहिये। जिन नक्षत्रों में मरण कहा है उसमें शान्ति आवश्यक है। अन्यत्र शान्ति करे या नहीं करे।

## अथ सर्वनक्षत्रसाधारणः शान्तिप्रयोगः

देशकालौ संकीर्त्य 'ममोत्पन्नव्याधेर्जीवच्छरीराविरोधेन समूलनाशार्थममुक-नक्षत्रशान्तिं करिष्ये' इति संकल्प्य गणेशपूजादि आचार्यं वृत्वा कुम्भोपरि पूर्णपात्रे द्वादशदले नक्षत्रदेवताप्रतिमां सौवर्णीं संपूज्य द्वादशदलेषु संकर्षणादि-द्वादशमूर्तीर्द्वादशादित्यान्वा संपूज्य दूर्वासमित्तिलक्षीराज्यैर्गायत्र्या तत्तद्देवतायै अष्टोत्तरशतं हुत्वा मरणादिपीडाधिक्योक्तौ सहस्रं हुत्वा दध्योदनबलिं दत्त्वाऽऽ-चार्याय गां प्रतिमां च दद्यादिति [1]संक्षेपः।

देशकाल को कहकर 'मेरे उत्पन्न व्याधि के जीते हुए शरीर के अविरोध से समूल नाश के लिए मैं अमुक नक्षत्र की शान्ति करूँगा' ऐसा संकल्प करके गणेश-पूजा आदि आचार्यवरणपर्यन्त करके कलश पर पूर्णपात्र में बारह दल में नक्षत्र की सोने की देवप्रतिमा में पूजा कर बारहों दलों में संकर्षण आदि बारहों मूर्ति या बारह सूर्यों की पूजा कर दूब, समिधा, तिल, दूध और घृत से गायत्री-मन्त्र से उन-उन देवताओं के लिए एक सौ आठ हवन करे। मरण आदि पीड़ा जहां अधिक कही गई है वहां हजार आहुति देकर दही भात की बलि देकर आचार्य को गौ और प्रतिमा दे यह संक्षेप से कहा है।

शान्तिमयूखादौ नक्षत्रभेदेन हविर्मन्त्रबलिधूपादिभेदस्तिथिवारदेवतामन्त्रादि-भेद इत्यादिविस्तरो द्रष्टव्यः। कर्मविपाके जातवेद इत्यृचोऽयुतं लक्षं वा जपो रुद्रे नमकानुवाकैः सहस्रकलशस्नानं वा विष्णौ सहस्रावृत्तपुरुषसूक्तेन सहस्रघट-स्नानं वा ज्वरनाशकम्। यद्वा श्रीभागवतस्थज्वरस्तोत्रजपः[2]।

---

१. वसिष्ठोक्त संक्षिप्त शान्ति यों है—'ऋक्षेशरूपं कनकेन कृत्वा तल्लिङ्गमन्त्रैश्च सुगन्धिपुष्पैः। वस्त्राक्षतैर्गुग्गुलुधूपदीपनैवेद्यताम्बूलफलैश्च सम्यक्॥ पूजां च कृत्वाऽऽमयनाशनाय द्विजाय दद्याद्वलं शिवाय।' विस्तृत शान्ति शान्तिसारादि ग्रन्थों में देखें।

२. वैष्णवज्वर से भयभीत होकर माहेश्वरज्वर श्रीविष्णु के शरण में गया और उसने उनकी स्तुति की, यही ज्वरस्तोत्र है जैसे—'ज्वर उवाच, नमामि त्वानन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम्। विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद् ब्रह्म ब्रह्मलिङ्गं प्रशान्तम्॥१॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः। तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये॥२॥ नानाभावैर्लीलयैवोपपन्नैर्देवान् साधूँल्लोकसेतून् बिभर्षि। हंस्युन्मार्गान् हिंसया वर्तमानान् जन्मैतत्ते भारहाराय भूमेः॥३॥ तप्तोऽहं ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण। तावत्तापो

शान्तिमयूख आदि में नक्षत्र के भेद से हविष्य-मन्त्र-बलि-धूप आदि का और तिथि-वार-देवता तथा मन्त्र आदि का भेद इत्यादि विस्तार से देखना चाहिये। कर्मविपाक में 'जातवेद' इस ऋचा का दस हजार या एक लाख जप, नमकानुवाक से एक हजार कलश से रुद्र का स्नान अथवा हजार आवृत्ति पुरुषसूक्त से हजार घड़े से विष्णु का स्नान ज्वरनाशक है। अथवा भागवत में स्थित ज्वरस्तोत्र का जप करे।

## अथ सर्वरोगनाशकानि

रोगानुसारेण लघुरुद्रमहारुद्रातिरुद्राणां जपोऽभिषेको[1] वा। विष्णुसहस्रनामस्तोत्रस्य शतं सहस्रमयुतं वा जपः। [2]सौरजपः सूर्यनमस्काराद्यर्घ्यदानानि मुञ्चामि त्वेति सूक्तजपोऽच्युतानन्तगोविन्देति नामत्रयजपो मृत्युंजयजपश्च रोगानुसारेणेति सर्वरोगहराणि।

रोग के अनुसार लघुरुद्र, महारुद्र और अतिरुद्र का जप या अभिषेक, विष्णुसहस्रनामस्तोत्र का सौ बार या हजार बार जप, सूर्य मन्त्र का जप, सूर्यनमस्कार, सूर्य को अर्घ्य देना, 'मुञ्चामि त्वा' इस सूक्त का जप, अच्युतानन्द गोविन्द इन तीन नामों का जप और मृत्युंजयजप रोग के अनुसार करे। ये सब रोगों के हरण करने वाले हैं।

---

देहिनां तेऽङ्घ्रिमूलं नो सेवेरन् यावदाशानुबद्धाः ॥४॥ श्रीभगवानुवाच, त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वराद् भयम्। यो नौ स्मरति संवादं तस्य त्वन्नो भवेद् भयम् ॥ ५ ॥ इति। भा० दश० उत्त० अ० ६३ श्लो० २५–२९ )

१. शिव ने पार्वती से रुद्राभिषेक का माहात्म्य बतलाते हुये कहा है—'सर्वकर्माणि सन्त्यज्य सुशान्तमनसो यदा। रुद्राभिषेकं कुर्वन्ति दुःखनाशो भवेद् ध्रुवम् ॥ जलेन वृष्टिमाप्नोति व्याधिशान्त्यै कुशोदकैः। दध्ना च पशुकामाय श्रियै इक्षुरसेन च ॥ मध्वाज्येन धनार्थी स्यान्मुमुक्षुस्तीर्थवारिणा। पुत्रार्थी पुत्रमाप्नोति पयसां चाभिषेचनात् ॥ वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याऽङ्गना। सद्यः पुत्रमवाप्नोति पयसां चाभिषेचनात् ॥ श्रीरुद्रस्य प्रसादेन बद्धो मुच्येत बन्धनात्। भीतो भयात् प्रमुच्येत वन्ध्या पुत्रमवाप्नुयात् ॥ मूर्खो वाचामधीशः स्याद्दरिद्रो धनिनां वरः। मूको वक्ता भवेत् पङ्गुर्गिरिं लंघयते द्रुतम् ॥ मनसा कर्मणा वाचा शुचिः संगविवर्जितः। कुर्याद्रुद्राभिषेकं च प्रीतये शूलपाणिनः ॥ सर्वान्कामानवाप्नोति लभते परमां गतिम्। नन्दते च कुलं पुंसां श्रीमच्छम्भुप्रसादतः ॥ रुद्राभिषेककर्तॄणां विप्राणां प्रीतिहेतवे। गोभूहिरण्यवासांसि सशक्यं प्रतिपादयेत् ॥ वित्तशाठ्यं न कर्तव्यं कर्मण्यस्मिन् द्विजातिभिः। दातव्यं द्विजवर्येभ्यो गृह्णीयादाशिषः शुभाः। एवं कृते मनुष्याणां वाञ्छासिद्धिः सुनिश्चिता। मोदन्ते बन्धुभिर्लोके लभन्ते परमं पदम् ॥' इति। पूर्वजन्मकृत पाप ही रोग का रूप धारण कर प्राणी को पीडित करता है—'पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते'। रुद्रजपादि से पाप का नाश निश्चित है—'रुद्राध्यायी मुच्यते सर्वपापैः'। पाप के नाश होने पर रोग का नाश स्वतः हो जाता है। रुद्र, रुद्री, लघुरुद्र, महारुद्र और अतिरुद्र—जपात्मक, अभिषेकात्मक और होमात्मक, इस तरह पांच प्रकार का होता है। इनका विधान रुद्रकल्पद्रुमादि ग्रन्थों में देखें।

२. सूर्याथर्वशीर्ष में सूर्यमन्त्र के जप का फल है—'सूर्याभिमुखं जप्त्वा महाव्याधिभयात्प्रमुच्यते। अलक्ष्मीर्नश्यति। अभक्ष्यभक्षणात्पूतो भवति। अपेयपानात्पूतो भवति। अगम्यागमनात्पूतो भवति। व्रात्यसम्भाषणात्पूतो भवति। मध्याह्ने सूर्याभिमुखं पठेत्। सद्यः पञ्चमहापापात् प्रमुच्यते।'''हस्तादित्ये जपति स महामृत्युं तरति।' इत्यादि उपनिषद् वाक्यों के अनुसार सौर मन्त्र के जप से पाप के नाश होने पर रोग का विनाश अवश्य होता है। 'आरोग्यं भास्करादिच्छेत्' इति।

### अथ भेषजभक्षणे नक्षत्राणि

ज्येष्ठामूलश्रुतिस्वातीमृदुक्षिप्रपुनर्वसौ ।
गुरुशुक्रेन्दुवारेषु शस्तं भेषजभक्षणम् ॥

ज्येष्ठा, मूल, श्रवण, स्वाती, मृदु-क्षिप्र-संज्ञक-नक्षत्र, पुनर्वसु, गुरु, शुक्र और सोमवार को औषधि का भक्षण उत्तम है।

### अथ रोगमुक्तस्नानमुहूर्तः

रिक्तायां चरलग्ने मिश्रक्षिप्रेन्द्रमूलपूर्वासु ।
चित्राभरणीश्रवणत्रयभे रविकुजबुधार्कजे स्नायात् ॥
वैधृतौ च व्यतीपाते भद्रायां संक्रमे तथा ।
रोगमुक्तस्नानमत्र चन्द्रताराबलं न वा ॥

रोग से मुक्त—रिक्ता चरलग्न में, मिश्र-क्षिप्र-ज्येष्ठा-मूल और पूर्वा में, चित्रा-भरणी, श्रवण से तीन नक्षत्र में, रवि-मंगल बुध और शनिवार को स्नान करे। वैधृति, व्यतिपात, भद्रा तथा संक्रान्ति में रोग से मुक्त का स्नान है। इसमें चन्द्रबल और ताराबल रहे चाहे न रहे।

### अथाभ्यङ्गविचारः

भद्रासंक्रमपातवैधृतिसितेज्यार्कारषष्ठ्यादिषु
श्राद्धाहे प्रतिपद्द्वये परिहरेद्धेतुं विनाभ्यञ्जनम्[1]।
माङ्गल्यं विजयोत्सवोऽब्दवदनं दीपावलीहेतवो-
ऽभ्यङ्गस्याथ बुधाम्बुपर्क्षपितृभाभ्यङ्गात्पतिघ्न्यङ्गना ॥

अस्यापवादः—

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
द्रव्यान्तरयुतं तैलं पक्वतैलं न दुष्यति ॥
किंचिद्गोघृतयुक्तं वा विप्रपादरजोन्वितम् ।
नित्याभ्यङ्गे च नो दुष्टं तैलं निन्द्येऽह्नि सर्वदा ॥
रवौ पुष्पं गुरौ दूर्वां भौमवारे च मृत्तिकाम् ।
भार्गवे गोमयं क्षिप्त्वा तैलस्नानं सुखावहम् ॥

भद्रा, संक्रान्ति, व्यतिपात, वैधृति, शुक्लपक्ष, रविवार, मंगलवार, षष्ठी आदि में, श्राद्ध आदि के दिन, दोनों प्रतिपदा में विना कारण के अभ्यंग का त्याग करे। मंगलकार्य, विजयोत्सव, वर्ष का

---

१. अभ्यञ्जनं = तेल की मालिश। व्यासः—'पञ्चमी दशमी चैव तृतीया च त्रयोदशी। अभ्यङ्गात्स्पर्शनात् पानाद्यस्तु तैलं निषेवते। चतुर्णां तस्य वृद्धिः स्याद्धनापत्यबलायुषाम्।' कात्यायनः—'पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ। तैलेनाभ्यज्यमानस्तु चतुर्भिः परिहीयते ॥' गार्ग्यः—'सप्तम्यां न स्पृशेत्तैलं नवम्यां प्रतिपद्यपि। दर्शे च पौर्णमास्यां च पञ्चस्वपि च पर्वसु ॥' इसका अपवाद प्रचेता का—'सार्षपं गन्धतैलं च' इत्यादि वचन मूल में अंकित है। इसी प्रकार मंगल कार्य में तैलाभ्यङ्ग का दोष नहीं होता—'माङ्गल्यं विद्यते स्नानं वृद्धिपूर्वोत्सवेषु च। स्नेहपात्रसमायुक्तं मध्याह्नात् प्राक् तदिष्यते ॥' इति।

आरम्भ और दीपावली, ये अभ्यंग के कारण हैं, यानी इनमें अभ्यंग अवश्य करे । बुध, वरुण नक्षत्र, पितृनक्षत्र में स्त्री अभ्यंग करे तो पति का नाश करती है । इसका अपवाद है —सरसों का तेल, गन्धयुक्त तेल, पुष्पों से वासित तेल, दूसरे द्रव्यों से मिला हुआ तेल और पकाया हुआ तेल, इनमें दोष नहीं है । थोड़ा गोघृत से मिला हुआ या ब्राह्मण के चरणरेणु से युक्त तेल नित्य लगाने में दूषित नहीं है । निन्द्य दिन में सर्वदा लगाना हो तो रविवार को पुष्प, गुरुवार को दूर्वा, भौमवार को मिट्टी और शुक्रवार को गोवर डालकर उस तेल को लगाकर स्नान करना सुखदायक होता है ।

## अथ गृहारम्भविचारः

वैशाखे फाल्गुने पौषे श्रावणे मार्गशीर्षके ।
गृहारम्भप्रवेशौ[1] स्तः स्तम्भोच्छ्रायश्च शस्यते ॥
ज्येष्ठकार्तिकमाघांश्च शुभदान् प्राह नारदः ।
तृणगेहं[2] सर्वमासे पौषे मुख्यगृहं न हि ॥
हस्तत्रयध्रुवमृदुधनिष्ठाद्वयपुष्यभे ।
रिक्ता अर्ककुजौ त्यक्त्वा गृहं कुर्याद्विशेदपि ॥
शिलान्यासं च [3]खातं च श्रुत्यधिक्रूरमित्रभैः ।
आश्लेषामूलपुष्यार्कमृगान्त्यध्रुवभैरपि ॥

वैशाख-फाल्गुन-पूस-श्रावण और अगहन में गृहारम्भ और गृहप्रवेश दोनों होते हैं तथा खम्भेका गाड़ना भी उत्तम होता है । ज्येष्ठ कार्तिक और माघमास को नारद ने शुभ कहा है । फूस का घर सब महीनों में बनता है । मुख्य गृह पौषमास में नहीं बनाना चाहिये । हस्त से तीन नक्षत्र ध्रुव-मृदु-संज्ञक-नक्षत्र तथा धनिष्ठा से दो नक्षत्र और पुष्य में, रिक्ता तिथि, रविवार तथा मङ्गलवार को छोड़ कर गृहनिर्माण और गृहप्रवेश करे । शिलान्यास, नेव की खुदाई, श्रवण और अश्विनी क्रूर-मित्र-नक्षत्र, आश्लेषा-मूल-पुष्य-हस्त और मृगशिरा नक्षत्रों में उत्तम होता है ।

केन्द्राष्टमे पापहीने वेश्मकृत्यं स्थिरोदये ।
धनिष्ठापञ्चके वर्ज्यः स्तम्भोच्छ्रायः सदा बुधैः ॥
नेष्टानि सप्त सूर्यर्क्षादिष्टान्येकादशाष्टमात् ।

---

१. ज्योतिर्निबन्ध में बादरायण का वचन है—'वैशाखे फाल्गुने पौषे श्रावणे मार्गशीर्षके । सूत्रारम्भः शिलान्यासः स्तम्भारम्भः प्रशस्यते ॥' नारदः—'सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः । मासाः स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः ॥' अत्र वृषसिंहवृश्चिकाः वैशाखश्रावणकार्तिकाः सौरा ज्ञेयाः इति कालादर्शः । दैवज्ञवल्लभे—'शोकं धान्यं पञ्चतां निःपशुत्वं स्वापं नैःस्वं संगरं भृत्यनाशम् । स्वं श्रीप्राप्तिं वह्निभीतिं च लक्ष्मीं कुर्युश्चैत्राद्या गृहारम्भकाले ॥' इति ।

२. राजमार्तण्डेऽपि—'आयव्ययौ मासशुद्धिं तृणागारे न चिन्तयेत् । शिलान्यासादि नो कुर्यात्तथागारे पुरातने ॥' व्यवहारतत्त्वे—'निषिद्धेष्वपि कालेषु स्वानुकूले शुभे दिने । तृणकाष्ठगृहारम्भे मासदोषो न विद्यते ॥' इति ।

३. शिल्पशास्त्रे—'कन्यासिंहे तुलायां भुजगपतिमुखं शम्भुकोणेऽग्निखातं वायव्ये स्यात्तदास्यं त्वलिधनमकरे ईशखातं वदन्ति । कुम्भे मीने च मेषे निर्ऋतिदिशि मुखं खातवायव्यकोणे चाग्नेः कोणे मुखं वै वृषमिथुनगते कर्कटे रक्ष खातम् । ॥' इति ।

दशशिष्टानि नेष्टानि चक्रे स्युर्वृषवास्तुनि[1] ॥
यद्वा तुर्यात्पञ्चदशात् त्रयोविंशतिसंख्यकात् ।
वेदाब्धिपञ्च नेष्टानि गृहारम्भप्रवेशयोः ॥
स्नानपाकस्वापवस्त्रभुजीनां पशुकोशयोः ।
देवानां च गृहान्कुर्यात्पूर्वादौ मुख्यवेश्मनः ॥

केन्द्र, अष्टम पापग्रह से रहित हो और स्थिर लग्न का उदय हो तो गृहनिर्माण कार्य शुभकर होता है। धनिष्ठा से रेवती नक्षत्र तक पञ्चक में बुद्धिमान् पुरुष खम्भे का गाड़ना सदा त्याग दे। सूर्य के नक्षत्र से सात नक्षत्र अनिष्टकर और ग्यारह नक्षत्र इष्टप्रद हैं एवं शेष दस अनिष्टकर होते हैं। यह वृष वास्तुचक्र में होता है। अथवा सूर्य के चौथे नक्षत्र से चार, पन्द्रह में से चार और तेईस में से पांच नक्षत्र, गृहारम्भ और गृहप्रवेश में उत्तम हैं। स्नान, पाक, शयन, वस्त्र, भोजन, पशु, कोश और देवता का घर मुख्य गृह से पूर्वादि दिशा में बनवावे।

उदग्दिशं ध्रुवमुखाज्ज्ञात्वा प्राचीं प्रसाधयेत् ।
कोणाध्वभ्रमकूपद्वाःपङ्कस्तम्भद्रुमामरैः ॥
विद्धा दुष्टा द्वार्न दोषो गृहोच्चद्विगुणान्तरे ।
सूत्रं भित्तिशिलान्यासं[2] स्तम्भस्यारोपणं तथा ॥
आग्नेयीं दिशमारभ्य कुर्यादित्याह कश्यपः ।
अन्यवेश्मस्थितं दारु नान्ये वेश्मनि योजयेत् ॥
नूतने नूतनं काष्ठं जीर्णे जीर्णं प्रशस्यते ।
द्वात्रिंशाधिकहस्ते च तृणागारे चतुर्मुखे ॥
न तत्र चिन्तयेद्धीमान् गुणानायव्ययादिकान् ।

ध्रुव के मुख से उत्तर दिग्ज्ञान कर पूर्व दिशा का निश्चय करे। कोण, रास्ता भ्रम, कुँआं, द्वार, कीच, खम्भा, वृक्ष और देवमन्दिर से विद्ध हो तो वह द्वार दोषयुक्त होता है। घर की ऊँचाई से दूने अन्तर पर हो तो कोई दोष नहीं होता। कश्यप जी कहते हैं कि सूत, भीति, शिलान्यास और खम्भे का गाड़ना, यह सब अग्निदिशा से प्रारम्भ करे। दूसरे घर की लकड़ी दूसरे घर में न लगावे। नये घर में नई लकड़ी का प्रयोग करे और पुराने घर में पुरानी लकड़ी का। बत्तीस हाथ से अधिक वाले चौमुखे फूस के घर में बुद्धिमान् पुरुष आय-व्यय आदि गुणों की चिन्ता न करे।

## अथ गृहप्रवेशः

वास्तुपूजाविधिः कार्यः पूर्वमेव प्रवेशतः ।
मैत्रध्रुवक्षिप्रचरमूलभैर्धनपुत्रकृत् ॥

---

१. वास्तुशास्त्र में वृषवास्तु चक्र की प्रशस्ति यों है—'खाते चैव शिलान्यासे वृषचक्रं प्रशस्यते ।' इति ।

२. तदुक्तं शान्तिरत्ने—'चतुर्हस्तप्रमाणं तु खात्वा गर्तं समन्ततः । कुम्भोदकैः सेचयेयुः शान्तिपाठपुरस्सरम् ॥ तत ईशानदिग्भागे साक्षतं रत्नपञ्चकम् । साज्यं कुम्भं स्थिरं मुक्त्वा वास्तुपूजनपूर्वकम् ॥ कुम्भोपरि शिलान्यासः कर्तव्यस्तदनन्तरम् ।' इति ।

'वास्तुशान्तिप्रयोगोऽन्यतो ज्ञेयः ।

वास्तुशान्तिर्दिवैवोक्ता प्रवेशस्तु निशि क्वचित् ।
गृहप्रवेशः[2] प्रारम्भोदितमासादिकैः शुभः ॥
क्वचिन्माघोर्जशुक्रेषु कैश्चिदुक्तो मृदुध्रुवे ।
श्रेष्ठः क्षिप्रैश्चरैर्मध्यो निन्द्यस्तीक्ष्णोग्रमिश्रभैः ॥
त्रिषडाये खलैः सद्भिः षडष्टव्ययवर्जितैः ।
शुद्धेऽम्बुरन्ध्रे च तनौ विजनुर्लग्नभाष्टमे ॥

---

१. मत्स्यपुराणे—'जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने । नवप्रासादभवने प्रासादपरिवर्तने ॥ द्वाराभिवर्तने तद्वत्प्रासादेषु गृहेषु च । वास्तूपशमनं कुर्यात् पूर्वमेव विचक्षणः ॥ कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम् । दत्त्वा हिरण्यवसनानि तथा द्विजेभ्यो माङ्गल्यशान्तिनिलयं स्वगृहं विशेच्च ॥ गृह्योक्तहोमविधिना बलिकर्म कुर्यात् प्रासादवास्तुशमने च विधिर्य उक्तः । संतर्पयेद् द्विजवरानथ भक्ष्यभोज्यैः शुक्लाम्बरः स्वभवनं प्रविशेत् सुरूपम् ॥' इति ।

२. नारदः—'माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः । प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः ॥ अकपाटमनाच्छन्नमदत्तबलिभोजनम् । गृहं न प्रविशेद्धीमानापदामाकरो हि तत् ॥' सौम्यः= अगहन । गृहप्रवेश में चान्द्रमास का फल, जैसा वसिष्ठ ने कहा है—'माघेऽर्थलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च । चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे पशुपुत्रलाभः ॥ ज्येष्ठे च मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च । शुक्ले च पक्षे सुतरां विवृद्धयै कृष्णे च यावद्दशमीं च तावत् ॥'—

गृहप्रवेश में वसिष्ठ ने सौरमान को अग्राह्य बतलाया है—'मृगादिषड्राशिषु संस्थितेऽर्के नवप्रवेशः शुभदः सदैव । कुम्भं विनान्येष्वपि केचिदूचुर्न सौरमिष्टं खलु सन्निवेशे ॥' अर्थात् मकर आदि छ राशियों में सूर्य के रहने पर नूतन गृहप्रवेश सदा शुभदायक है ।—

कोई आचार्य कुम्भ को छोड़कर अन्य ( कर्कादि छ ) राशियों में सूर्य के स्थित होने पर नव गृहप्रवेश करे, ऐसा कहते हैं । विरुद्ध फल वाले पौष चैत्रादि-चान्द्रमासों में यदि विहित संक्रान्ति हो तो सौरमान गृहप्रवेश में शुभप्रद नहीं है । कुम्भसंक्रान्ति का निषेध फाल्गुन पूर्णिमा के बाद कृष्णादि चान्द्रमास की गणना से चैत्रमासविषयक और मतान्तर में कर्कादि संक्रान्ति का निर्देश सुपूर्वगृहप्रवेशविषयक या तृणागारप्रवेशविषयक—जानना चाहिये ।—

वसिष्ठ ने त्रिविध गृहप्रवेश का लक्षण बतलाया है—'अपूर्वसंज्ञः प्रथमः प्रवेशो यात्रावसाने तु सुपूर्वसंज्ञः । द्वन्द्वाभयस्त्वग्निभयादिजातः प्रवेश एवं त्रिविधः प्रदिष्टः ॥' ब्राह्मणों के वेदध्वनि के साथ पुष्प तोरणादि से सुशोभित गृह में प्रवेश करे, जैसा कि राजमार्तण्ड में बतलाया है—'भूरिपुष्पनिकरं सतोरणं तोयपूर्णकलशोपशोभितम् । गन्धपुष्पबलिपूजितामरं ब्राह्मणध्वनियुतं विशेद् गृहम् ॥'—

वसिष्ठ ने प्रवेश के अयोग्य गृह का निर्देश किया है—'यद्वास्तुपूजारहितं त्वदत्तबलिं त्वनाच्छन्नगृहं विरूपम् । कपाटहीनं न विशेद्यतस्तत्सर्वापदामालय एव तत्स्यात् ॥' नारद ने भी कहा है—'अकपाटमनाच्छन्नमदत्तबलिभोजनम् । गृहं न प्रविशेद् धीमान् विपदामालयो हि तत् ॥'—

श्रीपति ने प्रवेश के बाद की विधि बतलायी है—'ततो नृपो विप्रसुहृत्पुरोधसः शिल्पज्ञभूगोलविदश्च लिङ्गिनः । धनैश्च रत्नैः पशुभिः समर्चयेत् सहान्धदीनान् पुरवासिनस्तथा ॥' इति । विशेष जानकारी ज्योतिष-ग्रन्थों से करें ।

ऋक्षाणि पञ्च सूर्यर्क्षान्नेष्टान्यष्टचतुर्दशात् ।
शेषभानि शुभान्येवं प्रवेशे घटचक्रकम् ॥ इति वास्तुप्रकरणम् ।

गृहप्रवेश से पहिले ही वास्तुपूजा की विधि कर लेनी चाहिये। अनुराधा, ध्रुव-क्षिप्र-चर-संज्ञक-नक्षत्र, एवं मूल नक्षत्र में गृह का प्रवेश धन-पुत्र-दायक होता है। वास्तुशान्ति विधि ग्रन्थान्तर से जाननी चाहिये। वास्तुशान्ति दिन में ही करनी चाहिये। प्रवेश तो कहीं रात में कहा हैं। गृह-प्रवेश प्रारम्भ में कहे हुए महीनों में शुभकारक है। कहीं किसी ने माघ कार्तिक और ज्येष्ठ में गृह-प्रवेश कहा है। गृहप्रवेश मृदु-ध्रुव-संज्ञक नक्षत्रों में श्रेष्ठ, क्षिप्र-चर-संज्ञक नक्षत्र में मध्यम, तीक्ष्ण-उग्र और मिश्रसंज्ञक नक्षत्रों में निन्द्य है। तृतीय षष्ठ और एकादश में पापग्रह हों तथा सौम्यग्रह षष्ठ अष्टम और द्वादश स्थान में नहीं हों और चतुर्थ सप्तम शुद्ध, ऐसा लग्न हो तथा जन्म लग्न एवं जन्म राशि से अष्टम लग्न न हो। सूर्य नक्षत्र से पांच नक्षत्र और चौदहवें नक्षत्र से आठ नक्षत्र अनिष्टकर होते हैं, बाकी नक्षत्र शुभकारक होते हैं, इस तरह गृहप्रवेश में घटचक्र कहा है। वास्तु-प्रकरण समाप्त।

## अथ धनाद्यर्थंगमनम्

श्रुतिद्वयाश्विपुष्यान्त्यानुराधामृगहस्तभे ।
पुनर्वसौ गोचरेष्टप्रदवारे व्रजेन्नरः ॥
अभिजिद्भं गमे श्रेष्ठं दक्षिणाशां विना क्षणः ।
मघाचित्रात्रयाश्लेषाभरण्यार्द्राः सकृत्तिकाः ॥
पूर्वाभाद्रा च नेष्टाः स्युः प्रयाणे जन्मभं तथा ।
त्यजेद्रिक्तापर्वषष्ठयष्टमीद्वादशिकास्तिथीः[1] ॥

श्रवण से दो नक्षत्र, अश्विनी, पुष्य, रेवती, अनुराधा, मृगशीर्ष, हस्त और पुनर्वसु में तथा गोचर में इष्ट देने वाले वार में, धन आदि के लिये यात्रा करनी चाहिये। दक्षिण दिशा को छोड़कर अभिजित् नक्षत्र और अभिजित् मुहूर्त यात्रा में उत्तम है। मघा चित्रा से तीन, आश्लेषा-भरणी-आर्द्रा-कृत्तिका-पूर्वभाद्रपदा तथा जन्मनक्षत्र यात्रा में शुभकारक नहीं है। रिक्ता-पर्व-षष्ठी-अष्टमी-द्वादशी, ये तिथियां यात्रा में नेष्ट हैं।

कृत्तिकाभरणीपूर्वामघानां घटिकाः क्रमात् ।
एकविंशतिसप्ताथ षोडशैकादश त्यजेत् ॥
ज्येष्ठाश्लेषाविशाखासु स्वात्यां चापि चतुर्दश ।

---

१. प्रत्येक तिथियों के वसिष्ठोक्त फल यों है—'वलक्षपक्षे प्रतिपत्प्रयाणे मङ्गप्रदा वा निधनप्रदा वा। यशस्करी भूरिधनप्रदा च या पञ्चमी मृत्युकरी च षष्ठी ॥ सप्तमी विजयदा ह्यथाष्टमी शोक-दुःखभयदामयप्रदा। सर्वदुःखशमनी यशस्करी लाभदा च दशमी निरन्तरम् ॥ पशुप्रदा मानकरी सुगन्धरक्ताम्बरानेकशुभप्रदा स्यात्। एकादशी चित्रमृगप्रभूता धान्याकरा ह्युत्तमवस्तुदा स्यात् ॥ भूरि-भूतिनाशिनी भूरिशर्महारिणी भूरिभीतिदायिनी द्वादशी प्रभञ्जदा। त्रयोदशी सुभोगदा विपक्षपक्ष-नाशिनी विनाशदाथ पूर्णिमा यशःक्षयं करोत्यमा ॥' वलक्षपक्षः=शुक्लपक्षः। कृष्णपक्ष की प्रतिपदा यात्रा में उत्तम है, जैसा कि कहा है—'प्रतिपत्सु प्रयातानां सिद्धिरेव न संशयः' इति।

मृगोमंते संकटेऽपि सर्वां स्वातीं मघां [1]त्यजेत् ॥
भरण्याः पूर्वमर्धं च चित्राश्लेषान्तकोत्तरम् ।

कृत्तिका, भरणी, तीनों पूर्वा, मघा, इन नक्षत्रों की क्रम से इक्कीस, सात, सोलह और ग्यारह घड़ियां वर्जित हैं। ज्येष्ठा, आश्लेषा, विशाखा, स्वाती, इन नक्षत्रों की चौदह घड़ियां भी वर्जित हैं। भृगु के मत से संकट में भी समस्त स्वाती और मघा यात्रा में त्याग योग्य है। भरणी का पूर्वार्ध, चित्रा एवं आश्लेषा का उत्तरार्ध यात्रा में त्याज्य है।

## अथ वारशून्यविचारः

वारशूलः[2] सोमशनी प्राच्यामीज्यस्तु दक्षिणे ॥
रविशुक्रौ प्रतीच्यां स्यादुदीच्यां बुधमङ्गलौ ।
पूर्वादिदिक्षु मेषाद्याः क्रमात् त्रिश्चन्द्रराशयः ॥
सम्मुखो[3]दक्षिणोऽब्जः सन् पृष्ठे वामेऽतिनिन्दितः ।

सोम और शनिवार को पूर्व, गुरुवार को दक्षिण, रविवार तथा शुक्रवार को पश्चिम, बुधवार एवं मङ्गलवार को उत्तर दिशा का शूल होता है। पूर्व दिशा के क्रम से मेष आदि चन्द्र राशि को तीन आवृत्ति करके जानना चाहिये—अर्थात् मेष का चन्द्रमा पूर्व में, वृष का दक्षिण दिशा में, मिथुन का पश्चिम में, कर्क का उत्तर में, इसी प्रकार फिर आवृत्ति करके जानें। चन्द्रमा सम्मुख एवं दक्षिण हो तो यात्रा में उत्तम है। पीठ की ओर और वाम भाग में हो तो निन्द्य जानें।

---

१. इन नक्षत्रों में घड़ियों का त्याग आवश्यक यात्रा के लिये है, जैसा कि भारद्वाज ने कहा है—'निषिद्धेष्वपि ऋक्षेषु त्यक्त्वा दुष्टघटीः क्रमात् । तदन्त्या घटिका ग्राह्या आवश्यगमने सति ॥' इति ।

२. नारदः—'न मन्देन्दुदिने प्राचीं न व्रजेद्दक्षिणां गुरौ । सिताकर्योर्न प्रतीचीं नोदीचीं ज्ञारयोरपि ॥' वशिष्ठोक्त नक्षत्रशूल—'पुरुहूतदिशं पुरन्दरर्क्षे नेयाद्याम्यदिशं त्वजाङ्घ्रिधिष्ण्ये । ज्वलनाप्यदिशं पितामहर्क्षे शूलाख्यान्यथ सौम्यमर्यमर्क्षे ॥' पितामहर्क्षे = रोहिणीनक्षत्रे, सौम्यं=सोम देवताकमुत्तरदिशम् । वसिष्ठ ने शूलसंज्ञक वार और नक्षत्र का फल बतलाया है—'शूलसंज्ञानि धिष्ण्यानि शूलसंज्ञाश्च वासराः । यायिनां मृत्युदाः शीघ्रमथवा चार्थहानिदाः ॥'—

वारशूल का गुरूक्त परिहार—'सूर्यवारे घृतं प्राश्य सोमवारे पयस्तथा । गुडमङ्गारके वारे बुधवारे तिलानपि ॥ गुरुवारे दधि प्राश्य शुक्रवारे यवानपि । माषान् भुक्त्वा शनेर्वारे गच्छञ्शूले न दोषभाक् ॥' तथा—'ताम्बूलं चन्दनं मृच्च पुष्पं दधि घृतं तिलाः । वारशूलहराण्यर्काद्दानाद्धारणतोऽदनात् ॥' इति ।

३. कृत्यामृत में सम्मुख चन्द्रमा का फल है—'करणभगणदोषं वारसंक्रान्तिदोषं तिथिजकुलिकदोषं योगिनीशूलदोषम् । रविसितकुजदोषं यामयामार्द्धदोषं हरति सकलदोषं चन्द्रमाः सम्मुखस्थः ॥' यात्रा में नारदोक्त शुभ शकुन — 'प्रज्वलाग्निश्च तुरगनृपासनपुराङ्गनाः । गन्धपुष्पाक्षतच्छत्रचामरान्दोलिका गजाः ॥ भक्ष्येक्षवङ्कुग्यमृत्सान्नमध्वाज्यदधिगोघृताः । मत्स्यकांसुराधौतवस्त्रशङ्खरवस्वनाः ॥ पण्यस्त्रीपूर्णकलशरत्नभृङ्गारदर्पणम् । भेरीमृदङ्गपटहशङ्खवीणादिनिःस्वनाः । वेदमङ्गलघोषाः स्युर्यानि वै कार्यसिद्धिदाः ॥' कश्यपोक्त अशुभसूचक शकुन — 'औषधक्लीबबधिरैर्जटिलोन्मत्तपावकैः । अभ्यक्ताङ्गारकाष्ठास्थिचर्मान्धचिररोगिभिः ॥ तैलकार्पासलवणगुडतक्रतृणोरगैः । पङ्ककुब्जैःकपदकमुक्तकेशबुभुक्षितैः ॥ सनग्नमुण्डैर्दृष्टस्तु यात्रा नैव फलप्रदा ।' इति ।

## अथ शुक्रविचारः

दिशि यत्रोदेति शुक्रस्तां दिशं न[1] व्रजेन्नरः ॥
न व्रजेत्सम्मुखे ज्ञेऽपि शुभपृष्ठोऽपि वामतः ।
रेवती मेषगे चन्द्रे शुक्रान्ध्यात्सम्मुखं व्रजेत् ॥

जिस दिशा में शुक्र का उदय हो, उस दिशा में यात्रा वर्ज्य है । बुध के सामने होने पर भी यात्रा नेष्ट है । बुध यदि पीछे या बायें हो तो उत्तम है । रेवती नक्षत्र तथा मेष राशि पर चन्द्रमा हो तो शुक्रान्ध होता है । ऐसी स्थिति में शुक्र के सम्मुख यात्रा नेष्ट नहीं होती ।

प्रयाणे शुभाः केन्द्रकोणेषु शस्ताः
खलास्त्र्यायषट्खेष्वनिष्टः शनिः खे ।
कविः सप्तमे ग्लौः षडष्टान्त्यलग्ने
विलग्नेश्वरोप्यस्तषष्ठाष्टमान्त्ये ॥

यात्रा काल में यदि शुभग्रह के एक चार सात दस और कोण नव पाचवें में हो तो उत्तम है । पापग्रह तृतीय एकादश षष्ठ और दशम स्थान में हो तो नेष्ट है । दशम स्थान में शनि, सप्तम में शुक्र तथा षष्ठ अष्टम और द्वादश स्थान में चन्द्रमा हो तथा लग्न में और लग्न का स्वामी सप्तम षष्ठ और अष्टम में हो और द्वादश स्थान में हो तो अशुभ जानना चाहिये ।

केन्द्रे वक्री वक्रिवर्गो लग्ने वारश्च वक्रिणः ।
कुम्भः कुम्भनवांशश्च लग्ने त्याज्यः प्रयत्नतः ॥
मीनलग्ने तदंशे वा यातुर्मार्गोऽतिदुःखदः ।
शत्रुर्लग्नभतः षष्ठं तत्पतिर्वा मृतिप्रदः ॥
शत्रुक्षेत्रे तदंशे वा तद्दृष्टे गमनं न सत् ।
लग्नेऽस्तंगतराशिश्च जन्मराशिश्च नो शुभः ॥
शशी वर्गोत्तमे लग्ने वर्गोत्तमयुते जयः ।
शुक्रादितिथिवारर्क्षयोगोऽश्वैरष्टभिस्त्रिभिः ॥
त्रिस्थस्तष्टोऽवशिष्टश्चेत्सर्वाङ्कः सार्वकामिकः ।
त्रिषु क्रमाद्भवेच्छून्यं दुःखदारिद्र्यमृत्युदम् ॥

केन्द्र में वक्री ग्रह हो और लग्न में वक्री ग्रह का वार हो एवं कुम्भ लग्न और कुम्भ के नवांश यात्रा में त्याज्य है । मीन लग्न अथवा नवांश में यात्री को मार्ग में अत्यन्त कष्ट होता है । जन्म लग्न या जन्म राशि के स्वामी का शत्रु अथवा जन्म लग्न अथवा जन्मराशिसे षष्ठ लग्न और उसका स्वामी यात्रा का मृत्युकारक होता है । शत्रु के क्षेत्र या उसके नवांश में अथवा शत्रु लग्न को देखता हो तो यात्रा अच्छी नहीं होती । लग्न में सप्तम राशि एवं जन्म की राशि भी ठीक नहीं होती । वर्गोत्तम में

---

१. वसिष्ठः—'प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । बलेन शक्रतुल्योऽपि हतसैन्यो निवर्तते ॥' प्रतिशुक्रादिका विचार मनुष्यों की प्रथम यात्रा और राजाओं की विजय यात्रा में ही करना चाहिये, जैसा रैभ्य ने बतलाया है—'प्रतिशुक्रादिदोषोऽयं नूतने गमने नृणाम् । राज्ञां विजययात्रायां नान्यथा दोषमावहेत् ॥' यहाँ आदि शब्द से शुक्रास्त, प्रतिबुध और प्रतिभौम का ग्रहण है ।

या वर्गोत्तम से युक्त चन्द्रमा हो तो यात्रा में विजय होता है। शुक्लपक्ष से तिथि वार और नक्षत्रके योग को तीन स्थान पर रख कर क्रम से सात, आठ और तीनका भाग देने से जो अंक शेष रहे तो सम्पूर्ण कामना सिद्ध होती है। यदि तीनों में शून्य रहे तब कष्ट, दरिद्रता और मृत्यु होती है।

यद्येकस्मिन्नेव दिने पुरा गच्छेत्पुरान्तरम्।
प्रावेशिकी कालशुद्धिस्तदा ज्ञेया न यात्रिकी॥
प्रवेशान्निर्गमो नेष्टः प्रवेशो निर्गमादपि।
जिष्णोः कदापि नवमे धिष्ण्ये वारे तिथौ तथा॥
याम्यदिग्गमनं शय्या वितानं छादनं गृहे।
न [1]कुम्भमीनगे चन्द्रे तृणकाष्ठस्य संग्रहः॥
तर्पिताग्निसुहृद्विप्रभार्यादिस्तृप्तिमान् व्रजेत्।
स्वकीयां परकीयां वा स्त्रियं पुरुषमेव वा॥
ताडयित्वा तु यो गच्छेद् ब्राह्मणानवमान्य च।
व्याधितः क्षुधितो वापि तदन्तं तस्य जीवितम्॥

एक दिन में एक नगर से दूसरे नगर में जाय तो प्रवेश की शुद्धि का विचार करे, यात्राकाल की शुद्धि का विचार नहीं करे। जय चाहने वाले मनुष्यको प्रवेशसे नवम दिन में यात्रा और यात्रा दिनसे नवम दिन में प्रवेश इष्ट नहीं है। एवं नवम नक्षत्र, वार और तिथि भी इष्ट नहीं है। कुम्भ मीनके चन्द्रमा में दक्षिण दिशा में जाना, शय्या वितान, गृहाच्छादन और तृण एवं लकड़ी का संग्रह नहीं करे। यात्रा के समय अग्नि, मित्र, ब्राह्मण तथा स्त्री आदि को तृप्त कर गमन करे। अपनी अथवा दूसरे की स्त्री या पुरुष को प्रतारण एवं ब्राह्मणों का अपमान कर जो यात्रा करता है और स्वयं रुग्ण एवं बुभुक्षितावस्था में यात्रा करता है तो उसका जीवन उसी समय तक का होता है।

क्रोधं क्षौरं तथा वान्तिं तैलाभ्यङ्गाश्रुमोचनम्।
मद्यं मांसं गुडं तैलं सितान्यतिलकं तथा॥
श्वेतभिन्नं च वसनं प्रयाणे [2]परिवर्जयेत्।

---

१. नारदः—'वस्वन्त्यार्द्धादिपञ्चर्क्षे संग्रहं तृणकाष्ठयोः। याम्यदिग्गमनं शय्यां न कुर्याद् गृहगोपनम्॥' श्रीपतिने पंचकमें प्रेतदाह का भी निषेध किया है—'वासवोत्तरदलादिपञ्चके याम्यदिग्गमनगेहगोपनम्। प्रेतदाहतृणकाष्ठसंग्रहं शय्यकावितननं च वर्जयेत्॥ पंचक में मरने पर ब्रह्मपुराण का विचार—'कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते।···पञ्चकानन्तरं कार्यं कार्यं दाहादिकं खलु। अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकम्॥'—

ब्रह्मपुराण में दाह की विधि—'दाहदेशे शवं नीत्वा स्नापयेच्च प्रयत्नतः। दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः॥ यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत्। प्रेतदाहः प्रेतसखः प्रेतपः प्रेतभूमिपः॥ प्रेतहर्ता पञ्चमश्च नामान्येतानि च क्रमात्।' इति। विशेष अन्त्येष्टि पद्धतियों में देखें।

२. इन वस्तुओं को सेवन कर यात्रा करने पर मुहूर्तचिन्तामणि में दोष बतलाया है—'भुक्त्वा गच्छति यदि चेत्तैलगुडक्षारपक्वमांसानि। विनिवर्तते स रुग्णः स्त्रीद्विजमवमान्य गच्छतो मरणम्॥' गर्ग ने भी कहा है—'कटुतैलगुडक्षारपक्वमांसाशनं तथा। भुक्त्वा यो यात्यसौ मोहाद् व्याधितः सन्निवर्तते॥' इति।

क्षौरं पञ्चदिनं दुग्धं त्रिदिनं सप्तरात्रकम्।
मैथुनं चापरं तैलं मध्वाज्यं तद्दिने त्यजेत्॥
स्त्र्यार्तवं बीजदानान्तं तथा कुशकुनांस्त्यजेत्॥

क्रोध, क्षौर, वमन, तैलस्नान, रोना, मद्य, मांस, गुड, तेल, श्वेत तिलक से भिन्न तिलक तथा श्वेत वस्त्र से भिन्न वस्त्र यात्रा में वर्जित है। पांच दिन पूर्व हजामत एवं तीन दिन पहिले दूध तथा सात दिन पूर्व स्त्रीप्रसङ्ग और तेल-मधु-घृत यात्रा के दिन वर्जित करे। बीजदानपर्यन्त स्त्री का आर्तव और कुशकुन का भी त्याग करे।

### अथ प्रस्थानविचारः

सुमुहूर्ते स्वयं गमनासंभवे [1]प्रस्थानं कार्यम्। प्रस्थानं नामाभीष्टवस्तुचालनम्।

यज्ञोपवीतकं शस्त्रं मधु च स्थापयेत्फलम्।
विप्रादिः क्रमतः सर्वैः स्वर्णधान्याम्बरादिकम्॥
राजा दशाहं पञ्चाहमन्यो न प्रस्थितो वसेत्।

अच्छे मुहूर्त में यात्रा असम्भव हो तो प्रस्थान कर देना चाहिये। अभीष्ट वस्तु का चलाना प्रस्थान कहलाता है। यज्ञोपवीत, शस्त्र, मधु और फल को प्रस्थान में ब्राह्मण आदि वर्ण क्रम से रखे। सोना, धान्य, वस्त्र आदि भी रख सकते हैं। प्रस्थान रखने पर राजा दस दिन, अन्य पुरुष पांच दिन तक ठहर सकते हैं।

स्वयं गमनाद्वस्तुस्थापनाख्यप्रस्थानेऽर्धफलम्। प्रस्थानदेशावधिः—

गेहाद् गेहान्तरं गर्गः सीम्नः सीमान्तरं भृगुः।
बाणक्षेपं भरद्वाजो वासिष्ठो नगराद्बहिः॥
प्रस्थानेऽपि कृते नेयान्महादोषान्विते दिने।

प्रस्थानदिनेऽपि क्रोधादिकं वर्जयेत्। शकुनापशकुनप्रपञ्चोऽन्यत्र। इति यात्राप्रकरणम्।

---

१. किसी आवश्यक कार्यवश यात्रामुहूर्त में नहीं जा सके तो उस मुहूर्त में गन्तव्य दिशा की ओर अभीष्ट वस्तु का प्रस्थापन कर दे, जैसा वसिष्ठ ने बतलाया है—'तस्मिन् मुहूर्ते स्वयमप्रयाणे प्रयोजनापेक्षितया च दैवात्। तत्रैव तान्निर्गमनं च कार्यं स्वीयासनाच्चापि तदुच्यमानम्॥' नारदः—'अप्रयाणे स्वकं कार्यमपेक्षी भूपतिस्तथा। कुर्यान्निर्गमनं छत्रध्वजवाहनसंयुतम्॥' अथवा ब्राह्मणादि वर्णों के अनुसार वस्तु-प्रस्थापन का प्रकारान्तर, राजमार्तण्ड में यों है—'प्रस्थाने ब्राह्मणादीनां यज्ञसूत्रमथायुधम्। मध्वामलफलं चैव प्रशस्तं वृद्धिकारणम्॥' अर्थात् ब्राह्मण यज्ञोपवीत को, क्षत्रिय शस्त्रास्त्र को, वैश्य मधु को और शूद्र आंवला नारियल आदि फल को प्रस्थापित करे।—

राजमार्तण्ड में गन्तव्य दिशा की ओर वस्तु-प्रस्थापन का निर्देश किया है—'गन्तव्यदेशाभिमुखे प्रदेशे प्रस्थानमाहुः शुभदं नराणाम्।' पूर्वादि दिशाओं में प्रस्थान दिन का नियम—'प्राच्यामहानि मुनयः प्रवदन्ति सप्त याम्यामतीव शुभदानि दिनानि पञ्च। त्रीण्येव पश्चिमदिशि क्षितिनायकानां प्रस्थानकेषु दिवसद्वयमुत्तरस्याम्॥' राजमार्तण्ड में ही वस्तु को प्रस्थापित नहीं करके स्वयं प्रस्थान करने का महत्त्व बतलाया है—'स्वशरीरेण यः कश्चिन्निर्गच्छेच्छ्रद्धयाऽन्वितः। तस्य यात्राफलं सर्वं सम्पूर्णं पथि सिद्ध्यति॥' इति।

स्वयंगमन से प्रस्थान सम्बन्धी वस्तु के रखने में आधा फल होता है। प्रस्थान देश की अवधि-गर्ग ने एक घर से दूसरे घर तक, भृगु ने अपनी सीमा से दूसरी सीमा तक, भारद्वाज ने छोड़े हुए बाण के पहुँचने तक, वशिष्ठ ने नगर से बाहर रखना बतायी है। प्रस्थान रखने पर भी महादोषयुक्त दिन में यात्रा नहीं करे। प्रस्थान के दिन क्रोध आदि का त्याग करे। अच्छे बुरे शकुन का प्रपञ्च ग्रन्थान्तर में देखें। यात्राप्रकरण समाप्त।

## अथ गोचरप्रकरणम्

जन्मराशेः क्रूरचन्द्रास्त्रिषट्दशमगाः[1] शुभाः।
सप्ताद्यगश्चापि चन्द्रः शुक्ले द्विनवपञ्चसु॥
बुधो व्यन्त्यसमे जीवो द्विपञ्चनवसप्तसु।
जन्मादिपञ्चसु तथा नवाष्टद्वादशे भृगुः॥
एकादशे सर्वखेटाः शुभाः स्युरिति संग्रहः।

जन्म राशि से क्रूर ग्रह एवं चन्द्रमा तीसरे, छठे, दसवें में और चन्द्रमा सातवें तथा लग्न में, शुक्लपक्ष में द्वितीय-नवम-पंचम में हो बुध मीन को छोड़ कर सम राशि ( २,४,६,८,१०, ) में हो, गुरु द्वितीय-पंचम-सप्तम में हो, शुक्र जन्म से पांच तक और नव-आठ-बारहवें हो, ग्यारहवें में सब ग्रह हों तो शुभदायक है, यह गोचर का संग्रह है।

जन्मसंपद्विपत्क्षेमं प्रत्यरिः साधिका वधः।
मैत्रातिमैत्राः स्युस्तारास्त्रिरावृत्त्या स्वजन्मभात्॥
क्रमतः सूर्यादिबलं नृपदर्शनसर्वकार्ययुद्धेषु।
शास्त्रकरग्रहयात्रादीक्षासूद्यं विशेषेण॥
अनिष्टसूर्यादीनां[2] दानानि द्वितीयपरिच्छेदान्ते।

---

१. ग्रहाणां गोचरफलं शुभरूपमशुभरूपं च। जन्मराशितः प्रोक्तनिषिद्धस्थानस्थितेदानीन्तन-ग्रहवशेन शुभाशुभनिरूपणं 'गोचर' इत्युच्यते।

२. अनिष्टकारक ग्रहों की तुष्टि के लिये कश्यप ने रत्नधारण का निर्देश किया है—'सूर्यादीनां च सन्तुष्ट्यै माणिक्यं मौक्तिकं तथा। सुविद्रुमं मारकतं पुष्परागं च वज्रकम्॥ नीलगोमेदवैदूर्यं धार्यं स्वस्वदक्रमात्।' यथा—सूर्यप्रीत्यर्थं माणिक्यं, चन्द्रप्रीत्यर्थं मौक्तिकं, भौमप्रीत्यर्थं विद्रुमं, बुधप्रीत्यर्थं मारकतं, गुरुप्रीत्यर्थं पुष्परागं, शुक्रप्रीत्यर्थं वज्रं, शनिप्रीत्यर्थं नीलं, राहुप्रीत्यर्थं गोमेदं, केतुप्रीत्यर्थं वैदूर्यं च धार्यम्।--

अधिक मूल्य वाले रत्नों के धारण करने की शक्ति न हो तो अल्पमूल्य वाले रत्नों के धारण का निर्देश श्रीपति ने किया है—'धार्यं तुष्ट्यै विद्रुमं भौमभान्वो रूप्यं शुक्रेन्द्वोश्च हेमेन्दुजस्य। मुक्ता सूरेर्लौहमर्कात्मजस्य लाजावर्तः कीर्तितः शेषयोश्च॥'—

रत्नधारण के असामर्थ्य में दीपिकाकार ने औषधमूल के धारण का निर्देश किया है—'मूलं धार्यं त्रिशूल्याः सवितरि त्रिगुणक्षीरिकामूलमिन्दौ जिह्वाहेर्भूमिपुत्रे रजनिकरसुते वृद्धदारोश्च मूलम्। भार्ङ्गी जीवेऽथ शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलं विच्छोलं चार्कपुत्रे तमसि मलयजं केतुदोषेऽश्वगन्धम्॥' अर्थात् सूर्यप्रीतये त्रिशूल्याः बिल्वस्य मूलं, चन्द्रप्रीतये क्षीरिकायाः 'खीरी' इति ख्यातस्य, भौमप्रीतये नागजिह्वायाः, बुधप्रीतये वृद्धदारोः 'विधारा' इति ख्यातस्य, गुरुप्रीतये भार्ङ्ग्याः 'भारंगी' इति

जन्म, सम्पत्, विपत्, क्षेम, प्रत्यरि, साधक, वध, मैत्र, अतिमैत्र, ये नाम अपने नक्षत्र से तीन आवृत्ति करने पर होते हैं और ये अपने नाम के समान फल देते हैं। क्रम से सूर्य आदि का बल राजदर्शन, समस्त कार्य और युद्ध में शस्त्र ग्रहण, करग्रहण, यात्रा और दीक्षा में विशेषतः विचारणीय हैं। अनिष्ट सूर्यादि के दानादिक द्वितीय परिच्छेद के अन्त में कह चुका हूँ।

## अथ पल्लीसरटफलम्

दक्षांगोदरनाभिहृत्सु पतिता पल्ली वराङ्गे हनुं
मुक्त्वा नुः शुभदा स्त्रियाः फलमिदं [1]वामेतरव्यत्ययात्।
इत्याहुः सरटप्ररोहणफलं पातेऽन्यथैके वृथा
पल्ल्यारोहणकेऽपि वस्त्रसहितं स्नात्वा चरेच्छान्तिकम्॥

मनुष्य के दाहिने अंग, दाढ़ी को छोड़कर पेट, हृदय, नाभि और मुख पर छिपकिली गिरे तो सुखदायक है। यही फल स्त्री को उल्टा अर्थात् बायें अंग में शुभप्रद है। गिरगिट के चढ़ने का भी यही फल है। गिरगिट के गिरने पर पहिले कहे हुए से उल्टा है। कोई आचार्य कहते हैं गिरगिट के गिरने पर न कोई फल है न दोष। छिपकिली के चढ़ने पर भी सचैल स्नान और शान्ति करे।

## अथ पल्लीसरटशान्तिः

तयोः स्पर्शमात्रे स्नानं कृत्वा पञ्चगव्यं प्राश्याज्यमवलोक्याशुभनाशार्थं शुभवृद्धचर्थं वा शान्तिः कार्या। पल्ल्याः सरटस्य वा हेम्ना प्रतिमां कृत्वा रक्त-वस्त्रेण संवेष्टच संपूज्य कलशे रुद्रं संपूज्य मृत्युञ्जयमन्त्रेण खादिरसमिद्भिरष्टोत्तर-शतं तिलैर्व्याहृतिभिरष्टोत्तरसहस्रं शतं वा हुत्वा स्विष्टकृदाद्यभिषेकान्ते स्वर्ण-वस्त्रतिलदानम्।

छिपकिली और गिरगिट के केवल स्पर्श होने पर स्नान करके पंचगव्य पान कर घृत देखकर अशुभ नाश के लिये या शुभ की वृद्धि के लिये शान्ति करनी चाहिये। छिपीकिली और गिरगिट के सोने की प्रतिमा बनाकर रक्त वस्त्र से लपेट कर पूजा करे। कलश पर रुद्र की पूजा करके मृत्युंजय मन्त्र से खैर की समिधाओं से तिल का एक सौ आठ या व्याहृति से एक हजार आठ या एक सौ संख्या से होम करके स्विष्टकृत् आदि और कलश जल से अभिषेक के बाद सोना कपड़ा और तिल का दान करे।

## अथ कपोतप्रवेशादिशान्तिः

अथ [2]कपोतप्रवेशमधुवल्मीकोत्पत्तिपिङ्गलास्वरकाकवैकृतग्राम्यारण्यादिमृग-

---

ख्यातस्य, शुक्रप्रीतये सिंहपुच्छयाः, शनिप्रीतये विच्छोलस्य, राहुप्रीतये चन्दनस्य, केतुप्रीतये च अश्वगन्धाया 'असगन्ध' इति ख्यातस्य मूलं धार्यम्। दानद्रव्य और दानद्रव्यदेवताओं की जानकारी द्वितीयपरिच्छेद के अन्त में सुधाविवृति से करें। अवशिष्ट-विषय अन्यत्र देखें।

१. वामेतरव्यत्ययात् = वामाङ्गदक्षिणाङ्गविपर्यासात्, अर्थात् स्त्रियों के वामांग में छिपकिली का गिरना शुभदायक और दक्षिणांग में अशुभदायक है।

२. वसन्तराजः—'उलूकश्चैव गृध्रश्च कपोतः श्येन एव च। पतन्ति भवने यस्य तस्य प्राहुर्महद्भयम्॥ पक्षान्मासात्तथा वर्षान्मृत्युः स्याद् गृहमेधिनः। पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यं चैव प्रणश्यति॥ ब्राह्मणाय गृहं दद्याद् दत्त्वा तन्मूल्यमेव च। गृह्णीयाद् यदि रोचेत शान्तिं चैतां प्रयो-

पक्षिविकारे शान्तिः[1]—देवाः कपोत इति पञ्चर्चं सूक्तं सहस्रं शतं वा जपित्वा यत इन्द्र भयामहे स्वस्तिदा विशस्त्र्यम्बकमिति मन्त्रैर्हुत्वा व्याहृतिभिरष्टोत्तरशतं तिलहोमं कुर्यात्। अथवा पञ्चविप्रैः क्रमेण देवाः कपोत इति सूक्तं सुदेवो असीत्यृचं कनिक्रददिति शाकुन्तसूक्तं नमो ब्रह्मणे नमो इति मन्त्रं च सहस्रादिसंख्यया जप्त्वोपनिषदश्च पठित्वा व्याहृतिभिस्तिलहोमं कुर्यात्।

कबूतर का प्रवेश, मधु और वल्मीक की उत्पत्ति, पिंगला का शब्द, काक का मैथुन, ग्राम और वन के मृग पक्षियों के विकार की शान्ति इस प्रकार है—'देवाः कपोत' इस पांच ऋचा वाले सूक्त का एक हजार अथवा एक सौ जप करके समिधा घृत और चरु से प्रत्येक को 'यत इन्द्र भयामहे स्वस्तिदा विशः त्र्यम्बकं' इन मन्त्रों से एक सौ आठ होम करके व्याहृतियों से तिल का एक सौ आठ होम करे। अथवा पांच ब्राह्मण क्रम से 'देवाः कपोत' इस सूक्त का 'सुदेवो असि' इस ऋचा का 'कनिक्रदत्' इस शाकुन्त सूक्त और 'नमो ब्रह्मणे नमो' इस मन्त्र का एक हजार जप तथा उपनिषदों का पाठ करके व्याहृतियों से तिल का होम करे।

## अथ काकमैथुनदर्शनादिशान्तिः

अथ काकस्पर्शमैथुनदर्शनादि शान्तिः[2]—संकल्पाग्निप्रतिष्ठापनान्ते कुम्भे सौवर्णमिन्द्रं लोकपालांश्च संपूज्याग्नौ चरुं श्रपयित्वा पलाशसमिच्चर्वाज्यव्रीहिभिः प्रत्येकमष्टोत्तरसहस्रं शतं वा यत इन्द्रेति मन्त्रेण हुत्वा लोकपालेभ्यस्तैरेव द्रव्यैर्दश कृत्वो हुत्वा लोकपालबलिं कुम्भाग्रे वायसेभ्यो बलिमैन्द्रवारुणेति मन्त्रेण दत्त्वा यजमानोऽभिषेकान्ते शतं दश वा विप्रान्भोजयेत्।

कौआ से स्पर्श और उसके मैथुनदर्शन आदि में शान्ति करे—संकल्प से अग्निस्थापनपर्यन्त कर्म करके कलश पर सोने के इन्द्र और लोकपालों की पूजा कर अग्नि में चरु पका कर पलाश की समिधा, चरु, घृत और धान्य से प्रत्येक के लिये एक हजार आठ या एक सौ संख्या से 'यत इन्द्र' इस मन्त्र से होम करके उन्हीं द्रव्यों से लोकपालों को दस बार या एक बार होम करके

---

जयेत् ॥ चरुं यवमयं कृत्वा अश्वत्थसमिधोऽयुतम्। मनसः काममित्येतद् हुत्वा जप्त्वा सुखी भवेत् ॥ यदि वा वर्धनी चेति तया शान्तिः प्रदिश्यते। ऐन्द्रीं शान्तिं ततः कुर्यात् त्रातारमिति मन्त्रतः ॥ औदुम्बरीश्च समिधो जुहुयाद् घृतसंयुताः। अष्टोत्तरसहस्राणि पञ्च तच्छान्तिकाम्यया ॥ चरुकर्माशनं चास्य विप्रान् दधिगुडौदनैः। तर्पयित्वा वरं हेम दद्याद् धेनुं च दक्षिणाम् ॥' अत्र लोके गृध्रस्य उलूकस्य च गृहोपवेशने दोषविचारस्तच्छान्तिश्च क्रियते ॥' इति।

१. औशनसे—'गौरश्वं वडवा गावो यस्मिन् देशे प्रसूयते। अभ्यन्तरेण वर्षात्तु राज्ञो मरणमादिशेत् ॥ व्यजायन्त खरा गोषु करभाश्वतरीषु च। शुनीषु हि विडालाश्च मूषिका नकुलीषु च ॥ देशे वा यदि वा ग्रामे योनिव्यतिकरो भवेत्। अजः शुनीमजां श्वा वा संसर्गं यत्र गच्छति ॥ अभ्यन्तरेण तत्राब्दाद् राष्ट्रे मरणमादिशेत्।' शान्तिः—'तर्पयेद् ब्राह्मणांश्चात्र जपहोमांश्च कारयेत्। स्थालीपाकेन धातारं पशुना च पुरोहितः ॥ प्राजापत्येन मन्त्रेण जपेद् बह्वन्नदक्षिणाम्।' इति।

२. गर्गसंहितायाम्—'काकस्य मैथुनं पश्येत् काकः शिरसि चेद् विशेत्। शिरस्युपरि वा कुर्यात् पक्षघातं नखैस्तथा ॥ विदारणं च कुरुते शयानं च स्पृशेद् यदि। तथा वहेत्तु मरणं महारिष्टमथापि वा ॥ शान्तिं तत्र प्रकुर्वीत विधानेन यथोदिताम्। मध्यरात्रे यदा काको वसते हेतुना विना ॥ तद्गृहारिष्टमाचष्टे ग्रामारिष्टमथापि वा। शान्तिं तत्रापि कुर्वीत विधानेन यथोदिताम् ॥' इति।

लोकपालों की बलि और कलश के अग्रभाग में कौओं की बलि 'ऐन्द्र वारुण' इस मन्त्र से देकर यजमान अभिषेक के अन्त में सौ या दस ब्राह्मणों को भोजन करावे।

## अथ घरट्टादिभेदने कर्तव्यता

घरट्टोलूखलमुसलदृषदासनमञ्चकादेरकस्मात्स्फोटने घृताक्तमधुयुताश्वत्थसमिधः प्रजापतये हुत्वा गायत्र्याष्टोत्तरसहस्रेणाभिमन्त्रयेत्।

घरट्ट, ऊखल, मूसल, शिला, आसन और मंचक आदि के अकस्मात् टूटने फूटने पर पीपल की समिधा से प्रजापति के लिये घृत-मधु-युक्त होम करके गायत्री के मन्त्र से एक हजार आठ बार अभिमन्त्रण करे।

## अथ नानाविधदिव्यभौमान्तरिक्षोत्पातेषु शान्तिः

संकल्पादि कृत्वा कुम्भे इन्द्ररुद्रौ सम्पूज्य यत इन्द्र स्वस्तिदा विशस्पतिः अघोरेभ्योथेति मन्त्रैः समिदाज्यचरुव्रीहितिलान्प्रतिद्रव्यमष्टोत्तरशतं हुत्वा व्याहृतिभिः कोटिहोमं लक्षहोममयुतहोमं तत्पादहोमं वा तिलैर्वित्तानुसारेण निमित्तानुसारेण च सप्तरात्रं त्रिरात्रमेकरात्रं वा कृत्वा सूर्यगणेशक्षेत्रपालदुर्गामन्त्राणां जपं कृत्वा पायसादिना ब्राह्मणभोजनं कार्यम्। यद्वा चण्डीसप्तशतीजपः। अथवा रुद्रैर्जपोऽभिषेको[1] वा। अश्वत्थप्रदक्षिणाशिवपूजागोविप्रपूजादि वा। इति [2]नानोत्पातसामान्यशान्तयः।

---

१. स्कन्दपुराणे—'रुद्राध्यायेन ये देवं स्नापयन्ति महेश्वरम्। तज्जलैः कुर्वतः स्नानं ते मृत्युं सन्तरन्ति च॥ रुद्राध्यायाभिजप्तेन स्नानं कुर्वन्ति येऽम्भसा। तेषां मृत्युभयं नास्ति शिवलोके महीयते॥ शतरुद्राभिषेकेण शतायुर्जायते नरः। रुद्राध्यायजपं सम्यक् कुर्वन्तु विमलाशयाः। तेषां जपानुभावेन सद्यः श्रेयो भविष्यति॥' अपि च—'रुद्राभिषेकं कुर्वाणस्तत्रत्याक्षरसंख्यया। प्रत्यक्षरं कोटिवर्षं रुद्रलोके महीयते॥' रुद्राभिषेक में विभिन्न कार्यों के लिये विभिन्न वस्तुओं का निर्देश 'सर्वरोगनाशकानि' शीर्षक की 'सुधाविवृति' में देखें।

२. शान्तिसारोद्धृत वसिष्ठसंहिता में उत्पात का लक्षण—'अन्यत्वं प्रकृतेर्यत्तदसावुत्पातसंज्ञकः। अधर्मतस्त्वसत्याच्च नास्तिक्यादतिलोभतः॥ अनाचारान्नृणां नित्यमुपसर्गः प्रजायते।' उत्पात के भेद—'दिव्यान्तरिक्षक्षितिजा विकारा घोररूपिणः। ग्रहर्क्षजाः केतवश्च उत्पाता दिव्यसंज्ञकाः॥ निर्घाता परिवेषोल्का पुरन्दरधनुर्ध्वजाः। एवमाद्या महोत्पाता अन्तरिक्षाह्वयाः स्मृताः॥ उत्पद्यते क्षितौ यच्च स्थावरं वाथ जङ्गमम्। तदेकदेशिकं भौम उत्पातः परिकीर्तितः॥ भौमाः स्युस्तुच्छफलदा आन्तरिक्षास्तु मध्यमाः। सम्पूर्णफलदा दिव्या वर्षादर्धाच्चदर्धतः॥' अत्र उत्पात उपसर्ग अद्भुतं चेति पर्यायवाचिनः शब्दाः।—

उत्पात के कुछ उदाहरण नारद ने बतलाया है—'आदित्यचन्द्रयोर्मध्ये छिद्रं पश्यति यो नरः। उत्पातमीदृशं दृष्ट्वा मासमेकं स जीवति॥ इमा रुद्रेति मन्त्रेण जुहुयात् सर्पिषाहुतिम्। आहुती द्वे सहस्रे तु होमश्च कथितो भवेत्॥ वृषभं दक्षिणां दद्यात् ततः सम्पद्यते शुभम्।' 'रात्रौ चेन्द्रधनुर्यत्र दृश्यते दिवि सत्तम। अद्भुतं तत्र विज्ञेयं शान्तिं चेमां समारभेत्॥ औदुम्बर्याः सहस्राणि अष्टौ च जुहुयाद् द्विजः। मध्वक्तानि घृताक्तानि जातवेदांसि मन्त्रवित्॥ विप्राय दक्षिणां दद्याद् धेनुं च वृषभं तथा।

संकल्प आदि करके कुम्भ पर इन्द्र रुद्र की पूजा करके 'यत इन्द्र' 'स्वस्तिदा विशस्पतिः' 'अघोरेभ्योऽथ' इन मन्त्रों से समिधा, घृत, चरु, व्रीहि और तिल के प्रत्येक द्रव्य से एक सौ आठ होम करके व्याहृतियों से कोटिहोम, लक्ष होम, दस हजार होम, या कोटि लक्ष अथवा दस हजार का चतुर्थांश होम अपने वित्त और निमित्त के अनुसार तिलों से सात रात, तीन रात, अथवा एक रात देकर सूर्य, गणेश, क्षेत्रपाल और दुर्गा मन्त्र का जप करके खीर आदि मिष्टान्न से ब्राह्मणभोजन करावे या चण्डी सप्तशती का जप अथवा रुद्र मन्त्रों का जप या अभिषेक करावे। पीपल की प्रदक्षिणा, शिव की पूजा, अथवा गौ ब्राह्मण की पूजा आदि अनेक उत्पातों की सामान्य-शान्ति है।

## अथ गायत्रीपुरश्चरणप्रयोगः

देशकालौ संकीर्त्य 'करिष्यमाणगायत्रीपुरश्चरणेऽधिकारसिद्धयर्थं कृच्छ्रत्रयममुकप्रत्याम्नायेनाहमाचरिष्ये' इति संकल्प्य होमादि प्रत्याम्नायविधिना कृच्छ्राण्यनुष्ठाय 'अमुकशर्मणो मम गायत्रीपुरश्चरणेऽनेन कृच्छ्रत्रयानुष्ठानेनाधिकारसिद्धिरस्तु' इति विप्रान्वदेत्। विप्रा अधिकारसिद्धिरस्त्विति ब्रूयुः। ततः 'करिष्यमाण पुरश्चरणाङ्गत्वेन विहितं गायत्रीजपादि करिष्ये' इति संकल्प्य स्वयं विप्रद्वारा वा कुर्यात् तद्यथा—

देश काल को कह कर 'किये जाने वाले गायत्री पुरश्चरण में अधिकार की सिद्धि के लिये मैं तीन कृच्छ्र व्रत अमुक प्रत्याम्नाय से करूंगा' ऐसा संकल्प कर होम आदि के बदले में कृच्छ्र व्रतों को करके 'अमुक शर्मा मेरे गायत्री पुरश्चरण में इस तीन कृच्छ्र के अनुष्ठान से अधिकार की सिद्धि हो' ऐसा ब्राह्मणों से कहे। ब्राह्मण लोग 'अधिकार की सिद्धि हो' ऐसा कहें। तदनन्तर 'किये जाने वाले पुरश्चरण का अंग गायत्री जप आदि करूंगा' ऐसा संकल्प कर स्वयं या ब्राह्मण द्वारा गायत्री का पुरश्चरण करे। वह इस प्रकार है—

सप्रणवव्याहृतिकगायत्र्या अयुतं जप्त्वा आपोहिष्ठेति सूक्तं एतोन्विन्द्रमिति चतस्रः ऋतं चेति सूक्तं स्वस्तिन इत्याद्याः स्वस्तिमतीः स्वादिष्ठयेत्याद्याः पावमामानीश्च सर्वाः प्रत्येकं दशवारं स्वयमन्यद्वारा वा जपित्वा तत्सवितुरित्यस्या-

---

एकरात्रोषितो भूत्वा ततः सम्पद्यते सुखम् ॥'—

अद्भुतसागरे—'यस्मिन् देशे दिवा तारा दृश्यते दिवि कर्हिचित्। तस्य देशस्य यो राजा सराष्ट्रः स विनश्यति ॥' पराशरः—'कदाचिद् दृश्यते यत्र दिवा देवपुरोहितः। राजा च म्रियते तत्र सर्वदेशो विनश्यति ॥ अह्नः सर्वं यदा शुक्रो दृश्यते तु महाग्रहः। तदा चागन्तुभिर्ग्रामा वध्यन्ते नगराणि च ॥'—

यामले—'चतुर्ग्रहसमायोगे दुर्भिक्षादिभयं भवेत्। महारोगभयं राष्ट्रक्षयो वृष्टिक्षयोऽपि च ॥ पञ्चग्रहसमायोगे दुर्भिक्षं संकरादिकम्। जनक्षयो भूपवैरं गर्भनाशस्तु जायते ॥ ग्रहषट्कसमायोगे मन्त्रिणो मरणं भवेत्। पश्वश्वादिभयं सर्वं संकरादिजनक्षयः ॥ पट्टराज्ञीविनाशो वा महाभयमथापि वा। सप्तग्रहसमायोगे क्षितीशमरणं ध्रुवम् ॥ जगत्प्रलयमेवापि तदा निर्मानुषं जगत्। अत ऊर्ध्वं महोत्पातनानादुःखमहाकुलम् ॥ सूर्यः स्याद् व्यतिरिक्तश्चेत्तदा योगो महाद्भुतः। विना चन्द्रेण योगोऽपि जगत्प्रलयकारणम् ॥ तद्देशजातजन्तूनां महारोगो महाभयम्। अर्थनाशः स्थाननाशो मानहानिर्नृपीडनम्। वातपित्तादिसम्भूतमहापीडा महद्भयम्। समायोगग्रहा नृणां दोषान् कुर्वन्ति सर्वदा ॥ षण्मासाभ्यन्तरे वापि आयुर्हानिः श्रियस्तथा।' इति। विशेष शान्तिसारादि ग्रन्थों में देखें।

चार्यमृषि विश्वामित्रं तर्पयामि गायत्रीच्छन्दस्त० सवितारं देवतां० इति तर्पणं कृत्वा रुद्रं नमस्कृत्य कद्रुद्रायेत्यादीनि रुद्रसूक्तानि जपेत्।

प्रणव-व्याहृति-सहित गायत्री का दस हजार जप करके 'आपोहिष्ठा' इस सूक्त को 'पतोन्विन्द्र' इन चार ऋचाओं, 'ऋतं च' इस सूक्त, 'स्वस्ति न' इत्यादि ऋचा, 'स्वस्तिमतीः' 'स्वादिष्ठया' इत्यादि ऋचा और 'पावमानी' ऋचाओं को प्रत्येक को दस-दस वार स्वयं या अन्य के द्वारा जप करके 'तत्सवितुः' इस मन्त्र के आचार्य ऋषि और विश्वामित्र का तर्पण करता हूँ। गायत्री छन्द और सविता देवता का तर्पण करके रुद्र को नमस्कार कर 'कद्रुद्राय' इत्यादि रुद्रसूक्तों को जपे।

ततो दिनान्तरे देशकालौ संकीर्त्य 'मम सकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं चतुर्विंशतिलक्षात्मकगायत्रीपुरश्चरणं स्वयं विप्रद्वारा वा करिष्ये, तदङ्गत्वेन स्वस्तिवाचनं मातृकापूजनं नान्दीश्राद्धं–विप्रद्वारा जपे–'जपकर्तृवरणं च करिष्ये' इति [1]संकल्पः। संकल्पस्यापि ऋत्विक्कर्तृकत्वे 'अमुकशर्मणो यजमानस्य सकलपापक्षयेत्यादि यजमानानुज्ञया करिष्ये'। एवं पूर्वत्रापि संकल्प ऊह्यः। नान्दीश्राद्धान्ते सविता प्रीयतामिति [2]'गायत्रीपुरश्चरणे जपकर्तारं त्वां वृणे' इति विप्रमेकैकं वृणुयात्। वस्त्रादिभिः पूजयेत्।

---

१. संकल्प प्रत्येक कर्म के आदि में आवश्यक है, जैसा कि वचन है—'संकल्पेन विना विप्र यत्किञ्चित् कुरुते नरः। फलं चाप्यल्पकं तस्य धर्मस्यार्धक्षयो भवेत्॥' संकल्प में मासादि और निमित्त का निर्देश आवश्यक है, जैसा कि ब्रह्माण्ड में कहा है—'मासपक्षतिथीनां च निमित्तानां च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फलभाग् भवेत्॥' इति।

२. गायत्री की उत्पत्ति मनु ने बतलायी है—'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥' छन्दोगपरिशिष्टे—'सर्वेषामेव वेदानां गुह्योपनिषदां तथा। सारभूता तु गायत्री निर्गता ब्रह्मणो मुखात्॥' मनुः–'गायत्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः। नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी॥' नागदेव ने गायत्री शब्द का अर्थ बतलाया है—'गायन्तं त्रायते यस्माद् गायत्री तेन सोच्यते।'—

गायत्री जप का फल मनु ने बतलाया है—'सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः। महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते॥' अर्थात् नदी आदि पवित्र स्थान में एक मास तक प्रतिदिन एक हजार गायत्री जपने वाला द्विज बड़े पाप से छूट जाने पर उसी प्रकार हो जाता है जैसे केंचुल से छूट जाने पर सर्प। बृहद्यमः—'न तथा वेदजपतः पापं निर्दहति द्विजः। यथा सावित्रीं जपतः सर्वपापैः प्रमुच्यते॥' कूर्मपुराणे—'गायत्रीं चैव वेदांश्च तुलया समतोलयत्। वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्मृता॥'—

योगियाज्ञवल्क्योक्त गायत्री-अक्षरों के देवता—'अक्षराणां तु दैवत्यं संप्रवक्ष्याम्यतः परम्। आग्नेयं प्रथमं 'तत्' ज्ञेयं वायव्यं च द्वितीयकम् 'स'॥ तृतीयं 'वि' सूर्यदैवत्यं चतुर्थं 'तु' वैद्युतं तथा। पंचमं 'व' यमदैवत्यं वारुणं 'रे' षष्ठमुच्यते॥ बार्हस्पत्यं सप्तमं 'ण' तु पार्जन्यमष्टमं 'यम्' विदुः। ऐन्द्रं तु नवमं 'भ' ज्ञेयं गान्धर्वं दशमं 'र्गः' तथा॥ पौष्णमेकादशं 'दे' प्रोक्तं मैत्रावरुणं द्वादशम् 'व'। त्वाष्ट्रं त्रयोदशं 'स्य' ज्ञेयं वासवं तु चतुर्दशम् 'धी'॥ मारुतं पञ्चदशकं 'म' सौम्यं षोडशकं 'हि' स्मृतम्। सप्तदशं 'धि' त्वाङ्गिरसं वैश्वदेवमतः परम् 'यः'॥ आश्विनं चैकोनविंशं 'यः' प्राजापत्यं तु विंशकम् 'नः'। सर्वदेवमयं प्रोक्तमेकविंशं 'प्र' मतः परम्॥ रौद्रं द्वाविंशकं 'चो' प्रोक्तं त्रयोविंश 'द' तु

तदनन्तर दूसरे दिन देश काल को कहकर 'मेरे समस्त पापक्षय द्वारा श्रीपरमेश्वर के प्रीत्यर्थ चौबीस लाख रूप गायत्री पुरश्चरण स्वयं अथवा ब्राह्मण द्वारा करूंगा, उसके अंगभूत स्वस्तिवाचन, मातृकापूजन और नान्दीश्राद्ध करूंगा, ब्राह्मणद्वारा जप कराना हो तो 'जप कर्ताओं का वरण भी करूंगा' ऐसा संकल्प करे। यदि संकल्प ऋत्विक् ही करें तो 'अमुक यजमान का सम्पूर्ण पापक्षय द्वारा श्रीपरमेश्वर प्रीत्यर्थ चतुर्विंशति लक्षात्मक गायत्री का पुरश्चरण यजमान की आज्ञा से करूंगा' ऐसा कहे। इसी प्रकार पहिले में भी संकल्प की कल्पना करे। नान्दीश्राद्ध के अन्त में 'सविता प्रीयताम्' ऐसा कहे। 'गायत्री पुरश्चरण में जप करने वाले आपका मैं वरण करता हूँ' इस तरह कहकर एक एक ब्राह्मण का वरण करे। वस्त्र आदि से उनकी पूजा करे।

अथ नित्यकर्म—एकैको विप्रः स्वयं वा [1]कुशाद्यासनोपविष्टः [2]पवित्रपाणिराचम्य प्राणानायम्य देवताः प्रार्थयेत्—

सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा।
पवमानो दिक्पतिर्भूराकाशं खेचरामराः।
ब्रह्मशासनमास्थाय कल्पध्वमिह सन्निधिम्॥ इति।

जपकर्ता ब्राह्मणों का नित्यकर्म इस प्रकार है—एक एक ब्राह्मण अथवा स्वयं कुश आदि के आसन पर बैठ कर पवित्र हाथ से आचमन और प्राणायाम करके देवताओं की प्रार्थना करे-सूर्य, चन्द्रमा, यम, काल, दोनों सन्ध्या, भूत, दिन, रात्रि, पवमान, दिशाओं के पति, भूमि, आकाश, खेचर और देवता, ब्रह्मा की आज्ञा को मानकर इस गायत्री पुरश्चरण में सान्निध्य करें।

ततो देशकालौ संकीर्त्य प्रत्याह्निकजपं संकल्प्य गुरवे नमः गणपतये० दुर्गायै० मातृभ्यो० इति नत्वा त्रिः प्राणानायम्य तत्सवितुरिति गायत्र्या विश्वामित्र ऋषिः सवितादेवता गायत्रीछन्दः जपे वि०। विश्वामित्रऋषये नमः शिरसि,

---

ब्राह्मकम्। वैष्णवं तु चतुर्विंश 'यात्'मेता ह्यक्षरदेवताः॥ जपकाले तु संस्मृत्य तासां सायुज्यतां व्रजेत्। गायत्री वेदजननी गायत्री पापनाशिनी॥ गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम्। हस्तत्राणप्रदा देवी पततां नरकार्णवे॥ तस्मात्तामभ्यसेन्नित्यं ब्राह्मणोऽनुदये शुचिः। गायत्रीनिरतं हव्यकव्येषु विनियोजयेत्॥ तस्मिन्न लिप्यते पापमब्बिन्दुरिव पुष्करे।' जप के स्थान—'गृहे जपः समं विद्याद् गोष्ठे शतगुणं भवेत्। नद्यां शतसहस्रं तु अनन्तं शिवसन्निधौ। समुद्रतीरे देवह्रदे गिरौ देवालयेषु च। पुण्याश्रमेषु सर्वेषु जपः कोटिगुणो भवेत्॥ शिवस्य सन्निधाने च सूर्यस्याग्रे गुरोरपि। दीपस्य गोर्जलस्यापि जपकर्म प्रशस्यते॥' विशेष सन्ध्या प्रकरण की सुत्राविवृति में देखें।

१. बौधायनः—'दर्भेष्वासीनो दर्भान् धारयमाणः प्राङ्मुखः सावित्रीमावर्तयेत्।' शङ्खः—'कुशमयासनासीनः कुशोत्तरीयवान् कुशपवित्रपाणिः प्राङ्मुखः सूर्याभिमुखो वाक्षमालामादाय शिरःशिखास्थानानि मार्जयेत्॥' 'कुशाद्यासनोपविष्टः' में आदि पद से कम्बलादि का आसन ग्राह्य है। कम्बलादि आसन का फल—'काम्यार्थं कम्बलं चैव श्रेष्ठं तद्रक्तकम्बलम्। कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि॥ कुशासने मन्त्रसिद्धिश्चात्र कार्या विचारणा। धरण्यां दुःखसम्भूतिर्दौर्भाग्यं दारुजासने॥ वंशासने तु दारिद्र्यं पाषाणे व्याधिपीडनम्। तृणासने यशोहानिः पल्लवे चित्तविभ्रमः॥ जपध्यानतपोहानिर्वस्त्रासनमितीरितम्।' इति।

२. प्रयोगपारिजाते—'स्नाने होमे जपे दाने स्वाध्याये पितृकर्मणि। करौ सदर्भौ कुर्वीत तथा सन्ध्याभिवादने॥' लघुहारीतः—'जपे होमे तथा दाने स्वाध्याये पितृतर्पणे। अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः॥' इति।

गायत्रीछन्दसे नमो मुखे, सवितृदेवतायै नमो हृदि, इति न्यस्य तत्सवितुरङ्गुष्ठाभ्यां०, वरेण्यं तर्जनीभ्यां०, भर्गो देवस्य मध्यमाभ्यां०, धीमह्यनामिकाभ्यां०, धियो यो नः कनिष्ठिकाभ्यां०, प्रचोदयात् करतलकरपृष्ठाभ्यां नमः, इति करन्यासं कृत्वैवं हृदादिषडङ्गन्यासं कुर्यात्।

तदनन्तर देश काल को कहकर प्रतिदिन के जप का संकल्प कर 'गुरवे नमः, गणपतये नमः, दुर्गायै नमः, मातृभ्यो नमः' इस तरह नमस्कार करके तीन वार प्राणायाम कर तत्सवितुः इस गायत्री मन्त्र के विश्वामित्र ऋषि, सविता देवता, गायत्री छन्द, जप में विनियोग करे। 'विश्वामित्र ऋषये नमः' इससे सिर स्पर्श, 'गायत्रीछन्दसे नमः' इससे मुखस्पर्श, 'सवितृदेवतायै नमः' इससे हृदय का स्पर्श करके 'तत्सवितुः' इससे दोनों अंगुष्ठों का, 'वरेण्यं' से दोनों तर्जनी का, 'भर्गो देवस्य' इससे दोनों मध्यमांगुलियों का, 'धीमहि' से दोनों अनामिका का, 'धियो यो नः' इससे दोनों कनिष्ठिका का और 'प्रचोदयात्' इससे करतलकरपृष्ठों का स्पर्श करे। इस प्रकार करन्यास करके इसी तरह हृदय आदि छ अंगों का न्यास करे।

पूर्वोक्तरीत्या [1]संस्कृतां जपमालां पात्रे निधाय संप्रोक्ष्य—

ॐ महामाये महामाले सर्वशक्तिस्वरूपिणि।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मां सिद्धिदा भव॥

इति प्रार्थ्य ओं अविघ्नं कुरु माले त्वमिति तामादाय मन्त्रदेवतां सवितारं ध्यायन् मन्त्रार्थं स्मरन्मध्यं दिनावधि जपेत्। अतित्वरायां सार्धत्रयप्रहरावधि। [2]जपान्ते पुनः प्रणवमुक्त्वा—

त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव।
शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा॥

इति मालां शिरसि निधाय त्रिः प्राणानायम्य न्यासत्रयं कृत्वा जपमीश्वरार्पणं कुर्यात्।

पहिले कही हुई रीति से संस्कार की गई जपमाला को पात्र में रखकर संप्रोक्षण करके 'ॐ महामाये महामाले' इत्यादि मंत्र से प्रार्थना कर 'हे माले तू मुझे विघ्नरहित करो' ऐसा कह माला

---

१. ग्रन्थान्तर में माला का संस्कार—'संस्थाप्य मालामश्वत्थपत्रे पत्रे च संयतः। कृत्वा गोरोचनाक्तां च गायत्र्या स्नापयेत् सुधीः॥ गायत्रीशतकं तस्यां जपेच्च विधिपूर्वकम्। अथवा पञ्चगव्येन स्नात्वा मालां सुसंस्कृताम्॥ अथ गङ्गोदकेनैव स्नात्वा वाऽतिसुसंस्कृताम्।' कुर्यादिति शेषः। नागदेवने विभिन्न मालाओं की महत्ता बतलायी है—'अरिष्टपत्रं बीजं च शङ्खपद्मौ मणिस्तथा। कुशग्रन्थिश्च रुद्राक्ष उत्तमं चोत्तरोत्तरम्॥ प्रवालमुक्तास्फटिकैर्जपः कोटिफलप्रदः। तुलसीमणिभिर्येन गणितं चाक्षयं फलम्॥' अपि च—'यावन्तो वैदिका मन्त्राः पौराणाश्चागमोद्भवाः। सर्वं रुद्राक्षमालायां कथितं मोक्षदायकम्॥' इति।

१. आदि अन्त में प्रणव के उच्चारण नहीं करने पर जपादि नष्ट हो जाता है, जैसा कि मनु ने बतलाया है—'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति॥' इति।

लेकर मन्त्र देवता सविता का ध्यान करते हुये हृदय में माला धारण और मन्त्रार्थ का स्मरण करते हुये दोपहर तक जपे। अधिक शीघ्रता हो तो साढ़े तीन पहर तक जपे। जप के अन्त में पुनः प्रणव कह कर हे माले! आप सब देवताओं को प्रीति और शुभ देने वाली हो। हे भद्रे! मेरा कल्याण करो और सर्वदा यशस्वी वीर्यवान् बनाओ, ऐसा कह कर माला को सिर पर रख के तीन बार प्राणायाम कर तीन न्यासों को करके जप को ईश्वरार्पण करे।

प्रत्यहं समानसंख्य एव जपो न तु न्यूनाधिकः। एवं पुरश्चरणजपसमाप्तौ होमः। 'पुरश्चरणसाङ्गतासिद्ध्यर्थं होमविधिं करिष्ये' इति संकल्प्याग्निं प्रतिष्ठाप्य पीठे सूर्यादिनवग्रहपूजनादि [1]कलशस्थापनान्ते अन्वादध्यात्। चक्षुषी आज्येनेत्यन्ते ग्रहपीठदेवतान्वाधानमर्कादिसमिच्चर्वाज्याहुतिभिः कृत्वा प्रधानदेवतां सवितारं चतुर्विंशतिसहस्रतिलाहुतिभिस्त्रिसहस्रसंख्याकाभिः [2]पायसाहुतिभिर्घृतमिश्रतिलाहुतिभिर्दूर्वाहुतिभिः क्षीरद्रुमसमिदाहुतिभिश्च शेषेण स्विष्टकृतमित्यादि। चरुपायसतिलैः सहाज्यस्य पर्यग्निकरणादि। आज्यभागान्ते इदं हवनीयद्रव्यमन्वाधानोक्तदेवताभ्यः अस्तु न ममेति यजमानस्त्यागं कुर्यात्।

प्रतिदिन समान संख्यक ही जप करे, कम अधिक नहीं करे। इस प्रकार पुरश्चरण जप के समाप्त होने पर होम करे। 'पुरश्चरण सांगता की सिद्धि के लिये होम विधि करूँगा' ऐसा संकल्प कर अग्निस्थापना करके पीढ़े पर सूर्यादि नवग्रह का पूजनादि कलशस्थापनपर्यन्त कर्म करके अन्वाधान करे। 'चक्षुषी आज्येन' इस आहुति के अन्त में ग्रहपीठ देवता का अन्वाधान—अर्क आदि की समिधा, चरु और घृताहुतियों से करके प्रधान देवता सविता को चौबीस हजार तिल की आहुतियों से, तीन हजार खीर की आहुतियों से, घी मिले तिल की आहुतियों से, दूब की आहुतियों से, दूध वाले वृक्ष की समिधा की आहुतियों से और बाकी बचे से स्विष्टकृत् होम करे। चरु, पायस और तिलों के साथ घी का पर्यग्निकरण आदि करे। यजमान आज्यभाग के अन्त में 'यह हवनीय द्रव्य अन्वाधान में कहे गये देवताओं के लिये है मेरा नहीं' ऐसा कह कर त्याग करे।

होमे सप्रणवा व्याहृतिरहिता स्वाहान्ता गायत्री। दूर्वात्रयस्यैकाहुतिः दूर्वासमिधां दधिमध्वाज्याञ्जनम्। स्विष्टकृदादिबलिदानान्ते समुद्रज्येष्ठा इत्यादिभिर्यजमानाभिषेकः। प्रतिलक्षं सुवर्णनिष्कत्रयं तदर्धं वा शक्त्या वा [3]दक्षिणा।

---

१. पञ्चरात्र में कलश का विचार—'सौवर्णं कलशं रम्यं रौप्यं ताम्रमथापि वा। निर्दोषं मृन्मयं वापि चन्दनेन विलेपितम्॥ गन्धपुष्पाक्षताकीर्णं कुशदूर्वाङ्कुरार्चितम्। सितसूत्रावृतं कण्ठे नववस्त्रयुगावृतम्॥ कन्याकर्तितसूत्रेण त्रिगुणेन च कर्मणा। गुणत्रयात्मकेनैव वेष्टयेदभितः स्वयम्॥' इति।

२. डामरतन्त्रे—'पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम्। होमयेद् विधिवद् भक्त्या दशांशेन नृपोत्तम॥' ईश्वरसंहितायाम्—'सर्वथा होमकर्मार्थं तिलमाज्यं न लोपयेत्। तिलाज्ययोरभावे तु हवनं स्यान्निरर्थकम्॥' इति।

३. स्वयम्भूपुराणे—'धर्मार्थकाममोक्षं च प्राप्नुवन्ति च मानवाः। दक्षिणायुक्तपूजायाः फलं सर्वं समुद्भवेत्। दक्षिणाऽयुक्तपूजायाः फलं स्वल्पं प्रकथ्यते। दानकर्मविवाहेषु देवार्चने विशेषतः। यज्ञे तीर्थेऽभिषेके च कर्तव्या दक्षिणा सदा। आयुरारोग्यकल्याणं शुभं च सुखसम्पदम्। सर्वत्र सर्वदा भद्रं ददाति दक्षिणा शुभा॥' ब्रह्मवैवर्ते—'दक्षिणां विप्रमुद्दिश्य तत्कालं चेन्न दीयते। एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत्॥' अपि च—'न ददाति यदा दाता ग्रहीता न च याचते। उभौ तौ नरकं यातो यावच्चन्द्रदिवाकरौ॥' इति।

होमान्ते जले देवं सवितारं संपूज्य होमसंख्यादशांशेन २४०० गायत्र्यन्ते सवितारं तर्पयामीत्युक्त्वा तर्पणं कार्यम्। तर्पणदशांशेन २४० गायत्र्यन्ते आत्मानमभिषिञ्चामि नम इति स्वमूर्ध्न्यभिषेकः।

होम में प्रणव के साथ व्याहृति के विना अन्त में स्वाहा युक्त गायत्री का प्रयोग करे। तीन दूब की एक आहुति होती है। दूब की समिधा दही-मधु घृत से भिगी हो। स्विष्टकृत् आदि बलिदान के अन्त में 'समुद्रज्येष्ठा' इत्यादि मन्त्रों से यजमान का अभिषेक करे। प्रत्येक लक्ष की दक्षिणा सोने की तीन अशर्फी या इसके आधी अथवा यथाशक्ति दे। होम के अन्त में जल में सविता देवता की पूजा कर 'होम संख्या के दशांश से चौबीस हजार गायत्री के अन्त में सविता देवता का तर्पण करता हूँ' ऐसा कह कर तर्पण करे। 'तर्पण के दशांश से दो सौ चालिस गायत्री के अन्त में अपने को अभिषिक्त करता हूँ' यह कह कर अपने मस्तक पर अभिषेक करे।

होमतर्पणाभिषेकाणां मध्ये यदेव न सम्भवति तत्स्थाने तद्द्विगुणो जपः कार्यः। अभिषेकसंख्यादशांशेनाधिकं वा विप्रभोजनम्। पुरश्चरणं पूर्णमस्त्विति विप्रान्वाचयित्वेश्वरार्पणं कार्यम्। प्रत्यहं यज्जाग्रत इति शिवसंकल्पमन्त्रस्य त्रिः पाठः। कर्ता ब्राह्मणैः सह हविष्याशी सत्यवागधःशायी परगृहीतभूप्रदेशानतिचारी च भवेत्। इत्यनन्तदेवीयानुसारेण चतुर्विंशतिलक्षपुरश्चरणप्रयोगः।

होम तर्पण और अभिषेक में से जिसे नहीं किया हो उसके स्थान में उसका दूना जप कर दे। अभिषेक की संख्या के दशांश से या अधिक ब्राह्मणभोजन करावे। 'पुरश्चरण पूर्ण हो' ऐसा ब्राह्मणों से कहवा कर पुरश्चरण को इश्वरार्पण करे। प्रतिदिन 'यज्जाग्रतो' इस शिवसंकल्प मन्त्र का तीन बार पाठ करे। कर्ता ब्राह्मणों के साथ हविष्य भोजन करे, सत्य बोले,भूमि में शयन करे,दूसरे के भूप्रदेश में गमन न करे। यह अनन्तदेव के अनुसार गायत्री के चौबीस लक्ष पुरश्चरण का प्रयोग है।

ऋग्विधाने तु—'मध्याह्ने मितभुङ्मौनी त्रिः स्नानार्चनतत्परः। लक्षत्रयं जपेद्धीमान्' इति त्रिलक्षं पुरश्चरणमुक्तम्। जपशतांशस्त्रिसहस्रं होमः। 'कलौ चतुर्गुणं प्रोक्तम्' इति पक्षे द्वादशलक्षजपः द्वादशसहस्रहोम इत्याद्यूह्यम्। विष्णुशयनमासेषु पुरश्चरणं न कार्यम्। तीर्थादौ शीघ्रं सिद्धिः। बिल्ववृक्षाश्रयेण जपे एकाहात्सिद्धिरिति सर्वमन्त्रप्रक्रिया। इति गायत्रीपुरश्चरणम्।

ऋग्विधान में तो मध्याह्न में मितभोजी, मौनव्रती, त्रिकाल स्नान और देवार्चनपूर्वक तीन लाखगायत्री जपे, इस तरह तीन लाख का पुरश्चरण कहा है। जप का शतांश तीन हजार होम करे। कलियुग में चौगुना करना चाहिये, इस पक्ष में बारह लाख जप, बारह हजार का होम इत्यादि कल्पना करे। विष्णुशयन के महीनों में पुरश्चरण नहीं करना चाहिये। तीर्थ आदि में पुरश्चरण की सिद्धि शीघ्र होती है। बिल्व वृक्ष के नीचे जप करने से एक ही दिन में सिद्धि मिलती है ऐसी सब मन्त्रों प्रक्रिया है। गायत्रीपुरश्चरण समाप्त।

## अथ अश्वत्थोपनयनम्

अथ पूर्तकमलाकरे अश्वत्थोपनयनम्। तच्च वर्णैः क्रमेण वृक्षस्थापनादष्टमे एकादशे द्वादशे वर्षे उपनयनोक्तमुहूर्ते पूर्वाह्णे कार्यम्। शूद्रस्थापिताश्वत्थे पौराणिकमन्त्रैरारामप्रतिष्ठामात्रं कार्यं नोपनयनम्।

पूर्तकमलाकर में अश्वत्थ का उपनयन कहा है उसे ब्राह्मणादि तीनों वर्ण क्रम से वृक्ष के स्थापन से अष्टम, एकादश और द्वादश वर्ष में पूर्वाह्न में और उपनयनोक्त मुहूर्त्त में करे। शूद्र के लगाये अश्वत्थ में पौराणिक मन्त्रों से बगीचे का प्रतिष्ठामात्र करे उपनयन नहीं करे।

अथ प्रयोगः—कर्ता देशकालौ संकीर्त्य 'सर्वपापक्षयकुलकोटिसमुद्धरणपूर्वकविष्णुसायुज्यप्राप्तिकामोऽश्वत्थोपनयनं करिष्ये' इति संकल्प्य नान्दीश्राद्धान्ते आचार्यं वृणुयात्। आचार्यः पञ्चामृतैः शुद्धोदकैः सर्वौषधिजलैश्चाश्वत्थमभिषिञ्च्य पिष्टातकेनालंकृत्य तत्पूर्वे स्थण्डिलेऽग्निं प्रतिष्ठाप्यान्वाधाने अग्निं वायुं सूर्यं त्रिरग्निं पवमानं प्रजापतिं द्विरोषधीर्वनस्पतिं पिप्पलं प्रजापतिं च पालाशसमिच्चर्वाज्यैः प्रत्येकमेकैकयाहुत्या शेषेणेत्यादि। अष्टचत्वारिंशन्मुष्टीनां तूष्णीं निर्वापप्रोक्षणे।

अश्वत्थोपनयनकर्ता देशकाल को कह कर 'सम्पूर्ण पापक्षय, करोड़ों कुल के उद्धार और विष्णु-सायुज्य-प्राप्ति की कामना के लिये अश्वत्थ का उपनयन करूँगा' ऐसा संकल्प कर नान्दीश्राद्ध के बाद आचार्य का वरण करे। आचार्य पंचामृत, शुद्ध जल और सर्वौषधि के जल से अश्वत्थ का अभिषेक और पिष्टातक ( ऐपन ) से अलंकृत कर अश्वत्थ से पूर्व की ओर स्थण्डिल में अग्निस्थापन करके अन्वाधान में अग्नि, वायु, सूर्य, तीनों अग्नि, पवमान, प्रजापति, दो औषधि, वनस्पति, पीपल और प्रजापति को पलाश की समिधा, चरु और घृत से प्रत्येक को एक-एक आहुति तथा शेष से स्विष्टकृत् आदि करे। मौन होकर अड़तालिस मुट्ठियों का निर्वाप और प्रोक्षण करे।

श्रपणाद्याज्यभागान्ते युवं वस्त्राणीत्यश्वत्थं वस्त्रयुग्मेनावेष्ट्य यज्ञोपवीतमिति यज्ञोपवीतं दत्त्वा प्रावेपामेति मेखलां त्रिरावेष्ट्य अजिनं दण्डं च तूष्णीं दत्त्वा अश्वत्थे व इत्यृचा गन्धपुष्पैः संपूज्य देवस्य त्वेति मन्त्रान्ते हस्तं गृह्णाम्यश्वत्थेति स्पृष्ट्वा सप्रणवव्याहृतिकां गायत्रीं त्रिर्जपित्वा अश्वत्थे वो निषदनसूक्तेन 'व्याहृतिभिश्चाश्वत्थं स्थापयामीति स्वर्णशलाकया स्पृष्ट्वाऽऽज्यपलाशसमिच्चरुभिः प्रत्येकं द्वादशमन्त्रैर्द्वादशाहुतीर्जुहुयात्। मन्त्रास्तु—

श्रपण आदि आज्यभाग के अन्त में 'युवं वस्त्राणि' इस मन्त्र से अश्वत्थ वृक्ष को जोड़े वस्त्र से लपेट कर 'यज्ञोपवीतं' इस मन्त्र से यज्ञोपवीत देकर 'प्रावेपाम' इस मन्त्र से मेखला को तीन बार लपेट कर मृगचर्म और दण्ड को विना मन्त्र के देकर 'अश्वत्थे व' इस ऋचा से गंध पुष्प से पूजकर 'देवस्य त्वा' इस मंत्र के अन्त में 'हस्तं गृह्णाम्यश्वत्थ' इस मंत्र से स्पर्श करके प्रणवसहित गायत्री को तीन बार जप कर 'अश्वत्थे वो निषदनं' इस सूक्त और व्याहृतियों से 'अश्वत्थ की स्थापना करता हूँ' इस प्रकार सोने की शलाका से अश्वत्थ का स्पर्श कर घी पलास की समिधा और चरु की प्रत्येक को बारह मंत्रों से बारह आहुति दे। मंत्र तो—

---

१. भूः भुवः स्वः, ये तीन व्याहृतियां हैं। इन तीनों की व्यापकता है—'भवन्ति चास्मिन् भूतानि स्थावराणि चराणि च। तस्माद् भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता। भवन्ति भूयो भूतानि उपभोगक्षये पुनः। कल्पान्ते उपभोगाय भुवस्तस्मात् प्रकीर्तिता। शीतोष्णवृष्टितेजांसि जायन्ते तानि वै सदा। प्रलयः सुकृतीनां च स्वर्लोकः स उदाहृतः ॥' इति।

ॐ भूः स्वाहा अग्नय इदं० । ॐ भुवः स्वा० वायव० । ॐ स्वः स्वा० सूर्याय० । ॐ अग्न आयूंषि० ॐ अग्निर्ऋषिः० ॐ अग्ने पवस्वेति त्रिभिरग्नये पवमानायेदं० । ॐ प्रजापते नत्व० प्रजापतय० । ॐ ओषधयः संवदन्ते० । ॐ अश्वत्थे वो० ओषधीभ्य इदं० । ॐ वनस्पते शत० वनस्पत इ० । ॐ द्वासुपर्णा० पिप्पलायेदं० । समस्तव्याहृतिभिः ओं भूर्भुवःस्व० प्रजापतय इदं० । स्विष्टकृदादिहोमशेषं समाप्याश्वत्थे व इति गन्धपुष्पधूपदीपनैवेद्यफलताम्बूलाद्यैः संपूज्याश्वत्थं स्पृष्ट्वाचार्याय गामन्येभ्यो दक्षिणां दत्त्वाश्वत्थवस्त्रादिकमाचार्याय दत्त्वाष्टौ विप्रान् भोजयेदिति ।

'भूः स्वाहा अग्नये न मम, भुवः स्वाहा वायवे०' इत्यादि मूल में हैं । स्विष्टकृत् आदि होम को समाप्त कर 'अश्वत्थे व' इस मंत्र से गंध, पुष्प, धूप, दीप, नैवेद्य, फल और ताम्बूल आदि से पूजा कर अश्वत्थ को स्पर्श करके आचार्य को गाय और अन्य को दक्षिणा देकर अश्वत्थ पर अर्पित वस्त्रादि आचार्य को देकर आठ ब्राह्मणों को भोजन करावे ।

### अथ अपुत्रस्य वटादितरुपुत्रविधिः

'अपुत्रेण पुंसा स्त्रिया वा वटप्लक्षाम्रादेः पुत्रत्वेन प्रतिग्रहः कार्यः । देशकालौ संकीर्त्य 'महापापक्षयकुलत्रयसमुद्धरणप्रजापतिपुरगमननिरयस्थपितृद्धारमधुधारातृप्तिसिद्ध्यर्थं सपुत्रत्वसिद्ध्यर्थममुकवृक्षं प्रतिग्रहीष्ये' इति संकल्प्योपवासं कृत्वा रात्रौ अष्टविप्रानाहूय चन्द्रं संपूज्य जागरं भूशयनं वा कृत्वा प्रातर्वृक्षं संपूज्य तच्छायायां विप्रान्संभोज्य पुण्याहं वाचयित्वा प्रार्थयेत् ।

पुत्ररहित स्त्री या पुरुष को बड़, पाकड़ और आम आदि को पुत्ररूप से प्रतिग्रह करना चाहिये । देश काल को कह कर 'महापापों के नाश, तीनों कुलों के उद्धार, प्रजापतिपुरगमन, नरकस्थित पितरों के उद्धार, मधुधारा से तृप्ति की सिद्धि और पुत्रत्वसिद्धि के लिये अमुक वृक्ष का प्रतिग्रह करूँगा' ऐसा संकल्प कर उपवास करके रात में आठ ब्राह्मणों को बुलाकर चन्द्रमा की पूजा करके जागरण वा भूमिशयन करके प्रातःकाल वृक्ष की पूजा कर उसकी छाया में ब्राह्मणों को भोजन और पुण्याहवाचन कराकर प्रार्थना करे ।

अपुत्रो भगवन्तोऽत्र पुत्रप्रतिकृतिं तरुम् ।
ग्रहीष्यामि ममानुज्ञां कर्तुमर्हथ सत्तमाः ॥

ताम्रपात्रे पञ्चसौवर्णफलानि बीजपञ्चरत्नयुतान्यधिवास्य लोकपालबलीन्द्-

---

१. 'अपुत्रस्य गतिर्नास्ति स्वर्गं नैव च नैव च' अर्थात् जिनके पुत्र नहीं हैं उनकी सद्गति और स्वर्ग नहीं होता ऐसा बहुत सा वचन आर्षग्रन्थों में देखा गया है उसके दोष-शमन का उपाय भविष्योत्तर पुराण में व्यास जी ने बतलाया हैं—'पुत्रैर्विना शुभगतिर्न भवेन्नराणां दुष्पुत्रकैरिति तथोभयलोकनाशः । एतद्विचार्य सुधिया परिपाल्य वृक्षान् पुत्राः पुराणविधिना परिकल्पनीयाः ॥ बहुभिर्मृतकैर्जातैः पुत्रधर्मार्थवर्जितैः । वरमेकं पथि तरुर्यत्र विश्रमते जनः॥ पुत्राः संवत्सरस्यान्ते श्राद्धं कुर्वन्ति वा न वा । प्रत्यहं पादपाः पुष्टिं श्रेयोऽर्थं जनयन्ति हि ॥' इन वचनों से पुत्रप्रतिग्रह के अभाव में मार्ग के निकट में वृक्षों का लगाना पुत्ररहित व्यक्ति का और अन्यान्य प्राणिमात्र का कल्याणकारक है ।

पितृयज्ञे होमान्तः पिण्डपितृयज्ञोऽनारम्भो वा पिण्डपितृयज्ञस्येति 'पक्षद्वयम्। पितुः पित्राद्युद्देशेन पिण्डदानमिति तृतीयः पक्षः क्वचित्। एवमष्टकादिविकृतिष्वपि पक्षत्रयम्।

इसमें विशेष यह है—अपने अपत्य का संस्कार अपने द्वितीय विवाह आदि निमित्तक नान्दीश्राद्ध में, चातुर्मास्यान्तर्गत पितृयज्ञ में, सोमांग और तृतीय सवनस्थ पितृयज्ञ में, जीवत्पितृक का अधिकार है। पिण्डपितृयज्ञ में होमान्त पिण्डपितृयज्ञ, या अनारम्भ पिण्डपितृयज्ञ ये दो पक्ष हैं। कहीं पर पिता के पिता आदि के उद्देश्य से पिण्डदान, यह तीसरा पक्ष है। इसी प्रकार अष्टका आदि विकृति में भी तीन पक्ष हैं।

## अथ गयादिश्राद्धविचारः

गयां प्रसङ्गतो गत्वा मातुः श्राद्धं सुतश्चरेत्। जीवत्पिता मातुः श्राद्धमुद्दिश्य गयां न गच्छेत्। महानदीषु सर्वासु तीर्थे च प्राप्ते जीवत्पितृकः पितुः पितृमात्राद्युद्देशेन श्राद्धं कुर्यात्। नवम्यामन्वष्टकाश्राद्धं क्षयाहे मातुः प्रत्यब्दश्राद्धं च सपिण्डकमेव जीवत्पितृकः कुर्यात्। तथा संन्यस्ते ताते पतिते च ताते जीवत्यपि सति दर्शश्राद्धमहालयसंक्रान्तिग्रहणादिश्राद्धानि सर्वाणि पितुः पित्राद्युद्देशेन जीवत्पितृकेण कार्याणि। एतानि च सांकल्पिकविधिना पिण्डरहितानि कार्याणि। अन्वष्टक्यादाविव पिण्डदाने विशेषवचनाभावात्।

प्रसंग से गया जाकर पुत्र माता का श्राद्ध करे। जीवत्पितृक माता के श्राद्ध के उद्देश्य से गया न जाय। जीवत्पितृक सम्पूर्ण महानदियों में और तीर्थ प्राप्त होने पर पिता के पिता-माता के उद्देश्य से श्राद्ध करे। नवमी में अन्वष्टका श्राद्ध और मृताह में माता का प्रत्यब्द श्राद्ध सपिण्डक ही करे। इसी प्रकार संन्यस्त पिता अथवा पतित पिता के जीते हुए भी दर्शश्राद्ध-महालय-संक्रान्ति-ग्रहण आदि सब श्राद्धों को पिता के पिता आदि के उद्देश्य से जीवत्पितृक करे। ये सब श्राद्ध सांकल्पिक विधि से पिण्डरहित करना चाहिये, क्योंकि अन्वष्टका आदि की तरह पिण्डदान में विशेष वचन का अभाव है।

## अथ दौहित्रप्रतिपच्छ्राद्धम्

आश्विनशुक्लप्रतिपदि दौहित्रो जीवत्पितृकः सपिण्डकं मातामहश्राद्धं कुर्यात्।

---

१. जैसा कात्यायन ने बतलाया है—'होमान्तमनारम्भो वा' इति। 'जीवन्तं पितरं भोजयित्वा परयोः श्राद्धं कुर्यात्' यह भी पक्ष है, जैसा यज्ञपार्श्व की उक्ति है—'होमान्तः पितृयज्ञः स्याज्जीवे पितरि जानतः। पितरं भोजयित्वा वा पिण्डौ निपृणुयात् परौ॥ येभ्यः पिण्डान् पिता दद्यात्तेभ्यः पुत्रोऽपि वा ददेत्।' जीवतां पिण्डानग्नौ हुत्वा परेभ्यो देयम्' इस पक्ष में प्रमाण है—'जुहुयाज्जीवेभ्यः' यह आश्वलायन की उक्ति। 'जीवतामजीवतां च पिण्डदानम्' इस पक्ष की पुष्टि में निगमोक्त वचन है—'जीवतामजीवतां वा देयमेवेति हिरण्यकेतुः' इति। 'तस्माज्जीवत्पिता कुर्याद् द्वाभ्यामेव न संशयः' इस भविष्य की उक्ति से दो का श्राद्ध करे, यह भी पक्ष है।—

इस प्रकार निर्णयसिन्धुकार ने अनेक पक्ष बतलाते हुये कहा है—'एते पक्षाः कलौ निषिद्धाः, 'प्रत्यक्षमर्चनं श्राद्धे निषिद्धं मनुरब्रवीत्। पिण्डनिर्वपणं चापि महापातकसम्मितम्॥' इति पृथ्वीचन्द्रोदये भविष्योक्तेः।' इसलिये पिता के जीते श्राद्ध का आरम्भ ही नहीं करे यही एक पक्ष है, जैसा कात्यायन ने हो कहा है—'सपितुः पितृकृत्येषु अधिकारो न विद्यते' इति।

आश्विन शुक्ल प्रतिपदा में जीवत्पितृक दौहित्र ( लड़की का लड़का ) पिण्डसहित मातामह ( नाना ) का श्राद्ध करे।

## अथ पितृव्यादीनां प्रतिवर्षं क्षयाहश्राद्धविचारः

तथा भ्रातृपुत्रोऽपुत्रस्य पितृव्यस्य प्रत्यब्दश्राद्धं सपिण्डं कुर्यात्। एवं कनिष्ठ-भ्राताप्यपुत्रज्येष्ठभ्रातुः प्रत्यब्दम्। तथा सपत्नीपुत्रः सापत्नमातुः श्राद्धम्। एवं दौहित्रोऽपुत्रस्य मातामहस्य प्रत्यब्दम्। इत्थं च पितृव्यादिश्राद्धचतुष्टये जीवत्पितृकस्याप्यधिकारः। पितृव्यभ्रात्रादीनामपुत्राणां पत्नीसत्त्वे सैवाधिकारिणी न तु भ्रातृपुत्रादेः श्राद्धाधिकारः। एवं पतिरेव पुत्राभावे भार्याश्राद्धं कुर्यात्। सपत्नी-पुत्रसत्त्वे तु स एव कुर्यान्न भर्ता।

इसी प्रकार भतीजा पुत्ररहित चाचा का प्रत्यब्द श्राद्ध पिण्डसहित करे। इसी तरह छोटा भाई भी पुत्ररहित जेठे भाई का प्रतिवार्षिक श्राद्ध करे। और सौतेली माता का पुत्र सौतेली माता का श्राद्ध करे। एवं लड़की का लड़का पुत्ररहित नाना का प्रत्यब्द श्राद्ध करे। इस रीति से पितृव्य आदि चारो श्राद्धों में जीवत्पितृक का भी अधिकार है। पुत्ररहित पितृव्य भ्रात्रादि की पत्नी के रहने पर वही श्राद्धा-धिकारिणी है, भ्रातृपुत्रादि को श्राद्ध का अधिकार नहीं है। पुत्र के नहीं रहने पर पति ही भार्या का श्राद्ध करे। सौतेले पुत्र के रहने पर तो सौतेली माता का वही श्राद्ध करे, पति न करे।

दौहित्रभ्रातृपुत्रयोः सत्त्वे मृतस्य विभक्तत्वे दौहित्र एव, अविभक्तत्वे भ्रातृ-पुत्रः। केचिद् [1]भ्रातृतत्पुत्रयोः सत्त्वे भ्रात्रैव श्राद्धं कार्यमित्याहुः। तथा जीवत्पितृ-कस्य पितृपितामहादिमनुष्यपितृतर्पणनिषेधेऽपि [2]अग्निष्वात्तादिदेवपितृतर्पणनिषेधा-भावात्स्नानाङ्गपितृतर्पणे ब्रह्मयज्ञाङ्गभूतदेवरूपिपितृतर्पणे चाधिकारोऽस्त्येव। एवं यदीयश्राद्धेऽधिकारस्तदीयश्राद्धाङ्गतर्पणेऽप्यधिकारः।

लड़की का लड़का और भतीजा के रहने पर विभक्त मरने वाले का लड़की का लड़का ही श्राद्ध करे, विभक्त न हो तो भातृपुत्र श्राद्ध करे। कुछ लोग—भाई और भतीजे के रहते भाई को ही श्राद्ध करना चाहिये, ऐसा कहते हैं। इसी प्रकार जीवत्पितृक को पितृ-पितामहादि-मनुष्य-पितृतर्पण के निषेध होने पर भी अग्निष्वात्तादि देव-पितृ-तर्पण का निषेध न होने से स्नानांग पितृ-तर्पण में ब्रह्मयज्ञांगभूत देवरूपी पितृतर्पण में अधिकार है ही। इसी तरह जिसके श्राद्ध में अधिकार है उसका श्राद्धांग तर्पण में भी अधिकार है।

---

१. हारलतादि में ब्रह्मपुराण के—'भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते। तस्य भ्रातृ-सुतश्चक्रे यस्य नास्ति सहोदरः॥' इस वचन से और कूर्मपुराण के—'पत्नी कुर्यात् सुताभावे पत्न्यभावे सहोदरः' इस वचन से बड़ा भाई ही करे उसका पुत्र नहीं, ऐसा कहा है।

२. अग्निष्वात्त मरीचि के पुत्र और देवताओं के पितर हैं, जैसा मनु ने बतलाया है—'विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः। अग्निष्वात्ताश्च देवानां मारीचा लोकविश्रुताः॥' अर्थात् विराट् के पुत्र सोमसद, साध्यों और मरीचि के पुत्र अग्निष्वात्त देवताओं के पितर हैं। मरीचि उन दस महर्षियों में हैं जिन्हें सर्व प्रथम मनु ने उत्पन्न किया। मनु ने उन दसों के नाम बतलाये हैं—'मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्। प्रचेतसं वसिष्ठं च भृगुं नारदमेव च॥' इनमें अत्रि के पुत्र बर्हिषद्—दैत्य-दानवादि के पितर हैं—'दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम्। सुपर्णकिन्नराणां च स्मृता बर्हिषदोऽत्रिजाः॥' इति।

## अथ भीष्मतर्पणम्

जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः। श्राद्धाङ्गतर्पणभिन्नतर्पणं जीवत्पितृकेण तिलैर्न कार्यम्। श्राद्धप्रयोगमध्ये वामजानुन्यग्भावो नीवीबन्धश्च न कार्यः। नद्यादौ स्नात्वा तर्पणान्ते समन्त्रकं वस्त्रनिष्पीडनं विहितं[1] तन्न कार्यम्। तथा 'खड्गमौक्तिकहस्तेन कर्तव्यं पितृतर्पणम्' इति विहितं खड्गधारणं न कार्यम्।

अपसव्यं द्विजाग्र्याणां पित्र्ये कर्मणि कीर्तितम्।
आप्रकोष्ठात्तु कर्तव्यमेतत्पितरि जीवति॥

यम और भीष्म का तर्पण जीवत्पितृक भी करे। श्राद्धांग तर्पण से भिन्न तर्पण तिल से जीवत्पितृक को नहीं करना चाहिये। श्राद्ध प्रयोग के मध्य में बाएं जंघे का झुकाना और नीवी-बन्धन नहीं करना चाहिये। नदी आदि में स्नान करके तर्पण के अन्त में समन्त्रक वस्त्रनिष्पीडन जो विहित है उसे न करे। तथा गेंडा और मोती को हाथ में धारण कर पितृतर्पण करना चाहिये, इस वचन से विहित खड्ग ( गेंडा ) का धारण न करे। पितृकर्म में ब्राह्मणों को अपसव्य से कर्म करना कहा है वह अपसव्य पिता के जीवित रहते प्रकोष्ठपर्यन्त कर्तव्य है।

## अथ पितरि जीवति महालयादौ वाक्यकल्पना

जीवति संन्यस्तादिरूपे पितरि मृतमातृमातामहकोऽपि पुत्रः पितुः पितृपितामहप्रपितामहानां पितुर्मातृपितामहीप्रपितामहीनां पितुर्मातामहमातृपितामहमातृप्रपितामहानामिति पार्वणत्रयमेकोद्दिष्टगणं च स्वमातरं पितुः पत्न्या इति स्वपितृव्यं पितुर्भ्रातुरिति स्वमातामहं च पितुः श्वशुरस्येत्येवमादिना पितृसंबन्धपुरस्कारेणैवोद्दिश्य महालयश्राद्धं कुर्यात्। एवं दर्शादिषूह्यम्। पितुः संन्यासाभावेऽपि तीर्थश्राद्धं जीवत्पितुरेवमेव। एवं वृद्धिश्राद्धेऽप्यूह्यम्। ब्रह्मयज्ञान्ते नित्यं पितृतर्पणमपि संन्यस्तादिरूपजीवत्पितृकेणैवमेव कार्यमित्याहुः।

संन्यस्त आदि के रूप में पिता के जीते रहते, माता और मातामह के मरने पर भी पुत्र पिता के पितृ-पितामह-प्रपितामहों का, पिता की माता-पितामही-प्रपितामही का और पिता के मातामह और माता के पितामह तथा माता के प्रपितामह का यह पार्वणत्रय और एकोद्दिष्टगण—अपनी माता का—पिता की पत्नी, अपने पितृव्य का—पिता का भाई और अपने नाना का—पिता का श्वशुर इत्यादि वाक्य से पिता का सम्बन्ध प्रदर्शन करके ही महालय श्राद्ध करे। इसी प्रकार दर्श आदि में कल्पना करे। जीवत्पितृक पिता के संन्यास के अभाव में भी इसी प्रकार तीर्थश्राद्ध करे। इसी प्रकार वृद्धिश्राद्ध में भी कल्पना करे। ब्रह्मयज्ञ के अन्त में नित्य पितृतर्पण भी संन्यस्तादिरूप पिता वाले जीवत्पितृक को इसी प्रकार करना चाहिये, ऐसा कोई कहते हैं।

## अथ मात्रादीनां वार्षिकादौ वाक्यकल्पना

यदा तु मातुर्वार्षिकमपुत्रमातामहवार्षिकमपुत्रपितृव्यवार्षिकं वा क्रियते तदा क्रमेण मातृपितामहीप्रपितामहीनां मातामहमातृपितामहमातृप्रपितामहानां

---

१. वृहत्पराशर के—'निःपीडयेत्स्नानवस्त्रं तिलदर्भसमन्वितम्। न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः॥' इस वचन से विहित का जीवत्पितृकों के लिये निषेध है।

पितृव्यपितामहप्रपितामहानामित्येवोद्देशः। यदा च पित्रादिभिः स्वाशक्त्यादिना नियोजितः पित्रादिकरणीयं श्राद्धं स्वयं पित्रादेः [1]प्रतिनिधिभूय करोति तदा पितुरमुकशर्मणो यजमानस्य पितृपितामहप्रपितामहानामित्येवं यथाश्राद्धमुद्देशः।

जब माता का वार्षिक, पुत्रहीन मातामह का या पुत्रहीन पितृव्य का वार्षिक करे तब क्रम से माता-पितामही-प्रपितामही का, मातामह माता के पितामह और माता के प्रपितामह का, पितृव्य के पितामह और प्रपितामह का, यही उद्देश्य से करे। जब अपनी असमर्थता से पिता द्वारा नियुक्त पुत्र पिता आदि के करने योग्य श्राद्ध को पिता आदि का प्रतिनिधि होकर स्वयं करता है तब अमुक शर्मा पिता यजमान के पिता पितामह और प्रपितामह का, इस प्रकार श्राद्ध के अनुसार उद्देश करे।

## अथ ज्येष्ठाधिकारविचारः

सर्वत्र पितृकृत्ये भ्रातृष्वविभक्तेषु [2]ज्येष्ठस्यैवाधिकारः। विभक्तेषु पृथक् पृथक्। सापत्नभ्रातरि ज्येष्ठे सत्यपि कनिष्ठ एव स्वमातृवार्षिकान्वष्टक्यादि कुर्यात्।

सर्वत्र पितृकृत्य में अविभक्त भाइयों में ज्येष्ठ ही का अधिकार है। विभक्त भाइयों में अलग-अलग श्राद्ध होता है। सौतेले भाई के जेठे रहने पर भी छोटा भाई ही अपनी माता का वार्षिक अन्वष्टक्यादि श्राद्ध करे।

## अथ पितृपितामहयोर्जीवने विचारः

जीवत्पितृपितामहकस्य संन्यस्तपितृपितामहकस्य च पितामहस्य पित्राद्युद्देशेन वृद्धिश्राद्धं तीर्थश्राद्धं दर्शादिश्राद्धं वा भवति। पित्रादिषु त्रिषु जीवत्सु सत्सु संन्यस्तेषु च न किमपि श्राद्धं कार्यम्। केचित्तु पित्रादित्रयात्परेभ्यः श्राद्धं देयमाहुः।

जिसके पिता पितामह जीते हों वह और जिसके पिता पितामह संन्यासी हो गये हों, उसका पितामह के पिता आदि के उद्देश्य से वृद्धिश्राद्ध तीर्थश्राद्ध या दर्शादि श्राद्ध होता है। पिता आदि

---

१. प्रतिनिधि को उन सभी नियमों का पालन करना चाहिये, जो कर्ता के लिये श्राद्ध में विहित हैं, जैसा हेमाद्रि में वाराह की उक्ति है—'न शक्नोति स्वयं कर्तुं यदा ह्यनवकाशतः। श्राद्धं शिष्येण पुत्रेण तदाऽन्येनापि कारयेत्॥ नियमानाचरेत् सोऽपि नियमांश्च वसुन्धरे। यजमानोऽपि तान्सर्वानाचरेत् सुसमाहितः॥' इति।

२. पृथ्वीचन्द्रोदय में मरीचि ने अविभक्त भाइयों में बड़े भाई के लिये कहा है—'बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः। सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम्॥ द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्।' अर्थात् बड़े भाई के करने पर भी सभी भाई श्राद्ध-फल का भागी होते हैं।

उशना ने विभक्त भाइयों के सम्बन्ध में कहा है—'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥' लघुहारीतः—'सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्॥ ऊर्ध्वं सपिण्डीकरणात् सर्वे कुर्युः पृथक् पृथक्।' मदनरत्ने—'विभक्तास्तु पृथक् कुर्युः प्रतिसंवत्सरादिकम्। एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम्॥' इति।

तीन के जीते रहने पर या संन्यासी होने पर कोई श्राद्ध नहीं करे। कुछ लोग तो—पिता आदि तीन से परे का श्राद्ध करना चाहिये—ऐसा कहते हैं।

## अथ पितरि मृते पितामहे जीवति विचारः

मृते पितरि पितामहजीवने पित्रे पितामहात्पराभ्यां च श्राद्धं देयम्। एवं पितृपितामहमरणे प्रपितामहजीवनेऽप्यूह्यम्[1]।

पिता के मरने और पितामह के जीवित रहने पर पिता के पितामह से परे दो का श्राद्ध करे। इसी प्रकार पिता पितामह के मरने और प्रपितामह के जीवित रहने में भी कल्पना कर ले।

## अथ गृह्याग्निश्रौताग्निमतोर्विशेषः

यस्तु गृह्याग्निमान् जीवन्मातृपितृकः पितुः पित्रादिभ्यः पिण्डदानमिति तृतीयपक्षाश्रयेणारब्धपिण्डपितृयज्ञाष्टकान्वष्टकाश्राद्धोऽन्वष्टकायां च पितुः पित्रादिमात्रादिमातामहादिभ्यः पिण्डादिकं ददान आसीदनन्तरं च माता मृता सोऽन्वष्टकायां स्वमात्रादिभ्यः पितुः पित्रादिभ्यश्च दद्यात्। यदा च पिण्डपितृयज्ञान्वष्टकाद्यनारम्भपक्षो जीवत्पितृकस्य तदापि संन्यस्तादिपितृकस्य दर्शादिश्राद्धं पितुः पित्राद्युद्देशेन व्यतिषङ्गभिन्नप्रयोगेण सांकल्पिकेन भवत्येव।

जिस गृह्याग्नि वाले का माता पिता जीते हैं वह पिता के पिता आदि का पिण्डदान करे, इस तृतीय पक्ष के आश्रयण से पिण्डपितृयज्ञ, अष्टका और अन्वष्टका का श्राद्ध आरंभ कर दिया है और अन्वष्टका में भी पिता के पिता आदि, माता आदि मातामह आदि का पिण्ड आदि देता रहा हो और बाद में माता मर जाय तो वह अन्वष्टका में अपनी माता आदि और पिता के पिता आदि के लिये पिण्ड दे। जब पिण्डपितृयज्ञ और अन्वष्टका आदि के आरंभ न करने का पक्ष है, तब जीवत्पितृक को भी जिसके पिता संन्यासी आदि हो गये हैं उसका दर्श आदि श्राद्ध पिता के पिता के उद्देश और व्यतिषंग (परस्पर सम्बन्ध) से भिन्न प्रयोग करके सांकल्पिक श्राद्ध होता ही है।

## अथ जीवत्पितृकस्य वैश्वदेवविचारः

पितुरविभक्तैः पुत्रैः पृथग्वैश्वदेवो न कार्यः। 'पितृपाकोपजीवी स्याद् भ्रातृपाकोपजीवकः' इत्युक्तेः। अत एव गृह्याग्नौ पाकवैश्वदेवकरणपक्षेऽपि साग्निके पितरि साग्निकैरप्यविभक्तैः पुत्रैः पृथग्वैश्वदेवो न कार्यः। येषां पाकाभावेऽग्नेर्लौकिकत्वं मतं तैः पाकमात्रमग्निसंस्कारार्थं कार्यमिति भाति।

पिता से अविभक्त पुत्र अलग वैश्वदेव नहीं करे, क्योंकि लिखा है कि एक में रहने वाले लड़के पिता के पाक से या भाई के पाक से जीने वाले हों। इसी लिये गृह्याग्नि में पाक वैश्वदेव

---

१. हेमाद्रि में विष्णु की उक्ति है—'पितरि जीवति यः श्राद्धं कुर्याद्येषां पिता कुर्यात्तेषां, पितरि पितामहे च जीवति येषां पितामहः, पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्। यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय पितामहात् पराभ्यां द्वाभ्यां दद्यात्। यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितापितामहाय दद्यात्।' 'मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः। मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम्॥' इति।

करने के पक्ष में भी साग्निक पिता के रहते साग्निक अविभक्त पुत्र अलग वैश्वदेव नहीं करे। जिनको पाक के अभाव में अग्नि का लौकिकत्व सिद्ध है उनको अग्निसंस्कार के लिये पाकमात्र करना चाहिये, यह मुझे अच्छा प्रतीत होता है।

[1]विभक्तैस्तु पृथग्वैश्वदेवः कार्यः। तत्र वैश्वदेवस्य देवयज्ञभूतयज्ञपितृयज्ञात्मकत्वाज्जीवत्पितृकैरपि पञ्चमहायज्ञान्तर्गतः पितृयज्ञः कार्यः। वैश्वदेवाद्भिन्नाः पञ्चमहायज्ञास्तैत्तिरीयाणां तैरपि विभक्तैर्जीवत्पितृकैः पितृयज्ञः कार्यः, तस्य देवरूपिपितृदेवताकत्वेन पितृपितामहादिमनुष्यरूपिपितृदेवताकत्वाभावात्।

विभक्त पुत्रों को तो पृथक् वैश्वदेव करना चाहिये। उसमें वैश्वदेव का देवयज्ञ-भूतयज्ञ-पितृयज्ञात्मक होने से जीवत्पितृक भी पंच महायज्ञान्तर्गत पितृयज्ञ करे। तैत्तिरीयों का वैश्वदेव से भिन्न पंचमहायज्ञ है वे भी विभक्त जीवत्पितृक पितृयज्ञ करे, क्योंकि उनको देवरूपी पितृदेवताकत्व होने से पितृपितामहादि मनुष्यरूपी पितृदेवताकत्व का अभाव है।

## अथ मुण्डनादिनिषेधविचारः

'मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः।
न जीवत्पितृकः कुर्याद् गुर्विणीपतिरेव च॥

अत्र मुण्डनं क्षुरेण शिरसो वपनं, तेन कर्तनं[2] सिद्ध्यति। सर्वं प्रेतकर्म प्रेतदहनवहनसपिण्डीकरणान्तौर्ध्वदेहिकादिकमित्यर्थः। मुण्डनं रागप्राप्तमेव निषिद्ध्यते, तेन चौलोपनयनादिषु आधानदर्शपौर्णमासज्योतिष्टोमादिषु नित्यप्राप्तं तीर्थप्रायश्चित्तमातृमरणादौ नैमित्तिकप्राप्तं च भवत्येव[3]। केचित्काम्यनागबल्यादिषु काम्यमपि भवतीत्याहुः।

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ।
आधाने सोमपाने च वपनं सप्तसु स्मृतम्॥

गुरोरिति दत्तकस्य पूर्वापरपित्रोरित्यर्थः। वाक्यान्तरे तीर्थमात्रे क्षौरोक्तेर्गङ्गाभास्करक्षेत्रग्रहणं जीवत्पितृकस्य तत्र विशेषतः क्षौरविधानार्थम्।

जीवत्पितृक एवं गर्भिणीपति—मुण्डन, पिण्डदान और सभी प्रेत कर्म नहीं करें। इसमें मुण्डन का तात्पर्य छुरे से सिर का मुड़ाना है, इससे कर्तन सिद्ध होता है। सम्पूर्ण प्रेत कर्म का तात्पर्य प्रेत का जलाना, ढोना और सपिण्डीकरणपर्यन्त और्ध्वदेहिक कर्म है। इसमें रागप्राप्त मुण्डन ही निषिद्ध

---

१. मिताक्षरा में नारद की उक्ति है—'भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते। विभागे सति धर्मोऽपि भवेत्तेषां पृथक्-पृथक्॥' बृहस्पति ने भी कहा है—'एकपाकेन वसतां पितृदेवद्विजार्चनम्। एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे॥' हारीतः—'भ्रातृणामविभक्तानां पृथक्पाको भवेद्यदि। वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक्पृथक्॥' इति।

२. स्मृत्यन्तर में कहा है—'मुण्डनस्य निषेधेऽपि कर्तनं तु विधीयते।' यानी मुंडन के निषेध होने पर भी कैंची से केश का कटाना विहित है।

३. जैसा बृहस्पति ने कहा है—'क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्। पित्रादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके॥' इति।

है, इससे चूड़ाकरण-उपनयन आदि में और आधान-दर्श-पौर्णमास-ज्योतिष्टोम आदि में नित्य प्राप्त एवं तीर्थ, प्रायश्चित्त और मातृमरण आदि में नैमित्तिक मुण्डन होता ही है। कुछ लोग—काम्य नागबलि आदि में काम्य मुण्डन भी होता है--ऐसा कहते हैं। गंगा में, भास्कर क्षेत्र में, माता पिता और गुरु के मरने में, आधान में एवं सोमपान में, इन सातों में मुण्डन कहा है। 'गुरोः' शब्द से दत्तक का पहले पिछले दोनों पिता का, ऐसा अर्थ है। दूसरे वचनों से तीर्थमात्र में मुण्डनोक्ति से गंगा-भास्करक्षेत्र का ग्रहण जीवत्पितृक को उनमें विशेषतः क्षौर-विधानार्थ है।

जीवत्पितृकस्य पिण्डदाननिषेधः नान्दीश्राद्धतीर्थश्राद्धयोः संन्यस्तादिपितृकस्य दर्शमहालयादिश्राद्धेषु च पिण्डरहितसांकल्पिकश्राद्धबोधनार्थः। महापितृयज्ञे सोमयागे मातृमातामहादेर्वार्षिकश्राद्धेषु गयायामन्वष्टक्यादौ च पिण्डदानं भवत्येवेत्युक्तम्।

जीवत्पितृक को पिण्डदान का निषेध नान्दीश्राद्ध और तीर्थश्राद्ध में है और जिसके पिता संन्यासी हो गये हैं उनका दर्श और महालयादि श्राद्धों में पिण्डरहित सांकल्पिक श्राद्ध बोधनार्थ है। महा पितृयज्ञ में, सोमयाग में, माता मातामहादि के वार्षिक श्राद्धों में, गया में और अन्वष्टक्यादि में पिण्डदान होता ही है, यह कहा है।

## अथ पित्रोर्वार्षिके गर्भिणीपतिना पिण्डदानम्

'पिण्डदानं प्रकुर्वीत मातापित्रोः क्षयाहनि' इति श्राद्धविधिना पिण्डदाने सिद्धे पुनः पिण्डविधिः पित्रोर्वार्षिके गर्भिणीपतित्वनिषिद्धकालादिप्रयुक्तनिषेधबाधनार्थम्। तेन—

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम्।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥

इति निषेधस्यापि बाधः। क्षयाहग्रहणं सपिण्डीकरणमासिकेष्वपि पिण्डदानोपलक्षणपरम्।

माता पिता के मृत तिथि में पिण्डदान करे, इस श्राद्ध की विधि से पिण्डदान के सिद्ध होते हुए पुनः पिण्ड की विधि पिता माता के वार्षिक में गर्भिणीपतित्व एवं निषिद्ध कालादिप्रयुक्त निषेध के बाधन के लिये है। इससे—विवाह उपनयन और चूड़ाकर्म में क्रम से एक वर्ष, छ मास और तीन मास तक पिण्डदान, मृत्तिका से स्नान और तिल से तर्पण नहीं करे, इस निषेध का भी बाध होता है। क्षयाह का ग्रहण सपिण्डीकरण और मासिक श्राद्ध में पिण्डदान के उपलक्षण के लिये है।

## अथ प्रेतकर्मप्रतिप्रसवः

जीवत्पितृकः स्वमातुरपुत्रसापत्नमातुः स्वपुत्रसपत्नीपुत्ररहितभार्याया अपुत्रपितृव्यस्यापुत्रमातामहमातामह्योश्च दाहादिप्रेतकर्माणि कुर्यात्। अत्रापुत्रपदेन मुख्यगौणपुत्रपौत्रप्रपौत्राभावो विवक्षितः।

जीवत्पितृक अपनी माता का, पुत्ररहित सौतेली माता का, अपने पुत्र और सौतेली पुत्ररहित भार्या का, पुत्रहीन पितृव्य का, पुत्रहीन नाना और नानी का, दाह आदि प्रेतकर्म करे। यहां अपुत्र पद से मुख्य गौण पुत्र-पौत्र-प्रपौत्र का अभाव विवक्षित है।

## अथ अनुपनीतस्य पित्रोरन्त्यकर्मनिर्णयः

मातुरौर्ध्वदेहिकमनुपनीतोऽपि जीवत्पितृकः कुर्यात् । तत्र विशेषः—ऊनत्रिवर्षश्चूडारहितश्चेद्दाहमात्रं समन्त्रकं कृत्वान्यदन्येन कारयेत् । यदा तु कृतचूडः पूर्णत्रिवर्षो वा तदा सर्वं समन्त्रकं प्रेतकर्म कुर्यात् । ब्रह्मचारी तु पित्रोर्मातामहस्य चान्त्यकर्म[१] कुर्यान्नान्यस्य ।

पितृजीवी अनुपनीत भी माता का औध्र्वदेहिक श्राद्ध करे। उसमें यह विशेष है कि तीन वर्ष से कम चूड़ारहित पुत्र हो तो समन्त्रक दाहमात्र करके बाकी कार्य दूसरे से करावे। जब चूड़ाकरण से संस्कृत पूरे तीन वर्ष का पुत्र हो तब समन्त्रक सब प्रेतकर्म करे। ब्रह्मचारी तो माता पिता और नाना का प्रेतकर्म करे, अन्य का नहीं।

## अथ भर्त्रादिकर्तृसंपाते पत्न्या दाहादिनिर्णयः

भर्तृदौहित्रयोः सत्त्वे भर्तैव पत्न्या दाहादि कुर्यात् । मुण्डनं तु भर्तुर्न । एवमपुत्रस्य पत्नीदौहित्रयोः सत्त्वे पत्न्येव पत्युः कुर्यात् । तत्र दाहमात्रं समन्त्रकं कृत्वान्यत्संकल्पमात्रं स्वयं विधाय ब्राह्मणद्वारा कारयेत् । भर्तृसपत्नीपुत्रयोः सत्त्वे सापत्नपुत्र एव कुर्यान्न भर्ता । सपत्नीपुत्रदौहित्रयोः सत्त्वे सपत्नीपुत्र एव । अपुत्रयोर्विधवाविधुरयोर्भ्रातृपुत्रदौहित्रयोः सत्त्वे दौहित्र एवाधिकारीति बहवः । विधवाया भर्तुर्भ्रातृपुत्र एव, विधुरस्य स्वभ्रातृपुत्र एवेति जीवत्पितृकनिर्णये भट्टाः । अपुत्रस्य पत्नीभ्रातृपुत्रयोः सत्त्वे पत्न्येव ।

पति और लड़की के लड़के के रहने पर पति ही पत्नी का दाह आदि करे, किन्तु पति का मुण्डन नहीं होता। इसी प्रकार पुत्ररहित का पत्नी और लड़की के लड़के के रहते हुए पति का प्रेतकर्म पत्नी ही करे। उसमें समन्त्रक दाहमात्र करके बाकी स्वयं संकल्प करके ब्राह्मणद्वारा करावे! पति और सौतेले पुत्र के रहते सौतेला पुत्र ही करे पति न करे। सौतेले पुत्र और लड़की के लड़के के रहते सौतेला पुत्र ही करे पति न करे। पुत्ररहित विधवा और विधुर के, भतीजा और लड़की के लड़के के रहने पर दौहित्र ही अधिकारी होता है, ऐसा बहुतों का कहना है। विधवा का, पतिका भतीजा ही प्रेत कर्म करे और विधुर का, अपने भाई का पुत्र ही अधिकारी है, ऐसा जीवत्पितृक निर्णय में भट्टने कहा है। पुत्ररहित का, पत्नी और भतीजे के रहते पत्नी ही अधिकारिणी है।

## अथ पुत्रासन्निधौ पौत्रस्याधिकारः

एवं पुत्रासन्निधौ पौत्रादेः पितामहपितामह्याद्यौर्ध्वदेहिकाद्यधिकारः । इत्थं पित्र्यकर्ममुण्डनप्रेतकर्माद्यधिकारानधिकारौ जीवत्पितृकस्य प्रपञ्चितौ । अत्र विषयभेदाद्बालबोधार्थत्वाच्च पुनरुक्तिर्नातिदोषाय ।

---

१. शुद्धिविवेक और पृथ्वीचन्द्रोदय में ब्रह्मपुराण का वचन है—'असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः । श्राद्धं तु मातापितृभिर्न तु तेषां करोति सः ॥' यहाँ श्राद्धपद से मासिक वार्षिकादि सभी श्राद्ध ग्राह्य हैं। माता पिता से अन्य का श्राद्ध करने पर ब्रह्मचारी का व्रतभंग हो जाता है, जैसा वसिष्ठ ने कहा है—'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः ।' वृद्धमनु ने आचार्य, माता और पिता के सम्बन्ध में कहा है—'आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती । संकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥' इति ।

इसी प्रकार पुत्र के असान्निध्य में पौत्र आदि को पितामह पितामही आदि के और्ध्वदेहिक आदि श्राद्ध का अधिकार है। इस प्रकार पित्र्य कर्म, मुण्डन और प्रेत कर्म का अधिकार और अनधिकार जीवत्पितृक का प्रपंचित है। इसमें विषय भेद से और बालबोध के लिये होने से पुनरुक्ति अतिदोष के लिये नहीं है।

## अथ सपिण्डमरणे तिलाञ्जलिदानम्

सपिण्डानां सगोत्रसपिण्डमरणे सकृत्सकृत्तिलाञ्जलिदानं विहितं तज्जीवत्पितृकेणापि कार्यम्। एवं मातामहाचार्यादिभ्योऽपि। इति जीवत्पितृकनिर्णयः।

सगोत्र सपिण्ड के मरने में सपिण्डों को एक-एक बार तिलांजलि का दान विहित है, यह जीवत्पितृक को भी करना चाहिये। इसी प्रकार नाना और आचार्यादि को भी दे। जीवत्पितृक-निर्णय समाप्त।

## अथ श्राद्धाद्यधिकारिनिर्णयः

तत्र सांवत्सरिकादिश्राद्धेषु दाहाद्यौर्ध्वदेहिकक्रियायां चौरसः[1] पुत्रो मुख्योऽधिकारी। औरसपुत्राणां बहुत्वे ज्येष्ठ एवाधिकारी। ज्येष्ठस्याभावेऽसन्निधाने वा पातित्यादिनाधिकाराभावे वा ज्येष्ठानुजः। यत्तु ज्येष्ठासन्निधौ सर्वतः कनिष्ठोऽधिकारी न तु मध्यमा इति तन्निर्मूलम्। तत्र पुत्राणां विभक्तत्वे कनिष्ठेभ्यो धनं गृहीत्वा [2]ज्येष्ठेनैव सपिण्डीकरणान्ता क्रिया कार्या। सांवत्सरिकादिकं तु पृथक्-पृथक्। अविभक्तत्वे तु सांवत्सरिकादिकमप्येकेनैव कार्यम्।

वार्षिक आदि श्राद्धों में और दाह आदि और्ध्वदेहिक कृत्यों में मुख्य अधिकारी औरस पुत्र होता है। बहुत औरस पुत्रों के रहते ज्येष्ठ ही अधिकारी होता है। ज्येष्ठ के न रहने पर या दूर रहने पर या पातित्य आदि से अनधिकारी होने पर जेठे का अनुज अधिकारी होता है। किसी का मत है कि ज्येष्ठ के असान्निध्य में, सबसे छोटा अधिकारी होता है न कि मध्यम, वह निर्मूल है। पुत्रों के अलग होने पर छोटों से धन लेकर ज्येष्ठ ही सपिण्डीकरण पर्यन्त क्रिया करे। वार्षिकादि श्राद्ध तो अलग अलग करे। भाइयों के एक में रहने पर तो वार्षिकादि भी एक ही को करना चाहिये।

---

१. चन्द्रिका में सुमन्तु की उक्ति है—'मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादृतः॥' हेमाद्रि में शंख का वचन है—'पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया। पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः॥' इति।

२. पृथ्वीचन्द्रोदय में मरीचि का वचन है—'बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः। सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम्॥ द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्।' यानी अविभक्त जेठे भाई के कृत्य करने पर भी सभी छोटे भाई फलभागी होते हैं।

उशना ने विभक्त भाइयों के लिये विशेष कहा है—'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥' लघुहारीत ने कहा है—'सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्॥ ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक्॥' मदनरत्न में—'विभक्तास्तु पृथक्कुर्युः प्रतिसंवत्सरादिकम्। एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम्॥' इति।

एकेन कृतेऽपि सर्वेषां फलभागित्वात्सर्वैः पुत्रैर्ब्रह्मचर्यपरान्नवर्जनादयो नियमाः कार्याः। पुत्राणामेकदेशस्थित्यभावे देशान्तरे गृहान्तरे वा स्थितैस्तैरविभक्तैरपि पृथगेव वार्षिकादिकं कार्यम्। तत्र यदा ज्येष्ठासन्निधौ कनिष्ठो दाहादिकं करोति तदा षोडशश्राद्धान्तमेव कुर्यान्न सपिण्डीकरणम्। वर्षपर्यन्तं ज्येष्ठप्रतीक्षां कुर्यात्। तन्मध्ये ज्ञाते ज्येष्ठेनैव कार्यम्। नोचेद्वर्षान्ते कनिष्ठेनापि कार्यम्। वर्षात्प्राक् पुत्रभिन्नेन कृतमपि मासिकानुमासिकसपिण्डीकरणं पुत्रेण पुनः कार्यम्। एवं कनिष्ठेन कृतमपि ज्येष्ठपुत्रेण पुनः कार्यम्। विशेषस्त्वग्रे वक्ष्यते। कनिष्ठस्य साग्निकत्वे सपिण्डीकरणमपि द्वादशेह्नि कनिष्ठेन कार्यम्।

एक के करने से भी सब फलभागी होते हैं, इससे सभी पुत्र ब्रह्मचर्य और परान्नवर्जन आदि नियम करें। पुत्रों के एक जगह न रहने या देशान्तर में अथवा गृहान्तर में रहने पर वे एक में भी हों तो भी वार्षिकादि श्राद्ध अलग ही करें। उनमें ज्येष्ठ सन्निधि में नहीं हो और छोटा दाहादिक करता है तब षोडश श्राद्धपर्यन्त छोटा ही करे, सपिण्डीकरण नहीं करे। एक वर्ष तक ज्येष्ठ की प्रतीक्षा करे। इसके भीतर जानने पर जेठे को ही करना चाहिये। नहीं तो वर्ष के अन्त में छोटा भी करे। वर्ष से पहिले पुत्र से भिन्न का किया हुआ भी मासिक, अनुमासिक और सपिण्डीकरण, पुत्र को पुनः करना चाहिये। इसी प्रकार कनिष्ठ का किया हुआ भी ज्येष्ठ पुत्र को पुनः करना चाहिये। विशेष तो आगे कहूँगा। यदि कनिष्ठ साग्निक हो तो सपिण्डीकरण भी बारहवें दिन कनिष्ठ को करना चाहिये।

## अथ औरसपुत्राभावेऽधिकारिविचारः

औरसपुत्राभावे पुत्रिकासुतक्षेत्रजादयो[1] द्वादशविधाः पुत्रा उक्तास्तथापि कलौ तेषां पुत्राणां निषेधादौरसपुत्राभावे दत्तक एवाधिकारी। मातापितृभ्यामन्यतरेण वा विधिपूर्वं दत्तः प्रतिग्रहीतृसवर्णो दत्तकः। भार्यानुमत्या पत्युः पुत्रदातृत्वं तदप्यापदि। अत्यन्तापदि तु भार्यानुमत्यभावेऽपि, पत्न्याः पत्यनुमत्यैव। अत्र विशेषविचारः प्रागुक्तः। दत्तकाभावे पौत्रः, पौत्राभावे प्रपौत्रः। अन्ये त्वौरसाभावे[2]

---

१. याज्ञवल्क्योक्त बारह प्रकार के ये पुत्र हैं—'औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥ गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतो मतः॥ अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः। दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥ क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः। दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः॥ उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः। पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः॥'—

नारदस्मृति में भिन्न क्रम का निर्देश है—'औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च। कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च॥ पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा। स्वयं चोपागतः पुत्रा द्वादशैते प्रकीर्तिताः॥' इन दोनों स्मृतियों में उन क्रम की व्यवस्था विकल्प से करनी चाहिये। आदित्यपुराण के अनुसार कलियुग में इतर पुत्रों के पुत्रत्व के निषेध होने से औरस और दत्तक ही श्राद्ध का अधिकारी हैं। औरस पुत्र के न रहने पर दत्तक का अधिकार है।

२. कालादर्श में—'दाहादिमन्त्रवत्पित्रोर्विदध्यादौरसः सुतः। तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिकासुतः॥ दौहित्रो धनहारी च भ्राता तत्पुत्र एव च। पिता माता स्नुषा चैव स्वसा तत्पुत्र एव

पौत्रः तदभावे प्रपौत्रः प्रपौत्राभावे दत्तक इत्याहुः ।

औरस पुत्र के न रहने पर पुत्रिकासुत और क्षेत्रज आदि बारह प्रकार के पुत्र कहे हैं, फिर भी कलियुग में उन पुत्रों के निषेध होने से औरस पुत्र के न रहने पर दत्तक पुत्र ही अधिकारी है। माता या पिता के द्वारा विधिपूर्वक दिया हुआ प्रतिग्रहीता का सवर्ण दत्तक होता है। स्त्री की अनुमति से पति को पुत्रदान का अधिकार है वह भी आपत्तिकाल में। अत्यन्त आपत्ति में तो स्त्री की अनुमति न होने पर भी पति को और पति की अनुमति से ही पत्नी को पुत्रपान का अधिकार है। इसमें विशेष विचार पहिले कहा है। दत्तक के अभाव में पौत्र और पौत्र के अभाव में प्रपौत्र अधिकारी है। अन्य लोग तो—औरस के अभाव में पौत्र और पौत्र के अभाव में प्रपौत्र और प्रपौत्र के अभाव में दत्तक अधिकारी है—ऐसा कहते हैं।

उपनीतपौत्रसत्त्वेऽप्यनुपनीतस्याप्यौरसपुत्रस्यैवाधिकारः। स च कृतचूडस्यैव वर्षाधिकवयसः। पूर्णत्रिवर्षस्य त्वकृतचूडस्यापि। अनुपनीतेनापि [1]मन्त्रपाठपूर्वकमेव पित्रोरौर्ध्वदेहिकं सांवत्सरिकादिकं श्राद्धं च कार्यम्। अशक्तौ त्वग्निदानमात्रं [2]समन्त्रकमनुपनीतेन कार्यम् अन्यत्त्वन्यद्वारा। एवं श्राद्धेऽपि दर्शमहालयादौ संकल्पमात्रं कार्यम् अन्यदितरेण। केचित्तूनत्रिवर्षेण चूडारहितेनापि दाहमात्रं समन्त्रकं कार्यं शेषमन्येनेत्याहुः।

उपनीत पौत्र के रहते हुए भी अनुपनीत औरस पुत्र ही का अधिकार है। वह भी चूड़ाकरण से संस्कृत एक वर्ष से अधिक अवस्था का हो। चूड़ाकरण नहीं किया हुआ भी यदि तीन वर्ष का हो तो वही अधिकारी है। अनुपनीत को भी मन्त्रपाठपूर्वक ही माता पिता का औध्वंदेहिक और सांवत्सरिकादि श्राद्ध करना चाहिये। असमर्थ होने पर तो अनुपनीत को केवल अग्निदान समन्त्रक करना चाहिये और सब कार्य दूसरे के द्वारा। इसी प्रकार दर्श महालयादि श्राद्ध में भी केवल संकल्प करना चाहिये अन्य सब कृत्य दूसरे से कराना चाहिये। कोई तो-तीन वर्ष से कम चूड़ासंस्कार से रहित से भी समन्त्रक दाहमात्र करावे, बाकी कर्म दूसरे से-ऐसा कहते है।

---

च ॥ सपिण्डः सोदको मातुः सपिण्डश्च सहोदकः। स्त्री च शिष्यर्त्विगाचार्या जामाता च सखाऽपि च ॥ उत्सन्नबन्धो रिक्थेन कारयेदवनीपतिः।' यह क्रम है।

विष्णुपुराण में क्रम का निर्देश यों है—'पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते ॥ तेषामभावे सर्वेषां समानोदकसन्ततिः। मातृपक्षसपिण्डेन सम्बन्धो यो जलेन वा ॥ कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्या क्रिया नृप। तत्संघातगतैर्वापि तद्रिक्थात् कारयेन्नृपः ॥' इति।

१. अनुपनीत भी पुत्र पिता माता के मन्त्रोच्चारणपूर्वक औध्वंदेहिक कर्म का अधिकारी है जैसा मनु ने कहा है—'न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्। नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ॥' अर्थात् ब्राह्मणादि बालक यज्ञोपवीत संस्कार के पहले श्राद्धकर्म के अतिरिक्त किसी श्रौत-स्मार्त-कर्म में वेदमन्त्र का उच्चारण नहीं करे। सुमन्तुः—'अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम्। यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः ॥' व्याघ्र ने तो—'कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च। स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥' ऐसा कहा। व्याघ्र के इस वचन को मन्त्रोच्चारण में असमर्थ पुत्र के लिये मानकर मन्वादि-स्मृतिवचनों की एकवाक्यता करनी चाहिये।

२. जैसा कात्यायन ने बतलाया है—'असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्। कर्तव्यमितरत् सर्वं कारयेदन्यमेव हि ॥' इति।

दत्तकस्तूपनीत[1] एवाधिकारी। दत्तकाभावे प्रपौत्राभावे च भर्तुः पत्नी पत्न्या भर्ता च दाहाद्यौर्ध्वदेहिकं सांवत्सरिकश्राद्धादिकं च कुर्यात्। भर्तुरपि सपत्नीपुत्र-सत्त्वेऽधिकारो न,'विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम्। तदभावे सपत्नीज' इत्युक्तेः। भार्ययापि समन्त्रकमेवौर्ध्वदेहिकादिकं कार्यम्। अशक्तौ त्वग्निदानमात्रं समन्त्रकं[2] कृत्वा शेषमन्येन कार्यम्। श्राद्धे संकल्पमात्रं कृत्वा शेषमन्येन।

दत्तक तो उपनीत ही अधिकारी होता है। दत्तक और प्रपौत्र के अभाव में भी पति की पत्नी और पत्नी का पति दाह आदि और्ध्वदेहिक और सांवत्सरिक श्राद्ध करे। सौतेले पुत्र के रहते पति को भी अधिकार नहीं है, क्योंकि—'विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम्। तदभावे सपत्नीज' यानी माता का और्ध्वदेहिक औरस पुत्र करे, औरस के अभाव में सौतेला पुत्र, इस आशय का वचन है। स्त्री भी समन्त्रक ही और्ध्वदेहिक आदि करे। असमर्थता में तो समन्त्रक अग्निदानमात्र करके बाकी कर्म दूसरे से करावे। श्राद्ध में केवल संकल्प करके शेष दूसरे से करावे।

यद्यप्यविभक्तस्य संसृष्टस्य वा भ्रातुरेव धनग्रहाधिकारस्तथापि क्रियाधिकारः पत्न्या एव। विभक्तासंसृष्टे तु भ्रातरि धनाधिकारोऽपि पत्न्या एव। पत्न्यभावे विभक्तासंसृष्टस्य कन्या पिण्डदा धनहारिणी च। तत्रापि विवाहितैव पिण्डदा। धनहरा त्वनूढाऽपि। दुहितुरभावे दौहित्रो धनहारी पिण्डदश्च। दौहित्राभावे भ्राता, भ्रातुरभावे भ्रातुः पुत्रः।

यद्यपि अविभक्त या संसृष्ट भाई को ही धनग्रहण का अधिकार है,फिर भी क्रिया का अधिकार पत्नी को ही है। अलग हुए असंसृष्ट भाई में तो धनाधिकार भी पत्नी का ही है। पत्नी के न रहने पर विभक्त केवल असंसृष्ट भाई की कन्या पिण्डदान करने वाली और धन की भी अधिकारिणी होती है। इसमें भी विवाहित कन्या ही पिण्ड देने की अधिकारिणी होती है। धनग्रहण करने वाली तो अविवाहिता भी होती है। लड़की के अभाव में लड़की का लड़का धनहारी और पिण्ड देने वाला है। लड़की के लड़का के नहीं रहने पर भाई, भाई के अभाव में भतीजा अधिकारी होता है।

अविभक्तस्य संसृष्टस्य च पत्न्यभावे भ्राता। संसृष्टो नाम पूर्वं विभक्तो भूत्वा पुनः स्वधनं भ्रातृधनैरेकीकृत्यैकपाकाद्युपजीवनः। तत्र सोदरासोदरसमवाये सोदर एव। तत्रापि ज्येष्ठकनिष्ठयोः सत्त्वे कनिष्ठ एव। कनिष्ठभ्रातुरभावे ज्येष्ठभ्रातैव। कनिष्ठबहुत्वे मृतानन्तरस्तदभावे तदनन्तरादयः। एवं ज्येष्ठ-

---

१. 'दत्तकादीनां तूपनीतानामेवाधिकारः' इति कालादर्शः। स्कन्दपुराणे—'पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः। और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः ॥' इति।

२. प्रयोगपारिजात में—'द्विजस्त्रियस्तु संकल्पमात्रं स्वयं कृत्वा वैदिकमन्त्रयुक्तं सर्वं ब्राह्मणद्वारा कारयेयुः' इस प्रकार लिखा है यह चिन्त्य है, क्योंकि गार्गी-मैत्रेयी-प्रभृति द्विजस्त्रियों की अपनी-अपनी शाखाओं का अध्ययन और गृह्यसूत्रों में यजमान की पत्नी का उन-उन मन्त्रों के पाठ का विधान है। अशक्ततावश सभी कार्य नहीं कर सके तो अग्निदानमात्र समन्त्रक करना ही चाहिये, इसमें कात्यायन का—'असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम्। कर्तव्यमितरत् सर्वं कारयेदन्यमेव हि ॥' यह वचन है।

बहुत्वे मृतानन्तरक्रमेणैव । सोदरभ्रातुरभावे सापत्नभ्राता । अत्रापि ज्येष्ठत्वादिविचारः पूर्ववदेव ।

अविभक्त संसृष्ट भाई की पत्नी के न रहने पर भाई अधिकारी होता है । संसृष्ट उसे कहते हैं जो पहिले अलग होकर फिर अपने धन को भाई के धनमें मिलाकर एक ही पाक आदि से जीने वाला हो । उसमें सोदर भिन्नोदर के समवाय में सोदर ही, उसमें भी ज्येष्ठ और कनिष्ठ के रहने पर कनिष्ठ ही अधिकारी होता है । छोटे भाई के न रहने पर जेठा भाई अधिकारी होता है । बहुत कनिष्ठ के होने पर मरने वाले के बाद वाला और उसके अभाव में उससे छोटे,क्रम से अधिकारी हैं । इसी प्रकार बहुत से जेठे के रहने पर मरने वाले के बाद वाले क्रम से ही हैं । सहोदर भाई के न रहने पर सौतेला भाई अधिकारी होता है । इसमें भी ज्येष्ठत्व आदि का विचार पहिले जैसा है ।

केचित्तु दुहितृदौहित्रयोर्धनहारित्वेऽपि विभक्तासंसृष्टस्य दाहादिकं भ्रात्रैव कार्यम् , सगोत्रसद्भावे भिन्नगोत्रस्य तदनधिकारादित्याहुः । भ्रातुरभावे भ्रातृपुत्रः, तत्रापि सोदरभ्रातृपुत्रो मुख्यः । तदभावे सापत्नभ्रातृपुत्रः, तदभावे पिता, पितुरभावे माता, मात्रभावे स्नुषा, तदभावे भगिनी, तत्रानुजाग्रजसोदराणां समवाये भ्रातृवत् । भगिन्यभावे भगिनीपुत्रः, समवाये तद्वदेव । तदभावे पितृव्यतत्पुत्रादयः सपिण्डाः । तदभावे सोदकाः, तदभावे गोत्रजाः, तदभावे मातामहमातुलतत्पुत्रादयो मातृसपिण्डा अनुक्रमेण । मातृसपिण्डाभावे स्वपितृष्वसृमातृष्वसृपुत्राः, तदभावे पितुः पितृष्वसृमातृष्वसृमातुलपुत्ररूपाः पितृबन्धवः ।

कुछ लोग तो— लड़की और लड़कीके पुत्र के धनहरण करने में भी विभक्त और असंसृष्ट का दाह आदि भाई को करना चाहिये, क्योंकि सगोत्र के रहते भिन्न गोत्र का उसका अधिकार नहीं है— ऐसा कहते हैं । भाई के अभाव में भाई का पुत्र, उसमें भी सोदर भाई का पुत्र मुख्य है । उसके अभाव में सौतेला भतीजा, उसके अभाव में पिता, पिता के अभाव में माता, माता के अभाव में पतोहू, पतोहू के अभाव में बहिन, उसमें छोटी बड़ी सोदर भिन्नोदर के समवाय में भाई की तरह विचार है । बहिन के अभाव में बहिन का लड़का, समवाय में उसी तरह से है । उसके अभाव में पितृव्य और पितृव्य के पुत्र आदि सपिण्ड अधिकारी होते हैं । इसके अभाव में सोदक, इसके अभाव में गोत्रज, गोत्रज के अभाव में नाना-मामा उनके पुत्र आदि मातृसपिण्ड क्रम से अधिकारी होते हैं । मातृसपिण्ड के अभाव में अपनी फुआ और मौसी के पुत्र, इसके अभाव में पिता की फुआ-मौसी-मामा के पुत्ररूप पितृबन्धु अधिकारी होते हैं ।

एवं मातुः पितृष्वस्रादिपुत्ररूपमातृबन्धवः पितृबन्धूनामभावेऽधिकारिणः । तदभावे शिष्यः, शिष्याभावे जामाता श्वशुरस्य, श्वशुरो जामातुः । तदभावे सखा, तदभावे विप्रस्य कश्चिद्धनहारी । विप्रभिन्नस्य राज्ञा धनं गृहीत्वा तेन धनेनान्यद्वारा कारणीयम् । अथवा विप्राद्यैर्मरणोन्मुखैर्धर्मपुत्रः कार्यः ।

इसी प्रकार माता की फुआ के पुत्ररूप मातृबन्धुगण पितृबन्धुओं के अभाव में अधिकारी होते हैं । उसके अभाव में शिष्य, शिष्य के अभाव में ससुर का दामाद, दामाद का ससुर अधिकारी है । इनके अभाव में मित्र, मित्रके अभाव में ब्राह्मण का कोई धनहारी होता है । विप्र से भिन्न का राजा धन ग्रहण करके उस धन से दूसरे के द्वारा उसका श्राद्ध करावे । अथवा विप्र आदि, मरणोन्मुखावस्था में धर्मपुत्र करे ।

## अथ स्त्रीणां दाहाद्यधिकारिणः

अनूढायाः स्त्रियाः [1]पिता, तदभावे भ्रात्रादिः। ऊढायास्तत्पुत्राभावे सपत्नीपुत्रः, तदभावे पौत्रप्रपौत्राः, तदभावे पतिः, तदभावे दुहिता, तदभावे दौहित्रः, तदभावे पत्युर्भ्राता, तदभावे पत्युर्भ्रातृपुत्रः, तदभावे स्नुषा, तदभावे पिता, पितुरभावे भ्राता, तदभावे भ्रातृपुत्रादयः पूर्वोक्ताः। अत्र सर्वत्र पुत्रभिन्नानां पुत्रासन्निधानात्पुत्राभावाद्वा कर्तृत्वमिति स्थितम्।

विना ब्याही स्त्री के दाह का अधिकारी पिता, उसके अभाव में भाई आदि अधिकारी है। ब्याही हुई स्त्री के पुत्र के अभाव में सौतेला पुत्र, उसके अभाव में पौत्र-प्रपौत्र, उसके अभाव में पति, उसके अभाव में लड़की, उसके अभाव में लड़की का लड़का, उसके अभाव में पति का भाई, उसके अभाव में पति का भतीजा, उसके अभाव में पतोहू, पतोहू के न रहने पर पिता, पिताके अभाव में भाई, भाई के न होने पर भतीजा आदि पूर्व में कहे हुए अधिकारी होते हैं। यहां सब जगह पुत्रभिन्नों का पुत्र के असान्निध्य से अथवा पुत्र के अभाव से कर्तृत्व है, यह स्थित हुआ।

## अथ पुत्रभिन्नानां दाहकर्तव्याकर्तव्यनिर्णयः

तत्र यदि पुत्रासन्निधानात्कर्तृत्वं तदा पुत्रभिन्नैर्दाहमारभ्य सपिण्डीकरणात्प्राचीनकर्मैव कार्यम्, न तु पुत्रभिन्नैः सपिण्डीकरणं कार्यम्। पुत्राभावे त्वन्यैः सपिण्डीकरणमपि कार्यम्। तत्रापि सपिण्डादिभिर्नृपान्तैर्दाहमारभ्य दशाहक्रियाः कार्या एव, ता एव पूर्वाः इत्युच्यन्ते। तत एकादशाहमारभ्य सपिण्डीकरणान्ता मध्यमसंज्ञास्तासु सपिण्डादीनां कृताकृतत्वम्। तदूर्ध्वा अनुमासिकसांवत्सरिकाद्यास्ता उत्तराख्याः, सपिण्डादिभिर्न कार्या एव।

इसमें यदि पुत्र के असान्निध्य से कर्तृत्व है तो पुत्र से भिन्न लोग दाह से लेकर सपिण्डीकरण तक प्राचीन कर्म ही करें न कि पुत्र से भिन्न लोगों के द्वारा सपिण्डीकरण कराया जाय। पुत्र के अभाव में तो अन्य से सपिण्डीकरण भी कराना चाहिये। उसमें भी सपिण्ड आदि से लेकर राजा आदि पर्यन्त से दाह से दशाह क्रिया करानी ही चाहिये, इसी को पूर्वा क्रिया कहते हैं। इसके बाद एकादशाह से सपिण्डीकरणपर्यन्त मध्यम संज्ञा है, उनमें सपिण्ड आदि का करना न करना समान है। उसके बाद वाली अनुमासिक सांवत्सरिक आदि उत्तरा क्रिया कहलाती है, उसे सपिण्डादिकों से नहीं ही करावे।

इदं च तदीयवृत्त्यादिस्थावरधनस्य चरधनस्य वा ग्रहणाभावे। तदन्यतरधनग्रहणे तु सपिण्डादिभिरपि मध्यमोत्तराख्या अपि क्रियाः कार्या एव। राज्ञा तु मृतधनसत्त्वे तद्धनद्वारा तत्सजातीयवर्णहस्तेन सर्वा अपि क्रियाः कारणीया एव। धनाभावे तु पूर्वान्ता एवावश्यं कारणीया नान्याः। सपिण्डादिनृपान्त-

---

१. शुद्धिविवेक और पृथ्वीचन्द्रोदय में ब्रह्मपुराण का वचन है—'दत्तानां वाऽप्यदत्तानां कन्यानां कुरुते पिता। चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः॥' इति।

भिन्नानां तु मृतस्य धनाभावऽपि स्वधनेनैव सपिण्डीकरणान्तक्रियाकरणमावश्यकम्।

यह उसकी वृत्ति आदि स्थावर धन या चर धन के ग्रहण के अभाव में है। उससे अन्यतर धन ग्रहण में तो सपिण्डादि भी मध्यमा और उत्तरा नाम की भी क्रिया करें ही। राजा तो मृतकधन के रहते, उस धन के द्वारा मृतक के सजातीय वर्ण के हाथ से सम्पूर्ण क्रियाएं करवावें ही। मृतकधन के अभाव में तो पूर्वा और उत्तरा क्रिया अवश्य करवावें अन्य नहीं। सपिण्ड आदि से लेकर राजा पर्यन्त से जो भिन्न हैं, उनको तो मृतक के धन के अभाव में भी अपने धन से ही सपिण्डीकरणान्त क्रिया को करना आवश्यक है।

## अथ धनग्राहिणा प्रेतकृत्याकरणे विचारः

मृतस्य धनं गृहीत्वा प्रेतकार्याकरणे नृपान्तानां तद्वर्णवधप्रायश्चित्तम्। पुत्राद्यैर्भ्रातृसन्तत्यन्तैर्दौहित्रैश्च तत्पुत्रैश्च त्रिविधा अपि क्रिया धनग्रहणसत्त्वे तदसत्त्वे वापि कार्या एव। तत्र स्त्रीणामुत्तराः क्रिया मृताहन्येव न तु दर्शादौ, भर्तृश्राद्धेनैव निर्वाहस्मृतेः। पूर्वमध्यमाख्यास्तु पृथगेव स्त्रीणाम्।

मृतक का धन लेकर प्रेत कार्य न करने में नृपपर्यन्तों को उस वर्ण के वध का प्रायश्चित्त होता है। पुत्र आदि भाई की सन्तति तक, लड़की के लड़के और उनके पुत्रों से भी तीनों ही क्रियायें धन ग्रहण करने और न करने पर भी करावे ही। उसमें स्त्रियों की उत्तर क्रिया मृत दिन में ही है न कि दर्श आदि में, क्योंकि पति के श्राद्ध से ही निर्वाह होने की स्मृति है। स्त्रियों की पूर्वा और मध्यमा क्रिया तो पृथक् होती है।

केचित्पुत्रपत्योरभावे स्त्रीणां दौहित्रादिभिः सपिण्डीकरणरहिता एवोत्तराः क्रियाः कार्याः। सपिण्डीकरणं तु तासां न कार्यम्। सपिण्डीकरणाभावेऽपि एकोद्दिष्टविधिना वार्षिकादिकं कार्यमित्याहुः।

ब्राह्मणस्त्वन्यवर्णानां न कुर्यात्कर्म पैतृकम्।
कामाल्लोभाद्भयान्मोहात्कृत्वा तज्जातितां व्रजेत्॥
शूद्रेणापि ब्राह्मणस्य न कार्यं पैतृकं क्वचित्।

कोई—स्त्रियों की क्रिया पुत्र और पति के अभाव में दौहित्र आदि से सपिण्डीकरणरहित उत्तरा क्रिया कर्तव्य है। उनका सपिण्डीकरण तो नहीं करना चाहिये। सपिण्डीकरण के अभाव में भी एकोद्दिष्टविधि से वार्षिक आदि करना चाहिये—ऐसा कहते हैं। ब्राह्मण तो दूसरे वर्णों का पैतृक कर्म न करे। यदि काम से, लोभ से, भय से और मोह से करता है तो उसी जाति का हो जाता है। शूद्र से भी ब्राह्मण का पैतृक कर्म न करावे।

## अथ दत्तककर्तव्यनिर्णयः

दत्तकस्तु जनकपितुः पुत्राद्यभावे जनकपितुः श्राद्धं कुर्याद्धनं च गृह्णीयात्। जनकपालकयोरुभयोः पित्रोः सन्तत्यभावे दत्तको जनकपालकयोरुभयोरपि धनं हरेत् श्राद्धं च प्रतिवार्षिकमुभयोः कुर्यात्। दर्शमहालयादौ तु द्वयोः पित्राद्योः

श्राद्धं देयम्। तत्र द्वयोः पित्राद्योः पृथक् पिण्डदानं पित्रादिद्वयद्वयोद्देशेनैकैको वा पिण्डः।

दत्तक तो उत्पादक पिता के पुत्र आदि के न रहने पर उत्पादक पिता श्राद्ध करे और धनग्रहण करे। उत्पादक एवं पालक दोनों पिता के सन्तान न रहने पर दत्तक दोनों का धन हरण करे और श्राद्ध भी प्रतिवार्षिक दोनों का करे। दर्श महालय आदि में तो दोनों पिता आदि को श्राद्ध दे। उसमें दोनों पिता आदि को पृथक्-पृथक् पिण्डदान करे या दोनों पिता आदि के दो-दो के उद्देश्य से एक पिण्ड दे।

एवं दत्तकस्य पुत्रोऽपि दत्तकजनकस्य पुत्राद्यभावे स्वपितरं पितामहद्वयं प्रपितामहद्वयं चोच्चार्य दर्शादिकं कुर्यात् तथैव धनं हरेत्। एवं दत्तकपौत्रोऽपि तज्जनककुले प्रपितामहस्य पुत्राद्यभावे पितरं पितामहं चैकमुच्चार्य प्रपितामहद्वयमुच्चार्य दर्शादिश्राद्धं कुर्यात्प्रपितामहस्य धनं च हरेत्। यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युरित्यादेरेकपिण्डे द्वावनुकीर्तयेद् ग्रहीतारं चोत्पादयितारं चातृतीयात्पुरुषादित्यादेश्च लौगाक्ष्यादिस्मृतिवचनात्।

इसी प्रकार दत्तक का पुत्र भी दत्तकजनक के पुत्र आदि के अभाव में अपने पिता और दोनों पितामह प्रपितामह का उच्चारण करके दर्श आदि श्राद्ध करे और इसी प्रकार धन ग्रहण करे। एवं दत्तक का पौत्र भी उसके जनककुल में प्रपितामह के पुत्र आदि के नहीं रहने पर पिता और पितामह में से एक का उच्चारण कर और दोनों प्रपितामह का उच्चारण कर दर्श आदि श्राद्ध करे और प्रपितामह के धन को भी ग्रहण करे। यदि इन लोगों को अपनी भार्याओं में सन्तान न हो तो उनका धनग्रहण करे और इनके तीन पुरुषों को पिण्ड दे, क्योंकि लौगाक्षि आदि का स्मृति वचन है कि एक पिण्ड में ग्रहीता और उत्पादक दोनों का उच्चारण तीन पीढी पर्यन्त करे।

यदि जनकपालकयोरुभयोरपि पुत्रादिसन्ततिसत्त्वं तदा दत्तक उभयोरप्यौर्ध्वदेहिकं वार्षिकादिकं च न कुर्यात्। पालकपितुरौरसपुत्राद्विभक्तेन दत्तकेन दर्शमहालयादिश्राद्धमात्रं पालकपित्रादिपार्वणोद्देशेन कार्यम्। अविभक्तस्य तु तदौरसकृतदर्शादिनैव दत्तकस्य दर्शादिसिद्धिरिति भाति।

यदि जनक और पालक दोनों को पुत्र आदि सन्तति रहे तब दत्तक दोनों का और्ध्वदेहिक वार्षिकादि श्राद्ध नहीं करे। पालक पिता के औरस पुत्र से अलग हुए दत्तक को केवल दर्श महालयादि श्राद्ध पालक पिता आदि के पार्वण के उद्देश्य से करना चाहिये। अविभक्त दत्तक का तो उनके औरस पुत्र से किये दर्शादि से दत्तक की दर्शादि सिद्ध होती है, ऐसा युक्त प्रतीत होता है।

## अथ ब्रह्मचारिविषयकश्राद्धादिनिर्णयः

ब्रह्मचारिणो मासिकाब्दिकादिश्राद्धं मातापितृभिः कार्यम्। ब्रह्मचारिणा तु मातृपितृमातामहोपाध्यायाचार्यभिन्नानां शवनिर्हरणं दाहाद्यन्त्यकर्म च न कार्यम्। अन्याधिकार्यभावे मातृपितृमातामहाचार्याणां दाहादिकं ब्रह्मचारिणा

कार्यम्[1]। तत्र दशाहकर्मकरणे दशाहमाशौचम्। दाहमात्रकरणे एकाहम्। तदाप्यस्य नित्यकर्मलोपो नास्ति अशुचित्वेऽप्याशौचिनामन्नं तेन न भोक्तव्यं तैः सह न वस्तव्यम्। तदुभयकरणे प्रायश्चित्तपुनरुपनयने वक्ष्येते। अन्येषां दाहादौ कृच्छ्रत्रयं पुनरुपययनं च।[2]धर्मार्थं केनचित्कस्यचित्सवर्णस्य दाहादिश्राद्धादिकरणे सम्पत्त्यादिफलम्।

ब्रह्मचारी का मासिक एवं वार्षिकादि श्राद्ध माता पिता द्वारा होना चाहिये। ब्रह्मचारी तो माता, पिता, मातामह, उपाध्याय और आचार्य से भिन्न का शव-निर्हरण दाह आदि अन्त्य कर्म नहीं करे। अन्य अधिकारी के न होने पर माता, पिता, मातामह और आचार्य का दाह आदि ब्रह्मचारी को करना चाहिये। उसमें दशाह कर्म करने पर दस दिन का आशौच होता है। केवल दाह करने पर एक दिन का आशौच है। तब भी ब्रह्मचारी के नित्य कर्म का लोप नहीं है। अशुचि होने पर भी आशौचियों का अन्न ब्रह्मचारी को नहीं खाना चाहिये और न उनके साथ निवास करना चाहिये। इन दोनों के करने पर प्रायश्चित्त और पुनः उपनयन आगे कहूँगा। अन्य के दाह आदि में तीन कृच्छ्र व्रत तथा पुनः उपनयन करे। धर्मार्थ कोई किसी सवर्ण का दाह आदि श्राद्ध आदि करे तो सम्पत्ति आदि का फल मिलता है।

## अथ स्त्रीशूद्राद्यैः श्राद्धमन्त्रादिविचारः

अयं सर्वोऽपि श्राद्धविधिः शूद्राणाममन्त्रकः[3] कार्यः। अत्र केचिद्वैदिकमन्त्रपाठ एव शूद्राणां[4]वर्ज्यः पौराणमन्त्रास्तु पठनीया इत्याहुः। पौराणमन्त्रा अपि शूद्रेण स्वयं न पठनीयाः किन्तु विप्रद्वारा पठनीयाः। वेदमन्त्रास्तु न विप्रद्वारापीति सिन्धुः।

यह सभी श्राद्ध-विधि शूद्रों को मन्त्ररहित करना चाहिये। इसमें कुछ लोग—शूद्रों को वैदिक मन्त्र पाठ ही वर्जित है, पौराणिक मन्त्र तो पठनीय है—ऐसा कहते हैं। पौराणिक मन्त्र भी शूद्र को स्वयं नहीं पढ़ना चाहिये, किन्तु ब्राह्मणद्वारा पढ़ना चाहिये। वेदमन्त्र तो ब्राह्मणद्वारा भी नहीं पढे, ऐसा निर्णयसिन्धु का मत है।

---

१. चन्द्रिका में वृद्ध मनु की उक्ति है—'मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम्। कुर्वन् मातामहस्यापि व्रती न भ्रश्यते व्रतात्॥' इति।

२. शातातप ने धर्मार्थ श्राद्ध करने का फल बतलाया है—'प्रीत्या श्राद्धं तु कर्तव्यं सर्वेषां वर्णलिङ्गिनाम्। एवं कुर्वन्नरः सम्यङ् महतीं श्रियमाप्नुयात्॥' इति।

३. ब्रह्मपुराणे—'अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते॥' मरीचिः—'स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासुतस्य च। प्राग्द्विजाश्च व्रतादेशात्ते च कुर्युस्तथैव तत्॥' इति।

४. इनके मत में पद्मपुराण का वचन है—'न हि वेदेष्वधिकारः क्वचिच्छूद्रस्य विद्यते। पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह॥' इसके खण्डन में निर्णयसिन्धुकार के भविष्यपुराण का वचन है—'अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च। श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन॥ श्रौतं स्मार्तं च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम। तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन॥' इति।

एवं[1]द्विजस्त्रियोऽपि व्रतोद्यापनादाविव संकल्पमात्रं स्वयं कृत्वा वैदिकमन्त्रादिप्रयुक्तं सर्वं श्राद्धं विप्रद्वारा कारयेयुरिति पारिजातकारमतम्। शूद्रस्य[2]सदाऽऽमश्राद्धमेव। पित्रे नमः पितामहाय नम इत्येवमादिना[3]नमोन्तनाममन्त्रेण निमन्त्रणपाद्यासनगन्धपुष्पादिना विप्रान् संपूज्याऽऽमं निवेद्य[4]सक्तुना पिण्डदानादि कृत्वा दक्षिणादानादिना श्राद्धं समाप्य सजातीयान्गृहसिद्धपक्वान्नेन भोजयेत्।

इसी प्रकार द्विजपत्नियां भी व्रत और उद्यापन आदि की तरह संकल्पमात्र स्वयं करके वैदिक मन्त्र आदि प्रयुक्त सब श्राद्ध ब्राह्मण द्वारा करावें, ऐसा 'पारिजात' कार का मत है। शूद्र को सदा आम श्राद्ध ही करना चाहिये। 'पित्रे नमः' 'पितामहाय नमः' इस प्रकार नमोन्त नाम-मन्त्र से निमन्त्रण, पाद्य, आसन, गन्ध और पुष्प आदि से ब्राह्मणों की पूजाकर कच्चा अन्न निवेदन कर सतुआ से पिण्डदान आदि करके दक्षिणा दान आदि से श्राद्ध को समाप्त कर अपने समान जातिवालों को घर में बने हुए पक्वान्न से भोजन करावे।

## अथ सच्छूद्रविषयकविचारः

यत्तु सिन्धौ[5]नाममन्त्रेणावाहनाग्नौकरणकाश्यपगोत्रोच्चारपूर्वकपिण्डदानादिकं तर्पणादिकं पाकेन पिण्डदानादिकं चोक्तं तत्सच्छूद्रविषयम्। सप्तपुरुषं त्रिपुरुषं वा परंपरया स्नानवैश्वदेवतर्पणादिकं शूद्रकमलाकरादिग्रन्थसंगृहीतं धर्मं नियमेनाचरन् सच्छूद्र उच्यते।

जो कि निर्णयसिन्धु में नाममन्त्र से आवाहन, अग्नौकरण और काश्यपगोत्र का उच्चारण कर पिण्डदानादि तर्पण आदि और पाक के द्वारा पिण्डदानादि कहा है वह सब सच्छूद्र के लिये हैं। सच्छूद्र उसको कहते हैं, जो सात पुश्त की परम्परा से स्नान, वैश्वदेव और तर्पण आदि 'शूद्रकमलाकर' आदि ग्रन्थों में संगृहीत धर्म का नियम से आचरण करता है।

---

१. किन्तु गार्गी-मैत्रेयी-प्रभृति द्विजस्त्रियों की अपनी-अपनी शाखाओं में पारंगत होने और गृह्यसूत्रों में यजमान की पत्नी के उन-उन मन्त्रों की पाठ-विधि से यह चिन्त्य है।

२. सुमन्तुः—'सदा चैव तु शूद्राणामामश्राद्धं विधीयते।' वृद्धपराशरः—'आमान्नेन तु शूद्रस्य तूष्णीं तु द्विजपूजनम्। कृत्वा श्राद्धं तु निर्वाप्य सजातीनाशयेदथ॥' इति।

३. जैसा गौतम ने बतलाया है—'अनुमतोऽस्य नमस्कारो मन्त्रः' इति। देवताओं के नाममन्त्र तो अन्त में नमः और आदि में प्रणव (ओंकार) युक्त होने चाहिये, जैसा पद्मपुराण में कहा है—'प्रणवादि नमोन्तं च चतुर्थ्यन्तं च सत्तम। देवतायाः स्वकं नाम मूलमन्त्र उदाहृतः॥' जैसे—'ॐ रामाय नमः' 'ॐ कृष्णाय नमः' इत्यादि।

४. भविष्यपुराणे—'शूद्रस्तु गृहपाकेन न पिण्डान्निर्वपेत्तथा। सक्तु मूलं फलं तस्य पायसं वा भवेत्स्मृतम्॥' इति।

५. भविष्यपुराणे—'धर्मेप्सवस्तु धर्मज्ञा यदि शूद्राः प्रकुर्वते। अग्नौकरणमन्त्रश्च नमस्कारो विधीयते॥ आवाहनादि कर्तव्यं यथा शूद्रेण तच्छृणु। देवानां देवनाम्ना तु पितॄणां नामगोत्रतः॥ पिण्डादीन्निर्वपेद् वीर नामतो गोत्रतस्तथा।' शूद्रों का गोत्रज्ञान के अभाव में—'तस्मादाहुः सर्वाः प्रजाः काश्यप्यः' इस श्रुति और 'गोत्रनाशे तु काश्यपः' इस व्याघ्रपाद के वचन से कश्यप गोत्र है।

## अथ हीनजातीयविषयकविचारः

एवं किरातयवनादिहीनजातीयानां विप्रेभ्य[1] आमदानदक्षिणादानपूर्वकं स्वस्वजातीयभोजनात्मकमेव श्राद्धम्।

इसी प्रकार किरात यवन आदि हीन जातियों में ब्राह्मण को कच्चे अन्न का दान, एवं दक्षिणा दान करके अपनी-अपनी जाति वालों को भोजन कराना, यही उनका श्राद्ध है।

## अथ राजकार्यनियुक्तादीनां निर्णयः

राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः।
व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत्॥

अत्र प्रथमं जीवत्पितृकनिर्णय उक्तस्तत्र प्रसङ्गात्किंचिदधिकारविचारोऽप्युक्तः। इदानीं तु सर्वोप्यधिकारक्रमविचारः सविस्तर उक्त इति तेनात्र पुनरुक्तिर्बालबोधनार्थत्वान्न दोषाय। इति श्राद्धाधिकारदाहाद्यधिकारनिर्णयः।

राजकार्य में नियुक्त का, कारागार में रहने वाले का और सभी व्यसनों में ब्राह्मण से श्राद्ध करावे। इसमें पहिले जीवत्पितृक का निर्णय और प्रसंग से कुछ अधिकार का विचार भी कहा है। इस समय तो सभी अधिकार-क्रम का विचार विस्तार के साथ कहा है। इससे यहां पुनरुक्ति बालबोधनार्थ होने से दोषप्रद नहीं है। श्राद्ध और दाह आदि का अधिकारनिर्णय समाप्त।

## अथ श्राद्धशब्दार्थः

पित्रादीन्मृतानुद्दिश्य विहिते काले देशे पक्वान्नामान्नहिरण्यान्यतमद्रव्यस्य विधिना दानं [2]श्राद्धम्। तत्राग्नौकरणं पिण्डदानं ब्राह्मणभोजनं च प्रधानम्। तदुक्तम्—

---

१. महाभारत राजधर्म में कहा है—'यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः। शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः॥ ·· ··· ··· ···वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते। पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च॥ दानानि च यथाकालं द्विजेभ्यो विसृजेत् सदा।' तथा—'दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता। पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः॥' इति।

२. मरीचि ने श्राद्ध का स्वरूप-निर्देश यों किया है—'प्रेतान् पितॄनप्युद्दिश्य भोज्यं यत्प्रियमात्मनः। श्रद्धया दीयते यत्तु तच्छ्राद्धं परिकीर्तितम्॥' ब्रह्मपुराणे—'देशे काले च पात्रे च श्रद्धया विधिना च यत्। पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्॥' बृहस्पतिः—'संस्कृतं व्यञ्जनाद्यं च पयो मधु घृतान्वितम्। श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते॥'—

ब्रह्मपुराण में श्राद्ध की प्रशंसा—'यो वा विधानतः श्राद्धं कुर्यात् स्वविभवोचितम्। आब्रह्मस्तम्बपर्यन्तं जगत् प्रीणाति मानवः॥' नागरखण्ड में—'श्राद्धे तु क्रियमाणे वै न किञ्चिद् व्यर्थतां व्रजेत्। उच्छिष्टमपि राजेन्द्र तस्माच्छ्राद्धं समाचरेत्॥' यम की उक्ति है—'ये यजन्ति पितॄन् देवान् ब्राह्मणांश्च हुताशनान्। सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते॥' ब्रह्मवैवर्त में—'देवकार्यादपि सदा पितृकार्यं विशिष्यते। देवताभ्यः पितॄणां हि पूर्वमाप्यायनं शुभम्॥' ब्रह्मपुराण में श्राद्ध की कर्तव्यता—'तस्माच्छ्राद्धं नरो भक्त्या शाकैरपि यथाविधि। कुर्वीत श्रद्धया तस्य कुले कश्चिन्न सीदति॥' इति।

होमश्च पिण्डदानं च तथा ब्राह्मणभोजनम् ।
श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकम् ॥ इति ।

क्वचिद्वचनादशक्त्या वा पिण्डदानाद्यकरणे ब्राह्मणभोजनादिमात्रमपि श्राद्धपदार्थः सम्पद्यत इति चतुर्थपादार्थः । तथा च वचनान्तरम्—

यजुषां पिण्डदानं तु बह्वृचानां द्विजार्चनम् ।
श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम् ॥

अश्रद्धया पितरो न सन्तीति मत्वा श्राद्धमकुर्वाणस्य [1]रक्तं पितरः पिबन्ति ।

मरे हुए पिता आदि के उद्देश्य से विहित काल और देश में पक्वान्न, आमान्न और सुवर्ण में से किसी एक द्रव्य के विधिपूर्वक दान को श्राद्ध कहते हैं । इसमें अग्नौकरण, पिण्डदान तथा ब्राह्मणभोजन प्रधान हैं । यह कहा है—होम, पिण्डदान तथा ब्राह्मणभोजन, ये श्राद्ध शब्द से अभिहित हैं । एक में औपचारिक है । कहीं वचन से या असामर्थ्य से पिण्डदान आदि के न करने पर केवल ब्राह्मणभोजन आदि भी श्राद्धपद का अर्थ सम्पन्न करता है यह पूर्वोक्त 'होमश्च पिण्डदानं च' इस वचन के चतुर्थपाद का अर्थ है । वैसा वचनान्तर भी है—यजुर्वेदियों के लिये पिण्डदान बह्वृचों के लिये ब्राह्मणपूजन श्राद्धशब्दाभिधेय है और सामवेदियों के लिये पिण्डदान, ब्राह्मणार्चन दोनों श्राद्धशब्द पदवाच्य हैं । अश्रद्धा से 'पितृगण नहीं हैं' ऐसा मानकर श्राद्ध नहीं करने वाले का रक्त पितृगण पीते हैं ।

## अथ श्राद्धभेदाः

तत्र श्राद्धं [2]चतुर्विधम्—पार्वणश्राद्धमेकोद्दिष्टश्राद्धं नान्दीश्राद्धं सपिण्डीकरणश्राद्धं चेति भेदात् ।

श्राद्ध चार प्रकार का है—पार्वण, एकोद्दिष्ट, नान्दीश्राद्ध और सपिण्डीकरण, इस भेद से ।

## अथ पार्वणविचारः

पित्रादित्रयोद्देशेन विहितं पिण्डत्रययुतं पार्वणम् । तच्चैकपार्वणकद्विपार्वणकत्रिपार्वणकमिति त्रिविधम् । तत्र पित्रादेर्मृततिथौ क्रियमाणं प्रतिसांवत्सरिक-

---

१ आदित्यपुराणे—'न सन्ति पितरश्चेति कृत्वा मनसि यो नरः । श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥' इति ।

२ विश्वामित्र ने श्राद्ध के बारह भेद बतलाये हैं—'नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् । पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥ कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् । यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥' इनके लक्षण भविष्यपुराण में यों हैं—'अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् । वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥ एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते । तदप्यदैवं कर्तव्यमयुग्मान् भोजयेद् द्विजान् । कामाय विहितं काम्यमभिप्रेतार्थसिद्धये । वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ॥ गन्धोदकतिलैर्मिश्रं कुर्यात् पात्रचतुष्टयम् । अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् । नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥' इन प्रभेदों के लक्षण निर्णयसिन्धु-वीरमित्रोदयादि निबन्धग्रन्थों में देखें । कूर्मपुराण में—'अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं पुनः । एकोद्दिष्टं च विज्ञेयं वृद्धिश्राद्धं च पार्वणम् ॥ एतत्पञ्चविधं श्राद्धं मनुना परिकीर्तितम् । इस प्रकार श्राद्ध के जो पांच भेद बतलाये हैं, इन्हें गोष्ठ्यादि-श्राद्धों का पार्वण-एकोद्दिष्ट में अन्तर्भाव के आश्रयण से जानना चाहिये ।

मेकपार्वणकम् । [1]अमावास्यादिषण्णवतिश्राद्धनित्यश्राद्धानि महालयान्वष्टक्य-भिन्नानि द्विपार्वणकानि । एतेषु सपत्नीकपित्रादित्रयसपत्नीकमातामहादित्रययोरे-वोद्देशात् । अन्वष्टकाश्राद्धं त्रिपार्वणकं पित्रादित्रयमात्रादित्रयसपत्नीकमाता-महादित्रयाणामुद्देशात् ।

पार्वण का विचार—पिता आदि तीन के उद्देश्य से विहित तीन पिण्ड से युक्त पार्वण होता है। और वह एकपार्वण, द्विपार्वण और त्रिपार्वण, इस तरह तीन प्रकार का होता है। उसमें पिता आदि की मृत तिथि में किया जाने वाला प्रतिवार्षिक श्राद्ध एक पार्वणक होता है। अमावास्या आदि छियानबे नित्यश्राद्ध, महालय और अन्वष्टका से भिन्न द्विपार्वणक श्राद्ध है, क्योंकि इनमें सपत्नीक पिता आदि तीन और सपत्नीक मातामह आदि तीन ही के उद्देश्य से श्राद्ध होता है। अन्वष्टका श्राद्ध त्रिपार्वणक होता है, क्योंकि इनमें पिता आदि तीन, माता आदि तीन और सपत्नीक मातामह आदि तीन के उद्देश्य से श्राद्ध होता है।

महालयश्राद्धं तीर्थश्राद्धं च पार्वणैकोद्दिष्टरूपम् । पित्रादिपार्वणत्रयस्य पत्न्याद्येकोद्दिष्टगणस्य चोद्देशात् । केचिदेतद्द्वयं मातामहमातामह्योः पार्वण-भेदेन पार्वणचतुष्टययुतं कुर्वन्ति । केषांचित्सूत्रे दर्शोऽपि त्रिपार्वणकश्चतुःपार्वणको वेति हेमाद्रौ ।

महालयश्राद्ध और तीर्थश्राद्ध पार्वण और एकोद्दिष्ट उभय रूप है, क्योंकि पिता आदि तीन पार्वण का और पत्नी आदि एकोद्दिष्ट गण का उद्देश्य होता है। कुछ लोग-इन दोनों को मातामही के पार्वण भेद से चार पार्वण से युक्त करते हैं। किन्हीं लोगों के सूत्र में दर्शश्राद्ध भी त्रिपार्वणक या चतुःपार्वणक होता है, ऐसा हेमाद्रि में कहा है।

## अथ एकोद्दिष्टादिविचारः

एकोद्देशेन क्रियमाणमेकपिण्डयुतमेकोद्दिष्टम् । तदपि त्रिविधम्—नवसंज्ञं नवमिश्रसंज्ञं पुराणसंज्ञं चेति । मृतस्य प्रथमदिनमारभ्य दशाहान्तं विहितानि [2]नवसंज्ञानि । एकादशाहादिन्यूनाब्दान्तानि नवमिश्राणि । एतानि विश्वदेवही-

---

१. अमावास्यादि छयानबे श्राद्धों के नाम ये हैं—'अमायुगमनुक्रान्तिधृतिपातमहालयाः । अष्टकाऽन्वष्टकोपूर्वेद्युःश्राद्धैर्नवतिश्च षट् ॥' अर्थात् प्रतिमास की अमावस्यायें ( दर्श ) १२। युगादि ४—यानी माघकृष्णअमावास्या-भाद्रकृष्णत्रयोदशी-वैशाखशुक्लतृतीया-कार्तिकशुक्ल-नवमी । मन्वादि १४—यानी चैत्रशुक्लतृतीया-चैत्रपूर्णिमा-ज्येष्ठपूर्णिमा-आषाढशुक्लदशमी-आषाढ़पूर्णिमा-श्रावणकृष्णअष्टमी-भाद्रशुक्लतृतीया-आश्विनशुक्लनवमी-कार्तिकशुक्लद्वादशी-कार्तिकपूर्णिमा-पौष-शुक्लैकादशी-माघशुक्लसप्तमी-फाल्गुनपूर्णिमा-फाल्गुनअमावस्या । संक्रान्ति १२ प्रसिद्ध । वैधृति १३ । व्यतीपात १३ । महालय १६ । अष्टका (अष्टमी) ४—मार्गकृष्णअष्टमी-पौषकृष्णअष्टमी माघकृष्ण-अष्टमी-भाद्रकृष्णअष्टमी । अन्वष्टका ( अष्टमी के उत्तर दिन नवमी ) ४—मार्गकृष्णनवमी-पौष-कृष्णनवमी-माघकृष्णनवमी-भाद्रकृष्णनवमी । पूर्वेद्युःश्राद्ध ( अष्टमी के पूर्वदिन किया जाने वाला श्राद्ध) ४—माघकृष्णसप्तमी-पौषकृष्णसप्तमी-माघकृष्णसप्तमी-भाद्रकृष्णसप्तमी, इस प्रकार १२+४+१४+१२+१३+१३+१६+४+४=९६ श्राद्ध हुए ।

२. अङ्गिराः—'प्रथमेऽह्नि तृतीये च पंचमे सप्तमे तथा । नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥' 'नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः । आपस्तम्बाः षडित्याहुर्विभाषा त्वितरेषु हि ।' यहाँ आश्वला-

नानि। ततः पराणि कनिष्ठभ्रातृवार्षिकशस्त्रहतचतुर्दशीश्राद्धादीनि पुराणसंज्ञानि। केचित्सपिण्डयुत्तरं क्रियमाणानां पार्वणानामपि पुराणसंज्ञामाहुः।

एक के उद्देश्य से किया जाने वाला श्राद्ध जो एक पिण्डयुक्त होता है, उसे एकोद्दिष्ट कहते हैं। वह भी तीन प्रकार का है—नवसंज्ञक, नवमिश्रसंज्ञक और पुराणसंज्ञक। मरे हुए का पहिले दिन से आरंभ कर दशाहपर्यन्त विहित श्राद्ध नवसंज्ञक एकोद्दिष्ट हैं। एकादशाह आदि न्यूनाब्दपर्यन्त नवमिश्रसंज्ञक एकोद्दिष्ट हैं। ये विश्वदेवरहित होते हैं। इसके बाद वाले छोटे भाई का वार्षिकश्राद्ध, शस्त्र से मरे का चतुर्दशी श्राद्ध आदि पुराणसंज्ञक एकोद्दिष्ट हैं। कुछ लोग—सपिण्डन के बाद किये जाने वाले पार्वणों को भी पुराणसंज्ञक—कहते हैं।

## अथ नान्दीश्राद्धविचारः

पुत्रजन्मविवाहादौ क्रियमाणं वृद्धिश्राद्धं नान्दीश्राद्धम्। इदं पूर्वार्धे विस्तरेण प्रपञ्चितम्। एतदेव गर्भाधानपुंसवनसीमन्तेषु आधाने सोमे च क्रियमाणं कर्माङ्गमिष्टिश्राद्धमिति चोच्यते। अत्र क्रतुदक्षौ विश्वेदेवाः। अन्यकर्मसु वृद्धिसंज्ञम्। तत्र सत्यवसू विश्वेदेवा इति नामभेदो देवभेदश्चान्यत्समानम्। एतच्च पार्वणत्रययुतत्वात्पार्वणभेदान्तर्गतमपि दर्शादितो बहुधर्मभेदात्पृथगुद्दिष्टम्।

पुत्रजन्म, विवाहादि में किये जाने वाले वृद्धिश्राद्ध को नान्दीश्राद्ध कहते हैं। इसका पूर्वार्द्ध में विस्तारपूर्वक वर्णन किया है। इसे ही गर्भाधान-पुंसवन-सीमन्त में, आधान और सोमयाग में किया जाने वाला कर्मांग और इष्टि श्राद्ध कहते हैं। इसमें क्रतु और दक्ष विश्वेदेव हैं। अन्य कर्मों में वृद्धिसंज्ञक हैं। उसमें सत्य और वसु विश्वेदेव, इतना ही नामभेद और देवभेद है, अन्य सब समान है। तीन पार्वण से युक्त होने के कारण पार्वण भेदों के अन्तर्गत भी दर्शश्राद्धादि से अधिक धर्मभेद होने के कारण इसे अलग कहा है।

मृतस्य द्वादशाहादिकाले पिण्डार्घ्यसंयोजनादिरूपं सपिण्डीकरणम्। एतदपि पार्वणैकोद्दिष्टविकाररूपम्। अत्र विशेषो वक्ष्यते। एवं च पार्वणमेकोद्दिष्टमिति द्विविधमेव श्राद्धम्।

मरे हुए का द्वादशाह आदि काल में पिण्ड और अर्घ्यसंयोजन आदि रूप सपिण्डीकरण होता है। यह भी पार्वण और एकोद्दिष्ट का विकृति रूप है। इसमें विशेष कहूँगा। इस प्रकार पार्वण और एकोद्दिष्ट दो ही प्रकार का श्राद्ध है।

## अथ पार्वणैकोद्दिष्टयोर्भेदाः

एतत्पुनस्त्रिविधम्—नित्यं नैमित्तिकं काम्यं चेति। नियतनिमित्ते विहितं

---

यनशाखियों का एकादशाह को छोड़ देने पर पाँच ही होता है, जैसा मदनरत्न में बौधायन की उक्ति है—'मरणाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं कुर्यादानवमात्। यदि नवमं विच्छिद्येतैकादशे तत्कुर्यात्।' हेमाद्रि में वृद्ध वसिष्ठ का वचन है—'अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्नैव मुच्यते। अर्वाक् तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतम्।' बह्वृचों का नारायणवृत्ति में कहा है—'नवश्राद्धं दशाहानि नवमिश्रं तु षड्ऋतून्। अतः परं पुराणं वै त्रिविधं श्राद्धमुच्यते॥' यहाँ शाखाभेद से व्यवस्था है। भविष्यपुराणे—'नवश्राद्धं त्रिपक्षं च षण्मासं मासकानि च। न करोति सुतो यस्तु तस्याधः पितरो गताः॥' इति।

नित्यम्[1], यथा दर्शादि। प्रत्यहं विहितमपि श्राद्धं नित्यसंज्ञं पार्वणद्वययुतं विश्वदेवहीनमुक्तम्। अनियतनिमित्ते विहितं नैमित्तिकम्[2], यथा सूर्यचन्द्रग्रहणादौ। एतदपि षड्दैवतम्। फलकामनोपाधिकं काम्यम्[3], यथा पञ्चम्यादितिथौ कृत्तिकादिनक्षत्रे च।

यह फिर तीन प्रकार का है—नित्य नैमित्तिक और काम्य। नियत निमित्त में विहित को नित्य कहते हैं, जैसे दर्शश्राद्धादि। प्रतिदिन विहित भी नित्यनामक श्राद्ध दो पार्वणों से युक्त विश्वेदेवरहित कहा है। अनियत निमित्त में विहित को नैमित्तिक कहते हैं, जैसे सूर्यचन्द्रग्रहणादि में। यह भी षड्दैवत होता है। फल की कामना से क्रियमाण श्राद्ध काम्य कहलाता है, जैसे पंचमी आदि तिथि और कृत्तिका आदि नक्षत्र में।

## अथ श्राद्धदेशाः

दक्षिणाप्रवणे[4] गोमयोपलिप्ते कृमिकेशास्थिश्लेष्मादिवर्जिते कृत्रिमभूमिवर्जिते रजस्वलादर्शनादिवर्जिते श्राद्धं कार्यम्। [5]कुरुक्षेत्रप्रभासपुष्करप्रयागकाशीगङ्गा-यमुनानर्मदादितीरनैमिषगङ्गाद्वारगयाशीर्षाक्षय्यवटादिषु श्राद्धं महाफलम्।

दक्षिण की ओर ढालू और गोबर से लीपे हुए स्थान में जो कृमि-केश-हड्डी-कफ आदिसे रहित और जो कृत्रिम भूमि न हो तथा रजस्वला आदि के दर्शन से रहित हो वहां श्राद्ध करना चाहिये। कुरुक्षेत्र प्रभास-पुष्कर-प्रयाग-काशीक्षेत्र में और गंगा-यमुना-नर्मदा आदि के तीर पर नैमिषारण्य-गंगाद्वार-गयाशिर-अक्षयवट आदि में किया जाने वाला श्राद्ध महाफलदायक होता है।

## अथ गयाशिरसि पिण्डप्रमाणं सप्तगोत्राणि च

शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे[6]।

---

१. विष्णु ने नित्य श्राद्ध का निर्देश किया है—'अमावस्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका मघा प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ च' इति। कूर्मपुराण के—'अहन्यहनि नित्यं स्यात्' इस वचन से प्रतिदिन का विहितश्राद्ध भी नित्य है।

२. गालव ने नैमित्तिक श्राद्ध का निर्देश किया है—'प्रेतश्राद्धं सपिण्डान्तं संक्रान्तौ ग्रहणेषु च। संवत्सरोदकुम्भं च वृद्धिश्राद्धं निमित्ततः॥' इति।

३. गालव ने ही काम्यश्राद्ध को कहा है—'तिथ्यादिषु च यः श्राद्धं मन्वादिषु युगादिषु। अलभ्येषु च योगेषु तत्काम्यं समुदाहृतम्॥' इति।

४. विष्णुधर्मोत्तरे—'दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽथवा। भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात् प्रयत्नतः॥' गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च। कुर्याच्छ्राद्धमथैतेषु नित्यमेव यथाविधि॥' दक्षिणाप्रवणे=दक्षिणतो निम्नीकृते। भूसंस्कारादिसंयुक्ते=मार्जनादिना भूशुद्धियुते। याज्ञवल्क्य ने भूसंस्कार यों बतलाया है—'भूशुद्धिर्मार्जनाद्दाहात्कालाद् गोक्रमणात्तथा। सेकादुल्लेखनाल्लेपाद् गृहं मार्जनलेपनात्॥' इति।

५. महाभारते—'तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती। प्रभासं पुष्करं चेति तेषु श्राद्धं महाफलम्॥' शङ्खः—'गंगायमुनयोस्तीरे पयोष्ण्यमरकण्टके। नर्मदा बाहुदातीरे भृगुलिङ्गे हिमालये॥ गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा। सन्निहत्यां गयायां च दत्तमक्षय्यतां व्रजेत्॥ अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः। गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः॥' इति।

६. गयाशिरे=गयाशिरसि, 'ये सान्तास्ते अदन्ता अपि' इत्युक्त्या समावेयम्। आदित्य-

उद्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम् ॥
पिता माता च भार्या च भगिनी दुहिता तथा ।
पितृमातृष्वसा चैव सप्तगोत्राणि वै विदुः ॥

एषां गोत्राणां पुरुषाः क्रमेण 'चतुर्विंशतिर्विंशतिषोडशद्वादशैकादशाष्टावित्येकोत्तरशतसंख्यास्तेषामुद्धार इत्यर्थः । तत्र पितृकुले द्वादश पूर्वा द्वादश परा इति चतुर्विंशतिः । एवमग्रेऽपि ।

[2]तुलसीकाननच्छाया शालग्रामस्य सन्निधिः ।
चक्राङ्कितस्य सान्निध्यमेषु यत्क्रियते नरैः ॥
स्नानं दानं तपः श्राद्धं सर्वमक्षय्यतां व्रजेत् ।

शमी के पत्ते के बराबर गया में दिया हुआ पिण्ड सात गोत्र और एक सौ एक कुल का उद्धार करता है । पिता, माता, स्त्री, बहिन, लड़की, बुआ, मौसी, इन्हीं सात को आचार्य लोग सप्त गोत्र कहते हैं । इन गोत्रों के क्रम से चौबीस, बीस, सोलह, बारह, ग्यारह, दस और आठ इस प्रकार पुरुष की एक सौ एक संख्या होती है, उन्हीं का उद्धार करता है । उसमें पितृकुल के बारह पूर्व और बारह पर, इस प्रकार चौबीस हुए । ऐसे ही आगे भी समझें । तुलसी वन की छाया, शालग्राम का सन्निधान और चक्रांकित के सान्निध्य में पुरुषों द्वारा जो स्नान, दान, तप और श्राद्ध किया जाता है वह सब अक्षय होता है ।

## अथ श्राद्धे निषिद्धस्थानानि

[3]गोगजाश्वादिजुष्टप्रदेशे म्लेच्छदेशे च श्राद्धं न कार्यम् । परकीयगृहादौ

---

पुराण में गयाशिर का प्रमाण—'पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । महानद्याः पश्चिमेन यावद् गृध्रेश्वरो गिरिः ॥ उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमासनम् । एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम् ॥' बृहस्पतिः—'गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा । गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥ धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च । दृष्ट्वैतानि पितॄंश्चार्चन् वंश्यान् विंशतिमुद्धरेत् ॥' इति ।

१. वायुपुराणे—'तत्त्वानि विंशतिर्नृपा द्वादशैकादशा दश । अष्टाविति च गोत्राणां कुलमेकोत्तरं शतम् ॥' इति । नृपाः = षोडश ।

२. स्कन्दपुराणे—'तुलसीकाननच्छाया यत्र यत्र भवेद् द्विज । तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे ॥' प्रयोगपरिजात में पद्मपुराण का वचन है—'शालग्राममयी मुद्रा संस्थिता यत्र कुत्रचित् । वाराणस्या यवाधिक्यं समन्ताद्योजनत्रयम् ।''''''यत्किञ्चित्पैतृकं कुर्यात् सपिण्डं वा तदन्तिके । विष्णुलोकं स गच्छेत्तु लभते शाश्वतं पदम् ॥' इति ।

३. शङ्ख ने निषिद्ध देश का निर्देश यों किया है—'गोगजाश्वादिजुष्टेषु कृत्रिमायां तथा भुवि । न कुर्याच्छ्राद्धमेतेषु पारक्यासु च भूमिषु ॥' यमः—'परकीयप्रदेशेषु पितॄणां निर्वपेत्तु यः । तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥' वायुपुराणे—'त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् । उत्तरेण महानद्या दक्षिणेन तु कीकटम् ॥ देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि वर्जितः । कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ॥ प्रणष्टाश्रमवर्णाश्च देशा वर्ज्याः प्रयत्नतः ।' विष्णुः—'न म्लेच्छविषये श्राद्धं कुर्यान्न च गच्छेत्' इति । महाभारत और ब्रह्मपुराण में—'परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेद्यदि । तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥ अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम् । अग्र-

श्राद्धकरणे तद्भूमिस्वामिपितरो भागं हरन्ति। तेन गृहस्वामिने मूल्यं दत्त्वा कार्यम्। स्वाम्यनुज्ञया वा कार्यम्।

वनानि गिरयो नद्यस्तीराण्यायतनानि च।
देवखाताश्च गर्ताश्च न स्वाम्यं तेषु कस्यचित्॥
नैकवासा न च द्वीपे नान्तरिक्षे कदाचन।
श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्॥

गाय, हाथी और घोड़ा आदि से सेवित प्रदेश में तथा म्लेच्छदेश में श्राद्ध नहीं करे। दूसरे के घर आदि में श्राद्ध करने से उस भूमि के स्वामी पितर लोग भाग ले लेते हैं। इससे घर के स्वामी को मूल्य देकर श्राद्ध करे या स्वामी की आज्ञा से श्राद्ध करे। वन, पर्वत, नदियां, तीर, गृह, देवकुण्ड, देवगर्त, इनमें किसी का स्वामित्व नहीं होता। एक वस्त्र से, द्वीप में, अन्तरिक्ष में और अपवित्र होकर श्रुति-स्मृति-विहित कर्म न करे।

## अथ श्राद्धकालाः

ते च प्रायेणामासंक्रान्तियुगादिमन्वादिमहालयादयः पूर्वपरिच्छेद उक्ता एव। केचित्तूच्यन्ते—महातीर्थप्राप्तिर्व्यतीपातो मृताहो ग्रहणद्वयं श्राद्धं प्रति रुचिः श्रोत्रियादिब्राह्मणसंपत्तिरर्धोदयकपिलाषष्ठयाद्यलभ्ययोगा ग्रहपीडा दुःस्वप्नदर्शनं नवान्नप्राप्तिर्नवोदकप्राप्तिर्गृहप्रच्छादनादिनिमित्तं च श्राद्धकालाः[१]।

वे समय—अमावास्या, संक्रान्ति, युगादि, मन्वादि और महालय आदि पूर्व परिच्छेद में प्रायः कहे गये हैं। कुछ को कह रहा हूँ—महातीर्थ की प्राप्ति, व्यतिपात योग, मृत्युदिन, चन्द्र-सूर्य-ग्रहण, श्राद्ध के प्रति रुचि, श्रोत्रिय आदि ब्राह्मणसम्पत्ति, अर्धोदय, कपिला षष्ठी आदि अलभ्य योग, ग्रहपीड़ा, दुःस्वप्नदर्शन, नवान्नप्राप्ति, नवोदकप्राप्ति और गृहप्रच्छादन आदि निमित्त श्राद्ध-काल हैं।

## अथ पद्मकयोगलक्षणम्

यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च।
पद्मको नाम योगोयमयनादेश्चतुर्गुणः॥

---

भागं = श्राद्धीयद्रव्यस्य प्रथममेकदेशमुद्धृत्य भूमिस्वामिपितृभ्यो दद्यात्। जीवताम् = जीवत्सु भूमिस्वामिपितृषु मूल्यं दद्यादिति शूलपाण्यादयः। 'परकीयगृहे०' यह वचन स्वामी के आदेश न होने पर है। स्वामी के आदेश मिलने पर ब्रह्मपुराण में श्राद्ध करना बतलाया है—'स्वनुलिप्तेषु गेहेषु स्वेष्वनुज्ञापितेषु च। श्राद्धमेतेषु दातव्यं वर्ज्यमेतेषु नोच्यते॥' इति।

१. याज्ञवल्क्यः—'अमावस्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्। द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः॥ व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः। श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्तिताः॥' मार्कण्डेयः—'यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित्। तेनैकेनापि कर्तव्यं श्राद्धं च विषुवच्छुभे॥' हेमाद्रि ने इसे पिण्डरहित बतलाया है। मार्कण्डेयपुराण में—'श्राद्धार्हद्रव्यसम्पत्तौ तथा दुःस्वप्नदर्शने। जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया॥' वृद्धपराशरः—श्राद्धं वृद्धावचन्द्रेभच्छायाग्रहणसंक्रमे। नवोदके नवान्ने च नवच्छन्ने तथा गृहे॥ नवैक्ष्वेषु चेहन्ते पितरो हि मघास्वपि॥' इति।

सर्वमासानां कृष्णपक्षेषु श्राद्धमुक्तम्[1] । अत्र प्रत्यहं पञ्चम्यादि वा यदहः संपत्तिर्वेति त्रयः पक्षाः । एकदिनपक्षे दर्श एव । नारायणवृत्तौ तु दर्शश्राद्धेनैव पक्षश्राद्धसिद्धिरुक्ता ।

जिस दिन भद्रा, व्यतीपात तथा रविवार हो यह पद्मक नाम का योग अयन आदि से चौगुना फलदायक है । सब महीने के कृष्णपक्ष में श्राद्ध कहा है । इसमें प्रतिदिन, अथवा पंचमी आदि, अथवा जिस दिन श्राद्ध की सम्पत्ति हो, ये तीन पक्ष हैं । एक दिन वाले पक्ष में दर्श श्राद्ध ही है । नारायणवृत्ति में तो दर्शश्राद्ध से ही पक्षश्राद्ध की सिद्धि कही है ।

## अथ दर्शश्राद्धानुकल्पाः

सर्वमासेषु दर्शश्राद्धाशक्तौ [2]कन्याकुम्भवृषस्थेऽर्के सति दर्शत्रये एकत्र दर्शे वा श्राद्धम् । साग्निकस्य त्वशक्तस्य पिण्डपितृयज्ञमात्रेण दर्शसिद्धिः । निरग्निकस्य ब्राह्मणभोजनमात्रेण धान्यादिद्रव्यदानेन वा दर्शसिद्धिः । कृष्णपक्षेषु महालयापरपक्षस्य श्रेष्ठत्वम् । तत्रापि पञ्चदशाहादिपक्षा अन्योऽपि बहुविस्तरो द्वितीयपरिच्छेदे उक्तः । अत्र विशेषान्तरं कालतत्त्वविवेचने । पञ्चदशाहव्यापिमहालयप्रयोगारम्भोत्तरमाशौचपाते कृतमहालयानां वैफल्यम् । तेन शुद्धयन्ते कस्यांचित्तिथौ सकृन्महालयमात्रमनुष्ठेयम् । एवं पञ्चम्यादिपक्षेऽपि प्रतिबन्धान्तरे प्रतिनिधिद्वारा शेषमहालयानुष्ठानम् ॥

सभी महीनों में दर्शश्राद्ध करने में असमर्थ होने पर कन्या कुंभ और वृष के सूर्य के रहते, तीनों दर्श में या एक दर्श में श्राद्ध करे । अशक्त साग्निक का तो केवल पिण्डपितृयज्ञ दर्शश्राद्ध की सिद्धि होती है । निरग्निक को केवल ब्राह्मणभोजनमात्र से या धान्यादि द्रव्य के दान से दर्श की सिद्धि होती है । कृष्ण पक्षों में महालय के अपरपक्ष की श्रेष्ठता है । उसमें भी पन्द्रह दिन आदि के पक्ष अन्य भी बहुत सा विस्तार द्वितीय परिच्छेद में कह चुका हूँ । इसमें अन्य विशेषता कालतत्त्वविवेचन में है । पन्द्रह दिनव्यापी महालय प्रयोगारंभ के बाद यदि आशौच पड़ जाय तो किये हुए महालयों की विफलता होती है । इससे आशौच की शुद्धि के बाद किसी तिथि में केवल एक बार महालय का अनुष्ठान करे । इसी तरह पंचमी आदि पक्ष में भी दूसरे किसी प्रतिबन्ध के होने से प्रतिनिधिद्वारा बाकी महालय श्राद्ध करे ।

## अथ पितृव्यादीनां महालयप्रकारः

पितृव्यज्येष्ठभ्रात्रादीनामपुत्राणां महालयापरपक्षे तत्तन्मृततिथौ तदेकपार्वणकमहालयश्राद्धं [3]जीवत्पितृकेणापि कार्यमिति । द्वादशपौर्णमास्योरसंभवे माघीश्रावणीप्रौष्ठपद्यो नित्याः ।

---

१. आपस्तम्ब ने कहा है—'मासि मासि कार्यम्, अपरपक्षस्यापराह्णः श्रेयान्' । 'शाकेनाप्यपरपक्षं नातिक्रमेत्, मासि मासि वाऽशनम्' इति श्रुतिः ।

२. मत्स्यपुराणे—'अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् । कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्वदा ॥' निगमः—'कृष्णपक्षे यदहः सम्पद्यते अमावास्यायां तु विशेषेण' 'अशक्तौ दर्शेनापि मासि श्राद्धसिद्धिः' इति नारायणवृत्तिः ।

३. मैत्रायणीयपरिशिष्टे—'उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥' इति ।

पुत्ररहित चाचा और जेठे भाई आदि का श्राद्ध महालय के अपर पक्ष में उन-उन मृत तिथि में एक पार्वण वाला महालय श्राद्ध जीवत्पितृक को भी करना चाहिये। बारहो पूर्णिमा श्राद्ध के असम्भव में माघी, श्रावणी और भाद्रपदी नित्य हैं।

## अथ काम्यश्राद्धकालाः

कस्मिंश्चित्कृष्णपक्षे प्रतिपदादिपञ्चदशतिथिषु[1] कृत्तिकादिभरण्यन्तनक्षत्रेषु विष्कम्भादियोगेषु सूर्यादिवारेषु बवादिकरणेषु च श्राद्धे फलविशेषोक्तेरेते तिथ्यादयः काम्यश्राद्धकाला ज्ञेयाः। इति सामान्यकालः।

किसी कृष्ण पक्ष की प्रतिपदा आदि पन्द्रह तिथियों में, कृत्तिका से भरणीपर्यन्त नक्षत्रों में, विष्कुम्भ आदि योग में, सूर्य आदि वारों में और बव आदि करणों में श्राद्ध करने से फल विशेष कहा है, इससे ये तिथ्यादि काम्य श्राद्ध के काल हैं। सामान्य काल समाप्त।

## अथापराह्णादिकालविशेषनिर्णयः

दिनस्य पञ्चविभागास्त्रित्रिमुहूर्तकास्तत्राद्यो भागः प्रातःसंज्ञः द्वितीयः संगवः तृतीयो मध्याह्नः चतुर्थोऽपराह्णः पञ्चमो भागः सायाह्नः। दिनस्य पञ्चदशो भागो मुहूर्तः। तत्र सप्तमो गन्धर्वोऽष्टमो मुहूर्तः कुतुपः नवमो रौहिणः। तत्र दर्शादिश्राद्धानां निर्णयः पूर्वपरिच्छेदयोः प्रायेणोक्तः, विशेषस्तूच्यते—साग्निकानां कात्यायनादीनामन्वाधानपिण्डपितृयज्ञदर्शश्राद्धानामेकदिनकर्तव्यत्वनियमात् त्रेधाविभक्तदिनतृतीयभागरूपापराह्णव्यापिन्याममायां दर्शश्राद्धं कर्तव्यम्।

दिन का पांच विभाग तीन-तीन मुहूर्त्त के होते हैं। उनमें पहिले भाग की संज्ञा प्रातः है, दूसरे की संगव, तीसरे भाग की मध्याह्न, चौथे की अपराह्ण और पंचम भाग की संज्ञा सायाह्न है। दिन के पन्द्रहवें भाग को मुहूर्त्त कहते हैं। उसमें सप्तम का नाम गन्धर्व, आठवें का कुतुप और नवम का रौहिण है। उसमें दर्श आदि श्राद्धों का निर्णय दोनों पूर्व परिच्छेदों में प्रायः कहा है, विशेष तो कह रहा हूँ—साग्निक कात्यायन आदि का अन्वाधान, पिण्डपितृयज्ञ और दर्शश्राद्ध एक दिन करने का नियम है, इससे दिन को तीन भागों में विभाग कर तीसरे भागरूप अपराह्णव्यापिनी अमावास्या में उन्हें दर्शश्राद्ध करना चाहिये।

## अथ एकोद्दिष्टश्राद्धे तिथिनिर्णयः

अथ प्रतिसांवत्सरिकमासिकादिनिर्णय उच्यते—तत्रैकोद्दिष्टं मध्याह्ने सप्तमाष्टमनवममुहूर्तरूपे[2] कार्यम्। तत्रापि कुतुपरौहिणसंज्ञकावष्टमनवममुहूर्तौ मुख्यः

---

१. याज्ञवल्क्य ने–'कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि' इत्यादि से तिथियों और 'स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा' इत्यादि से नक्षत्रों का फलविशेष कहा है। कृत्तिकादि भरणीपर्यन्त नक्षत्रों के फल के समान ही विष्कम्भादि योगों का भी फल है। बृहस्पति ने रविवारादि का फल यों बतलाया है—'आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयम्। सर्वान् कामान् प्रियां विद्यां धनमायुर्यथाक्रमम्॥ सूर्यादिदिवसेष्वेतच्छ्राद्धकृल्लभते फलम्। बवादिकरणेष्वेतच्छ्राद्धकृल्लभते फलम्॥' इति।

२. वृद्धगौतमः—'मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत्।' गौतमः—'प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्॥' माधवीये व्यासोऽपि—'कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत्। आवर्तनसमीपे वा तत्रैव नियतात्मवान्॥' इति।

कालः। तत्र पूर्वत्रैव परत्रैव वा दिने मध्याह्नव्याप्तौ सैव तिथिर्ग्राह्या। दिनद्वये मध्याह्नव्याप्तौ मध्याह्नास्पर्शे वा पूर्वत्रैव। दिनद्वये साम्येनैकदेशव्याप्तौ [1]पूर्वा। खर्वदर्पादिैर्व्यवस्थेत्यन्ये। वैषम्येणैकदेशव्याप्तावाधिक्येन निर्णयः।

प्रति सांवत्सरिक और मासिकादि श्राद्ध का निर्णय कह रहा हूँ--एकोद्दिष्ट श्राद्ध मध्याह्न में सप्तम अष्टम और नवम मुहूर्त में करे। उसमें भी कुतुप-रौहिण नामक अष्टम और नवम, ये दोनों मुख्य काल हैं। उसमें पहिले और दूसरे ही दिन में मध्याह्नव्यापिनी हो तो वही तिथि ग्राह्य है। दोनों दिन मध्याह्नव्याप्ति में या मध्याह्न से स्पर्श न होने पर पहिले ही दिन करे। दोनों दिन समता से एक देश में व्याप्ति होने पर पूर्वा तिथि लेनी चाहिये। दूसरे कहते हैं—खर्व दर्प आदि से व्यवस्था करे। विषमता से एकदेश में व्याप्ति होने पर जो अधिक हो उससे निर्णय करे।

## अथ पार्वणश्राद्धे तिथिनिर्णयः

पार्वणे त्वपराह्णव्यापिनी[2] ग्राह्या। पूर्वत्रैव परत्रैव वाऽपराह्णव्याप्तौ सैव ग्राह्या। दिनद्वये तद्व्याप्तौ तदस्पर्शे वांशतः समव्याप्तौ वा पूर्वा। विषमव्याप्तौ त्वधिका ग्राह्या[3]। माधवाचार्यास्तु दिनद्वये पूर्णापराह्णव्याप्तावंशतः समव्याप्तौ चोत्तरतिथेः क्षये पूर्वा वृद्धौ परा, उत्तरतिथेः क्षयवृद्ध्यभावेऽपि परेत्याहुः[4]। अयं क्षयाहनिर्णयः प्रत्याब्दिके मासिके सकृन्महालये च ज्ञेयः। 'श्राद्धे भरण्यादिनक्षत्रं व्यतीपातादियोगश्चापराह्णव्यापीत्युक्तं द्वितीये।

पार्वण में तो अपराह्नव्यापिनी तिथि लेनी चाहिये। पहिले दिन या दूसरे दिन जिस दिन अपराह्न-व्यापिनी हो वही ग्राह्य है। दोनों दिन अपराह्न में व्याप्ति हो या उसका स्पर्श न हो अथवा अंशतः समता से व्याप्ति हो तो पूर्वा तिथि ले। विषमव्याप्ति में तो अधिक वाली ग्राह्य है। माधवाचार्य तो—दोनों दिन पूर्ण अपराह्नव्याप्ति में और अंशतः सम व्याप्ति में भी उत्तर तिथि के क्षय में पूर्वा और उत्तरा तिथि के वृद्धि में परा ग्राह्य है, उत्तर तिथि के क्षय-वृद्धि दोनों के न होने पर भी परा ले—ऐसा कहते हैं। यह क्षयाह निर्णय प्रत्याब्दिक, मासिक और सकृन्महालय में जानना चाहिये। श्राद्ध में भरणी आदि नक्षत्र और व्यतिपात आदि योग भी अपराह्नव्यापी ले, ऐसा द्वितीय परिच्छेद में कहा है।

केचिच्छुक्लपक्षे उदयव्यापिनक्षत्रं कृष्णपक्षेऽस्तमयव्यापि, योगस्तु कुतुपादि-व्यापीत्याहुः। एतच्च पार्वणश्राद्धं कुतुपादिमुहूर्तपञ्चके कार्यं न सायाह्ने न रात्रौ

---

१. अपरार्क में नारद की उक्ति है—'दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम्। पूर्व-विद्धमकुर्वाणो नरकं प्रतिपद्यते ॥' इति।

२. पृथ्वीचन्द्रोदय में वृद्ध गौतम की उक्ति है—'अपराह्नव्यापिनी या पार्वणे सा तिथिर्भ-वेत्।' इति।

३. जैसा मरीचि स्मृति में मरीचि ने कहा है—'द्व्यपराह्नव्यापिनी स्यादाब्दिकस्य यदा तिथिः। महती यत्र तद्विद्धां प्रशंसन्ति महर्षयः ॥' इति।

४. माधवाचार्यादि के निर्णय में बौधायन का वचन है—'अपराह्नद्वयव्यापिन्यतीतस्य च या तिथिः। क्षये पूर्वा च कर्तव्या वृद्धौ कार्या तयोत्तरा ॥' इसी प्रकार बृहन्नारदीय की उक्ति है—'क्षया-हस्य तिथिर्या तु अपराह्नद्वये यदि। पूर्वा क्षये तु कर्तव्या वृद्धौ कार्या तयोत्तरा ॥' इति।

न प्रातःसंगवयोः । पिण्डपितृयज्ञदिने सायाह्नेऽपि पार्वणमनुज्ञायते । यदा विघ्नवशाद्दिने सांवत्सरिकश्राद्धं न कृतं तदा [1]रात्रावपि प्रथमप्रहरपर्यन्तं कार्यम् । मृताहातिक्रमे चाण्डालत्वादिदोषोक्तेः ।

कुछ लोग—शुक्ल पक्ष में नक्षत्र उदयव्यापी और कृष्णपक्ष में अस्तव्यापी, योग तो कुतुपादि व्यापी ले—ऐसा कहते हैं । यह पार्वण श्राद्ध कुतुप आदि पांच मुहूर्त्तों में करना चाहिये । सायाह्न और रात्रि में तथा प्रातः और संगव में नहीं करे । पिण्डपितृयज्ञ के दिन सायाह्न में भी पार्वण की अनुज्ञा है । जिस दिन किसी विघ्न के कारण सांवत्सरिक श्राद्ध नहीं किया हो तब रात्रि में भी पहिले पहर तक करे, क्योंकि मरणदिन के अतिक्रमण होने पर चाण्डालत्वादि दोष कहा है ।

## अथ ग्रहणादिने वार्षिकादिप्राप्तौ निर्णयः

ग्रहणदिने दर्शमासिकप्रतिवार्षिकादिश्राद्धप्राप्तौ तद्दिने एवान्नेनामेन वा हेम्ना वा कुर्यान्नोत्तरदिने ।

ग्रहण के दिन दर्श, मासिक और प्रतिवार्षिक आदि श्राद्ध के पड़ने पर ग्रहण दिन में ही अन्न से या कच्चे अन्न से अथवा सुवर्ण से करे, दूसरे दिन नहीं ।

## अथ मलमासे प्रथमवार्षिकविचारः

प्रथमाब्दिकं त्रयोदशे मलमासे [2]कार्यमित्युक्तम् । तेन यत्र द्वादशमासिकं शुद्धमासे भवति तत्र त्रयोदशेऽधिक एव प्रथमाब्दिकं कार्यम् । यदा त्वधिकमध्ये द्वादशं मासिकं तदा द्वादशमासिकस्य द्विरावृत्तिं कृत्वा चतुर्दशे शुद्धमासे प्रथमाब्दिकम् । एवं द्वितीयादिमासिकस्यापि मलमासे प्राप्तस्य द्विरावृत्तिर्ज्ञेया । द्वितीयाद्याब्दिकं तु शुद्धमासे एव ।

प्रथमाब्दिक श्राद्ध तेरहवें मलमास में करे, ऐसा कहा है । इससे जहां द्वादशमासिक शुद्ध मास में होता है वहां तेरहवें मलमास में ही प्रथमाब्दिक करे । जब अधिक मास के मध्य में बारहवां मासिक पड़े तब द्वादशमासिक की दो आवृत्ति करके चौदहवें शुद्ध मास में प्रथमाब्दिक करे । इसी प्रकार द्वितीयादि मासिक की भी मलमास में पड़ने से दो आवृत्ति जाननी चाहिये । द्वितीय आदि वार्षिक तो शुद्ध मास में ही होता है ।

एवं महालयोऽपि शुद्धे एव नाधिके मासे किंचिदपि । मलमासमृतानां तु यदा स एव मलमासो भवति तदाधिक एव सांवत्सरिकं न [3]शुद्धे । दर्शदिने

---

१. क्योंकि मरीचि ने क्षयाह तिथि के अतिक्रमण होने पर दोष-प्रतिपादन किया है—'मृताहं समतिक्रम्य चण्डालेष्वभिजायते ।' माधव ने आपस्तम्ब के—'न च नक्तं श्राद्धं कुर्वीत आरब्धे वा भोजनसमापनम्' इस वचन से रात्रिश्राद्ध को गौणकाल बतलाया है ।

२. अन्यथा नहीं करे । जैसा लघुहारीत की उक्ति है—'प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥' इति ।

३. निर्णयसिन्धुकार ने लिखा है—'मलमासमृतानां तु यदा स एवाधिकः स्यात्तदा तत्रैव कार्यमन्यथा शुद्धे एव' इति, मलमास में मरे हुए का सौरमास ग्राह्य है, जैसा हेमाद्रि में वचन है—'मलमासमृतानां तु सौरं मानं समाश्रयेत्' इति ।

वार्षिकप्राप्तौ 'पूर्वं वार्षिकं कृत्वा ततः पिण्डपितृयज्ञं पाकान्तरेण दर्शश्राद्धं च कुर्यात्। परे तु आदौ पिण्डपितृयज्ञस्ततो वार्षिकं ततो दर्शं इति क्रममाहुः। एवं मासिकादिष्वपि ज्ञेयम्।

इसी तरह महालय भी शुद्ध ही में होता है, अधिक मास में कुछ नहीं। मलमास में मरे हुए का तो जब वही मलमास होता है तब अधिक मास में ही सांवत्सरिक होता है, शुद्ध मास में नहीं। दर्श के दिन वार्षिक पड़ने पर पहले वार्षिक करके इसके बाद पिण्डपितृयज्ञ और दूसरे पाक से दर्शश्राद्ध करे। दूसरे तो—पहिले पिण्डपितृयज्ञ उसके बाद वार्षिक तदनन्तर दर्शश्राद्ध यह क्रम—कहते हैं। इसी प्रकार मासिकादि में भी जानना चाहिये।

### अथ सपिण्डीकरणानन्तरं यावद्वर्षत्रयं श्राद्धभोजननिषेधः।

सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत्।
तावदेव न भोक्तव्यं तदीये श्राद्धमात्रके॥
प्रथमाब्देऽस्थ्यादिभोजी द्वितीये मांसभक्षकः।
तृतीये रक्तभोजी स्याच्छुद्धं श्राद्धं चतुर्थके॥

इत्यास्तां प्रासङ्गिकं प्रकृतमनुसरामः।

सपिण्डीकरण के बाद तीन वर्ष तक उसके श्राद्धमात्र में भोजन नहीं करे। पहिले वर्ष में श्राद्ध-भोजन करनेवाला अस्थि आदि का भोजन करता है। दूसरे में मांसभक्षक और तीसरे में रक्त भोजन करने वाला होता है। इस प्रकार चौथे वर्ष में श्राद्ध शुद्ध होता है। यह प्रसंग से कहा है अब प्रकृत का अनुसरण कर रहा हूं।

### अथ आमहेमश्राद्धकालः

पार्वणमपि हेमश्राद्धमामश्राद्धं च द्वेधाविभक्तदिनपूर्वभागे एव कार्यम्। सर्वं च श्राद्धं तत्तन्निर्णीतकाले यत्तत्तिथ्यभावेपि कर्तव्यं साकल्यवचनादिना शास्त्रतस्तत्र तत्तत्तिथिसत्त्वादिति कालतत्त्वविवेचने।

पार्वण श्राद्ध भी सुवर्ण तथा आमान्न से किया जाता है। उसे दिन के दो विभाग करके पहिले भाग में ही करना चाहिये। सभी श्राद्ध उन-उन के निर्णीत काल में उन-उन तिथियों के न रहने पर भी करें, क्योंकि साकल्य वचन आदि शास्त्र से वे-वे तिथियां रहती हैं, ऐसा 'काल-तत्त्वविवेचन' में लिखा है।

### अथ वृद्धिश्राद्धकालः

वृद्धिश्राद्धं प्रातःसङ्गवयोः कार्यम्। मध्याह्नो गौणः। अपराह्णसायाह्नरात्रयो निषिद्धाः। रात्रौ विवाहे प्रातर्वृद्धिश्राद्धं न कृतं तदा रात्रावपि कार्यमिति क्वचित्। ग्रहणनिमित्तकं पार्वणश्राद्धं पुत्रजन्मनिमित्तकं जातकर्माङ्गवृद्धिश्राद्धं च [2]रात्रावपि कार्यम्। इति कालनिर्णयः।

---

१. निर्णयदीप में यह निर्णय है। इसी प्रकार स्मृतिसार में भी कहा है—'दर्शे क्षयाहे सम्प्राप्ते कथं कुर्वन्ति याज्ञिकाः। आदौ क्षयाहं निर्वर्त्य पश्चाद्दर्शो विधीयते॥' इति।

२. अपरार्क में व्यास का वचन है—'ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च। दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥' देवल ने भी कहा है—'चन्द्रग्रहे तथा रात्रौ स्नानं दानं प्रशस्यते।' इति।

वृद्धिश्राद्ध प्रातःकाल और संगवकाल में करे। मध्याह्न गौण काल है। अपराह्ण सायाह्न और रात्रि का निषेध है। रात्रिमें विवाह करने पर प्रातःकाल वृद्धिश्राद्ध न किया हो तब रात में भी करे ऐसा कहीं लिखा है। ग्रहणनिमित्त पार्वण श्राद्ध और पुत्रजन्मनिमित्तक जातकर्म का अंग वृद्धिश्राद्ध रात में भी करे। कालनिर्णय समाप्त।

## अथ पितॄणामन्नप्राप्तिप्रकारः

पुत्रादिभिः पितृमात्राद्युद्देशेन श्राद्धे क्रियमाणे नाम गोत्रं मन्त्राश्च तत्तदन्नं तान्पितॄन्प्रापयन्ति। तत्र पित्रादीनां देवरूपत्वे तदन्नममृतरूपं भूत्वा तत्रोपतिष्ठते। गन्धर्वत्वे भोग्यरूपेण पशुत्वे तृणरूपेण सर्पत्वे वायुरूपेण यक्षत्वे पानरूपेण दानवादित्वे मांसत्वेन प्रेतत्वे रुधिरत्वेन मनुष्यत्वेऽन्नादिरूपेणेति [1]ग्रन्थान्तरे।

पुत्र आदि के द्वारा पिता माता आदि के उद्देश से श्राद्ध किये जाने पर नाम गोत्र तथा मन्त्र उस-उस अन्न को उन-उन पितरों को पहुँचाते हैं। वहां पिता आदि के देवरूप होने पर वह अन्न अमृतरूप होकर वहां उपस्थित होता है। गन्धर्व होने पर भोग्यरूप से, पशुत्व में तृणरूप से, सर्पत्व में वायुरूप से, यक्षत्व में पानरूप से, दानवादित्व में मांसरूप से, प्रेतत्व में रुधिररूप से और मनुष्यत्व में अन्नादिरूप से पहुँचाते हैं, ऐसा ग्रन्थान्तर में लिखा है।

तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम्।
अन्योऽन्यं मनसा ध्यात्वा संपतन्ति मनोजवाः॥
ते ब्राह्मणैः सहाश्नन्ति पितरो वायुरूपिणः।

अत एव श्रीरामेण श्राद्धे क्रियमाणे सीता विप्रेषु दशरथादीन्ददर्शेति कथा श्रूयते।

---

१. मृत माता पिता के उद्देश्य से श्राद्ध करने पर नाम, गोत्र और मन्त्र श्राद्धान्न को परलोकगत उन पितरों को किस प्रकार पहुँचाते हैं इसका सुन्दर वर्णन शास्त्रों में मिलता है। जैसा हेमाद्रि में मत्स्यपुराण और देवल का वचन है 'नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः। अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः॥ नाम मन्त्रास्तदादेशा भवान्तरगतानपि। प्राणिनः प्रीणयन्त्येव तदाहारत्वमागतान्॥ देवो यदि पिता जातः शुभकर्मानुयोगतः। तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति॥ गान्धर्वे भोगरूपेण पशुत्वे च तृणं भवेत्। श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपतिष्ठति॥पानं भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम्। दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदकम्॥ मनुष्यत्वेऽन्नपानादि नानाभोगकरं भवेत्।'

अर्थात् अपने कर्म के अनुसार पितर जिस योनि में गये हैं उस योनि के अनुरूप प्रिय खाद्य के रूप में परिवर्तित होकर श्राद्ध में दिया गया वह हव्य कव्य ( श्राद्धान्न ) पितरों को मिलता है और वे उससे तृप्त होते हैं। अपने शुभकर्म के योग से पिता मरकर देवयोनि में गये हों तो वह अन्न अमृतरूप होकर मिलता है। गन्धर्वयोनि में भोग्यरूप, पशुयोनि में तृणरूप, सर्पयोनि में वायुरूप, यक्षयोनि में पानरूप, राक्षसयोनि में मांसरूप, दनुजयोनि में मद्यरूप, प्रेतयोनि में रुधिरजलरूप और मनुष्ययोनि में अन्न-जल के रूप में परिवर्तित होकर उन्हें मिलता रहता है। इसे इस उदाहरण से समझें, जैसे—विदेश में रहनेवाले अपने किसी व्यक्ति के नाम से वहाँ भेजे गये रुपये भारतीय रुपये के रूप में नहीं मिल कर अमेरिका में डालर, इंगलैंड में पौंड-शिलिंग-पेंस, रूस में रुबल, इटली में लीरा और फ्रांस में फ्रैंक आदि के रूप में परिवर्तित होकर मिलते हैं।

प्रावृष्यन्ते यमः प्रेतान्पितॄंश्चाथ यमालयात् ।
विसर्जयति भूलोकं कृत्वा शून्यं स्वकं पुरम् ॥
ते पुत्रादेः प्रकांक्षन्ति पायसं मधुसंयुतम् ।
कन्यागते सवितरि पितरो यान्ति वै सुतान् ॥
अमावास्यादिने प्राप्ते गृहद्वारं समाश्रिताः ।
श्राद्धाभावे स्वभवनं शापं दत्त्वा व्रजन्ति ते ॥
अतो मूलैः फलैर्वापि तथाप्युदकतर्पणैः ।
पितृतृप्तिं प्रकुर्वीत नैव श्राद्धं विवर्जयेत् ॥

श्राद्धकर्ता के पितृगण श्राद्ध-काल को उपस्थित सुनकर अन्योन्य मन से ध्यान कर मन के समान वेग से आते हैं और उन श्राद्धीय ब्राह्मणों के साथ वायुरूप होकर भोजन करते हैं। इसी से राम के द्वारा दशरथ के श्राद्ध करते समय सीता ने श्राद्धीय ब्राह्मणों में दशरथ आदि को देखा, यह कथा सुनी जाती है। यमराज वर्षा काल के अन्त में यमपुर से प्रेत और पितरों को अपने पुर को शून्य करके भूलोक में भेजते हैं। वे पितर लोग पुत्र आदि से मधुयुक्त खीर की आकांक्षा करते हैं। कन्या के सूर्य में पितृगण अमावास्या के दिन पुत्रों के यहां जाते हैं। यदि श्राद्ध नहीं हुआ रहता है तो शाप देकर अपने घर लौट जाते हैं। इसलिये मूल-फल और जल-तर्पण से पितरों की तृप्ति करे। श्राद्ध का वर्जन नहीं करे।

किंच श्राद्धेन ब्रह्मादिस्तम्बपर्यन्तं सकलभूततृप्तिः श्रूयते। तत्र पिशाचादिरूपाणां विकिरादिभिस्तृप्तिर्वृक्षादिरूपाणां स्नानवस्त्रोदकादिना[1] केषांचिदुच्छिष्टपिण्डादिनेति। अतो ब्रह्मीभूतपितृकेणापि श्राद्धं कार्यम्।

किंच श्राद्ध से ब्रह्मा से लेकर स्तम्बपर्यन्त सम्पूर्ण जीवों की तृप्ति सुनते हैं। उसमें पिशाचादि रूप वालों की विकिर आदि से तृप्ति होती है, वृक्षादिरूपों की स्नान के वस्त्रोदक आदि से और कुछ की उच्छिष्ट पिण्ड आदि से तृप्ति होती है। इसलिये जिसके पिता आदि ब्रह्म में मिल गये हों उनका भी श्राद्ध करना चाहिये।

## अथ श्राद्धदेवताविचारः

तत्र पितृपितामहप्रपितामहादिरूपमेकैकं पार्वणं वसुरुद्रादित्यादिभेदेन ध्येयम्। एकोद्दिष्टं वसुरूपेणेति सर्वत्र। केचित्तु पितृपितामहप्रपितामहाः प्रद्युम्नसंकर्षणवासुदेवात्मना ध्येयाः कर्त्रानिरुद्धात्मनेत्याहुः। एवं वरुणप्रजापत्यग्निरूपेण क्वचित्। क्वचिन्मासऋतुवत्सररूपेणेति। तत्र यथाचारं समुच्चयेन विकल्पेन वा ध्यानमिति व्यवस्था।

---

१. वस्त्रोदक = वस्त्रनिष्पीडनोदक, जिसे आब्रह्मस्तम्बपर्यन्त की तृप्ति के लिये तर्पण के समय दिया जाता है। मन्त्र में स्पष्ट है—'आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः। तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥' इत्यादि। वस्त्रनिष्पीडनके सम्बन्ध में योगियाज्ञवल्क्य ने कहा है—'वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः। भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले ॥' स्मृत्यन्तरमें वस्त्रनिष्पीडन का प्रकार—'वस्त्रं चतुर्गुणीकृत्य पीडयेच्च जलाद्बहिः। वामप्रकोष्ठे निक्षिप्य द्विराचम्य शुचिर्भवेत् ॥' इति।

उसमें पिता-पितामह-प्रपितामह आदिरूप एक-एक पार्वण में क्रम से वसु-रुद्र-आदित्यादि के भेद से ध्यान करे। एकोद्दिष्ट में सबका वसुरूप से ध्यान करे। कुछ लोग तो कहते हैं कि अनिरुद्धरूप कर्ता प्रद्युम्न-संकर्षण-वासुदेवरूप भेद से पिता-पितामह-प्रपितामह का ध्यान करे। इसी प्रकार कहीं पिता आदि का वरुण-प्रजापति-अग्निरूप से, कहीं मास-ऋतु-वत्सर रूप से ध्यान करना कहा है। वहां आचार के अनुसार समुच्चय या विकल्प से ध्यान की व्यवस्था करे।

पित्रादिपार्वणं यत्र तत्र मातामहादयः ।
सर्वत्रैव हि कर्तव्या नाब्दिके मासिके पुनः ॥
मासिकेषु त्वाब्दिके च त्रिदैवत्यं प्रकीर्तितम् ।
वृद्धौ तीर्थेऽन्वष्टकासु गयायां च महालये ॥
त्रिपार्वणकमत्रेष्टं शेषं षाट्पौरुषं विदुः ।
सपत्नीकं पित्रादित्रयं सपत्नीकं मातामहादित्रयमिति षाट्पौरुषत्वम् ।
क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक् क्रिया ।
अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ॥
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ।

जहां पिता आदि का पार्वण होता है वहां सर्वत्र मातामह आदि का भी करे। वार्षिक और मासिक में नहीं करे। मासिकों में तो आब्दिक में भी त्रिदैवत्य कहा है। वृद्धिश्राद्ध, तीर्थश्राद्ध, अन्वष्टकाश्राद्ध, गया श्राद्ध और महालय श्राद्ध में त्रिपार्वणक श्राद्ध इष्ट है। शेष में षाट्पौरुष श्राद्ध जानना चाहिये। सपत्नीक पिता आदि तीन, एवं सपत्नीक मातामह आदि तीन, इस प्रकार षाट्पौरुष श्राद्ध हुआ। एक क्षयाह को छोड़कर स्त्रियों का पृथक् श्राद्ध नहीं होता। अन्वष्टका, वृद्धि, गया और क्षयाह में, माता का पृथक् श्राद्ध होता है इनके अतिरिक्त पति के साथ होता है।

## अथ विश्वेदेवाः

यत्र विशेषो नोच्यते तत्र सर्वत्र पार्वणश्राद्धे पुरूरवार्द्रवसंज्ञका विश्वेदेवाः[1]। काम्यश्राद्धे महालये च धूरिलोचनसंज्ञकाः। नैमित्तिकेऽष्टकाख्याऽष्टमीश्राद्धे च कामकालसंज्ञकाः। एकोद्दिष्टं सपिण्डीकरणं वा नैमित्तिकसंज्ञम्। नान्दीश्राद्धे सत्यवसुसंज्ञकाः। तत्रापि गर्भाधानपुंसवनसीमन्तोन्नयनेतिसंस्कारत्रयाङ्गमग्न्याधानसोमयागाङ्गं च नान्दीश्राद्धमिष्टिश्राद्धसंज्ञकं कर्माङ्गश्राद्धसंज्ञकं च। तत्र क्रतुदक्षसंज्ञका विश्वेदेवाः।

---

१. हेमाद्रि में शंख और बृहस्पति का वचन है—'इष्टिश्राद्धे क्रतुदक्षौ सत्यौ नान्दीमुखे वसू। नैमित्तिके कामकालौ काम्ये च धूरिलोचनौ ॥ पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ। नैमित्तिक एकोद्दिष्ट श्राद्ध है, जैसा भविष्य में कहा है—'एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते। हेमाद्रि में आदित्यपुराण का वचन है—'विश्वेदेवौ क्रतुर्दक्षः सर्वास्विष्टिषु कीर्तितौ। नित्ये नान्दीमुखे श्राद्धे वसू सत्यौ च पैतृके ॥ नवान्नलम्भने देवौ कामकालौ सदैव हि। अपि कन्यागते सूर्ये काम्ये च धूरिलोचनौ ॥ पुरूरवार्द्रवौ चैव विश्वेदेवौ तु पार्वणे।' शातातपः—'नित्यं श्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च। मातुः श्राद्धं च युग्मैः स्याददैवं प्राङ्मुखैः पृथक् ॥ योजयेद्दैवपूर्वाणि श्राद्धान्यन्यानि यत्नतः।' इससे सिद्ध है कि एकोद्दिष्ट और उसके विकृति श्राद्धों में विश्वेदेवा नहीं होते, तदितर श्राद्धों में होते हैं। महालयादि द्विपार्वण में एवं त्रिपार्वण-चतुःपार्वण में पृथक्-पृथक् विश्वेदेवा हैं। 'तन्त्रं वा वैश्वदेविकं' इससे अशक्ति में एक से भी काम चलता है।

जहां विशेष नहीं कहा है वहां सर्वत्र पार्वण श्राद्ध में पुरूरवा और आर्द्रव नामक विश्वेदेवा हैं। काम्य श्राद्ध और महालय में धूरिलोचन नामक हैं। नैमित्तिक और अष्टकानामक अष्टमी श्राद्ध में कामकालनामक विश्वेदेवा हैं। एकोद्दिष्ट या सपिण्डीकरण में नैमित्तिकसंज्ञक है। नान्दीश्राद्ध में सत्यवसुनामक हैं। गर्भाधान, पुंसवन और सीमन्तोन्नयन, इन तीन संस्कारों के अंग, अग्न्याधान और सोमयाग के अंग, इष्टिश्राद्ध और कर्मांगश्राद्ध में क्रतु और दक्षनामक विश्वेदेवा हैं।

पार्वणद्वयाद्ययोर्जीवनान्मातृपार्वणकमेव क्रियमाणं नान्दीश्राद्धं देवरहितं कार्यम्। एवं पार्वणत्रयस्य भिन्नत्वेनानुष्ठीयमाने नान्दीश्राद्धेऽपि मातृपार्वणं देवहीनम्। नान्दीश्राद्धे हि दिनत्रये क्रमेण पार्वणत्रयं कार्यम्, एकस्मिन्दिने पृथक् पृथक् पार्वणत्रयं, सहतन्त्रेण वा पार्वणत्रयमिति त्रयः पक्षाः। नित्यश्राद्धं देवरहितं कार्यम्। एवं सपिण्डीकरणात्प्राक्तनान्येकोद्दिष्टश्राद्धान्यपि देवहीनानि। इति श्राद्धदेवतानिर्णयः।

दो पार्वण वालों के जीते रहने से मातृपार्वण में किया जाने वाला नान्दीश्राद्ध देवता से रहित करना चाहिये। इस प्रकार तीन पार्वण अलग-अलग करने की स्थिति में नान्दीश्राद्ध में भी मातृपार्वण देवहीन करे। नान्दीश्राद्ध में तीन दिन में क्रम से तीन पार्वण करे, अथवा एक दिन में अलग-अलग तीन पार्वण करे, अथवा एकसंग तन्त्र से एक दिन में करे, ये तीन पक्ष हैं। नित्य श्राद्ध देवरहित करना चाहिये। इसी प्रकार सपिण्डीकरण से प्राक्तन एकोद्दिष्ट श्राद्धों को भी देवरहित करना चाहिये। श्राद्धदेवता का निर्णय समाप्त।

## अथ श्राद्धे ब्राह्मणाः

तत्र—

जातकर्मादिसंस्कारैः संस्कृतः सत्यवाक् शुचिः।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः॥
पुरुषत्रयविख्यातः स वै [1]ब्राह्मण उच्यते।

---

१. वह्निपुराण में ब्राह्मण का लक्षण—'सत्यं दमस्तपो दानमहिंसेन्द्रियनिग्रहः। दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः॥' ब्राह्मण का बौधायनोक्त लक्षण है—'विद्या तपश्च योनिश्च एतद् ब्राह्मणलक्षणम्। विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः॥'—

सृष्टि के आरम्भ में एक ही ब्राह्मण जाति थी, जैसा ब्राह्मणोत्पत्तिमार्तण्ड में लिखा है—'सृष्ट्यारम्भे ब्राह्मणस्य जातिरेका प्रकीर्तिता।' उस विराट् पुरुष भगवान् के मुख से ब्राह्मण की उत्पत्ति हुई, ब्राह्मण के वर्तमान किसी भेद की नहीं। भागवत में लिखा है—'पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः। ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत॥' वेदों के अनेक मन्त्रों में केवल ब्राह्मण शब्द का ही निर्देश है, किसी ब्राह्मण भेद का नहीं, जैसे शुक्ल यजुर्वेद में ब्राह्मणमात्र के लिये कहा है—'रुचं ब्राह्मञ्जनयन्तो देवाऽअग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे॥' यानी ऐसे देदीप्यमान आदित्य को देखकर देवताओं ने कहा—हे आदित्य! (सूर्य) जो ब्राह्मण आप को प्रोक्त प्रकार से ज्योतिःस्वरूप जानता है आप की नित्य पूजा करता है अथवा ध्यान द्वारा अपने अन्तःकरण में अनुभव करता है वह संसार में सबसे पूजित होता है, क्योंकि उस दिव्य पुरुष के ज्ञान से ब्रह्मादि देवता भी उसके वश में रहते हैं और उसकी मनोकामना पूर्ण करते रहते हैं। इसी

इति ब्राह्मणसामान्यलक्षणम् । तत्रोत्तममध्यमाधमभेदेन त्रिविधा ब्राह्मणाः ।

जातकर्म आदि संस्कारों से संस्कृत, सत्यवादी, पवित्र, वेदाध्ययन सम्पन्न, छ कर्मों में अवस्थित, तीन पुस्त में विख्यात, जो हो वही श्राद्धयोग्य ब्राह्मण है । यह ब्राह्मण का सामान्य लक्षण है । उत्तम, मध्यम और अधम भेद से तीन प्रकार के ब्राह्मण होते हैं ।

---

तरह मन्वादि समस्त स्मृतियों में ब्राह्मणों के वर्तमान भेद दृष्टिगोचर नहीं होते । ब्राह्मणों का—'सारस्वताः कान्यकुब्जाः' इत्यादि भेद पौराणिक काल के हैं । स्मृतिकाल में दशविध ब्राह्मणों का भेद कश्यपसंहिता में यों बतलाया है—

'देवो मुनिर्द्विजो राजा वैश्यः शूद्रो विडालकः । पशुर्म्लेच्छश्च चाण्डालो विप्रा दशविधाः स्मृताः ॥' इनके लक्षण—'यती चैव तपस्वी चासत्यं नैव प्रभाषते । उपवासं कार्तिके माघे स विप्रो देव उच्यते ॥ चतुरः पठते वेदानग्निहोत्रे रतः सदा । क्रोधं चैव न जानाति स विप्रो मुनिरुच्यते ॥ त्रिसन्ध्यां वन्दते नित्यं परनिन्दां न कारयेत् । कुशलो यज्ञकार्ये च स विप्रो द्विज उच्यते । प्रतिग्रहेषु संकोचं दानं वित्तानुसारतः । पवित्रः सत्यभाषी च स विप्रो नृप उच्यते । क्रयविक्रयवाणिज्ये वार्षिके चान्न एव च । अतिप्रीतिश्च व्यापारे स विप्रो वैश्य उच्यते ।—

—नीली मद्यं च मासं च बहुवारं च भक्षयेत् । पतितो वृषलीगर्भात् स विप्रः शूद्र उच्यते । सर्ववर्णप्रतिग्राही सर्वेषामन्नभक्षकः । भोजने लम्पटश्चैव स विप्रश्च विडालकः । अन्नादिद्रव्यविक्रेता कृषिकर्मरतः सदा । आदत्तश्चलपक्षश्च स विप्रः पशुरुच्यते ॥ श्वानं च पालयेद् विप्रः संग्रहः सर्वजन्तुषु । अजाश्च पालयेद्यस्तु स विप्रो म्लेच्छ उच्यते । कारयेत् परनिन्दां वै सर्वकर्मदरिद्रता । कन्याविक्रीयते येन विप्रश्चाण्डाल उच्यते ॥'—

स्मृतिकाल के बाद पौराणिक काल में ब्राह्मण का दशविध भेद इस प्रकार हुआ—'सारस्वताः कान्यकुब्जा गौडा उत्कलमैथिलाः । पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिनः ॥' स्कन्दपुराण में 'गौडा उत्कलमैथिलाः' की जगह 'गौडमैथिलकोत्कलाः' ऐसा पाठ है । 'कर्णाटकाश्च तैलङ्गा द्राविडा महाराष्ट्रकाः । गुर्जराश्चेति पञ्चैव विख्याता विन्ध्यदक्षिणे ॥'. ये नाम उन-उन देशों में बसने के कारण पड़े । जैसे—कर्णाटक देश के राजा ने महाराष्ट्र से ब्राह्मणों को बुलाकर बसाया, जिससे वहां बसने से ब्राह्मण का कर्णाटक-ब्राह्मण यह संज्ञा हुई । विन्ध्य के उत्तरभाग से द्राविडदेश में आये हुए कुछ ब्राह्मणों को पाण्ड्य राजा ने बसाया, जिससे वे द्राविड-ब्राह्मण हुये । महाराष्ट्रनामक राजा ने विन्ध्य के उत्तर रहने वाले ब्राह्मणों को बुलाकर उनसे यज्ञ कराया और अपने देश में बसाया, जिससे उस राजा के नाम से ही उस देश का नाम महाराष्ट्र और वहां ये बसने वाले ब्राह्मण महाराष्ट्र-ब्राह्मण हुये ।

इसी तरह सरस्वतीनदीतट निकटवर्ती प्रदेश में बसने से सारस्वत-ब्राह्मण, सरयूपार-पार्श्ववर्ती प्रदेश में बसने से सरयूपारीण-ब्राह्मण, कन्नौज में बसने से कान्यकुब्ज-ब्राह्मण, मिथिला में बसने से मैथिलब्राह्मण, जैसे राजा निमिने शरीर को क्षणभंगुर जानकर गुरु वसिष्ठ जी की अनुपस्थिति में बाहर से आये हुये ब्राह्मणों से यज्ञारम्भ कराया । इन्द्र के यज्ञ से आने पर कुपित हो वसिष्ठ ने निमि को मरने का शाप दे दिया । निमि ने भी लोभवश शाप देने वाले वसिष्ठ को मरने का शाप दे दिया । पीछे वसिष्ठ मित्रावरुण के वीर्य से उर्वशी में उत्पन्न हुए और यज्ञ के ऋत्विज ब्राह्मणों ने योगमार्ग से मृत निमि के देह को मथा, जिससे दिव्यदेहधारी जनक की उत्पत्ति हुई । जनक का विदेह से उत्पन्न होने से विदेह और मथन से उत्पन्न होने से मैथिल नाम पड़ा । उन्होंने अपने नाम से मिथिला नगरी का निर्माण किया और निमि के यज्ञ में जितने ब्राह्मण आये थे उन्हें ग्राम देकर बसाया, वे ब्राह्मण मैथिल-ब्राह्मण हुए ।

इसी प्रकार क्रौञ्चद्वीप में बसने से क्रौञ्चद्वीपीय ब्राह्मण और शाकद्वीप में बसने से शाकद्वीपीय (मग) ब्राह्मण नाम पड़ा । भगवान् कृष्ण ने शाकद्वीप से शाकद्वीपीय मगब्राह्मणों को यहां बुलाया,

अथ तत्र उत्तमा विप्राः

वेदाध्ययनसंपन्ना वेदाङ्गाध्यायिनोऽपि च ।
ये [1]वैयाकरणा ये च मीमांसाऽध्ययने रताः ॥
पौराणिकश्च वेदान्ती धर्मशास्त्ररतोऽपि च ।
एतेषामपि ये पुत्रा ब्रह्मवेत्ता तथैव च ॥
वेदार्थज्ञः कर्मनिष्ठस्तपोनिष्ठश्च योगिनः ।
पितृमातृपरश्चैव स्वधर्मनिरतस्तथा ॥
शिशुरप्यग्निहोत्री च सोमादिश्रौतकर्मवित् ।
शिवभक्तो विष्णुभक्तो भार्यायामृतुकालगः ॥
गुरुभक्तो ज्ञाननिष्ठः सोमयाजी च सत्यवाक् ।
सुशीलस्नातकयतिब्रह्मचारिण उत्तमाः ॥
एते सर्वे [2]सपत्नीका युवत्वादिगुणान्विताः ।

---

१. ब्रह्माण्डपुराणे—

'ये च भाष्यविदः केचिद् ये च व्याकरणे रताः ।
अधीयानाः पुराणं वै धर्मशास्त्रमथापि वा ॥
ये च पुण्येषु तीर्थेषु कृतस्नानाः कृतश्रमाः ।
मखेषु चैव सर्वेषु भवन्त्यवभृथप्लुताः ॥
अक्रोधनाः शान्तिपरास्तान् श्राद्धेषु नियोजयेत् ।' इति ।

२. ब्रह्मवैवर्ते—

'पत्नीपुत्रसमायुक्तान् श्राद्धकर्मणि योजयेत् ।
देहस्यार्द्धं स्मृता पत्नी न समग्रो तया विना ॥
न चापुत्रस्य लोकोऽस्ति श्रुतिरेषा सनातनी ।'

लोकः=अदृष्टजन्यः अभ्युदयः ।

संवर्तः—

'प्रयत्नाद् हव्यकव्यानि पात्रीपुत्रे द्विजन्मनि ।
प्रतिष्ठाप्यानि विद्वद्भिः फलानन्त्यममीप्सुभिः ॥

पात्र का वृद्धशातातपोक्त लक्षण—

'स्वाध्यायवान्नियमवांस्तपस्वी ज्ञानविच्च यः ।
क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते ॥'

बृहस्पतिः—

'ब्रह्मचारी भवेत् पात्रं पात्रं वेदस्य पारगः ।'
तथा—'पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ।'

पात्र का याज्ञवल्क्योक्त लक्षण—

'न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥'

ऋष्यश्रृङ्गः—

'अतिथिश्च तथा पात्रं तत्पात्रं परमं विदुः ।'

साpिण्ड्ययोनिशिष्यत्वादिसम्बन्धैश्च वर्जिताः ॥
कुष्ठापस्मारादिदोषैर्हीनाश्चेदुत्तमाः स्मृताः ।

श्राद्ध में उत्तम ब्राह्मण—

वेदांगाध्ययनसम्पन्न, वेदांगाध्यायी, जो वैयाकरण हैं और जो मीमांसाध्ययन में तत्पर हैं, पौराणिक, वेदान्ती, धर्मशास्त्रज्ञ, इनके भी जो पुत्र ब्रह्मवेत्ता हैं, वेदार्थ के जानने वाले, कर्मनिष्ठ, तपोनिष्ठ, योगी, पितृमातृसेवक, स्वधर्मनिरत, बालक होता हुआ भी अग्निहोत्री, सोमादि श्रौत कर्म जानने वाला, शिवभक्त, विष्णुभक्त, ऋतुकाल में भार्यागमन करने वाला, गुरुभक्त, ज्ञाननिष्ठ, सोमयज्ञ करने वाला, सत्यवादी, सुशील, स्नातक, यति और ब्रह्मचारी—ये उत्तम ब्राह्मण हैं। ये सब सपत्नीक, युवत्वादिगुणयुक्त, सपिण्ड्य-योनि-शिष्यत्वादि-सम्बन्धों से वर्जित तथा कुष्ठ अपस्मार आदि दोषों से हीन हों तो श्राद्ध में उत्तम ब्राह्मण कहे जाते हैं।

तत्र दशाहादिसूतकादिप्रयोजकसापिण्ड्यसगोत्रसोदकत्वरूपसंबन्धः सापिण्ड्यपदाभिधेयः। योनिसम्बन्धो मातुलत्वश्वशुरत्वशालकत्वादिः। आदिना गुरुत्वसहाध्यायित्वमित्रत्वादयः। तथा च सपत्नीकत्वादिगुणयुक्ता उक्तसम्बन्धहीना अपस्मारान्धत्वादिदोषहीना वेदाध्यायित्वादिसप्तविंशतिप्रकारा विप्रा उत्तमा इति सिद्धम्।

सापिण्ड्य पद से दशाहादि सूतक आदि का प्रयोजक सापिण्ड्य सगोत्रत्व और सोदकत्वरूप सम्बन्ध ग्राह्य है। योनिसम्बन्ध से मातुलत्व श्वशुरत्व-शालकत्व आदि सम्बन्ध ग्राह्य है। आदि पद से गुरुत्व, सहाध्यायित्व और मित्रत्व आदि का ग्रहण है। इस प्रकार सपत्नीकत्वादि गुणयुक्त उक्त सम्बन्धों से हीन, अपस्मार-अन्धत्वादि-दोषरहित वेदाध्यायित्व आदि गुणवाले सत्ताइस प्रकार के ब्राह्मण उत्तम होते हैं, यह सिद्ध हुआ।

तत्र विशेषः—

यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र पूजयेत्।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते ॥
ऋग्वेदिनं च पित्रर्थे याजुषं तु पितामहे।

---

अतिथिका मनूक्त लक्षण—

एकरात्रं तु निवसन्नतिथिः ब्राह्मणः स्मृतः।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ इति।

१. आपस्तम्बः—

'ब्राह्मणान् भोजयेद्योनिगोत्रमन्त्रान्ते वास्य सम्बन्धिनः।
गुणहान्यां तु परेषां समुदितः सोदर्योऽपि भोजयितव्यः ॥'

अत्रिः—

'पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः।
न परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा ॥
ऋत्विक्पुत्रादयोऽप्येते सकुल्या ब्राह्मणाः स्मृताः।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥
सगोत्रा न नियोक्तव्याः श्रियश्चैव विशेषतः।' इति।

प्रपितामहे सामगं च भोजयेच्छ्राद्धकर्मणि ॥
अथर्ववेदिनं वैश्वदेवे पित्र्ये च भोजयेत् ।

एतेन 'स्वशाखीयद्विजाभावे द्विजानन्यान्निमन्त्रयेत्' इति निरस्तम् ।

उसमें विशेष यह है कि—

यदि श्राद्ध में एक ब्राह्मण को खिलाना हो तो उसमें वेदज्ञ का स्थान है। क्योंकि उसमें ऋग्वेद, यजुर्वेदसामवेद ये तीनों विद्यमान हैं। पिता के निमित्त ऋग्वेदी को, पितामह के निमित्त यजुर्वेदी को और प्रपितामह के निमित्त सामवेदी को भोजन करावे। अथर्ववेदी को वैश्वदेव और पितृकर्म में भोजन करावे। इससे—अपनी शाखा के ब्राह्मणों के न मिलने पर अन्य ब्राह्मणों को निमन्त्रित करे—यह विचार खंडित हो गया।

केचिद् 'यथा कन्या तथा हविः' इति नियमाद् यैः सह योनिसम्बन्धस्तएव परशाखीयाः श्राद्धार्हा इत्याहुस्तन्निर्मूलम्। केचिच्छ्राद्धकर्तृसगोत्रसप्रवरा 'वर्ज्याः,

पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिम् ।
सगोत्रप्रवरं चैव वर्जयेच्छ्राद्धकर्मणि ॥ इति वचनादित्याहुः ।
विना मांसेन मधुना विना दक्षिणयाशिषा ।
परिपूर्णं भवेच्छ्राद्धं 'यतिषु श्राद्धभोजिषु ॥ इति यतिप्रशंसा ।

कोई लोग तो—जैसी कन्या वैसा ही हवि होता है—इस नियम से जिनके साथ योनि-सम्बन्ध है वही परशाखीय श्राद्ध के योग्य हैं ऐसा कहते हैं, वह निर्मूल है। कुछ लोग—श्राद्ध करने वाले के सगोत्र और समान प्रवर को—पिता पुत्र, भाई-भाई अग्निहीन, गर्भिणीपति और-समान गोत्र तथा समान प्रवर को श्राद्ध में वर्जित करे—इस आशय के वचन से वर्ज्य कहते हैं। मांस, मधु, दक्षिणा और आशीर्वाद के बिना भी श्राद्ध में संन्यासी के भोजन करने से श्राद्ध परिपूर्ण होता है। यह यति की प्रशंसा है।

## अथ मध्यमा विप्राः

मातामहो[3] मातुलो भागिनेयो दौहित्रो जामाता गुरुः शिष्यो याज्यः

---

१. अन्य गोत्र के अभाव में सगोत्र को भी भोजन कराना कूर्मपुराण में कहा है—

अभावे ह्यन्यगोत्राणां सगोत्रानपि भोजयेत् ।'

गर्ग ने अन्य गोत्र के अभाव में समान प्रवर-गोत्र वालों को भी भोजन कराना कहा है—

'नैकगोत्रे हविर्दद्याद् यथा कन्या तथा हविः ।
अभावे ह्यन्नगोत्राणामेकगोत्रांस्तु भोजयेत् ॥
असमप्रवराभावे समानप्रवरांस्तथा ॥'

पर ये गोत्रवाले छ पीढ़ी के बाद के हों, जैसा अत्रि ने कहा है—

'षड्भ्यस्तु परतो भोज्याः श्राद्धे स्युर्गोत्रजा अपि ।' इति ।

२. नन्दिपुराणे—

'यतीन् वा बालखिल्यान् वा भोजयेच्छ्राद्धकर्मणि ।
वानप्रस्थोपकुर्वाणौ पूजयेत्परितोषयेत् ॥' इति ।

३. जो सम्बन्धी नहीं हैं वे श्राद्ध में मुख्य हैं, उनके अभाव में मनु ने कहा है—

'मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यास्तु भोजयेत् ॥

श्वशुर ऋत्विक् शालकः पितृष्वसृपुत्रो मातृष्वसृपुत्रो मातुलपुत्रोऽतिथिः सगोत्रो मित्रमित्येते मध्यमाः। दौहित्रजामातृस्वस्रीयादीनां 'विद्यादिगुणवतां श्राद्धे निमन्त्रणाभावे दोषः। गुणहीनत्वे तु न दोषः।

[२]षड्भ्यस्तु पुरुषेभ्योऽर्वाक् श्राद्धार्हा नैव गोत्रिणः।
षड्भ्यस्तु परतो भोज्या अलाभे गोत्रजा अपि॥

श्राद्ध में मध्यम ब्राह्मण—

नाना, मामा, भानजा, लड़की का लड़का, दामाद, गुरु, शिष्य, यजमान, श्वशुर, ऋत्विज, साला, फुफेरा और मौसेरा भाई, अतिथि, सगोत्र और मित्र—ये श्राद्ध में मध्यम ब्राह्मण हैं। लड़की का लड़का, दामाद और बहिन के लड़के आदि का, विद्या आदि गुण से युक्त का, श्राद्ध में निमन्त्रण न करने से दोष होता है। यदि गुणहीन हों तो दोष नहीं होता। छ पुरुषों से पहिले गोत्र वाले श्राद्ध के योग्य नहीं होते छ के बाद के गोत्र वालों को भी श्राद्धयोग्य ब्राह्मण के अभाव में भोजन करावे।

---

विष्णुपुराणे—

'ऋत्विक्स्वस्रीयदौहित्रजामातृश्वशुरास्तथा।
मातुलोऽथ तपोनिष्ठः पितृमातृस्वसुः पतिः॥
शिष्याः सम्बन्धिनश्चैव मातापितृरतश्च यः।
एतान् नियोजयेच्छ्राद्धे पूर्वोक्तान् प्रथमं नृप॥
ब्राह्मणान् पितृतुष्ट्यर्थमनुकल्पेष्वनन्तरान्।' इति।

१. विद्यादि- गुणयुक्त ब्राह्मणों के अतिक्रमण से शातातप और पराशर ने दोष बतलाया है—

'सन्निकृष्टमधीयानं ब्राह्मणं यस्त्वतिक्रमेत्।
भोजने चैव दाने च दहत्यासप्तमं कुलम्॥'

भविष्य पुराण में—

'सन्निकृष्टं द्विजं यस्तु शुक्लजातिं प्रियंवदम्।
मूर्खं वा पण्डितं वाऽपि वृत्तहीनमथापि वा॥
नातिक्रामेन्नरो विद्वान् दारिद्र्याभिहतं तथा।
अतिक्रम्य द्विजो घोरे नरके पातयेत् स्वकान्॥
तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेश्यकान्।
सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा॥
भागिनेयं विशेषेण तथा सम्बन्धिनः खग।'

इस वचन से सन्निकृष्ट मूर्ख को भी अनतिक्रमणीय बतलाया है, किन्तु इस वचन को गुणयुक्त सन्निहित ब्राह्मण के अलाभ में जानना चाहिये, इसीलिये बौधायन ने कहा है—

'यस्य त्वेकगृहे मूर्खो दूरे वाऽपि बहुश्रुतः।
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥'

वेद विहीन ब्राह्मण यदि सन्निहित हो तो उसके अतिक्रमण में व्यास, वशिष्ठ और शातातप ने दोषाभाव कहा है—

'ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते। ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते॥' इति।

२. षड्भ्यः=स्ववंशजेभ्यः। इससे सिद्ध हुआ कि जो गोत्रवाले सात पीढ़ी के ऊपर के हैं, वे ही श्राद्धकर्म में निमन्त्रणीय एवं भोजनीय हैं।

अत्र विशेषः—

ऋत्विजः सपिण्डाः सम्बन्धिनः शिष्याश्च वैश्वदेवस्थाने नियोज्या न तु पित्र्ये। एवमन्येऽपि विगुणा विप्रा देवस्थाने योज्याः।

पिता पितामहो भ्राता पुत्रो वाथ सपिण्डकाः।
न परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा॥
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः।

इसमें विशेष है—

ऋत्विज, सपिण्ड, सम्बन्धी और शिष्य वैश्वदेव के स्थान में नियोजनीय हैं, पित्र्य में नहीं। इसी प्रकार विगुण ब्राह्मण, देवता के स्थान में नियोज्य हैं। पिता, पितामह, भाई, पुत्र और सपिण्ड परस्पर पूजनीय नहीं हैं तथा श्राद्ध में ऋत्विज भी पूज्य नहीं है। यदि ये लोग अतिशय गुणवान् हों तो उन्हें वैश्वदेव में नियुक्त करे।

## अथ वर्ज्या विप्राः

क्षयश्वासमूत्रकृच्छ्रभगन्दरादिमहारोगी हीनाङ्गोऽधिकाङ्गः काणो बधिरो मूकः शत्रुः कितवो [1]भृतकाध्यापको मित्रद्रोही पिशुनः कुनखी कृष्णदन्तः क्लीबो मातापितृगुरुत्यागी चोरो नास्तिकः पापकर्मा विहितकर्मत्यागी नक्षत्रोपजीवी वैद्यो राजभृत्यो गायको लेखकः कुसीदजीवी[2] वेदविक्रयी कवित्वजीवी देवार्चनजीवी नटो गृहदाही[3] समुद्रगामी शस्त्रकर्ता सोमविक्रयी पक्षिपोषकः [4]परिवेत्ता

---

१. भृतकाध्यापकः=वेतन लेकर पढ़ानेवाला, भृतकाध्यापितः=वेतन देकर पढ़नेवाला। मनु ने कहा है—

'भृतकाध्यापको यश्च भृतकाध्यापितश्च यः।
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टाः कुण्डगोलकौ॥'

मनुस्मृति के तीसरे अध्याय में श्लोक १५०–१६७ तक पंक्ति को दूषित करनेवाले ब्राह्मणों का निर्देश किया है जो द्रष्टव्य है

२. कुसीदजीवी=वार्धुषिकः, ब्याज से जीविका चलाने वाला। इसका लक्षण वसिष्ठ ने यों बतलाया है—

'समर्घं धनमुद्धृत्य महर्घं यः प्रयच्छति।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः॥'

देवल का कहा लक्षण है—

'विप्रं वार्धुषिकं विद्यादन्नवृद्ध्युपजीविनम्।' इति।

३. गृहदाही = आगारदाही, इसका लक्षण देवल ने यों बतलाया है—

आगारदाही स ज्ञेयः प्रे[illegible] दग्ध्वा ह्यनेकशः।
स चाप्यागारदाही स्याद् द्वेषाद् यो वेश्मदाहकः॥' इति।

४. परिवेत्ता तथा परिवित्ति का मनूक्त लक्षण है—

'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः, परिवित्तिस्तु पूर्वजः॥'

दिधिषूपतिः कुमाराध्यापकः पुत्रात्प्राप्तविद्यो द्रव्यप्राप्त्यर्थं वेदघोषकारी ग्रामयाजी केशपशुविक्रयी शिल्पी पित्रा विवादकारी शूद्रयाजको जटी श्मश्रुहीनो-निर्दयो रजस्वलापतिर्गर्भिणीपतिः कुब्जो वामनो रक्तनेत्रो वाणिज्योपजीवी छिन्नोष्ठश्छिन्नलिङ्गो गडुमान् ज्वरितो [1]देवलको विधुरो निरग्निः शूद्रशिष्यो दाम्भिको गोविक्रयी रसविक्रयी वेदनिन्दको वृक्षरोपकः [2]कदर्यः सदायाचकः कृषिजीवी साधुनिन्दितो मेषमहिषयोः पोषकः कपिलकेशो विस्मृतवेदी निष्ठुरवा-गित्यादयो[3] विप्रा हव्यकव्ययोर्वर्ज्याः।

---

बड़े भाई के अविवाहित रहते छोटा भाई का विवाह करना और बड़े भाई के अग्निहोत्रारम्भ किये बिना छोटा का अग्निहोत्रारम्भ करना दोष है, यदि करता है तो छोटा भाई परिवेत्ता और और बड़ा भाई परिवित्ति है। दिधिषूपति का मनूक्त लक्षण है—

'भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः।
धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः॥'

कुमाराध्यापकः = गांव में बालकों को पढ़ाने वाला, पुत्रात्प्राप्तविद्यः = पुत्राचार्यः, जिसने अपने पुत्र से विद्या पढ़ी हो। नारद ने इसका लक्षण बताया है—

'पुत्राचार्यः स विज्ञेयो ग्रामे यो बालपाठकः।
पुत्रादवाप्तविद्यो वा पुत्राचार्यः स उच्यते॥' इति।

१. देवल ने देवलक का लक्षण यों बताया है—

'देवार्चनपरो नित्यं वित्तार्थं वत्सरत्रयात्।
असौ देवलको नाम हव्यकव्येषु गर्हितः॥
देवकोशोपजीवी च नाम्ना देवलको भवेत्।
अपांक्तेयः स विज्ञेयः सर्वकर्मसु गर्हितः॥'

भविष्यपुराणे—

'जम्बूद्वीपोद्भवा विप्रा देवस्वं वर्तयन्ति ये।
ते वै देवलकाः प्रोक्ताः सर्वकर्मबहिष्कृताः॥' इति।

२. कदर्यः = कृपण- कंजूस। इसका लक्षण गौतम ने बताया है।—

आत्मनं धर्मकृत्यं च पुत्रं दारांश्च पीडयेत्।
मोहान्धः प्रचिनोत्यर्थान् स कदर्य इति स्मृतः॥' इति।

३. आदि पद से निराकृत-वाग्दुष्ट वान्ताशी आदि का ग्रहण है। इनमें निराकृति का लक्षण कात्यायन ने कहा है—

'य आधायाग्निमालस्याद्देवादीनेभिरिष्टवान्।
निराकर्ताऽमरादीनां स वै ज्ञेयो निराकृतिः॥'

देवलः—

'अधीत्य विस्मृते वेदे भवेद् विप्रो निराकृतिः।'

वाग्दुष्ट का कात्यायनोक्त लक्षण है—

'हुङ्कारं चासनं चैव लोके यच्च विगर्हितम्।
अनुकुर्यादनुब्रूयाद् वाग्दुष्टं तं विवर्जयेत्॥'

वर्ज्य ब्राह्मण—

क्षय, श्वास, मूत्रकृच्छ्र और भगन्दर आदि का महारोगी, अंगहीन, अधिक अंग वाला, काना, बहिरा, गूंगा, शत्रु, धूर्त, भृतकाध्यापक, मित्रद्रोही, चुगलखोर, कुत्सित नख वाला, काले दांत वाला, नपुंसक, माता पिता और गुरु को छोड़ने वाला, चोर, नास्तिक, पाप करने वाला, विहित कर्म को छोड़ने वाला, नक्षत्र आदि बताकर जीविका करने वाला, वैद्य, राजा का नौकर, गाने वाला, लिखने वाला, सूद से जीने वाला वेदविक्रयी, कवित्वजीवी, देवार्चनजीवी, नट, घर जलाने वाला, समुद्रयात्री, शस्त्रकर्ता, सोमविक्रयी, पक्षी पोसने वाला, परिवेत्ता, दिधिषूपति, बच्चों को पढ़ाने वाला, पुत्र से विद्या प्राप्त करने वाला, द्रव्यप्राप्ति के लिये वेद पाठ करने वाला, गांव का यज्ञ कराने वाला, केश और पशु का विक्रय करने वाला' शिल्प कर्म करने वाला, पिता से विवाद करने वाला, शूद्र का यज्ञ कराने वाला, जटाधारी, श्मश्रुहीन, निर्दय, रजस्वलापति, गर्भिणीपति, कुबड़ा, बौना, लाल नेत्र वाला, वाणिज्य से जीने वाला, ओठ कटा, छिन्न लिंग, घेघ वाला, ज्वर-पीड़ित, तीन वर्ष से अधिक देवता का पूजन वृति वाला, विधुर, निरग्नि, शूद्र का गुरु, शूद्र का शिष्य, पाखण्डी, गोविक्रेता, रसविक्रेता, वेद का निन्दक, वृक्ष लगा के जीविका चलाने वाला, कृपण, सदा मांगने वाला, कृषिजीवी, साधुनिन्दक, मेंड़-भैंसा को पोसने वाला, कपिल केश, विस्मृत वेद और निष्ठुर बोलने वाला इत्यादि—ये ब्राह्मण हव्य—कव्य में त्याज्य हैं।

धर्मार्थमुदरार्थं वौषधकारी विगर्हितः ।
देवार्चनपरो नित्यं वित्तार्थी वत्सरत्रयम् ॥
असौ देवलको नाम देवस्वग्राहकोऽपि च ।
वर्जनीयः स विज्ञेयः सर्वकर्मसु सर्वदा ॥

इदं मनुष्यस्थापितदेवताविषयमिति भाति ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु अग्रजः ॥

---

वान्ताशी का विष्णूक्त लक्षण है—

देशं गोत्रं कुलं विद्यामन्नार्थं यो निवेदयेत् ।
वैवस्वतेषु धर्मेषु वान्ताशी स प्रकीर्तितः ॥'—

चन्द्रिका में यम का वचन है—

काणाः कुब्जाश्च षण्ढाश्च कृतघ्ना गुरुतल्पगाः ।
मानकूटास्तुलाकूटाः शिल्पिनो ग्रामयाजकाः ॥
राजभृत्यान्धबधिरमूकखल्वाटपङ्गवः ।
वणिजो मधुहर्तारो गरदा वनदाहकाः ॥
समयानां च भेत्तारः प्रदाने ये निवारकाः ।
प्रव्रज्योपनिवृत्ताश्च वृथा प्रव्रजिताश्च ये ॥
यश्च प्रव्रजिताज्जातः प्रवज्यावसितश्च यः ।
अवकीर्णी च वीरघ्नो गुरुघ्नः पितृदूषकः ॥'

इत्यादि श्राद्ध में निषिद्ध ब्राह्मणों के मूलवचन एवं अन्यान्य विस्तृत विवेचन हेमाद्रि-कृत्य कल्पतरु-वीरमित्रोदय तथा जयसिंहकल्पद्रुम-निर्णयसिन्धु आदि प्रामाणिक निबन्धों में देखिये।

'अग्रजानुज्ञादौ न दोष इत्युक्तम्।

ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता॥
प्रतिमाविक्रयं यो वै करोति पतितस्तु सः।
जीवनार्थं परास्थीनि नयते पतितः स च॥

गाननृत्यादिकमुदरार्थं निषिद्धं न तु भगवदर्थम्।

धर्मार्थ या पेट के लिये औषधि करने वाला निन्दित है। धन के लिये तीन वर्ष तक नित्य देवार्चन करने वाला यह देवलक नाम का ब्राह्मण और देव-द्रव्य का ग्रहण करने वाला सभी कर्म में सर्वदा वर्जनीय है। यह निषेध मनुष्य द्वारा स्थापित देवता के विषय में है, ऐसा प्रतीत होता है। जो बड़े भाई के रहते छोटा भाई विवाह और अग्निहोत्र करता है, उसे परिवेत्ता कहते हैं। बड़ा भाई परिवित्ति होता है। बड़े भाई की अनुमति से विवाह और अग्निहोत्र करना दोषकारक नहीं होता, यह पहिले कहा है। जेठी लड़की के बिना ब्याहे छोटी लड़की का विवाह किया जाता है वह आग्रेदिधिषू और पहिली दिधिषू कहलाती है। प्रतिमा का जो विक्रय करता है वह पतित है। वह भी पतित है जो जीवन के लिये दूसरों की हड्डियों को काशी आदि तीर्थ में प्रवाहार्थ ले जाता है। पेट के लिये गाना नाचना आदि निषिद्ध है, भगवान् के लिये नहीं।

अत्र विप्राणां ग्राह्यत्वोक्त्यैव तद्भिन्नानां वर्ज्यत्वे सिद्धे पुनर्वर्ज्यपरिगणनं वर्ज्यभिन्नानां निर्गुणानामपि ग्राह्यत्वार्थम्। विद्याशीलादिगुणवत्त्वे कुष्ठित्वकाणत्वादिशारीरदोषाणां न दूषकत्वम्। गयायां तु निर्गुणा अपि ते एव [2]भोज्याः।

न विचार्यं कुलं शीलं विद्या च तप एव च।
पूजितैस्तैस्तु संतुष्टा देवाः सपितृगुह्यकाः॥ इत्युक्तेः।

---

१. वशिष्ठ ने कहा है—

'अग्रजश्च यदानग्निरादध्यादनुजः कथम्। अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि॥'

आदि पद से अपवाद वचन के अनुसार विवाहादि करने में कनिष्ठ को दोष नहीं होता, जैसा शातातप ने कहा है—

'पितृव्यपुत्रसापत्नपरनारीसुतेषु च। ज्येष्ठेष्वपि हि तिष्ठत्सु भ्रातॄणां तु कनीयसाम्॥
दाराग्निहोत्रसंयोगे न दोषः परिवेदने।'

तथा—

क्लीबे देशान्तरस्थे च पतिते भिक्षुके तथा। योगशास्त्राभियुक्ते च न दोषः परिवेदने॥'
योगशास्त्राभियुक्ताः=अतिविरक्ताः।

२. यह हेमाद्रि का निर्णय है। अग्निपुराण में—

'यदि पुत्रो गयां गच्छेत् कदाचित्कालपर्ययात्।
तानेव भोजयेद् विप्रान् ब्रह्मणा ये प्रकल्पिताः॥
ब्रह्मणा कृतसंस्थाना विप्रा ब्रह्मसमाः स्मृताः।
अमानुषा गयाविप्रा ब्राह्मणा ये प्रकल्पिताः॥
तेषु तुष्टेषु सन्तुष्टाः पितृभिः सह देवताः।' इति।

ब्राह्मणान्न परीक्षेत तीर्थे क्षेत्रनिवासिनः ।

इसमें ग्राह्य-ब्राह्मणों के कहने ही से उससे भिन्न ब्राह्मणों का वर्जनीय सिद्ध होने पर भी पुनः वर्जनीयों का परिगणन, वर्ज्य-भिन्न निर्गुणों का भी ग्रहण के लिये है । विद्या, शील आदि गुणयुक्त ब्राह्मण का श्राद्ध में कुष्ठित्व काणत्वादि शारीरदोष दूषक नहीं है । गया में तो निर्गुण भी विप्र भोजनीय हैं, क्योंकि वचन है कि—कुल, शील, विद्या और तप का विचार न कर ब्राह्मणों को पूजने से तो उनसे पितर और गुह्यक के साथ देवता सन्तुष्ट होते हैं ।

तीर्थ में क्षेत्रनिवासी ब्राह्मणों की परीक्षा न करे ।

यत्तु—

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
पितृकर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥ इति तदसम्भवपरम् ।
गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ इति हेमाद्रौ व्यासः ।
श्राद्धे काणादयो भोज्या मिश्रिता वेदपारगैः ।

विप्रा निमन्त्रणात्पूर्वमेव परीक्षणीया न तु निमन्त्रणोत्तरम् । इति ब्राह्मणविचारः ।

किसी का मत है कि—धर्मवेत्ता देव कर्म में ब्राह्मण की परीक्षा न करे और पितृकर्म में प्रयत्न पूर्वक परीक्षा करे ।

किन्तु उनका यह कथन असम्भव परक है ।

केवल गायत्री जाननेवाला ब्राह्मण जितेन्द्रिय हो तो अच्छा है । किन्तु निषिद्ध अन्नादि का खाने वाला, सब कुछ वेचने वाला, अजितेन्द्रिय चारों वेद का जानकार अच्छा नहीं है । यह हेमाद्रि में व्यास का वचन है । श्राद्ध में वेद पारगामियों के साथ काने आदि मिले हुए हों तो वे भोजनीय-हैं । निमन्त्रण के पहिले ही ब्राह्मण परीक्षणीय होते हैं, निमन्त्रण के बाद नहीं । ब्राह्मण-विचार समाप्त ।

## अथ श्राद्धार्हद्रव्याणि

तत्र [1]दर्भाः—दर्भग्रहणे कालो मन्त्रो दर्भभेदाश्च द्वितीयपरिच्छेदे उक्ताः । विशेषस्तूच्यते—कुशा मुख्याः, कुशाभावे काशदूर्वोशीरतृणादयः । तत्र [2]काशैर्दूर्वाभिर्वा कृतपवित्रहस्तो नाचामेत् ।

द्वाभ्यामनामिकाभ्यां तु धार्ये दर्भपवित्रके ।
एकानामिकया वापि द्वयोर्मध्ये तु पर्वणोः ॥

---

१. दर्भ का लक्षण—'सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः । अप्रसूता स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ॥ समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ।' कुशके अभाव में सुमन्तु का वचन है—'कुशाः काशाः शरो गुन्द्रो यवा दूर्वाऽथ बल्वजाः । गोकेशमुञ्जकुन्दाश्च पूर्वाभावे परः परः ॥' यमः—'मासि मास्युद्धृता दर्भा मासि मास्येव चोदिताः ।' षट्त्रिंशन्मते—मासे नभस्यमाया हि दर्भो ग्राह्यो नवो मतः ।' इति ।

२. काशादि के पवित्र धारण करने पर शङ्ख ने स्पष्ट कहा है—'काशहस्तस्तु नाचामेत् कदाचिद्विधिशङ्कया । प्रायश्चित्तेन युज्येत दूर्वाहस्तस्तथैव च ॥' इति ।

साग्रौ विगर्भौ तु कुशौ कार्यं ताभ्यां पवित्रकम् ।
द्वाभ्यां तत्स्याच्चतुर्भिर्वा ग्रन्थियुक्तं न वा भवेत् ॥
स्नाने दाने जपे होमे स्वाध्याये पितृकर्मणि ।
सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा ॥
ब्रह्मग्रन्थिपवित्राढ्यो नाचामेच्च बुधः सदा ।

श्राद्ध में दर्भ-दर्भग्रहण का समय, मन्त्र और कुश के भेद, द्वितीय परिच्छेद में कहा है। विशेष कहता हूँ—कुश मुख्य है, कुश के अभाव में कास, दूब और खश तृण आदि हैं। उसमें कास या दूब से बने पवित्र को हाथ में धारण करे आचमन नहीं करे। दो अनामिका अंगुलियों में अथवा एक अनामिका अंगुली में दो कुश पवित्र को धारण करना चाहिये। पवित्री का धारण दो पर्व के मध्य में करे। अग्रभागसहित गर्भसहित दो कुशों से पवित्री बनावे या चार कुशों से बनावे, गांठ रहे या न रहे। स्नान में, दान में, होम में, स्वाध्याय में, पितृकर्म में, पवित्रसहित अथवा दो कुशों से युक्त हाथ करे, अन्यथा न करे। विद्वान्-ब्रह्मग्रन्थि से युक्त पवित्री धारण कर आचमन नहीं करे।

केचिद्ग्रन्थितपवित्राभावे 'साग्रदर्भौ द्वौ दक्षिणकरे, वामे तु त्रीन् द्वौ वा विभृयादित्याहुः। आसने[2] द्वौ दर्भौ पितृकर्मणि समूला द्विगुणा दर्भाः। दैवे साग्रा ऋजवः, पित्र्येऽपि सपिण्डीकरणपर्यन्तमृजुदर्भास्तदूर्ध्वं द्विगुणभुग्ना[3] इति।

ये च पिण्डाश्रिता दर्भा यैः कृतं पितृतर्पणम् ।
मलमूत्रोत्सर्गधृता मलमूत्राद्यमेध्यगाः ॥
मार्गे[4] चितौ यज्ञभूमौ स्थिता ये स्तरणासने ।
ब्रह्मयज्ञे च ये दर्भास्त्यागार्हाः सर्व एव ते ॥
अन्यानि च ये पवित्राणि कुशदूर्वात्मकानि च ।
हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम् ॥

पञ्चगुञ्जमाषमानेन षोडशमाषं हेममयं पवित्रकमित्याहुः।

---

१. सुमन्तु ने कहा है—'समूलाग्रौ विगर्भौ तु कुशौ द्वौ दक्षिणे करे। सव्ये चैव तथा त्रीन् वै बिभृयात्सर्वकर्मसु ॥' हारीतः—'पवित्रं ब्राह्मणस्यैव चतुर्भिर्दर्भपिञ्जुलैः। एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥' स्मृत्यर्थसारे—'सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रन्थितं नवम् ॥' रत्नावल्याम्—द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद् बुधः ॥' इति।

२. बौधायनः—'हस्तयोरुभयोर्द्वौ द्वावासनेऽपि तथैव च।' श्राद्ध में समूल कुश ग्राह्य है, जैसा पृथ्वीचन्द्रोदय में यम की उक्ति उद्धृत है—'समूलस्तु भवेद्दर्भः पितृणां श्राद्धकर्मणि। मूलेन लोकान् जयति शक्रस्य सुमहात्मनः ॥' इति।

३. शालङ्कायन का वचन है—सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया। सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद् भवेत् ॥' इति।

४. पाठ भेद से लघुहारीत का भी ऐसा ही वचन है—पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु। स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥' ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे। हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥' इति।

कोई—ग्रन्थि की पवित्री न रहने पर अग्रभागसहित दो कुश दाहिने हाथ में और तीन या दो कुश बायें में धारण करे—ऐसा कहते हैं। आसन में दो कुश, पितृकर्म में मूलसहित द्विगुण-भुग्न कुश, देवकर्म में अग्रभागसहित कोमल कुश, पितृकर्म में भी सपिण्डीकरणपर्यन्त ऋजु कुश, उसके बाद द्विगुण-भुग्न-कुश रहना चाहिये। जो पिण्ड के नीचे कुश रखे गये हैं, जिन कुशों से पितृतर्पण किया है जो कुश मलमूत्रोत्सर्ग में धारण किया गया है, वे सब अपवित्र हैं। मार्ग में, चिता में, यज्ञ-भूमि में, आसन में, आस्तरण में, और ब्रह्मयज्ञ में जो कुश व्यवहृत हैं वे सब त्याज्य हैं। जो पवित्र, कुश और दूर्वा के बनाये हों वे सुवर्ण के पवित्र की सोलहवीं कला के समान भी नहीं हैं। कोई-पांच गुंजा के माशा के मान से सोलह माशे का सुवर्णमय पवित्र होता है—ऐसा कहते हैं।

## अथ हविः

व्रीहियवतिलमाषगोधूमश्यामाकप्रियंगुमुद्गसर्षपाः श्राद्धे प्रशस्ताः। चणको विकल्पितः[1]। यावनालोऽपि विकल्पितः।

> इष्टापूर्ते मृताहे च दर्शवृद्ध्यष्टकासु च।
> पात्रेभ्यस्त्वेषु कालेषु देयं नैव कुभोजनम्॥
> अगोधूमं च यच्छ्राद्धं माषमुद्गविवर्जितम्।
> तैलपक्वेन रहितं कृतमप्यकृतं भवेत्॥
> राजमाषाश्च निष्पावा अपि शस्ताः सतीनकाः।

राजमाषा महाराष्ट्रभाषया 'चवळी'ति प्रसिद्धाः, निष्पावाः 'पावटे' इति, सतीनकाः 'वाटाणे' इति, [2]कदलीफलमाम्रफलं सूरणः पनसः त्रिविधं कर्कटीफलम्, कोशातकी 'दोडका' इति प्रसिद्धा। कुस्तुम्बुरुवैकल्पिकम्। पटोलं बदरमा-

---

१. ब्रह्मपुराणादिके वचन से चना ग्राह्य और मरीचि आदि के वचन से अग्राह्य होने से विकल्प है। मरीचि का वचन-'कुलत्थाश्चणका श्राद्धे न देयाश्चैव कोद्रवाः। कटुकानि च सर्वाणि विरसानि तथैव च॥' मार्कण्डेयः—गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि। श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः॥ 'कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः। महायवा व्रीहियवास्तथैव च मधूलिकाः॥ कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि।' ब्रह्मपुराणे—'यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा। सन्तर्पयेत् पितॄन् मुद्गैः श्यामाकैः सर्षपद्रवैः॥ नीवारैर्हस्तिश्यामाकैः प्रियङ्गुभिरथार्चयेत्।' चतुर्विंशतिमते— 'कोद्रवा राजमाषाश्च कुलत्था वरकास्तथा। निष्पावाश्च विशेषेण पञ्चैतांस्तु विवर्जयेत्॥ यावनालानपि तथा वर्जयन्ति विपश्चितः॥' इति।

२. आश्वलायनः—'कदल्यादिफलैः शस्तैर्मूलैरार्द्रादिकैरपि। गोरसैर्मधुना दध्ना श्राद्धे संतर्पयेत् पितॄन्॥' कार्ष्णाजिनिः—'यदिष्टं जीवतश्चासीत्तद्द्यात्तस्य यत्नतः। स तृप्तो दुस्तरं मार्गं ततो याति न संशयः॥' वायुपुराणे—'कालशाकं महाशाकं द्रोणशाकं तथार्द्रकम्। बिल्वामलकमृद्वीकापनसाम्रातदाडिमम्॥ चव्यं पालिवताक्षोटं खर्जूरं च कसेरुकम्। कोविदारश्च कन्दश्च पटोलं बृहतीफलम्। पिप्पली मरिचं चैव एला शुण्ठी च सैन्धवम्। शर्करागुडकर्पूरबदरीद्रोणपत्रकम्॥' तथा—'मधुकं रामठं चैव कर्पूरं गुडमेव च। श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा॥ ब्रह्मपुराणे—'आम्रमाम्रातकं बिल्वं दाडिमं बीजपूरकम्। चीणाकं लकुचं जम्बु भव्यं भूतं तथारुकम्॥ प्राचीनामलकं क्षीरं नालिकेरं परूषकम्। नारङ्गं च सखर्जूरं द्राक्षानीलकपित्थकम्॥ एतानि फलजातानि श्राद्धे देयानि यत्नतः।' इति।

मलकं खर्जूरीफलं चिचार्द्रकं शुण्ठीमूलकं द्राक्षालवंगैलापत्रकाणि जीरकं हिंगु दाडिमफलमिक्षुः शर्करा गुडः कर्पूरः सैन्धवसामुद्रे लवणे पूगीफलं ताम्बूलपत्रमिति श्राद्धे प्रोक्तानि हवींषि। गव्ये दधिदुग्धे, घृतं गव्यं माहिषं च।

धान, जौ, तिल, उर्द, गेहूँ, सावां, ककुनी, मूंग, सरसो—ये श्राद्ध में प्रशस्त हैं। चना विकल्प से है। यावनाल भी विकल्प से है। इष्टापूर्त कर्म में, मृताह में, दर्श, वृद्धि और अष्टकाओं में इन कालों में पात्रों को कुभोजन नहीं दे। गेहूँ-उर्द-मूंग-तैलपक्व से रहित किया हुआ श्राद्ध नहीं किये के समान है। राजमाष (चोड़ा का बीज), निष्पाव, सतीनक, (मटर, कबिली) प्रशस्त है। राजमाष महाराष्ट्र भाषा में 'चवळी' नाम से प्रसिद्ध है। निष्पाव 'पावटे' और सतीनक 'वाटाणे' नाम से प्रसिद्ध है। केले का फल, आम का फल, सूरन, कटहल, तीन प्रकार के ककड़ी फल, कोशातकी महाराष्ट्र में 'दोड़का' नाम से प्रसिद्ध है। कुस्तुम्बुरु (धनिया) विकल्प से है। परबल, बैर, आँवला, खजूर का फल, इमली, अदरख, सोंठ, मूली, दाख, लौंग, इलायची, तेजपत्ता, जीरा, हींग, अनार, गन्ना, चीनी, गुड़, कपूर, सेंधानमक, समुद्रनमक, सुपारी और पान ये श्राद्ध में हवि कहे गये हैं। गाय का दही-दूध तथा गाय और भैंस दोनों का घी हवि है।

केचिन्माहिषं तक्रं सद्यःकृतमनुद्धृतनवनीतं ग्राह्यमाहुः। केचिन्महिषीक्षीरं [2]शर्करादियुतं ग्राह्यमाहुः मथितं निर्जलं दधि सर्वं निषिद्धम। जम्बीरफलं विहितप्रतिषिद्धत्वाद्विकल्पितम्। आक्षोटः 'अक्रोड' इति प्रसिद्धः। शृंगाटकः 'शिंगाडे' इति प्रसिद्धः। चिर्भट 'खबूंज' इति प्रसिद्धम्। शीतकंदली रताली' इति प्रसिद्धम् एते श्राद्धे विहिताः। आम्रातकः 'आंबाडा' इति प्रसिद्धः। तण्डुलीयो 'माठ इति प्रसिद्धः। एतौ द्वौ विहितप्रतिषिद्धौ।

कोई—भैंस का मट्ठा, तुरन्त का बना हुआ जिसमें मक्खन नहीं निकाला गया हो—ग्राह्य कहते हैं। कोई—चीनी आदि युक्त भैंस के दूध को ग्राह्य—कहते हैं। मथा हुआ निर्जल दही सब निषिद्ध हैं। जंबीरी नीबू विहित और निषिद्ध होने से विकल्पित है। अखरोट, सिंघाड़ा, खरबूजा, शीतकंदली 'रातळी' ये श्राद्ध में विहित हैं। आम्रातक 'आंवड़ा' और तण्डुलीय 'माठ' इस नाम से प्रसिद्ध है। अमड़ा, तंडुलीय-ये दोनों विहित और निषिद्ध हैं।

केचिद्राजमाषं कृष्णेतरमुद्गं कृष्णनिष्पावं च निषिद्धमाहुः।

कथंचिद्यदि विप्रेभ्यो न दत्तं भोजने मधु।
पिण्डास्तु नैव दातव्याः कदाचिन्मधुना[3] विना॥

---

१. सुमन्तुः—'पयो दधि घृतं चैव गवां श्राद्धेषु पावनम्। महिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित्॥' देवलः—'अजाविमहिषीणां तु पयः श्राद्धेषु वर्जयेत्। विकारान् पयसश्चैव माहिषं तु घृतं हितम्॥' भविष्यपुराणे—'श्राद्धे तु महिषीक्षीरं अजाक्षीरं च वर्जयेत्। गवां चानिर्दशाहानां सन्धिनीनां पयस्त्यजेत्॥' इति।

२. अपरार्क में ब्रह्मपुराण का वचन—'देयं तक्रं तु सद्यस्कं नवनीतादनुधृतम्। आरण्यमहिषीक्षीरं शर्कराद्युतिसंयुतम्॥ मध्वक्तं तु हितं चैव दद्याच्चदमृतं यतः।' इति।

३. हेमाद्रि में ब्रह्मपुराण का वचन—अणुमात्रमपि श्राद्धे यदि न स्याच्चम ाक्षिकम्। नामापि कीर्तनीयं स्यात् पितॄणां प्रीतये तत्॥' मात्स्यसूक्ते—'मध्वभावे गुडो देय क्षीरस्य च तथा दधि। न लभ्यते घृतं यत्र कुर्यात् घृतवतीजपम्॥' इति।

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

इति वचनद्वयान्मधुनि ऐच्छिकविकल्पः। केचित् 'यथाचारं प्रदेयं तु मधुमांसादिकं तथा' इति वचनाद्देशाचारानुसारेण व्यवस्थितविकल्पमाहुः। मांसं श्राद्धेषु नैव देयं कलिवर्ज्यत्वात्, 'न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित्' इत्यादि श्रीभागवतवचनाच्च। अन्यानि मुञ्जातचव्यकसेरुकालेयादिद्रव्याणि बहूनि महानिबन्धेषूक्तानि तान्यप्रसिद्धत्वाच्छ्राद्धेऽवश्यापेक्षोपयोगयोरभावाच्च नोच्यते।

कुछ लोग—राजमाष, कृष्ण वर्ण से भिन्न मूंग और कृष्ण निष्पाव को निषिद्ध कहते हैं। किसी तरह यदि ब्राह्मणों को भोजन में मधु नहीं दिया हो तो पिण्ड तो मधु के विना कमी न दे। अक्षत, गोपशु, मांस, मधु, देवर से पुत्रोत्पत्ति, कलियुग में इन पांचों का वर्जन करे, इन दो वचनों से मधु में ऐच्छिक विकल्प है। कुछ लोग कहते हैं—आचार के अनुसार मधुमांस आदि भोजन में देना चाहिये, इस वचन से देशाचार के अनुसार व्यवस्थित विकल्प है। श्राद्ध में मांस नहीं दे, क्योंकि कलिवर्ज्य है और भागवत में—श्राद्ध में मांस न दे तथा धर्मतत्त्व का जाननेवाला स्वयं भी न खाय—इस वचन से निषेध है। अन्य भी-मुंजात, चव्य, कसेरु और कालेय आदि बहुत से द्रव्य महानिबन्धों में कहे हैं, उनकी प्रसिद्धि नहीं होने से श्राद्ध में अवश्य अपेक्षा और उपयोग के अभाव से नहीं कहा है।

## अथ वर्ज्यानि

यद्यपि विहितोक्त्यैव तद्भिन्नानामग्राह्यत्वं प्राप्तं तथापि विशेषदोषप्रदर्शनायाप्राप्तनिषेधज्ञापनाय च तानि संगृह्यन्ते। [2]उत्कोचादिना प्राप्तं पतितान्त्यजादेः प्राप्तमन्यायार्जितं कन्याविक्रयादिलब्धं धनं निन्द्यम्। पित्रर्थं मे देहीति याचनार्जितमपि निषिद्धम्। आढकीकुलित्थमसूरकोद्रवराजसर्षपा निषिद्धाः। लांकेति प्रसिद्धाः मर्कटकाश्च वर्ज्याः। [3]शिग्रूकूष्माण्डोभयविधालाबुकरमर्दार्द्रमरीचपिण्डमूलककुसुम्भशणवंशांकुराः दशविधा लशुनादिपलाण्डुभेदाः कृत्रिमलवणानि रक्तबिल्वं श्वेतं कृष्णं वृन्ताकं गाजरापरपर्यायं गृंजनं भोकरसंज्ञः श्लेष्मातको रक्तनिर्यासाश्च वर्ज्याः।

---

१. इसका उत्तरार्ध है—'मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया॥' तथेति शेषः। वृहत्पराशर ने भी कहा है—'यस्तु प्राणिवधं कृत्वा मांसैस्तर्पयते पितॄन्। स विद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम्॥ क्षिप्त्वा कूपे यथा किंचिद् बाल आदातुमिच्छति। पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा॥' इति।

२. मार्कण्डेयपुराणे—'यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितम्। अन्यायकन्याशुल्कार्थं द्रव्यं चात्र विगर्हितम्॥ पित्रर्थं मे प्रयच्छस्वेत्युक्त्वा यच्चाप्युपाहृतम्॥' इति।

३. चन्द्रोदय में शंख की उक्ति—'भूस्तृणं सुरसा शिग्रु पालङ्की मृचुकं तथा। कूष्माण्डालाबुवार्ताककोविदारांश्च वर्जयेत्॥ पिप्पलीं मरिचं चैव तथा वै पिण्डमूलकम्। कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत्॥ राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान्। लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत्॥' तथा—'पिण्डालकं च तुण्डीरं करमर्दं च नालिकाम्। कूष्माण्डं बहुबीजानि श्राद्धे दत्त्वा व्रजत्यधः॥' इति।

श्राद्ध में वर्ज्य द्रव्य—यद्यपि विहित के कहने से ही उससे भिन्न का अग्राह्यत्व प्राप्त था, तब भी विशेष दोष दिखाने के लिये और अप्राप्त निषेध के ज्ञापन के लिये उनका संग्रह करते हैं। घूस आदि से पाया हुआ, पतित और अंत्यज से पाया, अन्याय से पैदा किया हुआ, कन्या विक्रय आदि से पाया हुआ धन निन्द्य होता है। 'पितरों के लिये मुझे दीजिये' ऐसी याचना से अर्जित धन भी निषिद्ध है। आढ़की, कुलत्थ (कुलथी), मसूर, कोदो और राजसर्षप निषिद्ध है। सहिजन, कूष्माण्ड, दोनों प्रकार की लौकी, करौंदा, आदी, मरिच, लालमूली, कुसुम्भ सन और बांस के अंकुर, दस प्रकार के लहसुन आदि प्याज के भेद, कृत्रिम लवण, लाल वेल, सफेद और काला बैंगन गाजर का दूसरा पर्याय गृंजन जिसको मोकर कहते हैं वह, लिसोढ़ा और लाल रसवाले शाक श्राद्ध में वर्जित हैं।

सामुद्रसैन्धवे भक्ष्ये प्रत्यक्षं लवणे बुधैः।
विडालोच्छिष्टमाघ्रातं श्राद्धे द्रव्यं विवर्जयेत्॥
करीरफलपुष्पाणि विडङ्गमरिचानि च।
बीजपूरं पटोलं च श्राद्धे दत्त्वा पतत्यधः॥
कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि।
न वर्जयेत्तिलांश्चैव मुद्गमाषांस्तथैव च॥
दातुर्यद्यत्प्रियं तत्तद्देयं निन्द्यं न चेद्धि तत्।
अजाविमहिषीक्षीरं[१] तद्विकारांश्च वर्जयेत्॥
बालुकाकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम्।
वस्त्रेण वीजितं चान्नं वर्जयेच्छ्राद्धकर्मणि॥
अमेध्यैर्जङ्गमैः स्पृष्टं शुष्कं पर्युषितं च यत्।
द्विःपक्वं परिदग्धं च सिद्धभक्षांश्च वर्जयेत्॥

सामुद्र और सैन्धव नमक भक्ष्य है। बिल्ली का जूठा और सूंघा हुआ द्रव्य श्राद्ध में वर्ज्य हैं। करीर का फल, फूल, वायविडंग, मरिच, बीजपूर और परवल श्राद्ध में देने से नरक होता है। श्राद्ध-कर्म में तिल, मूंग और उर्द को छोड़कर सब प्रकार के काले अन्न वर्जित हैं। दाता को जो-जो प्रिय हो वह-वह दे यदि वह निन्द्य न हो। बकरी, भेंड़ और भैंस का दूध और उनके विकार वर्जित हैं। बालू, कीड़ा, पत्थर और केश जिस अन्न में पड़ जायं और वस्त्र से हवा किया हुआ अन्न श्राद्ध में वर्जित है। अपवित्र पशुओं से छुआ हुआ, सूखा और बासी, दो बार का पकाया हुआ और जला हुआ अन्न वर्जित है।

यत्सकृत्पाकेन भक्षणार्हमपि हिंगुजीरकादि संस्कारार्थं पुनः पच्यते तद्विःपक्वं वर्ज्यम्। यत्तु द्विःपाकेनैव भक्षणार्हं तन्न निषिद्धमिति सिन्धुः। 'यदन्नैकदेशः

---

१. चन्द्रिका में शङ्ख का वचन—'कूष्माण्डं महिषीक्षीरमाढक्यो राजसर्षपः। चणकाः राजमाषाश्च घ्नन्ति श्राद्धं न संशयः॥' इस वचन में चना का निषेध और—'श्यामाकैश्चणकैः शाकै-र्नीवारैश्च प्रियङ्गुभिः। गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि॥' इन वचनों में चना का ग्रहण है, इसलिये इसका ग्राह्याग्राह्य में विकल्प है।

केनचित्पूर्वमास्वादितस्तदन्नं श्राद्धे वर्ज्यम् । मारीषं 'राजगिरे'ति प्रसिद्धं शाकं धान्यं च वर्ज्यम् । वटप्लक्षोदुम्बरकपित्थनीपमातुलिंगफलानि न भक्षयेत् ।

क्षीरं च लवणैर्मिश्रं ताम्रे गव्यं सुरासमम्[1] । अस्यापवादः—

पयोनुद्धृतसारं च पयसा संयुतं दधि ।
घृतं चैतानि गव्यानि नैव दुष्टानि ताम्रके ॥

जो एक बार पकाने से भक्षणयोग्य हींग जीरा आदि हैं वे संस्कार के लिये दुबारा पकायें जांय तो दो बार के पकाये हुए होने से वर्जित हैं। और जो दो बार पकाने से ही भक्षण योग्य हों, उनका निषेध नहीं है ऐसा निर्णय सिन्धुकार का कथन है। जिस अन्न का एक देश किसी ने पहिले चख लिया हो वह अन्न श्राद्ध में वर्जित है। राजगिरि नाम से प्रसिद्ध, मारीष शाक (मड़सा, लालसाग और धान्य वर्जित है। बड़, पाकड़, गूलर, कैंत, कदंब, और धतूर के फलों को न खाय। लवण मिला दूध और तामे के पात्र में गव्य मद्य के समान है। इसका अपवाद है।— मक्खन निकाला हुआ दूध और दूध में मिला हुआ दही और गाय का घी तामे के पात्र में रखने पर दूषित नहीं होता।

पिप्पली वर्तुलमरीचादेः प्रत्यक्षस्य निषेधो न त्वन्यद्रव्यमिश्रितस्य । [2]नारिकेलं विहितप्रतिषिद्धम् । यच्च पौतिकशाकादिकं जीर्णतक्रं सन्धिन्यादिक्षीरमनिर्दशायाः क्षीरं मृग्यादिक्षीरं फेनिलतक्रादिकंहस्तदत्तस्नेहलवणादिकं च नित्यभोजने निषिद्धं तत्सर्वं श्राद्धेपि वर्जयेत् ।

पीपल और गोल मरिच आदि-प्रत्यक्ष का निषेध है दूसरे द्रव्य में मिले हुए का नहीं। नारियल विहित भी है और निषिद्ध भी। जो—पोई का शाक आदि, पुराना मट्ठा, गाभिन गाय का दूध, बिआने से दस दिन के भीतर का दूध, मृगी आदि का दूध, फेनिल मट्ठा आदि, हाथ से दिया हुआ तेल और नमक नित्य भोजन में निषिद्ध है—वे सब श्राद्ध में भी वर्जित हैं।

## अथ मक्षिकादिदूषितान्नव्यवस्था

माधवीये—मृतैर्मक्षिकाकृमिजन्तुभिः केशरोमनखादिभिश्च दूषितं सति संभवे वर्जयेत् । असंभवे तु केशादिकमुद्धृत्य संप्रोक्ष्य हिरण्यस्पर्शं कृत्वा भुञ्जीत । श्वमार्जारमूषकादिभिरालीढादिकं त्वापद्यपि वर्ज्यमित्युक्तम् । यत्तु मण्डकवटकसक्तुपायसापूपकृसरादीनां स्नेहसिद्धानां च पर्युषितत्वदोषो नास्तीति वचनं तन्नित्यभोजनपरं न तु श्राद्धपरमिति शिष्टाः । यदग्निपक्वं सदेकात्रिद्विरात्राद्यन्तरितं तत्पर्युषितमुच्यते ।

---

१. स्मृतिसार में भी कहा है—'क्षीरे तु लवणं दत्त्वा उच्छिष्टेऽपि च यद् घृतम् । स्नानं रजकतीर्थेषु ताम्रे गव्यं सुरासमम् ॥' गौडनिबन्धसागरे—'नारिकेरोदकं कांस्ये ताम्रपात्रे स्थितं मधु । गव्यं च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥' इति ।

२. नारिकेल विहित है इसका मूलवचन पूर्व में दिखाया गया है। निषेध का वचन विश्वामित्र का यों है—'कपित्थं कुरुकं चैव नारिकेलं च पैनिकम् । जम्बूफलादि पक्वं च पिण्याकं तन्दुलीयकम् ॥' वर्जयेदिति शेषः । इसलिये इसका ग्राह्य और अग्राह्य में विकल्प है।

माधवीय में—मृत मक्षिका-क्रिमि-जन्तुओं और केश-रोम-नख आदि से दूषित अन्न सम्भव हो तो त्याग दे। असम्भव में तो केश आदि को सिद्ध अन्न से निकाल कर प्रोक्षण करके सोने का स्पर्श कराके खाय। कुत्ता, बिल्ली और चूहों आदि से चाटा हुआ तो आपत्काल में भी वर्जित है—ऐसा कहा है। जो कि—मण्डक, बड़ा, सतुआ, खीर, पूआ और खिचडी आदि जो तेल से सिद्ध हुए हों; उनमें बासी होने का दोष नहीं है ऐसा वचन है वह नित्य भोजनपरक है। श्राद्ध के लिये नहीं, ऐसा शिष्टजन का कथन है। जो अग्नि से पका हुआ एक दो रात का अन्तरित होता है उनको बासी कहते हैं।

## अथ कदर्याद्यन्ननिषेधः

कदर्यादीनामन्नं नित्यभोजने श्राद्धकर्मणि च न ग्राह्यम्। ते च कदर्यश्चोरो नटो वीणोपजीवी वार्धुषिकोऽभिशस्तो गणिका चिकित्सकः क्रुद्धः पुंश्चली मत्तः क्रूरः शत्रुः पतितो दाम्भिकः पतिपुत्रहिता स्त्री स्वर्णकारः स्त्रीजितो ग्रामयाजको घातुकः कर्मारस्तन्तुवायः कृतघ्नो वस्त्रक्षालनोपजीवी दारोपजीवी सोमविक्रयी चित्रकर्मा गायक इत्यादयस्त्रैवर्णिका अपि अग्राह्यान्नाः।

कृपण आदि का अन्न नित्य भोजन और श्राद्ध कर्म में अग्राह्य है। वे कदर्य आदि चोर नट, वीणा से जीविका करने वाला, सूदखोर, अभिशस्त वेश्या, वैद्य क्रोधी, पुंश्चली. नशे में मत्त क्रूर शत्रु, पतित, दाम्भिक, पतिपुत्र से हीन स्त्री सोनार, सोनार स्त्री के वश में रहने वाला, गांव भर का यज्ञ कराने वाला, घात करने वाला, लोहार, कपड़ा बुनने वाला, कृतघ्न, कपड़ा कचार कर जीने वाला, स्त्री से जीविका चलाने वाला, सोमविक्रयी. चित्र बनाने वाला और गायक इत्यादि त्रैवर्णिक भी हों तो उनके अन्न अग्राह्य है

आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत्।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः॥
द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा।
वानप्रस्थो यती लिङ्गी न भोज्यान्नाः प्रकीर्तिताः॥
षण्मासं यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।
स तु जीवन्भवेच्छूद्रो मृतः श्वा चाभिजायते॥

अन्यानि द्रव्याणि निबन्धेषु बहूनि निषिद्धानि तानि विहितोक्त्यर्थसिद्धत्वादप्रसिद्धत्वाच्च नोक्तानि।

कदर्य की परिभाषा—जो लोभ से पिता माता और भृत्यों को, अपने को, धर्म कृत्य एवं पुत्र स्त्री को पीड़ित करता है। दो ही आश्रम वालों को भोजन करना चाहिये—ब्रह्मचारी या गृहस्थ। वानप्रस्थ, यति लिंगी–इन तीनों को भोजन नहीं करावे। जो ब्राह्मण शूद्र के निन्दित अन्न को छ महीने तक खाता है वह जीता हुआ शूद्र और मरने पर कुत्ता होता है। अन्य बहुत से द्रव्य निबन्धों में निषिद्ध बतलाये हैं। उन्हें विहित वचन से अर्थसिद्ध और अप्रसिद्ध होने से नहीं कहा है।

## अथ वर्ज्यावर्ज्यजलादिविचारः

दुर्गन्धि फेनिलं क्षारं पङ्किलं पल्वलोदकम्।
न भवेद्यत्र गोतृप्तिर्नक्तं यच्चाप्युपाहृतम्॥

न ग्राह्यं तज्जलं श्राद्धे यच्चाभोज्यनिपानजम् ।
स्नानमाचमनं दानं देवतापितृतर्पणम् ॥
शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ।
नाहरेदुदकं रात्रौ तुलसीं गोमयं मृदम् ॥

[1]तुलसीबिल्वजाह्नवीजलभिन्नं पर्युषितं जलं पुष्पं च त्यजेत् ।

दौहित्रः [2]कुतपः कालश्छागः कृष्णाजिनं तथा ।
रौप्यं दर्भास्तिला गावः खड्गपात्रं पितृप्रियम् ॥

आरण्याः [3]कृष्णतिला मुख्याः । तदभावे ग्राम्या गौराः कृष्णाश्च । छागसान्निध्यं श्राद्धेऽतिप्रशस्तम् ।

दुर्गन्ध, फेनिल, खारा, कीचड़युक्त, छोटे जलाशय का जल जिसमें गाय की तृप्ति नहीं होती; रात में लाया गया जल, और जो अभोज्य के कुएं का जल है वह श्राद्ध में ग्राह्य नहीं है। शूद्र के जल तथा मेघ से निकले जल से स्नान, आचमन, दान, देवता और पितरों का तर्पण नहीं करे। रात में जल, तुलसी, गोबर और मिट्टी न लावे। तुलसी, बेल और गंगाजल से भिन्न बासी जल और फूल का त्याग करे। लड़की का लड़का, कुतप-मुहूर्त, काला बकरा, कृष्ण मृगचर्म तथा चाँदी, कुश, तिल, गाय और गेंडे का पात्र पितरों को प्रिय होता है। वन के काले तिल मुख्य हैं। उनके अभाव में ग्राम के सफेद और काले तिल ग्राह्य हैं। बकरे का सान्निध्य श्राद्ध में अत्यन्त प्रशस्त है।

कुक्कुटविड्वराहकाकमार्जारशूद्रषण्ढरजस्वलासान्निध्यमतिनिन्द्यम्। चाण्डालरजस्वलाखञ्जश्वित्रिन्यूनाङ्गातिरिक्ताङ्गादिभिर्वीक्षितमन्नमभोज्यम् । आपदि मृद्भस्महिरण्योदकस्पर्शाद्भोज्यम् । [4]पावमानीतरत्समन्दीमन्त्रैर्गायत्र्यादिभिश्च दर्भजलप्रोक्षणे दुष्टान्नशुद्धिः ।

---

१. नारदीये—'त्यजेत् पर्युषितं पुष्पं त्यजेत् पर्युषितं जलम्। न त्यजेज्जाह्नवीतोयं तुलसीबिल्वपङ्कजम् ॥' इति ।

२. मत्स्यपुराण में कहा है—'मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः । रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥ पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः । अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः ॥' ब्रह्मपुराण में—'यतिस्त्रिदण्डः करुणा राजतं पात्रमेव च । दौहित्रं कुतपः कालश्छागः कृष्णाजिनं तथा ॥' शस्तानीति शेषः। अपरार्क में स्मृत्यन्तर के अनुसार ये दौहित्र हैं—'अपत्यं दुहितुश्चैव खड्गपात्रं तथैव च । घृतं च कपिलाया गोर्दौहित्रमिति कीर्तितम् ॥' ब्रह्माण्ड में—'अमावास्यागते सोमे या तु खादति गौस्तृणम् । तस्या गोर्यद्भवेत् क्षीरं तद्दौहित्रमुदाहृतम् ॥' स्मृतिसंग्रह में—'उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम् । श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ॥' उच्छिष्ट = वत्सपीतशेषदुग्ध, शिवनिर्माल्य = गङ्गोदक, वान्त=मधु ।

३. आपस्तम्बः—'अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा । ते वै श्राद्धे पवित्राः स्युस्तिलास्तेन तिलास्तिलाः॥' ब्रह्मपुराणे—'गौराः कृष्णास्तथाऽरण्यास्तथैव त्रिविधास्तिलाः' । आरण्य तिल के अभाव में ग्राम्य तिल ग्राह्य है ।

४. वायुपुराणे—'अन्नं पदयेयुरेते तु यदि वै हव्यकव्ययोः । उत्सृष्टव्यं प्रधानार्थं संस्कारस्त्वा-

पादुकोपानहौ छत्रं रक्तचित्राम्बरं तथा ।
रक्तपुष्पं च मार्जारं श्राद्धभूमौ विवर्जयेत् ॥

[१]'घण्टानादोऽश्वधत्तूरशङ्खशुक्तिसान्निध्यं च वर्ज्यम् ।

मुर्गा, विड्वराह, कौवा, बिल्ली, शूद्र, नपुंसक और रजस्वला का सान्निध्य अत्यन्त निन्द्य है। चाण्डाल, रजस्वला, लंगड़ा, सफेद कोढ़वाले, न्यूनांग और अतिरिक्त अंगादि वाले से देखा हुआ अन्न अभोज्य है। आपत्ति में मिट्टी-भस्म-सुवर्ण-जल के स्पर्श से भोजनीय होता है। पावमानी तरत्समन्दी मन्त्रों और गायत्र्यादि मन्त्रों से कुशजल द्वारा प्रोक्षण करके दूषित अन्न की शुद्धि होती है। श्राद्ध भूमि में खड़ाऊं, जूता, छाता, लाल-चितकबरा-वस्त्र, लाल फूल और बिल्ली का त्याग करे। घंटा का शब्द, घोड़ा, धतूर, शंख और सितुही का सान्निध्य वर्जित है।

## अथ श्राद्धदिनकृत्यं पाकविचारश्च

[२]गोमयादिभिर्भूमिभाण्डशुद्धिः । देवताब्रह्मचारियतिशिशूनां पिण्डदानपर्यन्तमन्नं देयम् । अतिशिशवस्तु गृहान्तरे भोजनीयाः । तिलानवकिरेत्तत्र सर्वतो बन्धयेदजान् । पाकः श्राद्धकर्त्रा स्वयमेव कार्यः ।

तदभावे शुद्धपत्न्या तदभावे तु बान्धवैः ।
सगोत्रैर्वा सपिण्डैर्वा मित्रैर्वा सुगुणान्वितैः ॥
पुंश्चलीं च तथा वन्ध्यां विधवां चान्यगोत्रजाम् ।
वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम् ॥
न पाकं कारयेत्पुत्रीं गर्भिणीं चापि दुर्मुखीम् ।

गोबर आदि से भूमि और भाण्ड की शुद्धि करे। देवता, ब्रह्मचारी, यति और बच्चों को पिण्डदान तक अन्न नहीं दे। बहुत छोटे बच्चों को दूसरे के घर में भोजन करावे। श्राद्ध-भूमि में तिल बिखेरे। चारो ओर बकरों को बांधे। श्राद्धकर्ता पाक अपने ही बनावे। स्वयं न बना सके तो शुद्ध

---

पदि स्मृतः ॥' जमदग्निः—'शुद्धवत्योऽथ कूष्माण्डयः पावमान्यस्तरत्समाः । पूतेन वारिणा दर्भैरन्नदोषमपानुदेत् ॥' इति ।

१. निर्णयदीपे—'घण्टानिनादो हयसन्निधानं शम्बूकशङ्खौ कदलीदलं च । उन्मत्तजात्यर्कहयारिजानि श्राद्धस्य वैगुण्यकराण्यमूनि ॥' हयारिजं=महिषीक्षीरादिकम् ।

२. दन्तधावन को छोड़कर प्रातः सन्ध्यावन्दनादि नित्यकर्म समाप्त करके श्राद्धभूमि आदि की शुद्धि करे, जैसा उशना ने कहा है—'गोमयोदकैर्भूमिभाजनशौचं कुर्यात्' । ब्रह्मपुराणे—'श्राद्धे भूमिः पञ्चगव्यैर्लिप्ता शोध्या तथोल्मुकैः । गौरमृत्तिकया छन्ना प्रकीर्णा तिलसर्षपैः ॥' भूमि की शुद्धि तथा तिल-सर्षप-विकिरण और पाक-पात्र का यथोक्त प्रक्षालन के बाद पाकारम्भ करे, जैसा देवल ने कहा है—'तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः । आरभेत नवैः पात्रैरन्वारम्भं च बान्धवैः ॥'—

स्वयं पाक करने में असमर्थ हो तो पत्नी से पाक करावे। पत्नी के पाककर्तृत्व का उदाहरण पद्म और लिङ्गपुराण में यों है—'ततस्तानि पपाचाशु सीता जनकनन्दिनी ।' चमत्कारखण्डे—'ततश्च श्रपयामास तदर्थं जनकोद्भवा । रामादेशात्स्वयं साध्वी विनयेन समन्विता ॥' व्यासः—'गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः । निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत् ॥' इति ।

पत्नी से, उसके अभाव में बान्धव से, अथवा सगोत्र या सपिण्डों से, या गुणान्वित मित्रों से बनवावे। श्राद्ध-पाक के लिये पुंश्चली, वन्ध्या, विधवा, अन्य गोत्र की और माता-पिता से भिन्न वंश वाली स्त्री का वर्जन करे। पुत्री से, गर्भिणी और दुर्मुखी से पाक न बनवावे।

## अथ पाकपात्रादिविचारः

पाकभाण्डानि सौवर्णरौप्यताम्रोद्भवानि च ॥
कांस्यानि [1]मृन्मयं तूक्तं नव्यमेव मनीषिभिः।
पैत्तलं रङ्गजातं च विहितं नो न निन्दितम् ॥
न कदाचित्पचेदन्नमयस्थालीषु पैतृकम्।

फलशाकादिच्छेदनार्थंभिन्नानामायसानां शस्त्राणां भाण्डानां च दर्शनमपि पाकादिस्थाने निषिद्धम्[2]। पक्वान्नस्थापनार्थं तु शस्यन्ते दारुजान्यपि[3]।

पाक पात्र—सोना-चांदी-तामा-कांसा और मृन्मय का नवीन ही पण्डितों ने कहा है। पीतल रांगे का न विहित हैं न निन्दित। लोहे के वर्तन में श्राद्धान्न कभी नहीं पकावे। फल-शाक आदि काटने के शस्त्र से भिन्न लोहे के शस्त्र और पात्र का दर्शन भी पाक आदि स्थानों में निषिद्ध है। पक्वान्न रखने के लिये लकड़ी के पात्र भी प्रशस्त हैं।

गृह्याग्नौ तु पचेदन्नं श्राद्धीयं लौकिकेपि वा ॥
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते।

तत्र गृह्याग्नौ पाके विशेषः—प्रातर्होमं कृत्वा तदेकदेशं महानसे कृत्वा पाकं कुर्यात्। पाकान्ते पाचकाग्न्येकदेशं गृह्याग्नौ संयोज्य गृह्येऽग्नौकरणवैश्वदेवादि कार्यम्[4]। अत्रैवं व्यवस्था—कात्यायनादीनां गृह्याग्नौ पाकः। आश्वलायनानां तु नैत्यके पचनाग्नौ। अग्नौकरणं त्वाश्वलायनानां व्यतिषङ्गेण श्राद्धे गृह्याग्निपक्वचरुणा गृह्ये एव। व्यतिषङ्गाभावे पाणिहोमः। अन्यशाखीयस्य गृह्याग्नावग्नौकरणम्। विधुरस्योच्छिन्नाग्निकस्य च पृष्टोदिविविधानाग्निसम्पादनम्। तच्च पूर्वार्धे उक्तम्।

गृह्याग्नि में श्राद्धीय अन्न पकावे या लौकिकाग्नि में। जिस अग्निमें अन्न पकावे उसमें होम करे। गृह्याग्नि में पाक करने पर विशेष कहा है—प्रातः होम करके उस अग्निका एक अंश रसोइयां घर में ले जाकर पाक बनावे। पाक के अन्त में पाचकाग्नि का एक भाग लेकर गृहाग्नि में मिलाकर गृह्य

---

१. वायुपुराण में तैजस-पात्र के अभाव में मृन्मय पात्र का निर्देश किया है—'तैजसानामभावे तु पिठरे मृन्मयेऽपि वा। नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात् ॥' इति।

२. वायुपुराण में—'न कदाचित्पचेदन्नमयःस्थालीषु पैतृकम्। अयसो दर्शनादेव पितरोऽपि द्रवन्ति हि ॥ कालायसं विशेषेण निन्दति पितृकर्मणि। फलानां चैव शाकानां छेदनार्थानि यानि तु ॥ महानसेऽपि शस्त्राणि तेषामेव हि सन्निधिः। इष्यते नेतरस्यात्र शस्त्रमात्रस्य दर्शनम् ॥ श्राद्धदेशे तु विदुषा पितॄणां प्रीतिमिच्छता। महानसेऽपि युक्तानामपि कार्यं न दर्शनम् ॥' इति।

३. आदित्यपुराण में इसका उत्तरार्द्ध यों है—'दर्व्यादीन्यपि कार्याणि यज्ञियैरपि दारुभिः।' इति।

४. कर्मप्रदीपे—'प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनात्। शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥ पाकान्तेऽग्निं तमाहृत्य गृह्याग्नौ तु पुनः क्षिपेत्। ततोऽस्मिन् वैश्वदेवादि कर्म कुर्यादतन्द्रितः ॥' इति।

अग्नि में अग्नौकरण और वैश्वदेव आदि करे। इसमें इस प्रकार व्यवस्था है—कात्यायन आदि वालों का गृह्याग्नि में और आश्वलायनों का तो नित्य पकाने वाली अग्नि में पाक है। अग्नौकरण तो आश्वलायनों का व्यतिषंग ( अन्योन्यसम्बन्ध ) से श्राद्ध में गृह्याग्नि में पकाये हुये चरु से गृह्य में ही करे। व्यतिषंग के अभावमें ब्राह्मणोंके हाथ में होम करे। दूसरी शाखा वालों का अग्नौकरण गृह्याग्नि में होता है। विधुर और उच्छिन्नाग्निक का पृष्ठोदिविविधान आदि से अग्नि का सम्पादन होता है, उसे पूर्वार्द्ध में कहा है।

## अथ भोजनपात्राणि

भोजनपात्राणि तु हेमरौप्यकांस्यजानि वा पलाशकमलकदलीमधूकपत्रनिमितानि वा।

भोजन-पात्र—तो सोने-चांदी-कांसे के अथवा पलाश-कमल-केला-महुए के पत्तों से बने हुये हों।

## अथ श्राद्धकर्तुः श्राद्धभोक्तुश्च धर्माः

अथ निमन्त्रणादिश्राद्धाहे भुक्तान्नपरिणामपर्यन्तं कर्तुर्विप्राणां च नियमाः—स्त्रीसङ्गपुनर्भोजनानृतभाषणाध्यापनद्यूतायासभारोद्वहनहिंसादानप्रतिग्रहचौर्याध्वगमनदिवास्वापकलहादिवर्जनं कर्तृभोक्त्रुभयधर्माः। स्त्रीसङ्गश्च श्राद्धदिने तत्पूर्वदिने च ऋतुकालेऽपि वर्ज्यः। 'ताम्बूलक्षुरकर्माभ्यङ्गदन्तधावनवर्जनं कर्तृधर्माः। भोक्तृविप्राणां तैलाभ्यङ्गे उद्वर्तने क्षौरे च विकल्पः[2]। कर्तुर्भोक्तुश्च मुख्यवारुणस्नानेनैवाधिकारो न तु गौणस्नानेन।

अब निमन्त्रणादि से लेकर श्राद्ध दिन में खाया हुआ अन्न पच जाने तक कर्ता और ब्राह्मणों का नियम कहता हूँ—स्त्रीप्रसंग, दुबारा भोजन, असत्य भाषण, पढ़ाना, जुआ खेलना, श्रम करना, बोझा ढोना, हिंसा, दान, प्रतिग्रह, चोरी, रास्ता चलना, दिन में सोना और झगड़ा आदि का वर्जन कर्ता और भोक्ता दोनों का धर्म है। स्त्रीप्रसंग श्राद्ध के दिन और श्राद्ध के पूर्व दिन भी ऋतुकाल में वर्जित है। ताम्बूल, हजामत, तैल लगाकर स्नान और दंतधावन का त्याग, ये कर्ता के धर्म हैं। खाने वाले ब्राह्मणों का तैलाभ्यंग, उबटन और क्षौर में विकल्प है। कर्ता और भोक्ता का मुख्य वारुणस्नान से ही ( श्राद्ध करने और भोजन करने का ) अधिकार है, न कि गौण-स्नान से।

श्राद्धकृच्छुक्लवासाः स्यान्मौनी च विजितेन्द्रियः।
उपवासं परान्नं च औषधं च विवर्जयेत्॥

अवस्त्रत्वं मलवद्वस्त्रत्वं कौपीनवस्त्रं, कच्छहीनत्वमनुत्तरीयत्वं काषायवस्त्रत्वमार्द्रवस्त्रत्वं द्विगुणवस्त्रत्वं रक्तवस्त्रत्वं दग्धवस्त्रत्वं स्यूतवस्त्रत्वमित्येकादशविधन-

---

१. हेमाद्रि में जाबाल की उक्ति है—'ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजनम्। रत्यौषधपरान्नानि श्राद्धकर्ता विवर्जयेत्॥' अभ्यङ्ग के सम्बन्ध में कात्यायन ने कहा है—'तैलमुद्वर्तने देयं ब्राह्मणेभ्यः प्रयत्नतः। तैरभ्यङ्गश्च कर्तव्यो वर्ज्यं कालं न चिन्तयेत्॥' इति।

२. तैलोद्वर्तनादि पूर्वोक्त कात्यायन के वचन से विहित और प्रचेता के वचन से निषिद्ध होने से विकल्प है। प्रचेता का वचन है—'तैलमुद्वर्तनं स्नानं दद्यात् पूर्वाह्ण एव तु। श्राद्धभुग्भ्यो नखश्मश्रुच्छेदनं तु न कारयेत्॥' इति।

ग्नत्वं कर्तृभोक्तृभ्यां वर्ज्यम्[1]। कर्तुर्ललाटे ऊर्ध्वपुण्ड्रादेर्विकल्पः[2]। भोक्तुस्तु भवत्येव। चन्दनतिलकस्तु पिण्डदानात्प्राक्[3] कर्तुर्वर्ज्यः। भोक्तुस्तु भोजनकालात्प्राक् वर्ज्यः। सदर्भहस्तेन[4] तिलको न कार्यः। करणे आचमनं दर्भत्यागश्च।

श्राद्धकर्ता श्वेतवस्त्रधारी, मौनी और जितेन्द्रिय हो। श्राद्ध के दिन उपवास, दूसरे का अन्न और औषधि का त्याग करे। विना वस्त्र, मैला वस्त्र, कौपीन, कच्छहीन, उत्तरीय का न रहना, काषाय वस्त्र, गीला वस्त्र, द्विगुण वस्त्र, लाल वस्त्र, जला वस्त्र, और सिला हुआ वस्त्र धारण करना, ये ग्यारह प्रकार के नग्नत्व कर्ता और भोक्ता दोनों के वर्जनीय हैं। कर्ता के ललाट में उर्ध्वपुण्ड्र आदि का विकल्प है। भोक्ता का तो होता ही है। चन्दन का तिलक तो पिण्ड-दान से पहिले कर्ता का वर्जित है। भोक्ता का तो भोजन काल के पहिले त्याज्य है। कुश-हस्त से तिलक नहीं करना चाहिये। करने पर आचमन और कुश का त्याग करे।

### अथ निमन्त्रितविप्रत्यागे विचारः

कर्त्रा निमन्त्रितविप्रत्यागो[5] न कार्यः। प्रमादेन त्यागे यत्नेन विप्रः प्रसादनीयः। बुद्धिपूर्वकत्यागे यतिचान्द्रायणं प्रायश्चित्तम्।

श्राद्धकर्ता निमन्त्रित ब्राह्मण का त्याग नहीं करे। प्रमाद से त्याग करने पर यत्नपूर्वक ब्राह्मण को प्रसन्न करे। जानबूझ कर त्याग करने पर यतिचान्द्रायण प्रायश्चित्त करे।

---

१. नग्नत्वसूचक वस्त्र का निर्देश भृगु ने यों किया है—'नग्नः स्यान्मलवद्वासा नग्नः कौपीनकेवलः। द्विकच्छोऽनुत्तरीयश्च अकच्छोऽवस्त्र एव च॥ नग्नः काषायवासाः स्यान्नग्नश्चार्द्रपटस्तथा। नग्नो द्विगुणवस्त्रः स्यान्नग्नो रक्तपटः स्मृतः॥ नग्नस्तु स्निग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा॥' इस लिये श्राद्धकर्ता और श्राद्धभोक्ता को ऐसे वस्त्र का त्याग करना चाहिये।

२. ऊर्ध्वपुण्ड्र करने का विकल्प इसलिये है कि कुछ वचन से उसका निषेध है और कुछ से विधान। जैसे ऊर्ध्वपुण्ड्र करने का निर्देश बृहन्नारदीय में यों है—'यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च। वृथा भवति विप्रेन्द्रा उर्ध्वपुण्ड्रं विना कृतम्॥' बृहत्पराशर ने भी कहा है—'ऊर्ध्वं च तिलकं कुर्याद् दैवे पित्र्ये च कर्मणि'। निषेध का वचन विश्वप्रकाश में है—'ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा। श्राद्धकर्ता न कुर्वीत यावत्पिण्डान्न निर्वपेत्॥' संग्रहे—'ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः। श्राद्धकाले तु सम्प्राप्ते कर्ता भोक्ता च तत्त्यजेत्॥' व्यास ने विकल्प का स्पष्ट प्रतिपादन किया है—'वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा। तिर्यग्वाप्यूर्ध्वपुण्ड्रं वा धारयेत्तु प्रयत्नतः॥' इति।

३. आश्वलायन ने कहा है—'प्राक् पिण्डदानाद् गन्धाद्यैर्नालंकुर्यात् स्वविग्रहम्।' देवल का—'ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च। निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्॥' यह वचन भी गन्ध से त्रिपुण्ड नहीं करने के विषय में ही है।

४. पृथ्वीचन्द्रोदय में ब्रह्मपुराण का वचन है—'सदर्भेण तु हस्तेन यः कुर्यात्तिलकं बुधः। आचम्य स विशुद्ध्येत दर्भत्यागेन चैव हि॥' इति।

५. अपरार्क में यम का वचन है—'केतनं कारयित्वा तु योऽतिपातयति द्विजम्। ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते॥ आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत्। अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते॥' प्रमाद से त्याग करने पर हारीत की उक्ति है—'प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः। तर्पयित्वा यथान्यायं सर्वं तत्फलमश्नुते॥' प्रमादाभाव में नारायण का वचन है—'एतस्मिन्नेनसि प्राप्ते ब्राह्मणे नियतः शुचिः। यतिचान्द्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते॥' इति।

आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चाण्डालेष्वभिजायते ॥
आमन्त्रितस्तु यः श्राद्धे विलम्बं कुरुते द्विजः ।
देवद्रोही पितृद्रोही पच्यते नरकेषु सः ॥

स्त्रीसङ्गः[1] पुनर्भोजनं च श्राद्धपूर्वरात्रावपि कर्तृभोक्तृभ्यां वर्ज्यम् ।

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः ।
सायं संध्यामुपासीत जपेच्च जुहुयादपि ॥
सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।
औपासनादिकं होमं न कुर्यात् किंतु कारयेत् ॥
निमन्त्रितस्तु न श्राद्धे कुर्याद्भार्यादिताडनम् ।

भोजन के लिये जो आमन्त्रित ब्राह्मण दूसरे के यहां भोजन के लिये चला जाता है वह सैकड़ों नरकों में जाकर चाण्डालयोनि में उत्पन्न होता है। जो आमन्त्रित ब्राह्मण श्राद्ध में विलम्ब करता है वह देवद्रोही पितृद्रोही नरकों में पकाया जाता है। स्त्रीप्रसंग और पुनर्भोजन श्राद्ध के पूर्व रात्रि में कर्ता और भोक्ता त्याग दे। श्राद्धभोजी ब्राह्मण गायत्री-मन्त्र से दस बार जल पिये। सायं सन्ध्योपासन जप और होम करे। सूतक में, परदेश में, श्राद्धभोजन में असमर्थ होने पर औपासन आदि होम नहीं करे, किन्तु दूसरे से करा दे। श्राद्ध में निमन्त्रित ब्राह्मण भार्या आदि का ताड़न नहीं करे।

अपराह्णाख्यमुहूर्तत्रये वनस्पतिच्छेदं दधिमन्थनं सर्वैर्न कार्यम् । यदा कर्तुरशक्त्या तत्पुत्रशिष्यादिः[2] प्रतिनिधिः श्राद्धं करोति तदा यजमानप्रतिनिधिभ्यामुभाभ्यां पूर्वोक्ताः सर्वे कर्तृनियमाः कार्याः ।

मुक्तकच्छा तु या नारी मुक्तकेशी तथैव च ।
हसते वदतेऽत्यन्तं निराशाः पितरो गताः ॥
सवर्णं प्रेषयेदाप्तं द्विजानां तु निमन्त्रणे ।
अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ॥
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् । वृषलः = शूद्रः ।

---

१. आश्वलायनः—'श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वाऽपि निमन्त्रितः । उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥ भोक्ष्यन् करिष्यन् श्वः श्राद्धं पूर्वरात्रौ प्रयत्नतः । व्यवायं भोजनं चापि ऋतावपि विवर्जयेत् ॥' विज्ञानेश्वर ने श्राद्ध में ऋतुकाल में पत्नीगमन का दोषाभाव कहा है, उसे अगतिकगति में जानना चाहिये। बृहस्पति ने विशेष कहा है—'द्विनिशं ब्रह्मचारी स्याच्छ्राद्धकृद् ब्राह्मणैः सह । अन्यथा वर्तमानौ तु स्यातां निरयगामिनौ ॥ पुनर्भोजनमध्वानं भारमायासमैथुनम् । श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद् विवर्जयेत् ॥ स्वाध्यायं कलहं चैव दिवास्वापं तथैव च ।' इति ।

२. हेमाद्रि में वाराहकी उक्ति है—'न शक्नोति स्वयं कर्तुं यदा ह्यनवकाशतः । श्राद्धं शिष्येण पुत्रेण तदाऽन्येनापि कारयेत् ॥ नियमानाचरेत् सोऽपि नियतांश्च वसुन्धरे । यजमानोऽपि तान् सर्वानाचरेत् सुसमाहितः ॥' आदिपद से ब्राह्मण का ग्रहण है, जैसा स्कन्दपुराण में कहा है—'राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः । व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत् ॥' इति ।

अपराह्न के तीन मुहूर्त में वनस्पति का छेदन तथा दधिमन्थन सभी को नहीं करना चाहिये। जब जपकर्ता श्राद्ध करने में अशक्त हो तो उसके पुत्र-शिष्य आदि प्रतिनिधि होकर श्राद्ध करता है तब यजमान और प्रतिनिधि दोनों को कर्ता के पूर्वोक्त सभी नियम पालन करना चाहिये। मुक्तकक्षा नारी तथा मुक्तकेशी स्त्री हंसती और बोलती है तब पितृगण निराश होकर चले जाते हैं। ब्राह्मणों को निमन्त्रण देने के लिये आप्त सवर्ण ब्राह्मण को भेजे। शूद्र के द्वारा निमन्त्रित ब्राह्मण का अन्न भोज्य नहीं होता। उसी प्रकार ब्राह्मण के द्वारा निमन्त्रित शूद्र का अन्न भोजनयोग्य नहीं होता। यहां वृषल का शूद्र अर्थ है।

## अथ श्राद्धे ब्राह्मणसंख्या

वैश्वदेवे समाः पित्र्ये विषमाः। तेन द्वौ वैश्वदेवे त्रयः पितृपार्वणे इति पञ्च-विप्राः, अथवा चत्वारो दैवे पार्वणे तु पित्रादीनामेकैकस्य त्रयस्त्रय इति त्रयोद-शविप्राः। यद्वा पित्रादेरेकैकस्य पञ्चेत्येकोनविंशतिः। किं वा एकैकस्य सप्तेति पञ्च-विंशतिः। एवं दर्शादौ पार्वणाधिक्ये विप्राधिक्यमूह्यम्। तथा च वैश्वदेवे द्वौ चतुरो वोपवेश्य पित्रादिष्वेकैकस्य स्थाने एकं त्रीन् पञ्च सप्त नव वोपवेश-येदिति निष्कर्षः।

वैश्वदेव में सम और पित्र्य में विषम ब्राह्मण होते हैं। इसलिये वैश्वदेव में दो और पितृपार्वण में तीन अर्थात् पांच ब्राह्मण, अथवा विश्वेदेव में चार और पिता आदि एक-एक के लिये तीन-तीन ब्राह्मण, इस प्रकार तेरह ब्राह्मण होते हैं। अथवा पिता आदि एक-एक के लिये पांच-पांच, इस प्रकार उन्नीस ब्राह्मण होते हैं। या एक-एक के लिये सात-सात रहें तो पच्चीस ब्राह्मण होते हैं। इसी प्रकार दर्श आदि श्राद्ध में पार्वण के आधिक्य से ब्राह्मणों के आधिक्य की कल्पना कर ले। इससे यह निष्कर्ष निकला कि वैश्वदेव में दो या चार को बैठावे और पिता आदि एक-एक के स्थान में एक-तीन-पांच-सात अथवा नव बैठावे।

'सत्क्रियां देशकालौ च द्रव्यब्राह्मणसंपदम्। शौचं च विस्तरो हन्ति' इति पक्षे अशक्तौ वा दैवे एकः पितृपार्वणे चैक इति द्वौ विप्रौ। तदुक्तं श्रीभागवते—

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम्[1]॥
देशकालोचितश्रद्धाद्रव्यपात्रार्हणानि च।
सम्यग्भवन्ति नैतानि विस्तरात्स्वजनार्पणात्॥ इति।

एतेन द्वौ दैवे एकः पित्र्ये इति विप्रत्रयपक्षो निर्मूलो वेदितव्यः।

द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत्।
पित्र्ये तूदङ्मुखांस्त्रींश्च ऋग्यजुःसामवेदिनः॥

---

१. मनु ने भी कहा है—'द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा। भोजयेत् सुसमृद्धोऽपि न प्रसज्जेत विस्तरे॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः। पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्॥' इति।

सत्कार, देश, काल, द्रव्य, ब्राह्मणसम्पत्ति, शौच—ये विस्तार करने से नष्ट होते हैं। इस पक्ष में या असमर्थावस्थामें दैव में एक और पितृपार्वण में एक, इस प्रकार दो ब्राह्मण बैठावे। इसे श्रीमद्भागवत में लिखा है कि दैव में दो, पितृकार्य में तीन, अथवा दोनों जगह एक एक ब्राह्मण समृद्ध भी हो तो खिलावें, श्राद्ध में विस्तार न करे। देश, काल, उचित श्रद्धा, द्रव्य, पात्रोंकी पूजा—ये सब विस्तार से तथा स्वजनों के अधीन करने से अच्छी तरह नहीं होते। इससे दैव में दो, पित्र्य में एक, यह विप्रत्रय-पक्ष निर्मूल जानना चाहिये। दैव में दो अथर्ववेत्ता ब्राह्मणों को पूर्वमुख बैठावे और पित्र्य में तो उत्तराभिमुख तीन ऋग्वेदी-यजुर्वेदी-सामवेदियों को बैठावे।

अत्यशक्तौ[1] पार्वणद्वये एको विप्रः। यदैक एव विप्रस्तदा विश्वेदेव-स्थाने शिवलिङ्गं शालग्रामं संस्थाप्य सर्वं श्राद्धं समाचरेत्। देवान्नं तत्क्षिपेदग्नौ दद्याद्वा ब्रह्मचारिणे। स्थानत्रये एको विप्र इति पक्षः सपिण्डीकरणादन्यत्र[2]। सपिण्डीकरणे तु पार्वणे त्रय एव विप्राः। वृद्धिश्राद्धे तु दैवे द्वौ प्रतिपार्वणं द्वावेवमष्टौ निकृष्टपक्षे। संपदि दैवे चत्वारः प्रतिपार्वणं चत्वार इति षोडशेत्येवं दैवे पित्र्ये च समा विप्रा इति विशेषः।

सर्वथा ब्राह्मणालाभे कृत्वा दर्भमयान्बटून्[3]।
प्रेषानुप्रेषसंयुक्तं सर्वं श्राद्धं प्रकल्पयेत्॥

अत्यन्त अशक्त होने पर दो पार्वण में एक ब्राह्मण को निमन्त्रित करे। जब एक ही ब्राह्मण है तो विश्वेदेवके स्थान में शिवलिंग या शालग्राम को स्थापित कर सब श्राद्ध करे। देवान्न को अग्नि में छोड़ दे या ब्रह्मचारी को दे दे। तीन के स्थान में एक ब्राह्मण वाला पक्ष सपिण्डीकरण श्राद्ध से भिन्न का है। सपिण्डीकरण में तो पार्वण में तीन ही ब्राह्मण होने चाहिये। वृद्धि-श्राद्ध में तो दैव में दो ब्राह्मण और प्रतिपार्वण में दो-दो, इस तरह आठ हुए यह निकृष्ट पक्ष में है। सम्पत्ति हो तो दैव में चार और प्रतिपार्वण में चार, इस प्रकार सोलह होते हैं अर्थात् दैव-पितृ-कर्म में सम ब्राह्मण होते हैं, यह विशेष है। सर्वथा ब्राह्मण के न मिलने पर कुशमय बटुओं को बनाकर प्रेष अनुप्रेष से युक्त सभी श्राद्धों की कल्पना कर ले।

---

१. हेमाद्रि में देवल की उक्ति है—'एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत्। षडर्घ्यान् दापयेत्तत्र षड्भ्यो दद्यात्तथा हविः॥' गोभिलः—'यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत्। ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते॥' इति।

२. आश्वलायन का कथन है—'न त्वेवैकं सर्वेषां काममनाद्ये' इसका अर्थ नारायणवृत्ति में यों हैं—'आद्यं सपिण्डीकरणं तद्वर्ज्येषु श्राद्धेषु कामं त्रयाणामेकं भोजयेत्, सपिण्डीकरणे तु नियतं त्रिभिर्भवितव्यम्'। कारिका में भी कहा है—'दैवे पित्र्येऽथ वैकैकं सपिण्डीकरणं विना।' इति।

३. मनुष्यप्रतिकृतिः कुशसमूहो वटुः। यहाँ कुश के अग्रभाग से मुख की कल्पना करके दैवश्राद्ध में पूर्वमुख और पितृश्राद्ध में उत्तरमुख करके रखना चाहिये। कुशवटु में हाथ पैर आदि अवयवों का होना सम्भव नहीं है, फिर भी कर्मकाल में स्मरण के लिये उल्लेख है। प्रेषानुप्रेषसंयुक्त श्राद्धेतिकर्तव्यताकाण्ड स्वयमेव करे। हेमाद्रि में सत्यव्रत ने भी कहा है—'निधाय दर्भनिचयमासनेषु समाहितः। प्रेषानुप्रेषसंयुक्तं सर्वं श्राद्धं प्रकल्पयेत्॥' दर्भवटु में दर्भ की संख्या निश्चित नहीं है, जैसा कात्यायन ने कहा है—'यज्ञवास्तुनि मुष्टौ च स्तम्भे दर्भवटौ तथा। दर्भसंख्या न विहिता विष्टरास्तरणेषु च॥' इति।

अत्र विप्रानुकूल्यरूपदृष्टप्रयोजनाभावेऽप्यदृष्टार्थं दक्षिणा देया। एवं यतेः श्राद्धोपवेशनेऽपि। सा च दक्षिणा कालान्तरेऽन्यस्मै[1] प्रतिपादनीया।

अथवाभ्यर्चितं लिंगं शालग्राममथापि वा।
संस्थाप्य देवपित्रर्थं पीठे श्राद्धं चरेन्नरः॥
पितरस्तस्य तिष्ठन्ति कल्पकोटिशतं दिवि।
निमन्त्रणं तु विप्राणां पूर्वेद्युः सद्य एव वा॥
कुर्याद्विप्रांश्च नियमाञ्छ्रावयेत् पैतृकान् बुधः।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः॥
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा। इति।

इसमें ब्राह्मण का आनुकूल्यरूप दृष्टप्रयोजन के न होने पर भी अदृष्ट के लिये दक्षिणा देनी चाहिये। एवं यति को श्राद्ध में बैठाने पर भी दक्षिणा दे और वह दक्षिणा दूसरे समय में दूसरे को दे दे। अथवा पूजित-लिंग या शालग्राम को स्थापित कर देव-पितृ के लिये पीठ पर श्राद्ध करे। उनके पितर इस श्राद्ध से कल्पकोटिपर्यन्त स्वर्ग में रहते हैं। ब्राह्मणों का निमन्त्रण तो पहिले दिन या तुरन्त करे और ब्राह्मणों को पैतृक-श्राद्ध के नियमों को सुना दे—क्रोधरहित, शौचयुक्त और निरन्तर ब्रह्मचारी, आप लोगों को और श्राद्धकर्ता मुझे भी होना चाहिये।

### अथ सामान्यतः श्राद्धपरिभाषा

निपात्य दक्षिणं जानुं देवान् परिचरेत्सदा।
पितॄणां परिचर्या तु वामजानुनिपातनात्॥
प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम्।
पितॄणां द्विगुणा भुग्ना दर्भा दैवे ऋजुत्वगाः॥
दैवे तूदङ्मुखः कर्त्ता पित्र्ये स्याद्दक्षिणामुखः।

संकल्पे[2] क्षणदाने पाद्ये आसने आवाहनेऽर्घ्यदाने गन्धाद्याच्छादनान्तपञ्चोपचारेऽन्नदाने पिण्डदानेऽञ्जनाभ्यञ्जनयोरक्षय्ये स्वधावाचने च सम्बन्धगोत्रनामोच्चारणमावश्यकमन्यत्र कृताकृतम्।

---

१. कात्यायन ने माता, पिता, पति, बहिन, गुरु आदि और राजा को दक्षिणादान का निषेध किया है और कहा है कि इन लोगों की शुश्रूषा ही दक्षिणा है—'पितृमातृपतिभ्रातृस्वसृगुर्वादिभूभुजाम्। दक्षिणा न हि दातव्या शुश्रूषा विहिता च सा॥' यहां आदि पद से यति आदि ग्राह्य हैं। विप्र के उद्देश्य से दी गयी दक्षिणा तत्काल दे देनी चाहिये, कालान्तर में देने पर द्विगुणित करके देना ब्रह्मवैवर्त में कहा है—'दक्षिणा विप्रमुद्दिश्य तत्कालं चेन्न दीयते। एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत्॥' इति।

२. परिशिष्टे—'क्षणे च पिण्डदाने च गन्धधूपाक्षये तथा। संकल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा॥ अन्नार्घ्यदानाद्यन्तेषु गोत्रं नाम च कीर्तयेत्।' संग्रहे—'आसनावाहने पाद्ये अन्नदाने तथैव च। अक्षय्ये पिण्डदाने च षट्सु नामानि कीर्तयेत्॥' मत्स्यपुराणे—'सम्बन्धं प्रथमं ब्रूयाद् गोत्रं नाम तथैव च। पश्चाद् रूपं विजानीयात् क्रम एष सनातनः॥' इति।

दाहिना ठेहुना गिराकर सदा देवता की पूजा करे। पितरों की परिचर्या तो बायें ठेहुने को गिराकर करे। देवताओं का कृत्य प्रदक्षिणक्रम से और पितरों का वामक्रम से होता है। पितरों के कुश द्विगुण भुग्न और विश्वेदेव के सीधे होते हैं। दैवकृत्य में कर्ता उत्तरमुख और पितृकर्म में दक्षिणाभिमुख बैठे। संकल्प-क्षणदान-पाद्य-आसन-आवाहन-अर्घ्यदान में, गन्धादि आच्छादनपर्यन्त पंचोपचार में, अन्नदान में, पिण्डदान में, अंजन और अभ्यंजन में, अक्षय्य में और स्वधावाचन में, सम्बन्ध-गोत्र-नामका उच्चारण आवश्यक है और अन्यत्र करना न करना बराबर है।

संबन्धगोत्रनामरूपाणीति संबन्धनामगोत्ररूपाणीति वोच्चारणे क्रमः। तत्र 'सकारेण तु वक्तव्यं गोत्रं सर्वत्र 'धीमता' इति वाक्यात्काश्यपसगोत्रस्य काश्यपगोत्रस्येति वोच्चारः। केचिच्छाखाभेदाद् व्यवस्थामाहुः।

गोत्रस्य त्वपरिज्ञाने [2]काश्यपं गोत्रमुच्यते।
शर्मान्तं विप्रनामोक्तं वर्मान्तं क्षत्रियस्य तु॥
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः।

पित्रादिनामाज्ञाने तु तातपितामहप्रपितामहेत्येवं ब्रूयात्, न नामोच्चारयेदित्याश्वलायनः[3]। शाखान्तरे तु पितुर्नाम्नः स्थाने पृथिवीषदिति पितामहस्यान्तरिक्षसदिति प्रपितामहस्य दिविषदिति[4] नामोच्चार्यम्। स्त्रीणां दान्तं नाम सावित्रीदेत्येवमुच्चार्यम्। केचिद्देवीशब्दान्तमाहुः। अन्ये देवीदापदयोः समुच्चयमूचुः।

उच्चारण में सम्बन्ध-गोत्र-नाम-रूप यह, अथवा सम्बन्ध-नाम गोत्र-रूप, यह क्रम है। वहां—बुद्धिमान् सर्वत्र सकार के साथ गोत्र का उच्चारण करे—इस वाक्य के अनुसार 'काश्यपसगोत्रस्य' या 'काश्यपगोत्रस्य' ऐसा कहे। कुछ लोग शाखाभेद से व्यवस्था बतलाते हैं। गोत्र के न जानने पर काश्यप-गोत्र कहे। शर्मान्त ब्राह्मण का नाम, वर्मान्त क्षत्रिय का, गुप्तान्त वैश्य का और दासान्त शूद्र का नाम कहे। पिता आदि के नाम न जानने पर तो तात-पितामह-प्रपितामह ऐसा ही कहे नाम का उच्चारण न करे, यह आश्वलायन कहते हैं। दूसरी शाखा में तो पिता के नाम के स्थान में 'पृथिवीषत्' पितामह के नाम के स्थान में 'अन्तरिक्षसत्' और प्रपितामह के नाम के स्थान में 'दिविषत्' ऐसा उच्चारण करे। स्त्रियों का दकारान्त नाम—'सावित्रीदा' ऐसा ही उच्चारण करे। कुछ लोग देवीशब्दान्त नाम कहते हैं। अन्य लोग देवी और दा-पद का समुच्चय बतलाते हैं।

---

१. मत्स्यपुराण के इस वचन का उत्तरार्ध यों है—'सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत्।' जैसे उदाहरण है—'पराशर-सगोत्रस्य वृद्धस्य तु महात्मनः। भिक्षोः पञ्चशिखस्याहं शिष्यः परमधार्मिकः॥' इति।

२. स्मृत्यन्तर का पूरा वचन इस प्रकार है—'गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते। यस्मादाह श्रुतिः सर्वाः प्रजाः काश्यपसम्भवाः॥' सत्याषाढ का—'अज्ञातबन्धोः पुरोहितगोत्रेणाचार्यगोत्रेण वा' यह वचन तो विवाहपरक है।

३. आश्वलायन का सूत्र है—'यदि नामान्यविद्वांस्ततपितामहप्रपितामहेति ब्रूयात्। कारिका में भी कहा है—'नामानि चेन्न जानीयाचतेत्यादि वदेत् क्रमात्॥' इति।

४. बौधायनः—'पृथिवीषत् पिता वाच्यस्तत्पिता चान्तरिक्षसत्। अभिधानापरिज्ञाने दिविषत् प्रपितामहः॥ पित्रादीनां यदा पुत्रैर्नाम न ज्ञायते तदा।' इति।

## अथ संकल्पादौ विभक्तिविचारः

विभक्तिभिस्तु यत्किंचिद्दीयते पितृकर्मणि।
तत्सर्वं सफलं ज्ञेयं विपरीतं निरर्थकम्॥
षष्ठीविभक्त्या संकल्पः क्षणश्चाक्षय्यकर्म[1] च।
षष्ठ्या वा स्याच्चतुर्थ्या वासनदानं द्विजातये॥
द्वितीययावाहनं स्याद्विभक्तिस्तु चतुर्थिका॥
अन्नदाने पिण्डपूजास्वधास्वस्तीति वाचने।
पिण्डदाने तु संबुद्धिर्ये च त्वेत्यादितः पुरा॥
ततः परं चतुर्थी चेत्युभयं सर्वसंमतम्।
शेषाणि सर्वकर्माणि संबुद्धयन्ते यथायथम्॥
इदं ते वा इदं वो वा प्रयुज्यैव समाचरेत्।

विभक्तियों से तो जो कुछ पितृकर्म में दिया जाता है उन सब को सफल जानना चाहिये, इसके विपरीत निरर्थक होता है। संकल्प, क्षण और अक्षय्य कर्म, षष्ठी विभक्ति से होता है। द्विजाति के लिये षष्ठी या चतुर्थी विभक्ति से आसनदान और द्वितीया विभक्ति से आवाहन होता है। अन्नदान, पिण्डपूजा, स्वधावाचन और स्वस्तिवाचन में चतुर्थी विभक्ति होती है। पिण्डदान में सम्बुद्धि 'ये च त्वा' इत्यादि से पहिले और उसके बाद चतुर्थी होती है। ये दोनों प्रकार सर्वसम्मत है। इसके अतिरिक्त सब कर्मों में सम्बोधन के अन्त में 'हे पितः' इत्यादि यथोचित कहे। 'इदं ते' अथवा 'इदं वः' ऐसा प्रयोग करके कर्म करे।

## अथ सव्यापसव्यविचारः

सव्येन[2] दैवं कर्म स्यादपसव्येन पैतृकम्॥
विप्रप्रदक्षिणाविप्रस्वागतं चार्घ्यदानकम्।
सूक्तस्तोत्रजपोऽन्नस्य पात्रेषु परिवेषणम्॥
आह्वानमन्नस्याघ्राणं तथा च स्वस्तिवाचनम्।
ताम्बूलदानमारभ्यासमाप्तेरिति पैतृकम्॥
प्रदक्षिणाद्येतदुक्तं सव्येनैव समाचरेत्।
देवार्चा दक्षिणादिः स्यात् पादजान्वंसमूर्धसु॥
शिरोंसजानुपादेषु वामाङ्गादिषु पैतृके।

अक्षय्यासनार्घ्यवर्ज्यं स्वधाकारेण पितृभ्यः सर्वं दानम्। देवेभ्यः स्वाहापदेन। दैवतीर्थेन दैवं तत्पितृतीर्थेन पैतृकम्।

---

१. चन्द्रिका और स्मृत्यर्थसार में नारदीय वचन है—'अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा। अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः॥' इति।

२. जमदग्निः—'सूक्तस्तोत्रजपं त्यक्त्वा पिण्डाघ्राणं च दक्षिणाम्। आह्वानं स्वागतं चार्घ्यं विना च परिवेषणम्॥ विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा। विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना॥ पितॄनुद्दिश्य कर्तव्यं प्राचीनावीतिना सदा।' इति।

सव्य से दैवकर्म और अपसव्य से पितृकर्म होता है। ब्राह्मण की प्रदक्षिणा, ब्राह्मण का स्वागत और अर्घ्यदान तथा सूक्त-स्तोत्र का जप, अन्न को पात्रों में परोसना, आवाहन, अन्न का सूंघना और स्वस्तिवाचन, ताम्बूलदान से लेकर समाप्ति तक पैतृक कर्म है। यह प्रदक्षिणा आदि सव्य से ही करे। देवताओं की पूजा, दक्षिण पैर, जानु, कन्धा और सिर में तथा पितृकर्म की पूजा--सिर, कन्धा, जानु और पैरों में वामांग आदि में होती है। अक्षय्य, आसन और अर्घ्य को छोड़कर स्वधाकार से पितरों का सब दान होता है। स्वाहाशब्द से देवताओं का सब दान किया जाता है। दैवतीर्थ से दैवकर्म और पितृतीर्थ से पितृकर्म होता है।

## अथाचमनविचारः

श्राद्धारम्भे[1] द्विराचमनं विप्रपादक्षालनान्ते स्वपादक्षालनपूर्वकं द्विराचमनम्। देवार्चनान्ते पित्रर्चनान्ते चैकैकमाचमनमाघ्राणान्ते एकं विकिरदानान्ते द्विरेकं वा श्राद्धान्ते स्वपादक्षालनपूर्वकं द्विराचमनमिति। अन्ये भस्ममर्यादान्ते करशुद्धयन्ते उच्छिष्टचालनान्ते चाप्येकैकमाहुः। अथ भोक्तुः पादशौचान्ते द्विराचमनं पाणिहोमान्ते एकं भोजनान्ते द्विरिति।

श्राद्ध के आरम्भ में दो आचमन और ब्राह्मण के पैर धोने के बाद अपना पैर धोकर दो आचमन करे। देवार्चन और पितृपूजन के अन्त में एक-एक आचमन पिण्ड, सूंघने के अन्त में एक, विकिरदान के अन्त में दो या एक, श्राद्ध के अन्त में अपना पैर धोने के बाद दो आचमन करे। अन्य लोग—भस्म मर्यादा के अन्त में, करशुद्धि के अन्त में और उच्छिष्ट-चालने के अन्त में एक-एक आचमन करे—ऐसा कहते हैं। भोक्ता का पादप्रक्षालन के अन्त में दो, पाणिहोम के अन्त में एक और भोजनान्त में दो आचमन है।

## अथ दर्भत्यागविचारः

आचान्तः प्राक्कुशांस्त्यक्त्वा पाणावन्यांश्च धारयेत्। तथा च—श्राद्धारम्भे धृतान्दर्भान्पाद्यान्ते च विसर्जयेत्[2]। ततो देवार्चनान्ते पित्रर्चनान्ते पिण्डशेषाघ्राणान्ते विकिरदानान्ते श्राद्धान्ते च पूर्वधृतदर्भांस्त्यजेत्। श्राद्धसागरादिप्रयोगे तु पित्रर्चनान्ते दर्भत्यागो न दृश्यते। तेन क्वचिदाचमनेऽपि दर्भत्यागो नेति भाति।

---

१. हेमाद्रि में संग्रह का वचन है—'श्राद्धारम्भेऽवसाने च पादशौचार्चनान्तयोः। विकिरे पिण्डदाने च षट्स्वाचमनमिष्यते॥' तत्रैव—'आदौ विप्राङ्घ्रिशौचान्तेऽभ्यर्चने विकिरे कृते। पिण्डान्तुप्यार्चयित्वा च विसर्ज्य ब्राह्मणांस्तथा॥ आचामेच्छ्राद्धकर्ता च स्थानेष्वेतेषु सप्तसु। आद्यन्तयोर्द्विराचामेच्छेषेषु तु सकृत्सकृत्॥' इति।

२. कालिका में स्मृत्यन्तर वचन से स्पष्ट है—'श्राद्धारम्भे तु ये दर्भाः पादशौचे विसर्जयेत्। अर्चनादौ तु ये दर्भा उच्छिष्टान्ते विसर्जयेत्॥ मार्जनादौ तु ये दर्भाः पिण्डोत्थाने विसर्जयेत्। उत्थानादौ तु ये दर्भा दक्षिणान्ते विसर्जयेत्॥ प्रार्थनादौ तु ये दर्भा नमस्कारे विसर्जयेत्।' श्राद्ध में हरे कुशों का अधिक महत्त्व है इसलिये जिस दिन श्राद्ध हो उसी दिन के उखाड़े गये कुशों से श्राद्ध-कृत्य सुसम्पन्न करना चाहिये। कुश का ग्राह्य, अग्राह्य और भेदसम्बन्धी वचन पहले यथास्थान दिखाये गये हैं वहाँ देखें।

आचमन करने के पहिले पुराने कुशों को त्याग कर दूसरे कुशों को धारण करे। कहा है—श्राद्ध के आरम्भ में धृत कुशों को पाद्य के अन्त में त्याग दे। इसी प्रकार देवार्चन के अन्त में, पितृपूजन के अन्त में, पिण्डशेष सूंघने के अन्त में, विकिरदान के अन्त में और श्राद्ध के अन्त में, पहिले के धारण किये हुए कुशों को त्याग दे। श्राद्धसागर आदि प्रयोग में तो पितृपूजन के अन्त में कुश का त्याग नहीं दिखाई देता। इससे आचमन में दर्भत्याग नहीं होता, ऐसा प्रतीत होता है।

## अथ ऊहविचारः

यत्र बहुवचनान्तः पितृशब्दस्तत्र पितृशब्दस्य सर्वपितृवाचित्वादूहो न। यथार्घ्यपात्रे पितृनिमान्प्रीणयेत्यत्र मात्रादिश्राद्धे मातृनिति न वदेत्। तत्रापि शुन्धनमन्त्रेषु शुन्धन्तां पितरः शुन्धन्तां पितामहा इत्यादि शुन्धन्तां मातरः इत्यादि चोह एव। बहुवचनं तु नोह्यते प्रथममन्त्रे एव पूज्यत्वार्थकत्वात्। ऋचं नोहेदिति निषेधादृङ्मन्त्रेषु नोहः। पिण्डदाने ये च त्वामत्रानु तेभ्यश्चेत्यत्र मातृश्राद्धे याश्च त्वामत्रानु ताभ्यश्चेति न वदेत्। स्त्रीणां स्त्रियः पुरुषाश्चानुगा इति पुमान्स्त्रियेति पुंल्लिङ्गशेषादिति वृत्तिकृत्। अन्ये तु याश्चेत्याद्यूहमाहुः।

जहां बहुवचनान्त पितृशब्द है वहां पितृशब्द का सब पितृवाची होने से ऊह नहीं होता। जैसे अर्घ्यपात्र में 'पितृन् इमान्प्रीणय' यहां पर माता आदि के श्राद्ध में 'मातृन्' ऐसा न कहे। वहां भी शुन्धनमन्त्रों में 'शुन्धन्तां पितरः' 'शुन्धन्तां पितामहाः' इत्यादि और 'शुन्धन्तां मातरः' इत्यादि ऊह होता ही है। बहुवचन का तो ऊह नहीं होता, क्योंकि वह पहिले मन्त्र में ही पूज्यत्व के लिये है। 'ऋचं नोहेत' अर्थात् ऋचा में ऊह न करे, इस निषेध से ऋक्-मन्त्रों में ऊह नहीं होता। पिण्डदान में 'ये च त्वामत्रानु तेभ्यश्च' यहां पर मातृश्राद्ध में 'याश्च त्वामत्रानु ताभ्यश्च' ऐसा न कहे। स्त्रियों के स्त्रियां और पुरुष अनुगामी होते हैं अतः 'पुमान् स्त्रिया' इस सूत्र से पुल्लिंग का शेष होनेसे ऊह करने की आवश्यकता नहीं, ऐसा वृत्तिकार का मत है। अन्य लोग तो 'याश्च' इत्यादि ऊह करना कहते हैं।

मात्रादिद्वित्वे पिण्डदाने एतद्वामस्मन्मातरौ यज्ञदाश्रीदे ये च युवामत्रान्वित्येकं पिण्डं दत्त्वाऽस्मन्मातृभ्यां० अयं पिं० इत्यादि। अभ्यञ्जनेऽस्मन्मातरौ० अभ्यञ्जाथां०, अञ्जने अञ्जाथाम्। एवं पितामहीप्रपितामहीद्वित्वेऽप्यूहः। अथ बहुत्वे एतद्वोऽस्मन्मातरो यज्ञदे श्रीदे रुद्रदे यथानामगोत्रा ये च युष्मानत्रान्वित्येकपिण्डदानादि। अभ्यञ्जनेऽभ्यङ्ध्वम्, अञ्जने अङ्ध्वमित्यादि। एकनामत्वे एकमेव नाम द्विवचनान्तं बहुवचनान्तं वा वदेत्।

माता आदि के दो होने पर भी पिण्डदान में 'एतद् वामस्मन्मातरौ यज्ञदाश्रीदे ये च युवां' यहां अन्वित एक पिण्ड देकर 'अस्मन्मातृभ्यां० अयं पिण्ड०' इत्यादि ऊह करे। अभ्यञ्जन में अस्मन्मातरौ० अभ्यंजाथां०' और अञ्जन में अञ्जाथां' ऐसा कहे। इसी प्रकार पितामही-प्रपितामही के दो होने पर भी ऊह होता है। बहुत के होने पर 'एतद् वो अस्मन्मातरो यज्ञदे श्रीदे रुद्रदे यथानामगोत्रा ये च युष्मान्' ऐसा अन्वित एक पिण्डदानादि करे। अभ्यञ्जन में 'अभ्यङ्ध्वम्' तथा अंजन में 'अंङ्ध्वम्' इत्यादि ऊह करे। एक नाम होने पर भी एक ही नाम द्विवचनान्त या बहुवचनान्त कहे।

एवमर्घ्यदानकालेऽप्यस्मन्मातरावित्याद्यूहेन संबोध्य इदं वामर्घ्यमिदं वोऽर्घ्यमित्यूहो बोद्धव्यः। तथा च आयन्तु नः पितरः सो० तिलोसि सोमदेवत्यो०

उशन्तस्त्वा नि० । पिण्डानुमन्त्रणदशादानोपस्थानप्रवाहणप्राशनादिमन्त्रेषु बहुवचनान्तपितृपदयुक्तत्वादिहेतोर्नोह[1] इति सिद्धम् ।

इसी प्रकार अर्घ्यदान काल में भी 'अस्मन्मातरौ' इत्यादि ऊह से सम्बोधित करके 'इदं वाम् अर्घ्यं' 'इदं वोर्घ्यं' इत्यादि ऊह जानना चाहिये । इसी तरह 'आयन्तु नः पितरः सो०, तिलोसि सोमदैवत्यो०, उशन्तस्त्वा नि०' । पिण्डानुमन्त्रण, दशादान, उपस्थान, प्रवाहण और प्राशन आदि मन्त्रों में बहुवचनान्त पितृपदयुक्त आदि हेतु से ऊह नहीं होता, यह सिद्ध हुआ ।

नाप्रोक्षितं स्पृशेद्वस्तु न वदेन्मानुषीं गिरम् ।
न चोद्वीक्षेत भुञ्जानं न चैवाश्रूणि पातयेत् ॥
दैवे पित्र्ये च सर्वत्र जपहोमादिकर्मसु ।
मौनं कुर्यात्प्रयत्नेन सकलं फलमाप्नुयात् ॥
यदि मौनस्य लोपः स्याज्जपहोमार्चनादिषु ।
व्याहरेद्वैष्णवं[2] मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥
आदिमध्यावसानेषु श्राद्धस्येदमुदाहरेत् ।

विना प्रोक्षण किये किसी वस्तु का स्पर्श न करे और मनुष्यवाणी न बोले । भोजन करने वाले को देखे नहीं और न आंसू गिरावे । दैव-पितृ-कर्म तथा जप-होम आदि कर्म में सब जगह प्रयत्न से मौन धारण करे तो सम्पूर्ण फल प्राप्त होता है । यदि जप-होम और पूजनादि में मौन का लोप हो तो विष्णु का मन्त्र कहे या अक्षय-विष्णु का स्मरण करे । जिसके स्मरण और नाम के उच्चारण से तप, यज्ञ और क्रिया आदि की न्यूनता, सम्पूर्णता को प्राप्त होती है ऐसे अच्युत भगवान् को मैं तत्काल बन्दना करता हूँ । ऐसा श्राद्ध के आदि, मध्य और अन्त में कहे ।

## अथ संक्षेपत आश्वलायनादीनां प्रयोगक्रमः

सव्येनापसव्येन वा देशकालौ संकीर्त्यापसव्येन तत्तच्छ्राद्धार्हपितॄणां षष्ठीविभक्त्या 'एतेषाममुकश्राद्धं सदैवं सपिण्डं पार्वणविधिनैकोद्दिष्टेन वान्नेनामेन वा हिरण्येन वाश्वः सद्यो वा करिष्ये' इति संकल्पो यथासम्भवं कार्यः । सर्वत्र कुरुष्वेत्यादि यथोचितं ब्राह्मणैः प्रतिवचनं देयमेव । ततो दैवधर्मेण विप्रस्य दक्षिणजानुं स्पृष्ट्वाऽमुकपितॄणाममुकश्राद्धे अमुकविश्वेदेवार्थं त्वया क्षणः क्रियतामिति क्षणं दद्यात् । ओं तथेति विप्रो वदेत् । कर्ता प्राप्नोतु भवानिति, विप्रः प्राप्तवा-

१. स्मृत्यन्तरे—'मातुः श्राद्धेऽप्यनूहेन कुर्यात् पिण्डानुमन्त्रणम् । दशादानमुपस्थानं तद्वत्कार्यमिति स्थितिः ॥ प्रवाहणमनूहेन तद्वत्प्राशनमिष्यते ।' तथा—'आयन्तु नस्तिलोऽसीति उशन्तस्त्वेति यानि तु । अनूह्यः पितृशब्दोऽत्र पितृसामान्यवाचकः ॥' इति ।

२. पराशरः—'तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रयत्नतः । प्रोक्षयेदन्नजातं तु शूद्रदृष्ट्यादिशुद्धये ॥' वसिष्ठः—'शुद्धवतीभिः कूष्माण्डीभिः पावमानीभिश्च पाकादि प्रोक्षयेत् ।' इति ।

नीति। एवं पैतृधर्मेण वामजानुस्पर्शेनामुकश्राद्धेऽमुकस्य स्थाने त्वया क्षण इत्यादि पूर्ववत्। त्रयस्थाने एकविप्रत्वे पितृपितामहप्रपितामहानां स्थाने इत्यादि। अक्रोधनैरित्यादि प्रार्थना। अत्र सर्वत्र देवपूर्वत्वम्। क्वचित्पितृपूर्वकत्वं वक्ष्यते।

सव्य से या अपसव्य से देश और काल को कहकर अपसव्य से उन-उन श्राद्धयोग्य पितरों का षष्ठी विभक्ति से 'इन लोगों का अमुक श्राद्ध सदैव सपिण्ड पार्वणविधि से अथवा एकोद्दिष्ट विधि से कच्चे अन्न या सुवर्ण से कल्ह या तुरन्त करूंगा' ऐसा यथासम्भव संकल्प करे। सर्वत्र 'कुरुष्व' इत्यादि जैसा उचित हो ब्राह्मण प्रतिवचन दे ही। तदनन्तर दैवधर्म से ब्राह्मण के दाहिने जानु का स्पर्श करके 'अमुक-पितृणाममुक-श्राद्धे अमुक-विश्वेदेवार्थं त्वया क्षणः क्रियताम्' ऐसा कहकर निमन्त्रण दे। ब्राह्मण—'ॐ तथा' ऐसा कहे। श्राद्धकर्ता 'प्राप्नोतु भवान्' ऐसा कहे। ब्राह्मण—'प्राप्तवानि' ऐसा कहे। इसी प्रकार पितृधर्म से बाएं ठेहुने का स्पर्श करके 'अमुक-श्राद्धे अमुकस्य स्थाने त्वया क्षणः क्रियताम्' इत्यादि पूर्ववत् कहे। तीन के स्थान में एक ब्राह्मण के रहने पर 'पितृपितामहप्रपितामहानां स्थाने' इत्यादि कहे और 'अक्रोधनैः' इत्यादि प्रार्थना करे। यहां सब जगह देवपूर्वक ही श्राद्ध होता है कहीं पितृपूर्वक कहेंगे।

इदं संकल्पक्षणदानादि पूर्वेद्युः सद्यो वा कार्यम्। ततः 'कुतपे स्नातः स्नातान् धौतपादान् विप्रान्सन्निधापयेत्। ततः सव्येन तिलोदकयवोदके आचारात्कार्ये। ततः सव्येन शुद्धयर्थं प्रायश्चित्तार्थसूक्तजपः प्रदक्षिणा च। समस्तसम्पदिति नमस्कारः। अपसव्येनाचारादधिकारवाचनम्। तत आचमनप्राणायामौ सव्येन कृत्वा अपसव्येन द्वितीयः संकल्पः। केचित्सद्यःकरणपक्षे द्वितीयसंकल्पं नेच्छन्ति। ततस्तिष्ठन् सव्येनैव दैवे पित्र्ये च भवतां स्वागतमिति प्रतिविप्रं प्रश्नः पूर्ववद् द्वितीयं क्षणदानम्।

यह संकल्प क्षणदानादि पहिले दिन या उसी दिन करना चाहिये। इसके बाद दिन के आठवें मुहूर्त कुतप में स्नान करके नहाये और पैर धोये हुए ब्राह्मणों को अपने समीप में बैठावे। तदनन्तर सव्य से तिलोदक या यवोदक आचार के अनुसार करे। तत्पश्चात् सव्य से शुद्धि के लिये प्रायश्चित्तार्थ सूक्त का जप तथा प्रदक्षिणा करे। 'समस्तसम्पत्' से नमस्कार करे। अपसव्य से आचार होने से अधिकार-वाचन करे। तदनन्तर सव्य से आचमन और प्राणायाम करके अपसव्य से दूसरा संकल्प करे। कोई—सद्यःकरण पक्ष में द्वितीय संकल्प नहीं चाहते। इसके बाद खड़े होकर सव्य से ही दैव और पितृ कर्म में 'भवतां स्वागतं' ऐसा प्रत्येक ब्राह्मण से प्रश्न और पहिले की तरह द्वितीय क्षणदान करे।

अत्र बह्वृचानां गृह्याग्निमतां दर्शश्राद्धान्वष्टकापूर्वेद्युःश्राद्धेषु पिण्डपितृयज्ञव्यतिषङ्गेण श्राद्धप्रयोगो नान्येषां नापि श्राद्धान्तरेषु। स च द्वितीयक्षणदानान्तं श्राद्धतन्त्रं कृत्वा परिसमूहनादीध्माधानान्ते पिण्डपितृयज्ञतन्त्रान्ते पादक्षालनादिभस्ममर्यादान्तमग्नावग्नौकरणं कृत्वा परिवेषणादिसंपन्नवचनान्ते पिण्डदानादि पात्रोत्सर्गपर्यन्तं कृत्वा विकिरादिश्राद्धशेषं समापनीयमित्येवंरूपः। एवं

१. दिन का आठवां मुहूर्त कुतप कहलाता है—'अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा। तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥' इति।

हिरण्यकेशीयादीनामपि प्रथमसंकल्पोत्तरमग्न्युपसमाधानान्वाधानाद्याज्यसंस्कारान्ते पाद्यादिपूजान्ते तत्तन्मन्त्रोहयुतः सविस्तरोऽग्नौकरणहोमो ज्ञेयः।

यहां बह्वृच गृह्याग्नि वालों को दर्शश्राद्ध, अन्वष्टका और पूर्वेद्युःश्राद्ध में पिण्डपितृयज्ञ के व्यतिषंग (अन्योन्य सम्बन्ध) से श्राद्ध प्रयोग होता है अन्य का नहीं, और श्राद्धान्तर में भी नहीं होता। और वह—द्वितीय क्षणदानपर्यन्त श्राद्धतन्त्र को करके परिसमूहन आदि इध्माधान के अन्त में पिण्डपितृयज्ञतन्त्र के अन्त में पादप्रक्षालन आदि भस्ममर्यादान्त तथा अग्नि में अग्नौकरण करके परोसने आदि से लेकर सम्पन्नवचन के अन्त में पिण्डदान आदि पात्रोत्सर्ग करके विकिरा आदिश्राद्ध को समाप्त करे—इसी रूप का है। इसी प्रकार हिरण्यकेशीय आदि का भी प्रथम संकल्प के बाद अग्नि का उपसमाधान-अन्वाधान आदि घृतसंस्कार के अन्त में और पाद्य आदि की पूजा के अन्त में उन-उन मन्त्रों का ऊहयुक्त विस्तृत अग्नौकरणहोम जानना चाहिये।

## अथ पाद्यविवेचनम्

अङ्गणे श्राद्धदेशद्वारे वा चतुरस्रं द्विहस्तं प्रादेशमात्रं वोदक्प्लवं देवमण्डलं[1] कृत्वा ततो दक्षिणे षडंगुलं त्यक्त्वा दक्षिणाप्लवं चतुर्हस्तं वितस्तिमात्रं वा पितृमण्डलं वर्तुलं सव्यापसव्यप्रादक्षिण्यादिदैवपैतृधर्मेण गोमूत्रगोमयाभ्यां कार्यम्। यथायथं दर्भयवतिलगन्धपुष्पैस्तदर्चनम्। मण्डलसमीपे पीठे उपविष्टस्यैव प्राङ्मुखस्य विप्रस्य पादयोरुदङ्मुखः प्रत्यङ्मुखो वा कर्ताऽमुकसंज्ञका विश्वेदेवा इदं वः पाद्यं स्वाहा नम इति यवगन्धपुष्पयुतजलमञ्जलिना प्रक्षिप्य [2]शन्नो देवीरिति शुद्धोदकेन पादावुपर्येव प्रक्षालयेत्[3], नाधोभागे नापि सग्रन्थिकपवित्रहस्तेन।

आंगन में या श्राद्धदेश के दरवाजे पर चतुरस्र दो हाथ या प्रादेशमात्र उत्तर की ओर ढालू देवमण्डल बनाकर उससे दक्षिण में छ अंगुल छोड़कर दक्षिण ढालू चार हाथ का या बित्ताभर का पितृमण्डल गोल सव्य-अपसव्य, प्रदक्षिण-अप्रदक्षिण आदि दैव और पितृधर्म से गोमूत्र और गोमय से बनावे। यथोचित्त कुश, जौ, तिल, गन्ध और पुष्प से उसका पूजन करे। मण्डल के समीप

---

१. देवमण्डलं = वैश्वदेविक ब्राह्मणों के पादप्रक्षालन के लिये मण्डल, जैसा लौगाक्षि ने उसका आकार बतलाया है—'हस्तद्वयमितं कार्यं वैश्वदेविकमण्डलम्। दक्षिणे च चतुर्हस्तं पितृणामङ्घ्रिशोधने ॥' संग्रह में तो—'प्रादेशमात्रं देवानां चतुरस्रं तु मण्डलम्। त्यक्त्वा षडङ्गुलं तस्माद्दक्षिणे वर्तुलं तथा ॥' ऐसा कहा। मण्डल कहां और कैसा हो, इसका हेमाद्रि में शम्भु के वचन से स्पष्ट है—'सम्मार्जितोपलिप्ते तु द्वारि कुर्वीत मण्डले। उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवम् ॥' हेमाद्रि में भृगु का वचन है—'अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः। आर्ताया नवसूताया न गोर्गोमयमाहरेत् ॥' व्याघ्रः—'उत्तरेऽक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत् कुशान्। दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेत् कुशान् ॥' बौधायनः—'चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम्। कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥' इति।

२. भविष्ये—'प्रक्षाल्येद् विप्रपादान् शन्नोदेवीरिति त्र्यृचा।' मात्स्ये—'अक्षताभिः सपुष्पाभिस्तदभ्यर्चापसव्यवत्। विप्राणां क्षालयेत् पादावभिवन्द्य पुनः पुनः ॥ प्रत्यङ्मुखस्थितः कुर्याद्विप्रपादाभिषेचनम्।' इति।

३. संग्रहे—'ततः प्रक्षालयेत् पादौ भार्यास्राविताम्बुवारिणा। नाधः प्रक्षालयेत्पादौ कर्ता पित्रादिकर्मसु ॥' वृद्धवसिष्ठः—'न कुशग्रन्थिहस्तस्तु पाद्यं दद्याद् विचक्षणः।' तथा—'श्राद्धकाले यदा पत्नी वामे नीरप्रदा भवेत्। आसुरं तद् भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥' इति।

में पीढ़े पर बैठे हुए पूर्वमुख ब्राह्मण के दोनों पैरों पर उत्तरमुख वा पश्चिममुख श्राद्धकर्ता 'अमुक संज्ञका विश्वेदेवा इदं वः पाद्यं स्वाहा नमः' यह कहकर जौ, गन्ध और पुष्पयुक्त जल का अंजलि से प्रक्षेप करके शुद्ध जल से 'शन्नोदेवी' इस मन्त्र से दोनों पैरों के ऊपर ही प्रक्षालन करे, अधोभाग में नहीं और न ग्रन्थिसहित पवित्री के हाथ से।

पितृमण्डले उदङ्मुखस्योपविष्टस्य पादयोर्दक्षिणामुखस्तिलगन्धादिजलमञ्जलिना पितृतीर्थेन पितरमुकनामरूपगोत्र इदं ते पाद्यं स्वधा नम इति। त्रयस्थाने एकविप्रत्वे पितृपितामहप्रपितामहा इदं वः पाद्यमिति बहुवचनान्तेन प्रक्षिप्य शन्नोदेवीरित्यादि पूर्ववत्। एवमग्रेऽपि पित्रादित्रये ब्राह्मणत्रयपक्षे इदं ते इति, एकविप्रपक्षे इदं व इति वचनोहो ज्ञेयः। एवं मातामहादिपार्वणेऽपि बोध्यम्। अत्र पाद्यात्पूर्वं पादार्घ्यः पाद्योत्तरं च गन्धपुष्पाक्षतैः पादादिमूर्धान्तिमर्चनपूर्वकं दैवे एष वः पादार्घ्यं इति दत्त्वा पित्र्येऽपि तिलैर्मूर्धाद्यर्चनपूर्वकं पादार्घ्यदानमुक्तं तत्कात्यायनादीनामेवाचारात्तेषामेव। बह्वृचानां तु नैष आचारः।

पितृमण्डल में उत्तराभिमुख बैठे हुए ब्राह्मणों के पैरों पर दक्षिणमुख होकर तिलगन्धादियुक्त जल को अंजलि से लेकर पितृतीर्थ से 'पितः अमुकनाम-रूप-गोत्र इदं ते पाद्यं स्वधा नमः' ऐसा कह कर दे। तीन के स्थान में एक ब्राह्मण होने पर 'पितृ-पितामह-प्रपितामहा इदं वः पाद्यं' ऐसा बहुवचनान्त से जल गिराकर 'शन्नोदेवी' इत्यादि पूर्ववत् करे। इसी प्रकार आगे भी पिता आदि तीन के लिये ब्राह्मणत्रयपक्ष में 'इदं ते' यह और एक ब्राह्मणपक्ष में 'इदं वः' यह बहुवचन का ऊह जानना चाहिये। इसी प्रकार मातामहादि के पार्वण में भी जानना चाहिये। यहां पाद्य से पहिले पादार्घ्य और पाद्य के बाद गन्ध-पुष्प-अक्षत से पैर से लेकर सिरपर्यन्त अर्चनपूर्वक देव में 'एष वः पादार्घ्यः' इससे देकर पित्र्यकर्म में भी तिलों से सिर आदि का अर्चनपूर्वक पाद्य अर्घ्य का जो दान कहा है, वह कात्यायनादिकों के आचार से उन्हीं लोगों के लिये है। बह्वृचों का तो यह आचार नहीं है।

ततः पाद्यशेषं गन्धयवतिलादि सव्यापसव्याभ्यां मण्डलयोस्त्यक्त्वा स्वपादक्षालनं पवित्रत्यागं च कृत्वाऽऽचम्य पवित्रे धृत्वा देवमण्डलोत्तरे स्वयं विप्राश्च द्विराचम्य श्राद्धदेशे गच्छेयुः। पादक्षालनोदकाचमनोदकयोः संसर्गो न कार्यः। अपसव्येनामुकश्राद्धसिद्धिरस्त्विति वदेत्तैः प्रत्युक्तः निरंगुष्ठं विप्रदक्षिणहस्तं धृत्वा सव्यापसव्याभ्यां भूर्भुवः स्वः समाध्वमिति सदर्भेषु पीठेष्वविलम्बेनोपवेशयेत्। तत्र दैवे प्राङ्मुखो विप्रः पित्र्ये तूदङ्मुखः। असंभवे दक्षिणान्यदिङ्मुखः।

इसके बाद पाद्यशेष को गन्ध-यव-तिल आदि और सव्य-अपसव्य से दोनों मण्डलों में छोड़कर पादप्रक्षालन और पवित्र त्याग करके आचमन एवं पवित्रधारण कर देवमण्डल के उत्तर स्वयं ब्राह्मण लोग भी दो बार आचमन कर श्राद्धदेश में चले जायं। पादप्रक्षालन-जल का और आचमन-जल का संसर्ग नहीं करें। अपसव्य से 'अमुकश्राद्धसिद्धिरस्तु' ऐसा कहे। ब्राह्मणों से 'अस्तु' ऐसा प्रत्युत्तर पाने पर अंगुष्ठरहित ब्राह्मण के दक्षिण हाथ को पकड़ कर सव्य और अपसव्य से 'भूर्भुवः स्वः समाध्वं' इस से कुशसहित पीढ़ों पर अविलम्ब बैठावे। उसमें ब्राह्मण दैवकर्म में पूर्वाभिमुख और पितृकर्म में उत्तराभिमुख बैठें। यदि ऐसा संभव न हो तो दक्षिण दिशा को छोड़ कर अन्य किसी दिशा में मुख करके बैठें।

## अथ आसनविचारः

हैमं राजतं ताम्रं वा दुकूलं कम्बलं वा दारुजं तृणमयं पर्णमयं वाऽऽसनं[1] प्रशस्तम्। दारुजेषु श्रीपर्णीजम्बूकदम्बाम्रबकुलशमीश्लेष्मातकशालवृक्षजन्यान्यासनानि [2]शस्तानि।

अयःशंकुमयं पीठं प्रदेयं नोपवेशने।
[3]अग्निदग्धान्यासनानि भग्नानि च विवर्जयेत्॥
प्राक्संस्था दक्षिणासंस्था भोक्तृपङ्क्तिस्तु पैतृके।

तत्र देवासने प्रागग्रौ द्वौ दर्भौ पित्र्ये दक्षिणाग्रैकैकं दर्भं स्थापयेत्।

घृतैस्तिलादितैलैर्वा स्थापयेच्च प्रतिद्विजम्।
दीपं सव्यापसव्याभ्यां दीपमेकं तु सव्यतः॥

ब्राह्मणाश्चेतःप्रभृत्या श्राद्धसमाप्तेर्मौनिनः पवित्रहस्ता उच्छिष्टोच्छिष्टस्पर्शं [4]वर्जयन्तो वर्तेरन्।

आसन—सोना चांदी या तांबे का, दुकूल या कम्बल का, लकड़ी तृण या पत्तों का उत्तम है। लकड़ी के आसन में श्रीपर्णी, जामुन, कदम्ब, आम, मौलसरी, शमी, लिसोढा और सखुआ से बने प्रशस्त हैं। लोहे की कील लगे हुए काष्ठासन ब्राह्मणों को बैठने के लिये नहीं दे। आग से जले हुए और टूटे हुए आसन का त्याग करे। पितृकर्म में भोजन वालों की पंक्ति प्राक्संस्थ और दक्षिणसंस्थ होनी चाहिये। उसमें विश्वेदेव के आसन में पूर्व अग्रभाग वाले दो कुश और पित्र्य में दक्षिण अग्रभाग वाला एक-एक कुश स्थापित करे। प्रतिब्राह्मण घी या तेल का एक-एक दीप स्थापित करे। सव्य-अपसव्य से एक-एक दीप रहना चाहिये। एक (रक्षा) दीप तो सव्य से रखे। ब्राह्मणगण इसके आगे श्राद्ध-समाप्ति तक मौन रहें। हाथ में पवित्र धारण करें। उच्छिष्टोच्छिष्ट का स्पर्श-वर्जन करते हुए रहें।

अत्र यथालक्षणम् [5]अतिथिरागतश्चेत्सव्येन विप्रपङ्क्तौ विष्णूद्देशेन पूजयेत्। सव्येनापवित्रः पवित्रो वेति मन्त्रं पठित्वा वैष्णव्यै नमः काश्यप्यै नमः क्षमायै०

---

१. पृथ्वीचन्द्रोदय में यम की उक्ति है—'आसनं कुतपं दद्यादितरद्वा पवित्रकम्।' चमत्कारखण्ड में स्वर्णादिघटित आसन का महत्त्व यों बतलाया है—'पितॄणां घटितं हैमं राजतं वापि चासनम्। येन ताम्रमयं दत्तमासनं पितृकर्मणि॥ स वै दिव्यासनारूढो न हि प्रच्यवते दिवः।' इति।

२. पुलस्त्यः—'श्रीपर्णी वारुणी क्षीरी जम्बुकाम्रकदम्बकम्। सप्तमं वाकुलं पीठं पितॄणां दत्तमक्षयम्॥' संग्रहे—'शमी च काश्मरी शल्लुः कदम्बो वारुणस्तथा। पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथा॥' इति।

३. संग्रह में—'अग्निदग्धान्यासनानि' के पूर्व का वचन है—'क्षौमं दुकूलं नैपालमाविकं दारुजं तथा। ताम्रं पार्णं बृसीं चैव विष्टरादि च विन्यसेत्॥' इति।

४. माधवीय में ब्राह्मण का नियम बतलाया है—'पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः। उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम्॥' इति।

५. मनुः—'सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके। अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम्॥' कूर्मपुराणे—'अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रचक्षते।' अतिथि का लक्षण मनु ने

इति भूमिं नत्वा 'मेदिनी लोकमाता त्वम्' इत्यादिश्लोकैः स्तुत्वा च 'श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं गदाधरम्।' प्राचीनावीती तद्विष्णोः परमं पदं० तद्विप्रासो० गायत्रीं च जपित्वा सव्येन प्राणायामतिथ्यादिसंकीर्तनान्तेऽपसव्येन 'अमुकपितृणामुपक्रान्तममुकश्राद्धं करिष्ये' इति संकल्प्यात्रादौ मध्येऽन्ते च 'देवताभ्यः पितृभ्यश्च० अमूर्तानां च० चतुर्भिश्च० यस्य स्मृत्येति च त्रिःपठेत्।

श्राद्ध में यदि यथालक्षण अतिथि आ जाय तो उसे सव्य से विप्र की पंक्ति में विष्णु के उद्देश्य से पूजा करे। सव्य से 'अपवित्रः पवित्रो वा' इस मन्त्रको पढ़कर वैष्णव्यै नमः, काश्यप्यै नमः, क्षमायै नमः, यह कहकर भूमि को नमस्कार करके 'मेदिनी लोकमाता त्वं' इत्यादि श्लोकों से स्तुति करके श्राद्ध-भूमि और गदाधर भगवान् का ध्यान करके प्राचीनावीती होकर 'तद्विष्णुः परमं पदं' 'तद् विप्रासो' इन मन्त्रों और गायत्री को जप कर सव्य से प्राणायाम और तिथि आदि कहने के बाद अपसव्य से 'अमुक पितृगणों का प्रारब्ध अमुक-श्राद्ध करूंगा' ऐसा संकल्प कर आदि मध्य और अन्त में 'देवताभ्यः पितृभ्यश्च० अमूर्तानां च० और यस्य स्मृत्या' इनको तीन बार पढ़े।

## अथ नीवीबन्धविचारः

अथ दक्षिणे वामे वा कुक्षौ तिलैः सह कुशत्रयं परिहितवस्त्राञ्चलबद्धं कृत्वा कटिसंलग्नवस्त्रबहिर्भागेन संवेष्ट्य रक्षणाख्यो [2]नीवीबन्धो निहन्मि सर्वं यदमेध्यवद्भवेदिति श्लोकमन्त्रेण कार्यः।

सर्वतश्चापसव्येनापहतेत्यप्रदक्षिणम्।
तिलान्क्षिप्त्वोदीरतेति सव्येन प्रोक्षणं स्मृतम्॥
तिला रक्षन्तु मन्त्रेण द्वारे कुशतिलान्[3] क्षिपेत्।

---

कहा है—'एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते॥' यहां रात्रिशब्द दिन और ब्राह्मणशब्द मनुष्यमात्र का उपलक्षण है। उपलक्षण का अर्थ है—जो अपना बोध कराते हुये दूसरे का भी बोध करावे—स्वबोधकत्वे सति स्वेतरबोधकत्वम्। विशेष मनुस्मृति के तीसरे अध्याय में देखें।

१. ब्रह्माण्डपुराण में—'देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥ आदिमध्यावसानेषु त्रिरावृत्तं जपेद् बुधः। पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च॥' इति।

२. वृद्धयाज्ञवल्क्यः—'दक्षिणे कटिदेशे तु तिलैः सह कुशत्रयम्। तर्जयन्तीह दैत्यानां यथा नृणामयस्तथा॥' आश्वलायनः—'नीवीं वासोदशान्तेन स्वरक्षार्थं प्रबन्धयेत्।' स्मृत्यन्तरे—'पितृणां दक्षिणे पार्श्वे विपरीता तु दैविके।' मदनपारिजात में लिखा है—'वामे दक्षिणे वेति आचाराद् व्यवस्था' श्राद्धसूत्रभाष्य में गदाधर ने 'दक्षिणत इव हीयं नीविरिति लिङ्गम्' इस श्रुति-प्रमाण से 'तस्माद्दक्षिणाङ्गे एव नीवीबन्ध इति सिद्धम्' ऐसा कहा है। 'अथ नीवीमुद्धृत्य नमस्करोति' इस कण्डिका की व्याख्या में नाभि के दक्षिण भाग में ही नीवीस्थान माना है। नीवीबन्धन का पराशरोक्त मंत्र है—'निहन्मि सर्वं यदमेध्यवद् भवेद्धताश्च सर्वेऽसुरदानवा मया। यक्षांसि रक्षांसि पिशाचगुह्यका हता मया यातुधानाश्च सर्वे॥' इति।

३. ब्रह्मपुराणे—'ततस्तिलान् गृहे तस्मिन् विकिरेच्चाप्रदक्षिणम्। श्रद्धया परया युक्तो

तरत्समन्दीसूक्तेन पावमानीभिरेव च ।
अभिमन्त्र्य जलं तेन पाकादि प्रोक्षयेत्सुधीः ।
यद्वा तद्विष्णोर्मन्त्रेण गायत्र्या वाभिमन्त्रितम् ॥
यद्देवा इति मन्त्राणां त्रयेणैवान्यशाखिनः ।
वाचयेत्पाकपूतत्वं पुष्पाद्यं सर्वमुक्षयेत् ॥
नाप्रोक्षितं स्पृशेच्छ्राद्धकालेत्येतं जपेत्ततः ।
पदार्थयोग्यतां वाचयित्वा देवार्चनं चरेत् ॥

इसके बाद दाहिनी या बायीं कुक्षि में तिल के साथ तीन कुश पहने हुए वस्त्र के अंचल में बांध कर कटि से सटे हुए वस्त्र के बाहरी भाग से लपेट कर रक्षणार्थ नीवीबन्ध—'निहन्मि सर्वं यदमेध्यवद् भवेत्' इस मन्त्र से करे। सर्वत्र अपसव्य से 'अपहता' इससे अप्रदक्षिण क्रम से तिलों को छीटकर 'उदीरता' इस मन्त्र से सव्य होकर प्रोक्षण करें। 'तिला रक्षन्तु' इससे द्वारपर कुश और तिल को छीटे। 'तरत्समन्दी' इस सूक्त से और पावमानी ऋचाओं से जल का अभिमन्त्रण कर उससे पाक आदि का प्रोक्षण करे। अथवा 'तद्विष्णोः' इस मन्त्र से या गायत्री से अभिमन्त्रित जल से प्रोक्षण करे। अन्यशाखा वाले 'यद्देवा' इन तीन मन्त्रों से पाक का पवित्रत्व कहवावे और पुष्प आदि सब सामग्री का अभिमन्त्रित जल से प्रोक्षण करे। अप्रोक्षित वस्तु का श्राद्धकाल में स्पर्श न करे इसी का जप करे। पदार्थों की योग्यता ब्राह्मणों से कहवाकर देवार्चन करे।

तत्र प्रत्युपचारं दैवे पित्र्ये चाद्यं तयोरपो दद्यात्। देवद्विजसन्निधावुदङ्मुख उपविश्य तद्दक्षिणकरमुत्तानं वामकरेण धृत्वा दक्षिणेन सयवं दर्भद्वयममुकेषां विश्वेषां देवानां भूर्भुवः स्वरिदमासनं स्वाहेति दक्षिणहस्ते जलमासिच्य दक्षिणभागे आसने क्षिपेन्न हस्ते दर्भदानम्।

आसनेष्वासनं दद्यान्न तु पाणौ कदाचन ।
पितृकर्मणि वामे च दैवे दद्यात्तु दक्षिणे ॥

विप्रो 'धर्मोसि[१] विशि राजा प्रतिष्ठित' इति मन्त्रेण गृहीत्वा स्वासनमिति वदेत्। कर्तासनं स्पृशन्नपो दत्त्वास्यतामिति विप्रो धर्मोऽसीति वदेत्। अपो दत्त्वा दैवे [२]क्षणः क्रियतामिति निरंगुष्ठं करं गृह्णीयात् तथेत्यादि प्राग्वत्। इदं तृतीयनिमन्त्रणम्।

---

जपेदपहता इति ॥' स्मृत्यर्थसारे—'अपहता इति तिलान् विकीर्य उदीरतामित्यृचा प्रोक्षेत् ॥' तिलादि विकिरण का मन्त्र—'तिला रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान्। पंक्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः ॥' इति।

१. प्रचेताः—'धर्मोऽसीत्यथ मन्त्रेण गृह्णीयुस्ते तु तान् कुशान्'। ते=विप्राः।

२. गालवः—'दर्भानादाय हस्ताभ्यां गृहीत्वा दक्षिणे करे। दैवे क्षणः क्रियतां तु निरंगुष्ठं करं ततः ॥ ओं तथेति द्विजा ब्रूयुस्ते प्राप्नोतु भवानिति। कर्ता ब्रूयात्ततो विप्रः प्राप्तवानीति वै वदेत् ॥' यहां क्षण शब्द—'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इस अमरकोश से निर्व्यापारस्थिति-काल अभिप्रेत है।

यहां प्रत्येक उपचार में देवकर्म और पितृकर्म के आदि और अन्त में जल देवे। विश्वेदेव ब्राह्मण की सन्निधि में उत्तरमुख बैठकर ब्राह्मण के उत्तान दक्षिण हाथ को बायें हाथ से धर कर दाहिने हाथ से यवसहित दो कुश को 'अमुकेषां विश्वेदेवानां भूर्भुवः स्वः इदमासनं स्वाहा' इससे ब्राह्मण के दक्षिण हाथ में जल देकर दक्षिण भाग में आसन पर छोड़ दे, हाथ में कुश न दे। आसन पर आसन दे हाथ में आसन कभी न दे। पितृकर्म में बाएँ और दैवकर्म में दाहिने दे। ब्राह्मण—'धर्मोऽसि विश्वि राजा प्रतिष्ठित' इस मन्त्र से आसन-ग्रहण कर 'सुन्दर आसन है' ऐसा कहे। श्राद्ध कर्ता आसन का स्पर्श करते हुए जल देकर 'बैठिये' ऐसा कहे। ब्राह्मण—'धर्मोऽसि'—ऐसा कहे। जल देकर देवकर्म में 'क्षणः क्रियताम्' ऐसा कहकर अंगूठे को छोड़कर हाथ का ग्रहण करे। 'ॐ तथा' इत्यादि पहिले की तरह करे। यह तृतीय निमन्त्रण है।

## अथ अर्घ्यकल्पना

तत्र पात्राणि हैमं रौप्यं ताम्रमयं वा दारुजं वा पलाशादिपर्णमयं वा कांस्यं वा शङ्खशुक्तिजं वा खड्गपात्रं वार्घ्यपात्रं[1] प्रशस्तम्। अत्र विप्रैकत्व-द्वित्वचतुष्टयत्वादावपि दैवेऽर्घ्यपात्रद्वयमेव। यत्तु दैवे द्वे अर्घ्यपात्रे पित्र्ये त्रीण्यु-भयत्रैकैकं वेत्येकपात्रत्वपक्षान्तरं तदशक्तिपरम्। एवं पात्रद्वयं प्रोक्षितायां भुवि प्रागग्रकुशेषु न्युब्जमुत्तानं वासाद्य प्रोक्ष्य न्युब्जपक्षे उत्तानीकृत्य तयोर्द्विकुशे द्वे द्वे पवित्रे निधाय शन्नोदेवीरिति मन्त्रावृत्त्याऽप आसिच्य यवोसीति मन्त्रेणावृत्त्या यवानोप्य तूष्णीं[2] गन्धपुष्पाणि क्षिपेत्।

अर्घ्यपात्र—सोना चांदी या ताम्र का, या काष्ठ का, अथवा पलाशादि के पत्तों का बनाया हुआ, या कांसे का, शंख और शुक्ति का बना, या गेंडे का प्रशस्त है। यहां विश्वेदेव में ब्राह्मण के एक दो-या चार आदि में भी अर्घ्यपात्र दो ही होते हैं। जो कि दैव में दो अर्घ्यपात्र और पित्र्य में तीन या दोनों में एक पात्र का दूसरा पक्ष है, वह अशक्त-परक है। इस प्रकार प्रोक्षित भूमि में प्रागग्र कुशों पर दो अर्घ्यपात्र औंधाया हुआ या सीधा रखकर प्रोक्षण करके औंधाये हुए पक्ष में सीधा करके दोनों में दो कुश और दो-दो पवित्र रखकर 'शन्नोदेवी' इस मन्त्र की आवृत्ति से जल और 'यवोसि' इस मन्त्र की आवृत्ति से जव डाल कर बिना मंत्र के गन्ध-पुष्प छोड़े।

केचिद्गन्धद्वाराम् ओषधीः प्रतिमोदध्वमित्यृग्भ्यां गन्धपुष्पाणि क्षिपन्ति। देवार्घ्यपात्रे संपन्ने इत्युक्त्वा सुसम्पन्ने इति प्रत्युक्तो वामकरं विप्रदक्षिणजानुनि न्यस्यामुकविश्वान्देवान् भवत्सु आवाहयिष्ये इति पृष्ट्वावाहयेत्यनुज्ञातो विश्वेदेवास

---

१. हेमाद्रि में प्रजापति की उक्ति है—'सौवर्णं राजतं ताम्रं खाड्गं मणिमयं तथा। यज्ञियं चमसं वाऽपि अर्घ्यार्थं पूरयेद् बुधः॥' मात्स्ये पाद्मे च—'पात्रं वनस्पतिमयं तथा पर्णमयं पुनः। जलजं वापि कुर्वीत तथा सागरसम्भवम्॥' पुराणसमुच्चये—'मृत्स्नाभवं तथा कांस्यमारक्तं जन्तुसम्भवम्। त्रपुसीसलोहमयं सदा पात्रं विवर्जयेत्॥' मृन्मयपात्र यदि हस्तनिर्मित हो तो निषिद्ध नहीं है, जैसा छन्दोगपरिशिष्ट में कहा है—'कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम्। तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्॥' विहित प्रतिषिद्ध से पत्रपुटपात्र ही श्रेयस्कर है।

२. वृद्धपराशरः—'पात्रद्वयमथार्घ्यार्थं तैजसं चैकवस्तुनः। प्राङ्मुखोऽमरतीर्थेन शन्नो देव्योदकं क्षिपेत्॥ यवोऽसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम्।' इति।

आगतेत्यृचा प्रतिविप्रं दक्षिणपादादियुग्मक्रमेण जान्वंसमूर्धान्तं यवान्विकिरेत्। विश्वेदेवाः शृणुतेत्यृचोपस्थाय भूमौ शिष्टान्यवान्विकिरेत्।

कुछ लोग—'गन्धद्वारां' और 'ओषधीः प्रतिमोदध्वं' इन दो ऋचाओं से गन्ध-पुष्प छोड़ते हैं। 'देवार्घपात्रे सम्पन्ने' ऐसा कहकर ब्राह्मण के 'सुसम्पन्ने' ऐसा कहने पर बाएँ हाथ को ब्राह्मण के दाहिने ठेहुने पर रखकर 'अमुक विश्वान् देवान् भवत्सु आवाहयिष्ये' अर्थात् अमुक विश्वेदेवों को आप लोगों में आवाहन करूंगा, ऐसा पूछकर ब्राह्मण से 'आवाहय' यह आज्ञा मिलने पर 'विश्वेदेवा स आगत' इस ऋचा से प्रतिविप्र दक्षिण पाद आदि युग्म-क्रम से जानु, कन्धा और सिरपर्यन्त जव बिखेरे। 'विश्वेदेवाः शृणुत' इससे उपस्थान कर बचे हुए जवों को भूमि पर बिखेरे।

हिरण्यकेशीयादयस्त्वर्घ्यदानगन्धादिपूजोत्तरमग्नौकरणकाले ये देवास इत्यायात पितर इति मन्त्राभ्यामग्निदक्षिणतो देवपित्रावाहनं कुर्वन्ति।

हिरण्यकेशीय आदि तो अर्घ्यदान और गन्धादि पूजन के बाद अग्नौकरण के काल में 'ये देवास' तथा 'आयात पितर' इन दो मन्त्रों से अग्नि के दक्षिण की ओर विश्वेदेव और पितरों का आवाहन करते हैं।

कातीयैस्त्वर्घ्यपात्रासादनात्प्रागेव[1] देवपित्रावाहनं कार्यम्, तथैव कात्यायनसूत्रात्।

ततोऽर्घ्यपात्रसपत्तिं वाचयित्वा द्विजोत्तमान्।
तदग्रे चार्घ्यपात्रे तु स्वाहार्घ्यमिति विन्यसेत्॥
अपो दत्त्वा विप्रहस्ते दद्यादर्घ्यपवित्रके।
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्॥
विश्वेदेवा इदं वोऽर्घ्यं स्वाहा नम इतीरयन्।

प्रतिविप्रं या दिव्येत्यावृत्तिः। केचित्तु या दिव्या इत्यनेन दत्तार्घ्यानुमन्त्रणमाहुः।

कातीय तो अर्घ्यपात्रासादन के पहले ही देव-पितृ का आवाहन करते हैं, क्योंकि कात्यायनसूत्र में ऐसा ही लिखा है। तदनन्तर ब्राह्मणों से अर्घ्यपात्र-सम्पत्ति कहलाकर उनके आगे अर्घ्यपात्रों में 'स्वाहार्घ्यं' यह कहकर अर्घ्यपात्र रख दे। ब्राह्मण के हाथ में जल देकर अर्घ्य कापवित्र दे। 'या दिव्या' इस मन्त्र से ब्राह्मण के हाथ में 'विश्वेदेवा इदं वोऽर्घ्यं स्वाहा नमः' ऐसा कहता हुआ अर्घ्य छोड़ दे। प्रतिविप्र 'या दिव्या' इस मन्त्र की आवृत्ति करे। कुछ लोग तो—'या दिव्या' इस मन्त्र से दिये हुए अर्घ्य का अनुमन्त्रण कहते हैं।

मयूखे कातीयप्रयोगे विप्रहस्तेऽर्घ्यपवित्रदानान्ते आवाहनवदङ्गेष्वर्चनं कृत्वार्घ्यदानमित्युक्तम्। एकविप्रत्वे एकस्यैव हस्ते द्विरर्घ्यदानम्। विप्रचतुष्टय-

---

१. याज्ञवल्क्य ने भी आवाहन के अनन्तर ही अर्घ्य कहा है—'पाणिप्रक्षालनं दत्त्वा विष्टरार्थान् कुशानपि। आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा॥ यवैरन्ववकीर्याथ भाजने सपवित्रके। शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा॥ या दिव्या इति मन्त्रेण हस्तेष्वर्घं विनिक्षिपेत्।' सूत्रकारोऽप्यावाहयार्घं पूरयति।' इति। विशेष श्राद्धसूत्रभाष्य में देखें।

पक्षे एकैकं पात्रं विभज्य द्वयोर्द्वयोर्देयम्। कूर्चस्तु तत्तत्पात्रस्थ एव। क्वचित्[1] क्षीर-दधिघृततिलतण्डुलसर्षपकुशाग्रपुष्पेतिद्रव्याष्टकमर्घ्यपात्रे प्रक्षिप्यमित्युक्तम्।

मयूख में कातीयप्रयोग में ब्राह्मण के हाथ पर अर्घ्य और पवित्र देने के बाद आवाहन की तरह अंगों में भी पूजन करके अर्घ्यदान कहा है। एक ब्राह्मण के रहते एक ही के हाथ में दो बार अर्घ्य दे। चार ब्राह्मण के पक्ष में एक एक पात्र का विभाग करके दो-दो को दे। कूर्च को तो उन-उन पात्रों में ही रहने दे। कहीं पर दूध, दही, घी, तिल, चावल, सरसो, कुशाग्र और पुष्प, इस प्रकार आठ द्रव्य अर्घ्यपात्र में छोड़े ऐसा कहा है।

## अथ दैवे गन्धाद्यर्चनम्

'आद्यन्तयोरपो यच्छन्गन्धाद्यैरर्चनं[2] चरेत्'। अमुकविश्वेदेवा अयं वो गन्धः स्वाहा नम इति करेणैव विप्रहस्तेष्वेव द्विर्द्विर्दानम्। एवं सर्वत्र दैवे स्वाहा नम इत्यन्तमुच्चार्योपचारदानम्।

चन्दनागरुकर्पूरकुङ्कुमानि प्रदापयेत्।
गन्धद्वारेति वै गन्धमायने ते च पुष्पकम्॥
धूरसीत्यमुना धूपमुद्दीप्यस्वेति दीपकम्।
युवं वस्त्राणि मन्त्रेण वस्त्रं दद्यात्प्रयत्नतः।
आसने स्वासनं ब्रूयादर्घ्येऽस्त्वर्घ्यं द्विजोत्तमः।
सुगन्धश्च सुपुष्पाणि सुमाल्यानि सुधूपकः॥
सुज्योतिश्चैव दीपश्च स्वाच्छादनमिति क्रमः।

देवकर्म के आदि अन्त में जल देते हुए गन्धादि से पूजन करे। 'अमुक-विश्वेदेवा अयं वो गन्धः स्वाहा नमः' ऐसा कहकर हाथ से ही ब्राह्मण के हाथ में दो-दो बार देवे। इसी प्रकार देव-कर्म में सर्वत्र 'स्वाहा नमः' एतत्पर्यन्त कहकर उपचार दे। चन्दन, अगरु, कपूर और कुंकुम चढ़ावे। 'गन्धद्वारां' इस मन्त्र से गन्ध, 'आयने ते' इससे पुष्प, 'धूरसि' इत्यादि मन्त्रों से धूप दे। 'उद्दीप्यस्व' इस मन्त्र से दीप दे। 'युवं वस्त्राणि' इस से यत्नपूर्वक वस्त्र दे। आसन में 'स्वासनं' कहे और अर्घ्य में ब्राह्मण 'अस्त्वर्घ्यं' कहे। सुगन्धः, सुपुष्पं, सुमाल्यं, सुधूपः, सुज्योतिः, सुदीपः और स्वाच्छा-दनं, ऐसा क्रम है।

कर्ता स्कन्धधृतोत्तरीयो विगतपवित्रकरो[3] विप्रहस्तदत्तगन्धैर्विप्रभालाद्य-ङ्गेषु लिम्पेत्। विप्रभाले वर्तुलपुण्ड्रं त्रिपुण्ड्रं वा [4]न कुर्यात्। अत्र विप्राणां कस्तूरी

---

१. अन्यत्र अर्घ में जल, दूध, कुशाग्र, दही, दूब, अक्षत, फल और सरसो, इन आठ वस्तुओं का निर्देश है—'आपः क्षीरं कुशाग्राणि दधि दूर्वाऽक्षतास्तथा। फलं सिद्धार्थकश्चैव अर्घोऽष्टाङ्गः प्रकीर्तितः॥' इति।

२. हेमाद्रि विष्णुधर्म में—'गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः। अर्चयेद् ब्राह्मणान् शक्त्या श्रद्धधानः समाहितः॥' विष्णुः—'चन्दनकुङ्कुमकर्पूरागरुपद्मकान्यनुलेपनाय' इति।

३. वृद्धशातातप ने कहा है—'पवित्रं तु करे कृत्वा यः समालभते द्विजान्। राक्षसानां भवेच्छ्राद्धं निराशैः पितृभिर्गतैः॥' इति।

४. हेमाद्रि में देवल का वचन है—'ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च। निराशाः

विकल्पिता । आयने ते इति वौषधीः प्रतिमोदध्वमिति वा गन्धदानवद्धस्तेष्वेवेदं वः पुष्पमिति पुष्पदानं कार्यम् ।

श्राद्धकर्ता कन्धे पर दुपट्टा धारण करके हाथ से पवित्री निकाल कर ब्राह्मण के हाथ में दिये हुए गन्धों को ब्राह्मण के ललाट आदि अंगों में लगा दे । ब्राह्मण के ललाट में गोल पुण्ड्र या त्रिपुण्ड्र नहीं लगावे । इसमें ब्राह्मणों के लिए कस्तूरी विकल्प से है। 'आयने ते' इस मन्त्र में अथवा 'ओषधीः प्रतिमोदध्वं' इस मन्त्र से गन्धदान के समान हाथ में ही 'इदं वः पुष्पाणि' ऐसा कह कर पुष्पदान करे ।

## अथ तत्र विहितपुष्पाणि

आगस्त्यं भृङ्गराजं च तुलसी कमलं तथा ।
चम्पकं तिलपुष्पं च दूर्वाश्च पितृवल्लभाः ॥
विहिता प्रतिषिद्धा च [1]तुलसी पिण्डपूजने ।
सुकुमारैः किसलयैर्यवदूर्वाङ्कुरैरपि ॥
जलोद्भवैश्च कुसुमैर्मल्लिकाचूतपुष्पकैः ।
अतिमुक्तैश्च तगरैः संपूज्याः पितरः सदा ॥
जातीपुष्पैर्विप्रपूजां कुर्यात्पिण्डार्चनं तु न[2] ।

---

पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ॥' यहां पुण्ड्रकशब्द का अपरार्क में वर्तुल और मदनरत्न में 'पुण्ड्र त्रिपुण्ड्र वर्तुलचन्द्रं च' यह अर्थ किया और वृद्ध पराशर का वचन प्रमाण में रखा है—'ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् । ऊर्ध्वं च तिलकं कुर्याद् दैवे पित्र्ये च कर्मणि ॥ निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम् ।' पृथ्वीचन्द्रोदय में व्यास की उक्ति है—'वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा । तिर्यगप्यूर्ध्वपुण्ड्रं वा धारयेत्तु प्रयत्नतः ॥' इति ।

१. श्राद्धसूत्र की व्याख्या श्राद्धकाशिका में कहा है—'तुलसी निषिद्धेति स्मृत्यर्थसारः । तत्रार्घादौ निषेधः, पिण्डार्चायां विधिरित्यविरोधः ।' भविष्यपुराण के वचन से तुलसी निषिद्ध है—'केतकी तुलसीपत्रं बिल्वपत्रं च वर्जयेत् । द्रोणं च करवीरं च धत्तूरं किंशुकं तथा ॥' मार्कण्डेय की उक्ति से तुलसी विहित है—'पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीदलैः । प्रीणिताः पितरस्तैस्तु यावच्चन्द्रार्कमेदिनी ॥' वृद्ध याज्ञवल्क्य ने भी विहित बतलाया है—'तुलसीं भृङ्गराजं च अपामार्गं शमीं तथा । पितृमूर्धनि यो दद्यात् स याति परमां गतिम् ॥ स्मृतिसारे—'आगस्त्यं भृङ्गराजं च तुलसी शतपत्रिका । चम्पकं तिलपुष्पं च वर्जयेत् पितृवल्लभाः ॥' प्रयोगपारिजात में पद्मपुराण का वचन है—'तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः । प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥' इस प्रकार तुलसी के विहित होने में अनेक वचन हैं । 'तुलसीनिषेधो निर्मूलः' ऐसा हेमाद्रि ने भी कहा है ।

२. वृद्ध याज्ञवल्क्य ने जातीपुष्पों से पिण्डपूजन का निषेध किया है—'कुन्दं शम्भौ च नो दद्यान्नोन्मत्तं गरुडध्वजे । पिण्डे जातीं च नो दद्याद्देवीमर्केण नार्चयेत् ॥' जाती = चमेली का फूल । स्मृतिसार में भी निषिद्ध है—'केतकीं करवीरं च बकुलं कुन्दकं तथा । पाटलां चैव जातीं च श्राद्धे यत्नेन वर्जयेत् ॥' वीरमित्रोदय में मार्कण्डेयपुराण के—'जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका । जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥' इस विधान-वचन और स्मृत्यन्तर के—'जातीदर्शनमात्रेण निराशाः पितरो गताः ।' इस निषेध-वचन को उद्धृत कर जातीपुष्प को विकल्प माना है ।

विहित पुष्प—अगस्त, भंगरैया, तुलसी, कमल, चम्पा, तिल का फूल और दूब, पितरों को प्रिय है। पिण्डपूजन में तुलसी विहित और निषिद्ध हैं। कोमल पत्तों से, यव और दूब के अंकुर से, जल से पैदा हुए फूलों से, मल्लिका तथा आम के फूलों से, अतिमुक्त और तगर से पितरों की सदा पूजा करे। जूही के फूल से ब्राह्मण का पूजन करे पिण्ड का पूजन न करे।

## अथ वर्ज्यपुष्पाणि

करवीरं च धत्तूरं बिल्वपत्रं च केतकीम्।
बकुलं कुन्दपुष्पं च किंशुकं च कुरण्टिकाम्॥
सर्वाणि रक्तपुष्पाणि वर्जयेच्छ्राद्धकर्मणि।
जलोद्भवानि देयानि रक्तान्यपि विशेषतः॥

त्याज्य पुष्प—कनेर, धतूर, बेलपत्र, केवडा, मौलसरी, कुन्द, सेमर, पीतपुष्प का कटसरैया और सब लाल पुष्प श्राद्ध में वर्जित करे। जल से उत्पन्न होने वाले लाल भी फूल विशेष करके दे।

## अथ धूपविचारः

धूपस्तु गुग्गुलुर्देयस्तथा चन्दनसारजः।
अगरुश्च सकर्पूरो घृतमध्वादिसंयुतः॥
ये तु प्राण्यङ्गजा धूपा हस्तवाताहताश्च ये।
न ते श्राद्धे नियोक्तव्या ये च के चोग्रगन्धयः॥
घृतं न केवलं दद्याद् दुष्टं वा तृणगुग्गुलुम्।
पाददेशेऽयं वो धूप इति दानम्।

धूप तो गुग्गुल या चन्दनसार का दे। घी, मधु, कपूर आदि से युक्त अगरु का धूप दे। जो धूप प्राणी के अङ्ग से उत्पन्न हों, हाथ के वायु से आहत और उग्रगन्ध के हों श्राद्ध में उनका योग नहीं करे। केवल घी से धूप न दे या दूषित तृणयुक्त गुग्गुल न दे। पादप्रदेश में 'अयं वो धूपः' ऐसा कह कर धूप दे।

## अथ दीपविचारः

'घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः'। वसामेदादिदीपो वर्ज्यः। इदं वो ज्योतिरिति वाऽयं वो दीपप्रकाश इति वा मुखसमीपे दीपः।

दीप घी या तिल के तेल से दे। चर्बी मेदा आदि का दीप वर्जित है। 'इदं वो ज्योतिः' या 'अयं वो दीप प्रकाशः' इससे मुंह के समीप दीप दे।

## अथ वस्त्रयज्ञोपवीतविचारः

कौशेयं कार्पासं वा 'वस्त्रं विहितम्। कृष्णं मलिनमुपभुक्तं छिद्रितं निर्दशं

---

१. ब्रह्मपुराण में वस्त्र का विचार—'कौशेयं क्षौमकार्पासं दुकूलमहतं तथा। श्राद्धेष्वेतानि यो दद्यात् कामानाप्नोति चोत्तमान्॥' ब्रह्मवैवर्ते—'यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता। पितृभ्यो वस्त्रदानस्य फलं तेनाश्नुतेऽखिलम्॥' पद्मपुराणे—'निष्क्रियो वा यथाशक्ति वस्त्राभावे प्रदीयते।' भगवतीपुराणे—'अधरीयोत्तरीयार्थे उद्दिश्यैकैकमादरात्। वासोयुगं प्रदातव्यं पितृकृत्ये विपश्चितैः॥ निष्क्रयो वा यथाशक्ति वस्त्रालाभे प्रदीयते।' वायुपुराणे—'वस्त्रं हि सर्वदैवत्यं सर्वदेवैरभिष्टुतम्।

[1]रजकधौतं च निषिद्धम्।

यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता।
निष्क्रयो वा यथाशक्ति वस्त्रालाभे प्रदीयते॥
पितॄन्सत्कृत्य वासोभिर्दद्याद्यज्ञोपवीतकम्[2]।
यज्ञोपवीतदानेन विना श्राद्धं तु निष्फलम्॥

यज्ञोपवीतं यतिस्त्रीशूद्रश्राद्धेष्वपि देयम्।

रेशम या कपास का वस्त्र विहित है। काला, मैला, पहिना हुआ, छेद वाला, विना किनारी का और धोबी का धोया हुआ वस्त्र निषिद्ध है। विहित वस्त्र के अभाव में यज्ञोपवीत या वस्त्र का निष्क्रय यथाशक्ति दे। वस्त्र से पितरों का सत्कार कर यज्ञोपवीत दे। विना यज्ञोपवीत का श्राद्ध निष्फल होता है। यति, स्त्री और शूद्र के श्राद्ध में भी यज्ञोपवीत देना चाहिये।

## अथान्यान्यपि देयानि

धातुमयानि धूपदीपपात्राणि।

कमण्डलुं ताम्रमयं काष्ठजं वापि मृन्मयम्।
नारिकेलमयं वापि श्राद्धे दद्यात्प्रयत्नतः॥

छत्रोपानदासनशयनदर्पणचामरव्यजनपादुकाकेशप्रसाधनीपटवासादिसुगन्धचूर्णाङ्गारधानिकायष्टिकम्बलाञ्जनशलाकाश्च देयाः।

अलंकाराश्च दातव्या यथाशक्ति हिरण्मया।
केयूरहारकटकमुद्रिकाकुण्डलादयः॥
स्त्रीभ्यो योषिदलंकारा देयाः श्राद्धेषु योषिताम्।
मञ्जीरमेखलादामकर्णिकाकङ्कणादयः॥
सौवर्णं राजतं कांस्यं दद्याद्भोजनभाजनम्[3]।
कर्पूरादेश्च भाण्डानि ताम्बूलायतनं तथा॥

---

वस्त्राभावे क्रिया न स्युर्यज्ञदानादिकाः क्वचित्॥ तस्माद् वस्त्राणि देयानि श्राद्धकाले विशेषतः।' स्कन्दपुराणोक्त विविध प्रकार के वस्त्रों के दान का फल वीरमित्रोदयादि महानिबन्ध-ग्रन्थों में देखें।

१. वृद्धमनुः—'स्वयं धौतेन कर्तव्याः क्रिया धर्म्या विपश्चिता। न निर्णेजकधौतेन नोपयुक्तेन वा क्वचित्॥' आदित्यपुराणे—'न कृष्णवर्णं दातव्यं वासः कार्पाससम्भवम्। पितृभ्यो वाऽपि मलिनं नोपयुक्तं कदाचन॥ न च्छिद्रितं नापदशं न धौतं कारुणापि च।' ब्रह्मपुराणे—'कार्पासं नैव दातव्यं पितृभ्यः काममंशुकम्। कृष्णं चापि प्रदातव्यमन्यत्कार्पाससम्भवात्॥ नामापि न ग्रहीतव्यं नीलीरक्तस्य वाससः। दर्शनात् कीर्तनात् भीत्या निराशाः पितरो गताः॥' इति।

२. यह आदित्यपुराण का वचन है। इसके आगे का अंश हैं—'तस्माद्यज्ञोपवीतस्य दानमावश्यकं स्मृतम्।' वायुपुराणे—'उपवीतं तु यो दद्याच्छ्राद्धकर्मणि धर्मवित्। पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम्।' इति। अत्र शूद्रकर्तृकश्राद्धे यज्ञोपवीतस्य श्राद्धाङ्गत्वेन देयत्वावगमाद्दानं भवत्येवेति हेमाद्रिः। एवं स्त्र्याद्युद्देश्यकश्राद्धेऽपीति वीरमित्रोदयकारः।

३. स्कन्दपुराणे—'सौवर्णं राजतं वाऽपि कांस्येनाप्यथ निर्मितम्। दत्त्वा भोजनपात्रं तु सम्राड् भवति भूतले॥' सौवर्णादि मुख्य पात्रों के अभाव में स्मृतिसंग्रह में कहा है—'कदलीचूतपनसजम्बू-

अन्यान्य देनेवाली चीजें—धातु के बने धूप और दीप के पात्र, तांबा, लकड़ी, मिट्टी या नारियल का कमण्डलु, श्राद्ध में यत्नपूर्वक दे। छाता, जूता, आसन, खटिया, दर्पण, चँवर, पंखा, खड़ाऊँ, कंघी, पटवास आदि सुगन्धचूर्ण, अंगीठी, छड़ी, कम्बल और अंजन की शलाका दे। यथाशक्ति सोने के आभूषण, केयूर, हार, कड़ा, अंगूठी और कुण्डल आदि तथा स्त्रियों को स्त्री के आभूषण मंजीर, मेखला, दाम, कान के आभूषण, कंकण, आदि दे। सोने, चाँदी और कांसे के भोजनपात्र दे। कपूर आदि के पात्र और पानदान दे।

स्वयमन्येन वा बन्दीकृतानां केनाप्युपायेन मोचने पितॄणां ¹ब्रह्मपदम्। इत्थं चोक्तवचनादाच्छादनदानान्ते पृथग्यज्ञोपवीतं दत्त्वा शक्तिसत्त्वे छत्रालंकारादिकं दत्त्वा तत्काले स्पर्शायोग्यानां संकल्पं कृत्वा पूजनं पूर्णमस्तु संकल्पसिद्धिरस्त्वित्युक्त्वा प्रत्युक्तः,

मन्त्रहीनं क्रियाहीनं संपद्धीनं द्विजोत्तमाः।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम॥

यस्य स्मृत्या० देवताभ्यः० इति जपेत्।

अपने से या दूसरे से कैद किये हुओं का किसी उपाय से मुक्त करने पर पितरों को ब्रह्मपद प्राप्त होता है, इस प्रकार कहे वचन से वस्त्रदान के बाद अलग यज्ञोपवीत देकर शक्ति रहते छाता और अलंकार आदि देकर इस काल में स्पर्श के अयोग्य वस्तुओं का संकल्प करके 'पूजनं पूर्णमस्तु' 'संकल्पसिद्धिरस्तु' ऐसा कह कर ब्राह्मण से प्रत्युत्तर पाकर 'मन्त्रहीनं क्रियाहीनं०' 'यस्य स्मृत्या' 'देवताभ्यः०' इन मन्त्रों को जपे।

## अथ काण्डानुसमयपदार्थानुसमयविचारः

एवमासनादिसर्वपूजाकाण्डं दैवं समाप्य पैतृकमासनप्रभृतिपूजाकाण्डमारभेदिति काण्डानुसमयक्रम एव माधवसंमतः। कातीयास्त्वासनक्षणावाहनार्घ्यपर्यन्तं पाद्यान्तप्रयोगवत्पदार्थानुसमयक्रमेणैव दैवे पित्र्ये च कृत्वा गन्धादिपूजामेव काण्डानुसमयेन कुर्वन्ति। एकं पदार्थं दैवपित्र्यादिषु सर्वत्रानुष्ठाय तेनैव क्रमेण द्वितीयादिपदार्था अनुष्ठेया इत्ययं पदार्थानुसमयः। एकत्रैव सर्वपदार्थान् समाप्यान्यत्र सर्वपदार्थानुष्ठानमिति काण्डानुसमयः।

इसी प्रकार आसन आदि सब देवपूजा के देवकाण्ड को समाप्त करके पितरों का आसन आदि पूजाकाण्ड आरम्भ करे, यह काण्डानुसमय-क्रम अर्थात् एक कांड को समाप्त करके दूसरे काण्ड का आरम्भ ही माधवाचार्य-सम्मत है। कातीय तो आसन, क्षण, आवाहन और अर्घ्य पर्यन्त पाद्यान्त प्रयोग की तरह पदार्थानुसमय क्रम से ही देव और पितृकर्म करके गन्ध आदि पूजा को ही काण्डानुसमय से करते हैं। एक पदार्थ को देव पित्र्य आदि सर्वत्र अनुष्ठित करके उसी क्रम

---

पत्रार्कचम्पकाः। अलाभे मुख्यपात्राणां ग्राह्याः स्युः पितृकर्मणि॥' स्मृतिसंग्रह का यह वचन अंगिरा के—'न जातीकुसुमानि दद्यात् न कदलीपत्रम्' इस वचन के अपवाद में है। अत्रि ने कहा है—'पलाशेभ्यो विना न स्युरन्यपात्राणि भोजने'। इति।

१. वामनपुराणे—'बन्दीकृतास्तु ये केचित् स्वयं वा यदि वा परैः। येन केनाप्युपायेन यस्तान् मोचयते नरः॥ पितरस्तस्य गच्छन्ति शाश्वतं पदमव्ययम्॥' इति।

से द्वितीय आदि पदार्थों का अनुष्ठान करना, यही पदार्थानुसमय कहलाता है। एक ही जगह सब पदार्थों को समाप्त करके दूसरी जगह सब पदार्थों के अनुष्ठान को काण्डानुसमय कहते हैं।

अथान्यपवित्रे धृत्वा पित्रर्चनं संकल्प्यासनाद्याच्छादनान्तपूजा वैश्वदेवोक्तरीत्यैव पितृधर्मेण कार्या। विशेषस्तूच्यते।

अन्य पवित्र को धारण करके पितृपूजन का संकल्प कर आसन आदि से लेकर वस्त्रान्त पूजा वैश्वदेव में कहे हुए प्रकार से अपसव्यादि पितृधर्म से करे। विशेष यह है।

## अथ पित्रासनादि

द्विगुणभुग्नं कुशत्रयं विप्रवामे क्षिपेत्। पार्वणस्थाने विप्रत्रयपक्षे पितुर्यथानामगोत्रस्येदमासनमित्यादि पृथगुच्चारः। एकविप्रत्वे पितृपितामहप्रपितामहानामिदमासनमित्युच्चारः। एवमग्रिमोपचारेष्वप्यूह्यम्। शेषं प्राग्वत्। ततस्तृतीयनिमन्त्रणमपि प्राग्वद्धस्तधारणपूर्वकं कार्यम्।

पित्रासन आदि के सम्बन्ध में द्विगुंण-भुग्न तीन कुश ब्राह्मण के बाएँ रखे। पार्वण के स्थान में तीन ब्राह्मण के पक्ष में 'पितुर्यथानामगोत्रस्येदमासनम्' इत्यादि अलग ही उच्चारण करे। एक ब्राह्मण के पक्ष में 'पितृपितामहप्रपितामहानामिदमासनम्' ऐसा उच्चारण करे। ऐसे ही आगे के उपचारों में भी कल्पना कर ले। शेष पूर्ववत् है। इसके अनन्तर तृतीय निमन्त्रण भी पहले ही की तरह हस्तधारण पूर्वक करना चाहिये।

## अथार्घ्यासादनम्

द्विजाग्रे दक्षिणाग्रांस्त्रींस्त्रीन् दर्भानास्तीर्य तेष्वाग्नेयीसंस्थानि प्रतिपार्वणं पात्राणि त्रीण्येवासाद्य पितृपात्रपश्चिमे मातामहादिपार्वणस्य प्रतिपार्वणमेकविप्रत्वे नवविप्रत्वादिपक्षेऽपि 'त्रीण्येव पात्राणि। एकविप्रत्वे तद्धस्ते एवार्घ्यत्रयम्। नवविप्रत्वादिपक्षे एकैकं पात्रं विभज्य त्रिषु त्रिषु देयम्। प्रतिपात्रोपरि दक्षिणाग्रा द्विगुणाः साग्रा निरग्रा वा त्रयस्त्रयः कुशाः। पितृतीर्थेन पात्रेषु जलमापूर्य शन्नो देवीरिति सर्वपात्रेषु सकृदनुमन्त्रणमाश्वलायनानाम्[2]।

अर्घ्यासादन—श्राद्धीय ब्राह्मणों के आगे दक्षिणाग्र तीन-तीन कुशों को बिछाकर उनपर अग्निकोणसंस्थ प्रतिपार्वण तीन ही पात्र रखकर पितृपात्र के पश्चिम में मातामह आदि के पार्वण का प्रतिपार्वण एक-एक ब्राह्मण के और नौ ब्राह्मणादि के पक्ष में भी तीन ही पात्र होते हैं। एक ब्राह्मण

---

१. मनुः—'अन्नाभावे द्विजाभावे यद्येको ब्राह्मणो भवेत्। पात्राण्यासादयेत्त्रीणि न तु ब्राह्मणसंख्यया॥' दत्तकादेः कर्तुर्द्विपितृत्वादावपि वचनात् त्रीण्येव पात्राणीति हरिहरः। माधवीये बैजवापः—'अर्घ्ये पितॄणां त्रीण्येव कुर्यात् पात्राणि धर्मवित्। एकस्मिन् वा बहुषु वा ब्राह्मणेषु यथाविधि॥ इति।

२. आश्वलायन ने कहा है—'तैजसाश्ममयमृन्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वप आसिच्य, शन्नोदेवीरभिष्टयेत्यनुमन्त्रितासु तिलानावपति—'तिलोसि सोमदेवत्यो गोसवे देवनिर्मितः। प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वधा नमः' इति। अश्ममयं = स्फाटिकादि, मृन्मयं = हस्तकृतम्, जैसा छन्दोगपरिशिष्ट में कहा है—'कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम्। तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्॥' इति।

तो उसके हाथ में ही तीन अर्घ्य दे। नौ विप्रादि पक्ष में एक-एक पात्र का विभाग करके तीनों-तीनों में दे। प्रतिपात्र के ऊपर दक्षिणाग्र तीन कुश अग्रभाग के सहित या रहित रखे। पितृतीर्थ से पात्रों में जल भरके 'शन्नोदेवी' इस मन्त्र से सब पात्रों में एक बार अनुमन्त्रण आश्वलायनों के मत में है।

तद्भिन्नैः कातीयादिभिः शन्नोदेवीरिति मन्त्रेण प्रतिपात्रं मन्त्रावृत्त्या जलमापूर्यं, हिरण्यकेशीयास्तु शन्नोदेवीरिति मन्त्रं नेच्छन्ति। सर्वमते तिलोसीति मन्त्रावृत्त्या प्रतिपात्रं तिलावापः। अत्र पितृशब्दस्यानूह इत्युक्तम्। गन्धादिप्रक्षेपः प्राग्वत्। ततः पित्रर्घ्यपात्रं सम्पन्नं पितामहार्घ्यपात्रं सम्पन्नमित्यादि यथालिङ्गं संपत्ति वाचयित्वापो दत्त्वा दक्षिणामुखस्तिष्ठन् सव्यं करं कुशतिलयुतं विप्रवामजानुनि न्यस्य पितृपितामहादीन् द्वितीयान्तानुच्चार्य भवत्सु आवाहयिष्ये इति पंक्तिमूर्धन्यमेकं विप्रं पृच्छेत्। सर्वत्र पंक्तिमूर्धन्यं प्रत्येव प्रश्नः। आवाहयेत्यनुज्ञात उशन्तस्त्वेति मन्त्रावृत्त्याऽमुकममुकनामगोत्ररूपमावाहयामीति प्रतिविप्रं मूर्धादिपादान्तमंसादियुग्माङ्गेषु तिलविकिरणेनावाह्य सर्वविप्रावाहनान्ते [1]आयन्तु नः पितर इति सकृदुपतिष्ठेत्।

आश्वलायन-भिन्न कातीय आदि 'शन्नोदेवी' इस मन्त्र से प्रत्येक पात्र में मन्त्र की आवृत्ति करके जल भरें। हिरण्यकेशीय तो 'शन्नोदेवी' इस मन्त्र को नहीं चाहते। सब के मत में 'तिलोसि' इस मन्त्र की आवृत्ति कर प्रतिपात्र में पिण्ड छोड़े। इसमें पितृशब्द का ऊह नहीं होता, ऐसा कहा है। गन्धादि का प्रक्षेप पहले की तरह है। इसके बाद 'पित्रर्घ्यपात्रं संपन्नं' 'पितामहार्घ्यपात्रं सम्पन्नं' इत्यादि यथालिंग सम्पत्ति कहवाकर जल देकर दक्षिणमुख बैठा हुआ श्राद्धकर्ता कुशतिलसहित सव्य हाथ को ब्राह्मण के बायें जानु पर रखकर द्वितीयान्त पितृ-पितामह आदि का उच्चारण करके 'भवत्सु आवाहयिष्ये' ऐसा कहकर ब्राह्मणपंक्ति में सबसे श्रेष्ठ ब्राह्मण से पूछे। सर्वत्र पंक्तिमूर्धन्य से ही प्रश्न करे। 'आवाहय' ऐसी आज्ञा पाकर 'उशन्तस्त्वा' इस मन्त्र की आवृत्ति से 'अमुक-नाम-गोत्र-रूपमावाहयामि' ऐसा कहकर प्रतिब्राह्मण को सिर से पैर तक कन्धा आदि जोड़े-अंगों में तिल बिखेर कर आवाहन करके सब ब्राह्मणों के आवाहन के अन्त में 'आयन्तु नः पितरः' इससे एक बार उपस्थान करे।

अत्र कातीयैर्नमो वः पितर इत्यादि इह सन्तः स्यामेत्यन्तेनार्चनमुक्तम्। आवाहने सव्यापसव्ययोर्विकल्पः। हस्तशिष्टतिलान् विप्राग्रे भूमौ विकीर्य पित्रर्घ्यपात्रसम्पत्तिरस्त्वित्युक्त्वा प्रत्युक्तः सव्यं कृत्वाऽधःस्थदर्भैः सहार्घ्यपात्रमेकैकं पाणिभ्यामुद्धृत्य विप्राग्रे स्वधार्घ्या इति मन्त्रावृत्त्या स्थापयेत्। एकविप्रत्वे एकाग्रे एव पात्रत्रयं मन्त्रावृत्त्या नवविप्रत्वे पितृविप्रत्रयमुख्याग्रे पात्रन्यासो मन्त्रेण। एवं पितामहादिषु मुख्याग्रे एव। एवं च त्रिरेव स्वधार्घ्या इति मन्त्रोच्चारः प्रतिपार्वणे। अथर्ववेदिनां प्रपितामहादिपित्रन्तं प्रातिलोम्येन सर्वप्रयोगः।

इसमें कातीयों का 'नमो वः पितरः' इत्यादि 'इह सन्तः स्याम' यहाँ तक पूजन कहा है।

---

[1] कूर्मपुराणे—'अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः। आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः॥ आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः॥' इति।

आवाहन शब्द में सव्यापसव्य का विकल्प है। हाथ में बचे तिलों को ब्राह्मण के आगे भूमि में बिखेर कर 'पित्र्यर्घ्यपात्रसम्पत्तिरस्तु' ऐसा कहकर ब्राह्मण से 'अस्तु' यह प्रत्युत्तर पाकर सव्य करके नीचे रखे कुशों के साथ एक-एक अर्घ्यपात्र को दोनों हाथों से उठाकर ब्राह्मण के आगे 'स्वधार्घ्या' इस मन्त्र की आवृत्ति से स्थापित करे। एक ब्राह्मण पक्ष में एक के आगे ही तीनों पात्रों को मन्त्र की आवृत्ति से और नौ विप्र के पक्ष में पितृ के तीन ब्राह्मणों में मुख्य के आगे मन्त्र से पात्र का स्थापन करे। इसी प्रकार पितामह आदि में मुख्य के आगे ही रखे। इस तरह तीन बार ही 'स्वधार्घ्या' इस मन्त्र का उच्चारण प्रतिपार्वण में करे। अथर्ववेदियों का प्रपितामह से आरंभ करके पितृपर्यन्त प्रतिलोम ही से सब प्रयोग होता है।

ततः सन्त्वर्घ्या इति प्रत्युक्तोऽपो दत्त्वा पात्रस्थं पवित्रं विप्रहस्तेषु दत्त्वा प्रथमपात्रोदकं सशेषं खड्गपात्रे पात्रान्तरे वा गृहीत्वा पितरिदं ते अर्घ्यं पितामहेदं ते अर्घ्यमित्यादि यथालिङ्गं प्रत्येकमर्घ्यं देयम्। पित्रादित्रयाणामेकविप्रत्वे त्रिभिः पात्रैरेकस्यैव हस्तेऽर्घ्यं देयम्। षण्णामेकविप्रत्वे षट्पात्राण्येकहस्ते। पितुः स्थाने विप्रत्रयादिपक्षे एकार्घ्यं विभज्य तेषु देयम्। अर्घ्यान्ते जलदानं पितरिदं ते अर्घ्यमित्यर्घ्यमन्त्रश्च प्रतिविप्रमावर्तते। एवं पितामहादिविप्रेष्वपि एवमर्घ्यं दत्त्वा विप्रहस्तात्स्रवन्तीरपो या दिव्या इति मन्त्रेण प्रतिविप्रमनुमन्त्रयेदिति बह्वृचः।

तदनन्तर ब्राह्मण से 'सन्त्वर्घ्या' ऐसा उत्तर पाकर जल देकर पात्रस्थित पवित्र को ब्राह्मणों के हाथ में देकर प्रथम पात्र के जल को कुछ बचाकर गेंडे के पात्र में या दूसरे पात्र में लेकर 'पितरिदं ते अर्घ्यं' 'पितामहेदं ते अर्घ्यं' इत्यादि यथालिंग प्रत्येक को अर्घ्य दे। पित्रादि तीनोंके एक विप्र पक्ष में तीनों पात्रों से एक ही के हाथ में अर्घ्य दे। छ का एक ब्राह्मण हो तो छ पात्र एक के हाथ में दे। पिता के स्थान में विप्रत्रय आदि पक्ष में एक अर्घ्य को विभाग करके उनमें दे। अर्घ्य के अन्त में जलदान 'पितरिदं ते अर्घ्यं' इस अर्घ्य मन्त्र की आवृत्ति प्रतिब्राह्मण होती है। इसी प्रकार पितामह आदि के ब्राह्मणों में भी ऐसे ही अर्घ्य देकर ब्राह्मण के हाथ से गिरते हुये जल का "या दिव्या' इस मन्त्र से प्रत्येक ब्राह्मण का अनुमन्त्रण करे, ऐसा बह्वृच शाखा वाले कहते हैं।

अन्यशाखिनां तु या दिव्या इति मन्त्रेणार्घ्यदानम्। अर्घ्यदानान्ते प्रतिविप्रमपो दानम्। तथा चैकविप्रत्वेऽनुमन्त्रणमपो दानं चान्ते सकृदेव। विप्रभेदे त्वावर्तते। अर्घ्यदाने नामगोत्राद्युच्चारो न क्रियते। श्राद्धसागरकारैस्तु कार्य इति युक्तं भातीत्युक्तम्।

अन्य शाखा वालों का तो 'या दिव्या' इस मन्त्र से अर्घ्यदान होता है। अर्घ्यदान के अन्त में प्रतिविप्र को जलदान करे। इस तरह एक ब्राह्मणपक्ष में अनुमन्त्रण और जल का दान अन्त में एक बार ही होता है। विप्रभेद में तो आवृत्ति होती है। अर्घ्यदान में नाम गोत्र आदि का उच्चारण नहीं किया जाता। श्राद्धसागरकार तो उच्चारण करना कहते हैं, यह युक्त प्रतीत होता है यह कहा है।

## अथ संस्रावमुखाञ्जनादिविचारः

अथ शेषजलयुतप्रथमार्घ्यपात्रे पात्रद्वयस्थशेषोदकमेकीकृत्य तेन जलेन मुखाञ्जनं कार्यम्। आयुःकामेन नेत्रसेचनं कार्यम्। संस्रवान्समवनीयेत्याद्याश्वला-

यनसूत्रात्। केचिद्विप्रहस्तगलिताम्बुसंस्रावस्तस्यैकीकरणमाहुः। दर्शादौ मातामहपात्रोदके तत्पात्रद्वयोदकं समवनीय मातामहपात्रोदकं पितृपात्रस्थसंस्रावे संनयेत्। मातृपार्वणभेदे मातामहपात्रसमवनीतोदकं मातृपात्रस्थसमवनीतोदके तदुदकं पितृपात्रस्थैकीकृतोदक इति तत्संस्रावपात्रं दैविकविप्रादुत्तरतोऽरत्निमात्रे प्रोक्षिते दर्भेषु न्युब्जं सकूर्चं पितृभ्यः स्थानमसीत्यासादयेत्।

अवशिष्ट जलयुक्त दो अर्घ्यपात्रों का बचा हुआ जल मिला कर उस जल से मुखाञ्जन करे। आयुष्य चाहने वाले को उससे आंख धोना चाहिये, क्योंकि आश्वलायन सूत्र में 'संस्रवान् समवनीय' संस्रव को लेकर सींचे इत्यादि कहा है। कुछ लोग ब्राह्मण के हाथ से गिरा हुआ जल संस्राव है उसको मिलाने को कहते हैं। दर्श आदि में मातामह-पात्र के जल में दो पात्रों का जल मिलाकर मातामह-पात्र का जल पितृपात्रस्थित संस्राव में मिलावे। मातृपार्वण के भेद में मातामह के पात्र में मिलाया हुआ जल मातृपात्रस्थित मिले हुए जल में वह जल पितृपात्रस्थित एक किये जल में मिला दे। उस संस्राव-पात्र को दैविक ब्राह्मण से उत्तर की ओर अरत्निमात्र प्रोक्षित भूमि में कुशाओं पर कूर्चसहित उलटा करके 'पितृभ्यः स्थानमसि' ऐसा कहके रख दे।

यद्वा प्रथमपात्रमुत्तानं संस्रावोदकसहितं मन्त्रेणासाद्य तृतीयपात्रेण सकूर्चपवित्रं तदाच्छादयेत्। पक्षद्वयेऽपि गन्धादिनाभ्यर्च्यासमाप्तेर्न चालयेन्न च स्पृशेत्। कातीयास्तु शुन्धन्तामिति भूमिं प्रोक्ष्य पितृषदनमसीति कुशानास्तीर्य पितृभ्यः स्थानमसीति प्रथमं न्युब्जं कृत्वा गन्धादिदीपान्तैरर्चन्ति।

अथवा संस्राव के जल-सहित प्रथम पात्र को मन्त्र से उत्तान रखकर कूर्चसहित पवित्र को तीसरे पात्र से ढक दे। दोनों पक्षों में भी गन्ध आदि से पूजन करके समाप्ति तक न उसे चलावे न स्पर्श करे। कातीय तो—'शुन्धन्तां' इस मन्त्र से भूमि का प्रोक्षण करके 'पितृषदनमसि' इस मन्त्र से कुशा बिछा कर 'पितृभ्यः स्थानमसि' यह कहके प्रथम पात्र को उल्टा करके गन्ध से लेकर दीपपर्यन्त पूजन करते हैं।

## अथ पितॄणां गन्धाद्यैः पूजनम्

अथ प्राचीनावीती आद्यन्तयोरपो यच्छन् गन्धाद्यैः पूजनं चरेत्—अमुकशर्मन् यथानामगोत्र अयं ते गन्धः स्वधा नम इति। एकविप्रत्वे शर्माणोऽयं गन्ध इत्यादिना त्रिस्त्रिर्गन्धदानम्। शेषं प्राग्वत्। केचिदमी ते गन्धा इति बहुत्वं गन्धे प्राहुः। अर्घ्यदानभिन्ने सर्वत्र स्वधा नम इत्यन्तेन दानम्।

प्राचीनावीती होकर आदि अन्त में जल देते हुए गन्ध आदि से पूजन करे—'अमुक-शर्मन् यथानाम-गोत्र अयं गन्धः स्वधा नमः'। एक विप्र पक्ष में 'शर्माणः अयं वो गन्धः' इत्यादि कहकर तीन-तीन बार गन्धदान करे। शेष पूर्ववत् है। कुछ लोग—'अमी ते गन्धा' ऐसा गन्ध में बहुवचन का प्रयोग करते हैं। अर्घ्यदान के अतिरिक्त सर्वत्र 'स्वधा नमः' इसके अन्त में दान करे।

---

१. यमः—'पैतृकं प्रथमं पात्रं तस्मै पैतामहं न्यसेत्। प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेत्॥ स्पृष्टमुत्तानमन्यत्र नीतमुद्घाटितं तथा। पात्रं दृष्ट्वा व्रजन्त्याशु पितरस्तं शपन्ति च॥' उशनाः—'उत्तानं विवृतं वापि पितृपात्रं न तद्भवेत्।' वैश्वदेवे उत्तानमिति मदनपारिजातः।

अत्र पित्र्यविप्रपूजने गन्धादेः पदार्थानुसमयः काण्डानुसमयो वा। संपूर्णवाचनादि प्राग्वत्कृत्वा चतुष्कोणं वर्तुलं च यथाक्रमं वारिणा गोमयभस्मादिना वा [1]मण्डलानि सव्यापसव्याभ्यां कुर्यात्। तत्र नैर्ऋतीमारभ्येशानोपर्यन्तं दैवे, ईशानीतो नैर्ऋतीपर्यन्तं पित्र्ये च प्रादक्षिण्याप्रादक्षिण्याभ्यां कार्याणि। तत्र पूर्वोक्तपात्राण्यासादयेत्।

इसमें पितृब्राह्मण के पूजन में गन्ध आदि का पदार्थानुसमय या काण्डानुसमय समस्त वाचनादि पूर्ववत् करके चौकोना और गोल यथाक्रम जल से अथवा गोबर-भस्म आदि से सव्य-अपसव्य होकर मण्डल बनावे। यहां मंडल देव में नैर्ऋत्य दिशा से आरंभ करके ईशान दिशा तक और पित्र्य में ईशान से नैर्ऋत्यदिशा पर्यन्त प्रदक्षिण और अप्रदक्षिण क्रमसे करे। उसमें पूर्वोक्त पात्रों को रखे।

## अथ पात्रासादनादि

नायसान्यपि पात्राणि पैत्तलानि न तु क्वचित्।
न च सीसमयानीह शस्यन्ते त्रपुजान्यपि॥

कांस्यपात्रं विकल्पितम्[2]। पर्णपात्रेषु पलाशमधूकोदुम्बरकुटजप्लक्षजानि शस्तानि। कदलीचूतपनसजम्बुचम्पकानि मध्यमानि[3]। एवं पात्राण्यासाद्य पितृपूर्वकं परितो भस्ममर्यादां पितृपूर्वकविप्राणां [4]करशुद्धिं च सव्यापसव्याभ्यां कुर्यात्। तत्र पिशङ्ग इति रक्षाण इति मन्त्रद्वयं केचिदाहुः। आचम्य करशुद्धिजलं पादक्षालनमण्डले[5] क्षिपेत्।

पात्रासादन—लोहे के पात्र न रखे। कहीं पीतल के पात्रों का भी निषेध है। शीशा तथा रांगे के भी पात्र प्रशस्त नहीं होते। कांस्य-पात्र में विकल्प है। पत्ते के पात्रों में—पलाश, महुआ, गूलर,

---

१. मण्डल के अभाव में मार्कण्डेय ने दोष कहा है—'यातुधानाः पिशाचाश्च क्रूरा ये चैव राक्षसाः। हरन्ति रसमन्नस्य मण्डलेन विवर्जितम्॥' ब्रह्मपुराणे—'मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः। गौरमृत्तिकया वापि कारयेन्मण्डलं ततः। चतुःकोणं द्विजाग्रचस्य त्रिकोणं क्षत्रियस्य तु। मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम्॥' बह्वृचपरिशिष्ट में प्रकारान्तर है—'दैवे चतुरस्रं पित्र्ये वृत्तं मण्डलं कृत्वा क्रमेण सयवान् सतिलांश्च दर्भान् दद्यात्' इति।

२. वाराहपुराण के—'सौवर्णानीह रौप्याणि कांस्यानि तदसम्भवे' इस विधायक वचन और ब्रह्मपुराण के—'कांस्यपात्रे हविर्दृष्ट्वा निराशाः पितरो गताः' इस निषेधक वचन से कांस्यपात्र वैकल्पिक है।

३. अङ्गिरा के—'न जातीकुसुमानि दद्यान्न कदलीपत्रम्' इस वचन के अपवाद में स्मृतिसंग्रहोक्त—'श्राद्धे पलाशपात्राणि मधुकौदुम्बराणि च। पारिकाकुटजप्लक्षककचानि क्रमाज्जगुः॥ कदलीचूतपनसजम्बुपुन्नागचम्पकाः। अलाभे मुख्यपात्राणां ग्राह्याः स्युः पितृकर्मणि॥' इस वचन से मुख्यपात्रों के अलाभ में ग्राह्य होने से कदलीपत्रादि मध्यम हैं।

४. मत्स्यपुराणे—'अकृत्वा भस्ममर्यादां यः कुर्यात् पाणिशोधनम्। आसुरं तद् भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥' इति।

५. ब्रह्माण्डे—'प्रक्षाल्य हस्तपादादि पश्चादद्भिर्विधानवत्। प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपेच्छुचौ॥' मण्डलोपरीति हेमाद्रिः।

कुरैया और पाकड़ के प्रशस्त होते हैं। केला, आम, कटहल, जामुन और चम्पा के मध्यम होते हैं। इस प्रकार पात्रासादन करके पितृपूर्वक चारो तरफ से भस्म-मर्यादा और पितृपूर्वक ब्राह्मणों की हस्त-शुद्धि सव्य-अपसव्य से करे। उसमें कोई 'पिशंग' और 'रक्षाण' इन दो मन्त्रों को कहते हैं। आचमन करके कर-शुद्धि के जल को पादक्षालन मण्डल में फेंक दे।

## अथ अग्नौकरणम्

तत्राश्वलायनानां गृह्याग्निमतां व्यतिषङ्गेण श्राद्धप्रयोगे गृह्याग्निपक्वचरुणा गृह्याग्नावेव कार्यम्। व्यतिषंगाभावे पाणिहोमः। श्रौताग्निमतां दर्शे व्यतिषङ्गाभावात्पाणिहोम एव। पूर्वेद्युरन्वष्टक्ययोर्दक्षिणाग्नौ श्रपणं होमश्च। निरग्निकानां तु सर्वत्र पाणिहोम एव।

अग्नौकरण—गृह्याग्नि वाले आश्वलायनों को व्यतिषंग ( अन्योन्यसंबन्ध ) से श्राद्धप्रयोग में गृह्याग्नि में पके हुए चरु से गृह्याग्नि में ही करना चाहिये। व्यतिषंग के अभाव में पाणिहोम करे। श्रौताग्नि वालों का दर्श में व्यतिषंग का अभाव होने से पाणिहोम ही होता है। पहले दिन दो अन्वष्टकाओं में दक्षिणाग्नि में श्रपण और होम होता है। निरग्निकों का तो सर्वत्र पाणिहोम ही होता है।

आपस्तम्बादीनां श्रौताग्निमतां सर्वाधानिनां दक्षिणाग्नौ, अर्धाधानिनां गृह्याग्निमात्रवतां च गृह्याग्नावेव। प्रवासस्थानां निरग्निकानां च अयाश्चाग्ने मनोज्योतिरुद्बुध्यव्याहृतिहोमेनोत्पादिते लौकिकाग्नौ हुत्वाग्नेरुत्सर्गः, न त्वेषां कापि पाणिहोमः। पाकस्तु सर्वत्र पचनाग्नावेव।

श्रौताग्निवाले आपस्तम्ब आदि सर्वाधानियों का दक्षिणाग्नि में और केवल गृह्याग्नि वाले अर्धाधानियों का गृह्याग्नि में ही होम होता है। परदेशस्थित निरग्निकों का 'अयाश्चाग्ने' 'मनोज्योति' 'उद्बुध्यस्व' और व्याहृति के होम से उत्पादित लौकिकाग्नि में होम करके अग्नि का त्याग करे। इनके यहां कहीं भी पाणिहोम नहीं होता। पाक तो सब जगह पचनाग्नि में ही होता है।

कातीयानां गृह्याग्निमतां गृह्याग्निविहृतपचनाग्नौ पाकोऽग्नौकरणं तु गृह्याग्नावेव। श्रौताग्निमतां सर्वाधानपक्षे दक्षिणाग्नावर्धाधानपक्षे औपासनाग्नाविति काशिकायामुक्तम्। कातीयानामर्धाधानपक्ष एव युक्त इति भाति। निरग्नीनां कातीयानामपसव्यादिना पित्र्यादिद्विजहस्त एवाग्नौकरणम्। तत्र पक्षद्वयम्—देवद्विजकरे एव सव्येन होमः, यद्वाऽपसव्येन पित्र्यद्विजपंक्तौ प्रथमद्विजकरे इति। बह्वृचानां तु पित्र्यद्विजकरेष्वेव प्रतिविप्रं होमः।

गृह्याग्नि वाले कातीयों का गृह्याग्निविहृत पचनाग्नि में पाक और अग्नौकरण तो गृह्याग्नि में ही होता है। काशिका में कहा है—श्रौताग्नि वालों का सर्वाधान पक्ष में दक्षिणाग्नि में और अर्धाधान पक्ष में औपासनाग्नि में होम होता है। कातीयों का अर्धाधान पक्ष ही ठीक है ऐसा युक्त प्रतीत होता है। निरग्निककातीयों का अपसव्य आदि से पित्र्यादि ब्राह्मण के हाथ ही में अग्नौकरण होता है। उसमें दो पक्ष हैं—देव-ब्राह्मण के हाथ में ही सव्य से होम अथवा अपसव्य से पितृब्राह्मण की पंक्ति में प्रथम ब्राह्मण के हाथ में होता है। बह्वृचों का तो पितृब्राह्मण के हाथ में ही प्रतिविप्र होम होता है।

वाजसनेयिनां त्वेकहोम एवेति श्राद्धकाशिकायां कातीयसूत्रवृत्तौ। केचित्तु पृष्टोदिविविधानेनाग्निमुत्पाद्याग्नावेव जुह्वति। सामगादीनां साग्नीनामग्नावग्ने-

रसन्निधाने दैवकरे पित्र्यकरे वा। निरग्नीनां तु देवद्विजकर एव। मृतभार्यस्यापत्नीकस्य प्रथमदेवद्विजकर एव होमो न पित्र्ये इति सर्वसाधारणम्।

वाजसनेयियों का तो एक होम ही होता है, ऐसा श्राद्धकाशिका कातीयसूत्रवृत्ति में कहा है। कोई तो पृष्ठोदिविविधान से अग्नि का उत्पादन करके अग्नि में ही होम करते हैं। साग्निक सामवेदियों के यहां अग्नि में और अग्नि की असन्निधि में देव या पितृ-ब्राह्मणों के हाथ में होम होता है। निरग्निकोंका देवब्राह्मण के हाथ में ही होम होता है। जिसकी स्त्री मर चुकी है उस पत्नीरहित का प्रथम देवब्राह्मण के हाथ में होम होता है पितृ-ब्राह्मण के हाथ में नहीं, यह सर्वसाधारण है।

## अथ होमप्रकारः

बह्वृचानां व्यतिषङ्गपक्षे 'अग्नावग्नौकरणं करिष्ये' इति पृष्ट्वा क्रियतामिति अनुज्ञातो गृह्यपक्वं चरुमुद्धृत्य द्विधा विभज्यापसव्येनोत्तरभागादवदानसम्पदामेक्षणेऽवदाय सोमाय पितृमते स्वधा नमः सोमाय पितृमत इदं न ममेति होमत्यागौ कृत्वा दक्षिणभागात्पुनस्तथैवावदाय अग्नये कव्यवाहनाय स्वधा नम इति होमत्यागौ कुर्यात्। सव्येनापसव्येन वा मेक्षणमग्नावनुप्रहरेत्। यद्वा सव्येन 'स्वाहान्तोक्तमन्त्रेणाहुतिद्वयं सोमाग्न्योर्व्यत्यासेनादाय जुहुयादिति।

बह्वृचों का व्यतिषंग पक्ष में 'अग्नावग्नौकरणं करिष्ये' यह पूछकर 'क्रियताम्' ऐसी अनुज्ञा पाकर गृह्याग्नि में पकाये हुए चरु को निकाल कर दो विभाग करके अपसव्य से उत्तर भाग से अवदानसम्पदा, मेक्षण इन दोनों को लेकर 'सोमाय पितृमते स्वधा नमः इदं न मम' इससे होम और त्याग करके दक्षिणभाग से पुनः उसी तरह 'अग्नये कव्यवाहनाय स्वधा नमः' इससे होम और त्याग करें। सव्य से अथवा अपसव्य से मेक्षण को अग्नि में छोड़ दे। अथवा सव्य से स्वाहान्त उक्त मन्त्र से दो आहुति लेकर व्यत्यास से सोम और अग्नि के लिये होम करे।

कातीयानां तु गृह्ये श्रपणमकृत्वैव पचनाग्निपक्वमन्नमादाय घृताक्तं कृत्वा पूर्ववत्प्रश्नानुज्ञाऽनन्तरं स्मार्ताद्यग्निं परिस्तीर्य तिस्रः समिध आधाय सव्येनाग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति मेक्षणेनाहुतिद्वयं जुहुयादपसव्येन वा पाणिहोमेऽपीत्थमेव प्रकार ऊह्यो विशेषस्तूक्तः।

कातीयों का तो गृह्याग्नि में पकाये विना ही पचनाग्नि में पकाया हुआ अन्न लेकर उसे घृताक्त करके पहले के समान प्रश्न और अनुज्ञा के बाद स्मार्त आदि अग्नि का कुश परिस्तरण करके तीन समिधा लेकर सव्य से 'अग्नये कव्यवाहनाय स्वाहा' 'सोमाय पितृमते स्वाहा' ऐसा कहकर मेक्षण से दो आहुति दे अथवा अपसव्य से पाणिहोम में भी इसी प्रकार ऊह करे। विशेष तो कहा है।

आपस्तम्बानां तु आज्यभागान्ते उद्ध्रियतामग्नौ च क्रियतामिति प्रश्ने काममुद्ध्रियतामिति अनुज्ञानम्। हिरण्यकेशीयानामुद्धरिष्याम्यग्नौ करिष्यामीति

---

१. शौनकः—'स्वाहाकारेण होमे तु भवेद्यज्ञोपवीतवान्। तत्र प्रागग्नये हुत्वा पश्चात् सोमाय हूयते॥ अग्नौ यज्ञोपवीत्येव प्रक्षिपेन्मेक्षणं ततः॥' छन्दोगपरिशिष्टे—'अग्नौकरणहोमश्च कर्तव्य उपवीतिना। अपसव्येन वा कार्यो दक्षिणाभिमुखेन च॥' इति।

प्रश्नः। यन्मे मातेत्यादिमन्त्रैः सप्तान्नाहुतयः षडाज्याहुतय इति त्रयोदशाहुतयः। मन्त्रास्तु विस्तरभयान्नोक्ताः।

आपस्तम्बों का तो आज्यभाग के अन्त में 'उद्ध्रियतामग्नौ च क्रियतां' इस प्रश्न में 'काममुद्ध्रियतां' यह अनुज्ञा होती है। हिरण्यकेशियों का 'उद्धरिष्यामि, अग्नौ करिष्यामि' यह प्रश्न होता है। 'यन्मे माता' इत्यादि मन्त्रों से अन्न की सात आहुति और घी की छ आहुति, इस प्रकार तेरह आहुतियां होती हैं। विस्तार के भय से मन्त्र नहीं कहे।

हिरण्यकेशीयानामाज्यभागान्ते सोमाय पितृमते इत्यादि षोडशमन्त्रैः षोडशाज्याहुतयः षोडशान्नाहुतयश्च प्रतिपार्वणं बोध्याः। मन्त्रेषु पित्रादिपदोह आज्यान्नपदयोरूहश्च तद्ग्रन्थेष्वेव ज्ञेयोऽतिविस्तृतत्वान्नोच्यते।

हिरण्यकेशियों का आज्यभाग के अन्त में 'सोमाय पितृमते' इत्यादि सोलह मन्त्रों से घी की सोलह और अन्न की सोलह आहुतियां प्रत्येक पार्वण में जानना चाहिये। मन्त्रों में पिता आदि पद का ऊह और आज्यान्न पद का ऊह उनके ग्रन्थों से ही जानना चाहिये, अतिविस्तृत होने से नहीं कहता हूँ।

## अथ पाणिहोमप्रकारः

तत्र 'विप्रपाणावग्नौकरणं करिष्ये' इति प्रश्नः, क्रियतामित्यनुज्ञा। करिष्ये इति प्रश्ने कुरुष्वेत्यनुज्ञा न भवतीति सर्वत्राश्वलायनमतम्। कातीयादीनां तु भवत्येव। आश्वलायनसूत्रवृत्तौ तु पाणिहोमे कथमपि प्रश्नः प्रतिवचनं च न कार्यमिति द्योतितम्। सदर्भं पित्र्यविप्रपाणिं सव्येन परिसमुह्य पर्युक्ष्य मेक्षणेन करेण वा पूर्ववदाहुतिद्वयं सोमायेत्यादिमन्त्राभ्यां प्राचीनावीत्येव जुहुयात्। तत्र करेण होमपक्षे वामहस्तेन दर्भेण दक्षिणकरे उपस्तीर्य दक्षिणेन द्विरवदाय वामेनाभिघार्य चतुरवत्तित्वादि संपाद्यम्।

पाणिहोम में 'विप्रपाणौ अग्नौकरणं करिष्ये' यह प्रश्न है, 'क्रियताम्' यह आज्ञा है। 'करिष्ये' इस प्रश्न में 'कुरुष्व' ऐसी आज्ञा नहीं होती यह सर्वत्र आश्वलायन का मत है। कातीयों का तो होता ही है। आश्वलायनसूत्र की वृत्ति में तो पाणिहोम में किसी प्रकार का प्रश्न या प्रतिवचन नहीं करे, ऐसा प्रकट किया है। कुशसहित पितृ-ब्राह्मण के हाथ का सव्य से परिसमूहन और पर्युक्षण करके मेक्षण से या हाथ से पूर्ववत् दो आहुति यों का होम 'सोमाय' इत्यादि दो मन्त्रों से प्राचीनावीती होकर ही करे। उसमें हाथ से होम के पक्ष में बाएं हाथ से कुश लेकर और दाहिने हाथ में उपस्तरण करके दक्षिण हाथ से दो बार अवदान करके और बाएं हाथ से अभिघारण कर चतुरवत्तित्वादि का सम्पादन करे।

बह्वृचानां सर्वपित्र्यकरेषु होमः। एकोद्दिष्टविप्रकरे होमः कृताकृतः। होमान्ते सव्येन परिसमूहनोक्षणे। पाणिहोमे मेक्षणानुप्रहरणं न। केचित्पाणिहोमे परिसमूहनादिकं मेक्षणं च नेच्छन्ति। विप्राश्च पाणिहुतान्नं कर्त्रा देवपूर्वं सव्येनैवामासुपकमिति मन्त्राभिघारिते स्वस्वपात्रे संस्थाप्य भोजनस्थानादन्यत्राचम्य यथास्थानमुपाशेयुः।

बह्वृचों का सब पितृ-ब्राह्मणों के हाथों में होम होता है। एकोद्दिष्ट-ब्राह्मण के हाथ में होम करे या नहीं करे। होम के अन्त में सव्य से परिसमूहन और उक्षण करे। पाणिहोम में मेक्षण का अनुप्रहरण नहीं करे। कुछ लोग पाणिहोम में परिसमूहन आदि और मेक्षण को नहीं चाहते। ब्राह्मण भीपाणि में होम किये अन्न को कर्ता के द्वारा देवपूर्वक सव्य से ही 'आमासुपक्वं' इस मन्त्र से अभिघारित अपने-अपने पात्रों में रख कर भोजनस्थान से दूसरी जगह आचमन करके अपने-अपने स्थान पर बैठें।

## अथ हुतशेषविचारः

अग्नौकरणशेषं पिण्डार्थमवस्थाप्य पित्र्यपात्रेष्वेव सर्वान्नपरिवेषणान्ते परिवेषणीयम्। केचिदग्नौकरणशेषपरिवेषणोत्तरं सर्वान्नपरिवेषणमाहुः। अग्नौकरणशेषं [1]देवपात्रेषु न देयम्। कातीयानां तु साग्नीनामग्नौ होमे देवपूर्वं सर्वपात्रेषु शेषदानम्। निरग्नेर्देवविप्रकरे होमे पितृपात्रेष्वेव पित्र्यकरे होमे देवादिसर्वपात्रेषु हुतशेषदानमिति काशिका।

अन्नं पाणौ हुतं यच्च यच्चान्यत्परिवेषितम्।
एकीकृत्यैव भोक्तव्यं पृथग्भक्षो न विद्यते॥

बौधायनानां तु पाणिहुतेऽन्ने भक्षितेऽन्यान्नपरिवेषणमुक्तम्।

अग्नौकरण के बचे हुए अन्न को पिण्ड के लिये रखकर पितृपात्रों में ही सब अन्न परोसने के बाद परोसे। कुछ लोग अग्नौकरण-शेष का परिवेषण करने के बाद सब अन्न का परिवेषण कहते हैं। अग्नौकरण-शेष को देवपात्रों में नहीं दे। साग्निक कातीयों का तो अग्नि के होम में देवपूर्वक सब पात्रों में शेष-दान होता है। निरग्निक का देवब्राह्मण के हाथ में होम करने पर पितृपात्रों में ही पितृब्राह्मण के हाथ में देव आदि सभी पात्रों में होम-शेष का दान होता है, ऐसा काशिका का मत है। जिस अन्न का होम पाणि में किया गया है और जो परोसा गया है उसको मिलाकर ही भक्षण करे उसका अलग भक्षण नहीं करे। बौधायनों का तो पाणिहुत अन्न-भक्षण के बाद दूसरे अन्न का परिवेषण कहा है।

## अथ अन्नपरिवेषणम्

अथ पूर्वोक्तवद्देवपूर्वं घृताभिघारितपात्रेषु पूर्वोक्तहविष्यान्नपरिवेषणं [2]स्वयं पत्नी वान्यो वा कुर्यात्।

नापवित्रेण नैकेन हस्तेन च विना कुशम्।
नायसेनापि पात्रेण श्राद्धेषु परिवेषयेत्॥

---

१. हुतावशिष्ट के सम्बन्ध में यम ने कहा है—'दैवविप्रकरेऽनग्निः कृत्वाऽग्नौकरणं द्विजः। शेषयेत् पितृविप्रेभ्यः पिण्डार्थं शेषयेत्तथा॥ अग्नौकरणशेषं तु पित्र्येषु प्रतिपादयेत्। हुतशेषं न दद्याच्च कदाचिद् वैश्वदेविके॥' वायुपुराणे—'हुत्वा दैवकरेऽनग्निः शेषं पित्र्ये निवेदयेत्। न हि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैः॥' इति।

२. धर्म का कथन है—'फलस्यानन्तता प्रोक्ता स्वयं च परिवेषणे।' वायुपुराण और भविष्यपुराण में कहा है—'भार्यया श्राद्धकाले तु प्रशस्तं परिवेषणम्।' हारीतः—'सौवर्णराजताभ्यां च खड्गेनौदुम्बरेण वा। दत्तमक्षय्यतां याति फल्गुपात्रेण वा पुनः॥' फल्गुपात्रं = कठूमर काठ का बना पात्र।

व्यञ्जनादिकं[१] पर्णाद्यन्तर्हितहस्तैर्देयम् ।

दर्व्या देयं घृतं चान्नं समस्तव्यञ्जनानि च ।
उदकं चैव पक्वान्नं नो दर्व्या तु कदाचन ॥
हस्तदत्तं तु नाश्नीयाल्लवणव्यञ्जनादिकम् ।
अपक्वं तैलपक्वं च हस्तेनैव प्रदीयते ॥

इसके बाद पहले कहे हुए के समान देवपूर्वक घृताभिघारित पात्रों में पहले कहे हुए हविष्यान्न का परिवेषण स्वयं वा पत्नी अथवा अन्य कोई करे। अपवित्र होकर एक हाथ से, विना कुश के, लोहे के पात्र से, श्राद्ध में परिवेषण न करे। तरकारी आदि को पत्ते आदि से ढककर हाथ से दे। घृत अन्न और समस्त व्यंजन कलछुल से दे। जल और पकाया हुआ अन्न कलछुल से कभी न दे। हाथ का दिया हुआ लवण व्यंजनादिक न खाय। विना पका हुआ और तेल से पका हुआ हाथ ही से दिया जाता है।

घृतादिपात्राणि भूमौ स्थापयेन्न भोजनपात्रे। ओदने परमान्ने च पात्रमासाद्य तत्र घृतपूरणे रुधिरतुल्यता।

पंक्तौ विषमदातुश्च निष्कृतिर्नैव विद्यते।
सर्वदा च तिला ग्राह्याः पितृकृत्ये विशेषतः ॥
भोज्यपात्रे तिलान्दृष्ट्वा निराशाः पितरो गताः ।

हिंगुशुण्ठीपिप्पलीमरीचकानि शाकादिसंस्कारार्थान्येव न तु साक्षाद्भक्षयेत्। परिवेषणकाले एव तत्सर्वप्रकारमन्नं *पिण्डार्थं पिण्डपात्रे* परिवेषणीयमिति सागरे।

घृत आदि के पात्रों को भूमि पर रखें, भोजन-पात्र में नहीं। ओदन और परमान्न को पात्र में परोसकर उसमें घी भर दे तो रुधिर के समान है। भोजन की पंक्ति में कम ज्यादा परोसने वालों का कोई निस्तार नहीं है। तिल सदा ग्राह्य है विशेषतः पितृकृत्य में। भोज्य पात्र में तिलों को देखकर पितर लोग निराश होकर चले जाते हैं। हींग, सोंठ, पीपर और मरिच, शाक आदि संस्कार के लिये ही हैं, न कि साक्षात् खाने के लिये। परोसने के समय में ही सब प्रकार के उस अन्न को पिण्ड के लिये पिण्डपात्र में परोसे, ऐसा श्राद्धसागर में लिखा है।

## अथ अन्ननिवेदनम्

अथोपवीती दैवे पात्रे परितः कुशयवान्विकीर्य पित्र्ये तु तिलान्विकीर्यान्नं गायत्र्या प्रोक्ष्य तूष्णीं परिषिच्य दक्षिणहस्त उपरि वामोधो दैवे, पित्र्ये तु विप-

---

१. आदि-पद से लवणादि ग्राह्य है, जैसा वसिष्ठ ने कहा है—'हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते च किल्बिषम् ॥ तस्मादन्तरिते देयं पर्णेनाथ तृणेन वा ॥' सङ्ग्रहे—'हस्तदत्तं तु नाश्नीयाल्लवणव्यञ्जनादिकम्। अपक्वं तैलपक्वं च हस्तेनैव प्रदीयते ॥' इति।

रीत इत्येवं स्वस्तिकाकारकराभ्यां पात्रमालभेत्[1]। तत्र मन्त्रः—पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्त्वामुखेऽमृतं जुहोमि। ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिँल्लोके इति। अयं मन्त्र आपस्तम्बकात्यायनादिभिर्नानाविधः पठितो यथासंप्रदायं वाच्यः। इत्यभिमन्त्र्य अतो देवा इति वा इदं विष्णुरिति वा ऋचमुक्त्वा विष्णो हव्यं रक्षस्वेति, पित्र्ये तु कव्यं रक्षस्वेति न्युब्जेन करेण न्युब्जं [2]द्विजांगुष्ठमनखमन्ने निवेश्य प्रदक्षिणं भ्रामयेत्, पित्र्ये त्वप्रदक्षिणम्।

इसके बाद उपवीती होकर देव पात्र में चारो ओर कुश-जव को और पितृ में तो तिलों को बिखेर कर गायत्री से अन्न का प्रोक्षण कर विना मन्त्र के जल से सींच कर देव में दाहिना हाथ ऊपर बायां हाथ नीचे, पितृ में तो इसके विपरीत, इस प्रकार स्वस्तिकाकार दोनों हाथों से पात्र का स्पर्श करे। उसमें मन्त्र है—'पृथिवी ते पात्रं द्यौरपि धानं०' इत्यादि। यह मन्त्र आपस्तम्ब और कात्यायन आदि ने अनेक प्रकार का कहा है उसे अपने सम्प्रदायानुसार कहे। इस मंत्र से अभिमन्त्रण करके 'अतो देवा' या 'इदं विष्णुः' इस ऋचा को कहकर देव में 'विष्णो हव्यं रक्षस्व', पित्र्य में तो 'कव्यं रक्षस्व' इस प्रकार उलटे हाथ से नखरहित ब्राह्मण के अंगूठे को अन्न पर रख कर प्रदक्षिण-क्रम से और पित्र्य में तो अप्रदक्षिण क्रम से घुमावे।

अत्र कातीयानामपहता इति यवानां दैवे तिलानां पित्र्ये पात्रपरितोऽवकिरणमुक्तम्। ततो वामकरेण पात्रं स्पृशन्नमुके विश्वेदेवा देवता इदमन्नं हव्यमयं ब्राह्मण आवहनीयार्थे इयं भूर्गया अयं भोक्ता गदाधर इदमन्नं ब्रह्म इदं सौवर्णपात्रमक्षय्यवटच्छायेयम् अमुकदेवेभ्य इदमन्नं सोपस्करममृतरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा हव्यं नमो न मम ओं तत्सदिति सयवदर्भजलं दक्षिणकरेण पात्रवामभागे भूमौ क्षिपेत्। एवं दैविकविप्रान्तरेऽपि। ततो ये देवास इत्युपस्थानम्।

यहां कातीयों का देवश्राद्ध में 'अपहता' इस मन्त्र से जवों का और पित्र्य में तिलों का पात्र के चारो ओर अवकिरण ( बिखेरना ) कहा है। तदनन्तर पात्र को बाएं हाथ से स्पर्श करते हुए 'अमुके विश्वेदेवा देवता इदमन्नं हव्यमयं०' इत्यादि मूलोक्त वाक्य से जवसहित कुश-जल को दक्षिण हाथ से पात्र के वामभाग की भूमि में छोड़ दे। इसी प्रकार दैविक अन्य ब्राह्मणों में भी करे। इसके बाद 'ये देवास' इस मन्त्र से उपस्थान करे।

---

१. चतुर्विंशतिमत में पात्रालम्भन का प्रकार—'उत्तानं दक्षिणं सव्यं नीचं पात्राण्युपस्पृशेत्।' याज्ञवल्क्यः—'दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्। कृत्वेदं विष्णुरित्यन्ते द्विजाङ्गुष्ठं निवेशयेत्॥' इति।

२. हारीत ने अङ्गुष्ठनिवेशन आवश्यक कहा है—'निरङ्गुष्ठं च यच्छ्राद्धं न तत्प्रीणाति वै पितॄन्।' वीरमित्रोदय में बौधायनोक्त अङ्गुष्ठनिवेशन की विशेषता—'परिवर्त्य न चाङ्गुष्ठं द्विजस्यान्ने निवेशयेत्। राक्षसं तद्भवेद्दैवं पितॄणां नोपतिष्ठते॥ उत्तानेन तु हस्तेन द्विजाङ्गुष्ठनिवेशनम्। यः करोति द्विजो मोहात्तद् वै रक्षांसि भुञ्जते॥' इति।

ततः पित्र्यधर्मेण पितृपात्रालम्भांगुष्ठनिवेशनाद्यन्ते वामेन पात्रमालभ्य पिता देवता एकविप्रत्वे पित्रादयो यथानामगोत्रा देवता इदमन्नं कव्यमित्यादि०, इदं राजतं पात्रमक्षय्यवटच्छायेयम् अस्मत्पित्रेऽमुकनामगोत्ररूपाय, त्रयस्थाने विप्रैक्येऽस्मत्पितृपितामहप्रपितामहेभ्योऽमुकगोत्रनामरूपेभ्यः इदमन्नं सोपस्करममृतरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वधा कव्यं नमो न मम ॐ तत्सदिति तिलकुशजलं पितृतीर्थेन वामकराधोनीतेन दक्षिणकरेण पात्रदक्षिणे भूमौ[1] क्षिपेत्। एवमन्यत्रापि यथादैवतमूहः।

तदनन्तर पित्र्य धर्म से पितृ-पात्र का स्पर्श और अंगुष्ठनिवेशन आदि के अन्त में बायें हाथ से पात्र का स्पर्श कर पितृदेवता और एक विप्रपक्ष में 'पित्रादयो यथानामगोत्रा देवता इदमन्नं कव्यमित्यादि०, इदं राजतं पात्रम् अक्षय्यवटच्छायेयम् अस्मत्पित्रे अमुकनामगोत्ररूपाय'। तीन के स्थान में एक ब्राह्मण के रहने पर 'अस्मत्पितृपितामहप्रपितामहेभ्यः अमुकगोत्रनामरूपेभ्यः इदमन्नं०' ॐ तत्सत्' पर्यन्त मूल में लिखा वाक्य पढ़कर तिल-कुश-जल को पितृ-तीर्थ से बाएं हाथ के नीचे लाकर दक्षिण हाथ से पात्र के दक्षिण भूमि में छोड़ दे। ऐसे ही अन्यत्र भी यथादैवत ऊह करे।

पितृस्थानेऽनेकविप्रत्वे त्रिषु विप्रेषु पित्रे इत्यादिनैकवचनान्तेन त्यागः। एवमग्रेऽपि त्रिषु त्रिषूह्यम्। ततो ये चेहेति सकृदुपस्थानम्। अतिथिश्चेद्देवधर्मेण स्वेष्टदेवतायै इदमन्नमित्यादि ये देवास इत्यादि। अपसव्यम्, देवताभ्यः पितृभ्यः० सप्तव्या० अमूर्तानां० ब्रह्मार्पणं० हरिर्दाता० चतुर्भिश्च० ओं तत्सद् ब्रह्मार्पणमस्तु येषामुद्दिष्टं तेषामक्षय्या प्रीतिरस्तु इति तिलोदकमुत्सृजेत्। सव्यम्, एको विष्णु० अन्नहीनं क्रियाहीनं मन्त्रहीनं च यद्भवेत् तत्सर्वमच्छिद्रं जायतामित्युक्त्वा विप्रैर्जायतां सर्वमच्छिद्रमित्युक्ते अनेन पितृयज्ञेन पितृरूपी जनार्दनवासुदेवः प्रीयतामिति तिलकुशजलमुत्सृजेदित्याचारः।

पितृस्थान में अनेक विप्र के रहने पर तीनों ब्राह्मणों में 'पित्रे' इत्यादि एकवचनान्त से त्याग करे। एवं आगे भी तीन-तीन में ऊह करे। इसके बाद 'ये चेह' इस मन्त्र से एक बार उपस्थान करे। यदि कोई अतिथि हो तो देवधर्म से अपने इष्ट देवता को 'इदमन्नं' इत्यादि 'ये देवासः' इत्यादि पढ़े। अपसव्य होकर 'देवताभ्यः पितृभ्यः० सप्तव्या० अमूर्तानां० ब्रह्मार्पणं० हरिर्दाता० चतुर्भिश्च० ॐ तत्सद् ब्रह्मार्पणमस्तु। येषामुद्दिष्टं तेषां अक्षय्या प्रीतिरस्तु' यह कहकर तिलोदक का त्याग करे। सव्य होकर 'एको विष्णुः०, अन्नहीनं क्रियाहीनं मन्त्रहीनं च यद् भवेत् तत्सर्वमच्छिद्रं जायताम्' ऐसा कह कर ब्राह्मण के 'जायतां सर्वमच्छिद्रं' ऐसा कहने पर 'अनेन पितृयज्ञेन पितृरूपी जनार्दनवासुदेवः प्रीयताम्' ऐसा कहकर तिल-कुश-जल का त्याग करे, यह आचार है।

केचिद् ब्रह्मार्पणमित्यादिसङ्कल्पोत्सर्गे सव्यमेको विष्णुरित्यादावपसव्यं कुर्वन्ति। तत्र ब्रह्मार्पणेति एको विष्णुरित्यनयोः सङ्कल्पयोर्विभागे सव्यापसव्यविभागे च

१. धर्मप्रदीपे—'श्राद्धीयान्नस्य संकल्पो भूमावेव प्रदीयते। हस्तेषु दीयमानं तु पितॄणां नोपतिष्ठते॥ वैश्वदेवस्य वामे तु पितृपात्रस्य दक्षिणे। संकल्पोदकदानं स्यान्नित्यश्राद्धे यथारुचि॥' इति।

प्रत्यक्षवचनानुपलम्भाद्यथाचारं कार्यम्। अकृते सङ्कल्पेऽन्नं विप्रा न [1]स्पृशेयुः। ईशानविष्णवे० गयायै० गदाधराय० पुण्डरीकाक्षा० इति नत्वा पितृपूर्वं विप्रकरेषु जले दत्ते विप्रास्तेनान्नं प्रोक्ष्य त्रिर्गायत्र्याभिमन्त्रयेयुः।

कोई—ब्रह्मार्पण इत्यादि संकल्पोत्सर्ग में सव्य, एको विष्णुः इत्यादि में अपसव्य करते हैं। उसमें ब्रह्मार्पण और एको विष्णुः इन दोनों संकल्पों के विभाग में सव्य और अपसव्य के विभाग में प्रत्यक्ष वचन के नहीं मिलने से यथाचार करना चाहिये। संकल्प नहीं करने पर अन्न का स्पर्श ब्राह्मण नहीं करे। ईशानविष्णु-गया-गदाधर-पुंडरीकाक्ष, इनको नमस्कार करके पितृपूर्वक ब्राह्मणों के हाथों में जल देने के बाद ब्राह्मण उस जल से अन्न का प्रोक्षण कर तीन बार गायत्री से अभिमन्त्रित करे।

## अथ ब्राह्मणभोजनादि

कर्ता सव्येन पितृपूर्वमापोशनार्थमुदकं दत्त्वा सव्याहृतिकां गायत्रीं[2] त्रिः सकृद्वोक्त्वा मधुवाता इति त्र्यृचमुक्त्वा मधु मधु मध्विति त्रिरुक्त्वा ॐ तत्सद्यथासुखं जुषध्वमिति वदेत्। विप्राश्च बलिदानवर्ज्यं नित्यवदापोशनं कृत्वा कर्त्रा श्रद्धायां प्राणे निविष्टोमृतं जुहोमि शिवो माविशाप्रदाहाय प्राणाय स्वाहेत्यादि पञ्च मन्त्रेषूच्यमानेषु पञ्च प्राणाहुतीः कृत्वा ब्रह्मणि आत्मामृतत्वायेत्युच्यमाने षष्ठीं कुर्युः।

श्राद्धकर्ता सव्य से पितृपूर्वक आपोशन के लिये जल देकर तीन बार या एक बार व्याहृतिसहित गायत्री मधुव्वाता इन तीन ऋचाओं को पढ़कर मधु-मधु-मधु ऐसे तीन बार कहकर 'ॐ तत्सद् यथासुखं जुषध्वं' ऐसा कहे। ब्राह्मण भी बलिदानवर्जित नित्य की तरह आपोशन करके कर्ता से 'श्रद्धायां प्राणे निविष्टोमृतं जुहोमि शिवो माविशाप्रदाहाय प्राणाय स्वाहा' इत्यादि पांच मन्त्रों के कहने पर पंच प्राणाहुति करके 'ब्रह्मणि आत्मामृतत्वाय' ऐसा कहें। इस मन्त्र में ब्राह्मण षष्ठी विभक्ति का ( ब्रह्मणः ) उच्चारण करें।

## अथ भोजनकालधर्माः

ततो मौनिनो मुखशब्दं चापल्यं वर्जयन्तः सशेषं भुञ्जीरन्। दधिक्षीरघृतपायसानि तु निःशेषम्[3]। 'आपोशनकरे विप्रे सङ्कल्पाच्छिद्रभाषणात्। निराशाः

---

१. अत्रिः—'असंकल्पितमन्नाद्यं पाणिभ्यां यद्युपस्पृशेत्। अभोज्यं तद् भवेदन्नं पितॄणां नोपतिष्ठते॥ अन्नं दत्तं न गृह्णीयाद्यावत्तोयं न संपिबेत्॥' इति।

२. प्रचेताः—'आपोशनं प्रदायाथ सावित्रीं त्रिर्जपेदथ। मधुवाता इति त्र्यृचं मध्वित्येतत्त्रिकं तथा॥' मिताक्षरा में पारस्कर का वचन है—'संकल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः। श्राद्धं निवेद्यापोशनं जुषप्रैषोऽथ भोजनम्॥ गायत्रीं त्रिः सकृद्वापि जपेद् व्याहृतिपूर्विकाम्। मधुवाता इति त्र्यृचं मध्वित्येतत्त्रिकं तथा॥' इति।

३. उशनाः—'भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथंचन। अन्यत्र दध्नः क्षीराद्वा क्षौद्रात् सक्तुभ्य एवं च॥' इति।

पितरो यान्ति'। आपोशनं दक्षिणभागे कार्यं न तु वामभागे[1]। पुनरापूर्यापोशनं सुरापानसमम्, 'आपोशनमकृत्वान्नं मर्दयेन्नैव कर्हिचित्। विप्रैर्बलिदानं न कार्यम्। केचिदाज्येन कुर्वन्ति तन्न, पायसाज्यमाषान्नैर्बलिदाननिषेधात्।

तदनन्तर ब्राह्मण मौन होकर मुख-शब्द और चपलता का त्याग करते हुए कुछ शेष करके भोजन करे। दही, दूध, घी और पायस सब खा जाय, उच्छिष्ट नहीं छोड़े। जब ब्राह्मण के हाथ में आपोशन हो तो संकल्प से और दोष कहने से पितृगण निराश होकर चले जाते हैं। आपोशन दक्षिण भाग में करे, वामभाग में नहीं। दुबारा जल भर के आपोशन करना मद्य के समान है। आपोशन विना किये अन्न-भक्षण कभी नहीं करे। ब्राह्मणों को बलिदान नहीं करना चाहिये। कोई घृत से बलिदान करते है वह ठीक नहीं, क्योंकि पायस, घी और माषान्न से बलि का निषेध है।

विप्राश्च [2]'वामकरेणान्नं न स्पृशेयुर्न पदा भाजनं स्पृशेयुः। संपादितमेव वस्तु करादिना याचेयुर्नासंपादितम्। अन्नगुणदोषान्न कीर्तयेयुः। कर्ता चानिषिद्धान्नं भोक्तुः पितुश्चात्मनश्च प्रियं प्रयच्छन् तत्तदन्नमाधुर्यादिगुणकीर्तनेन प्ररोचयन् ददामीत्यवदन् याचितं यच्छन् भुञ्जानानपश्यन् हविर्गुणानपृच्छन् दैन्याश्रुपात-क्रोधादिकमकुर्वन् जलं पाययन् शनैर्भोजयेत्। [3]'उच्छिष्टाः पितरो यान्ति पृच्छतो लवणादिकम्'।

ब्राह्मण बायें हाथ से अन्न का स्पर्श और पैर से भोजनपात्र का स्पर्श नहीं करे। बनायी हुई वस्तुओं को ही हाथ आदि से मांगे, न बनाई हुई वस्तु को नहीं। अन्न के गुण-दोषों को न कहे। कर्ता अनिषिद्ध अन्न को भोक्ता की पिता की और अपनी जो प्रिय वस्तु हो उसे देता हुआ उस उस अन्न के माधुर्य आदि गुण के कीर्तन से रुचि पैदा करता हुआ 'देता हूँ' ऐसा नहीं कहता हुआ मांगी हुई वस्तु को देता हुआ भोजन करनेवालों को नहीं देखता हुआ हवि के गुण को नहीं पूछता हुआ, दीनता से अश्रुपात और क्रोध आदि नहीं करता हुआ, जल पिलाता हुआ धीरे-धीरे भोजन करावे। नमक आदि कैसा है यह पूछने वाले के पितर लोग उच्छिष्ट हो निराश हो कर चले जाते हैं।

## अथ श्रवणसूक्तानि

अथ सव्येनैव सव्याहृतिगायत्रीं[4] त्रिरुक्त्वा पौरुषं सूक्तं कृणुष्वपाजो रक्षोह-

---

१. स्मृतिसमुच्चय में कहा है—'आपोशनं वामभागे सुरापानसमं भवेत्। दक्षभागे तु यः कुर्यात् सोमपानसमं भवेत्॥' तथा—'पुनरापूर्यापोशनं सुरापानसमं भवेत्।' इति।

२. प्रचेता ने कहा है—'न स्पृशेद् वामहस्तेन भुञ्जानोऽन्नं कदाचन। न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत्॥' इति।

३. यह शंख-वचन का उत्तरार्द्ध है। शंख का पूरा वचन इस प्रकार है—'श्राद्धे नियुक्तान् भुञ्जानान्न पृच्छेल्लवणादि तु। उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः॥' इति।

४. कात्यायन ने कहा है—'अश्नुवत्सु जपेत् सव्याहृतिकां गायत्रीं सकृत् त्रिर्वा राक्षोघ्नीः पौरुषं सूक्तमप्रतिरथम्'। सौरपुराण में—'ऐन्द्रं च पौरुषं सूक्तं श्रावयेद् ब्राह्मणांस्ततः।' मत्स्य-पुराण और पद्मपुराण में—'ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विविधानि च। इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः॥ मण्डलं ब्राह्मणं तद्वत् प्रीतिकारि च यत्पुनः। अभावे सर्वविद्यानां गायत्री-जपमाचरेत्॥' प्रचेताः—'भुञ्जानेषु तु विप्रेषु ऋग्यजुःसामलक्षणम्। जपेदभिमुखो भूत्वा पित्र्यं चैव विशेषतः॥ यजूंषि चैव रुद्रं च रक्षोघ्नीर्ऋचं एव च।' इति।

णमित्याद्या रक्षोघ्नीः पितृलिङ्गकान् इन्द्रेशसोमसूक्तपावमानीसूक्तानि अप्रतिरथसंज्ञमाशुःशिशानसूक्तं विष्णुब्रह्मरुद्रार्कस्तोत्रादिकं[1] भोक्तृविप्रान् श्रावयेत् । असंभवे गायत्रीजपं कुर्यात् ।

इसके बाद सव्य ही से व्याहृतिसहित गायत्री तीन बार कहकर पुरुषसूक्त, कृणुष्वपाजो, रक्षोहणं, इत्यादि रक्षोघ्नी ऋचाएं पितृनाम वाले इन्द्र, ईश, सोमसूक्त और पावमानीसूक्त, अप्रतिरथसंज्ञक आशुःशिशानसूक्त को विष्णु-ब्रह्मा-शिव और सूर्य के स्तोत्रादि को भोजनकरने वाले ब्राह्मणों को सुनावे। ऐसा न होने पर गायत्री का जप करे।

वीणावंशध्वनिं चापि विप्रेभ्यः सन्निवेदयेत् ।
मण्डलब्राह्मणं पाठ्यं नाचिकेतत्रयं तथा ॥
त्रिमधु त्रिसुपर्णं च पावमानयजूंषि च ।
आशुःशिशानसूक्तं च अग्नये कव्यवाहनम् ॥
प्रौढपादो बहिःकक्षो बहिर्जानुकरोऽपि वा ।
अंगुष्ठेन विनाश्नाति मुखशब्देन वा पुनः ॥
पीतावशिष्टतो यानि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धं पुनः खादेन्मोदकादि फलादिकम् ॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि च ।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम् ॥
श्राद्धपंक्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

वीणा तथा वंशी आदि के शब्द ब्राह्मणों के लिये निवेदित करे। मण्डलब्राह्मण तथा तीन नाचिकेत का पाठ करावे। त्रिमधु, त्रिसुपर्ण, यजुर्वेद के पावमान मन्त्र और आशुःशिशानसूक्त तथा अग्नये कव्यवाहन को पढ़े। पैर फैलाकर बहिःकक्ष होकर जानु के बाहर हाथ करके विना अंगुष्ठ मिलाये, और मुख से शब्द करके भोजन करे, पीने से बचे जल को पुनः पिये, आधे खाये हुए पर पुनः मोदक फलादि को खाय, मुँह से अन्न फूंके और पात्र में थूके, इस प्रकार भोजन करता हुआ ब्राह्मण श्राद्ध का नाश करता हुआ अधोगति को प्राप्त होता है। श्राद्धपंक्ति में तो भोजन करने वाला जो ब्राह्मण, ब्राह्मण का स्पर्श करता है, श्राद्धीय अन्न को विना छोड़े खाता है उसे आठ सौ गायत्री जपना चाहिये।

पात्रे विप्रान्तरोच्छिष्टसंसर्गे तन्निरस्य हस्तं प्रक्षाल्य भुक्त्वा स्नात्वा द्विशतं जपेत् । उच्छिष्टभोजने सहस्रं जपेत् ।

भुञ्जानेषु तु विप्रेषु प्रमादात्स्रवते गुदम् ।
पादकृच्छ्रं ततः कृत्वा अन्यं विप्रं नियोजयेत् ॥

---

१. आदि पद से पुराणादि का ग्रहण है, मनु ने कहा है—'स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि । आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥' इति ।

भोजन-पात्र में दूसरे ब्राह्मण के उच्छिष्ट का स्पर्श हो जाय तो उसे हटाकर हाथ धोकर भोजन और स्नान करके दो सौ गायत्री जपे। उच्छिष्ट भोजन करने पर हजार बार गायत्री जप करे। भोजन करते समय ब्राह्मणों का प्रमाद से गुदस्राव हो जाय तो पादकृच्छ्र करके दूसरे ब्राह्मण को बैठावे।

## अथ विप्रवमने विधिः

तत्र पित्रादिविप्रवमने लौकिकाग्निस्थापनचरुनिर्वापाज्यभागान्ते नामगोत्रपूर्वकमग्नौ पितॄनावाह्य वैश्वदेविकवमने देवानावाह्य संपूज्यान्नत्यागं कृत्वा प्राणाय स्वाहेत्यादिमन्त्रैर्द्वात्रिंशदाहुतीर्जुहुयात्पुनः श्राद्धं वा कुर्यादिति पक्षद्वयम्। पक्षद्वयेऽपीन्द्राय सामेति सूक्तजपो नित्यः। अनयोः पक्षयोर्व्यवस्थोच्यते—वैश्वदेविकविप्रवमने होम एव न पुनः श्राद्धम्। पित्र्यविप्रेष्वपि पिण्डदानोत्तरं वान्तौ होम[1] एव न पुनः श्राद्धम्।

पिता आदि ब्राह्मण के वमन में लौकिकाग्नि का स्थापन, चरुनिर्वाप और आज्यभाग के अन्त में नाम-गोत्र-पूर्वक अग्नि में पितरों का आवाहन कर और वैश्वदेविक ब्राह्मण के वमन करने पर विश्वेदेवताओं का आवाहन तथा पूजन कर अन्न त्याग करके 'प्राणाय स्वाहा' इत्यादि मन्त्रों से बत्तीस आहुति का होम करे अथवा फिर से श्राद्ध करे, ये दो पक्ष हैं। दोनों पक्ष में 'इन्द्राय साम' इस सूक्त का जप नित्य है। इन दोनों पक्ष की व्यवस्था कहता हूं—वैश्वदेविक ब्राह्मण के वमन करने पर होम ही होता है पुनः श्राद्ध नहीं। पितृ-ब्राह्मण में भी पिण्डदान के अनन्तर वमन होने पर होम ही होता है पुनः श्राद्ध नहीं।

पिण्डदानात्प्राक् पित्र्यविप्रवान्तौ तद्दिने उपवासं कृत्वा [2]परेद्युः पुनः श्राद्धं कार्यम्। इदं सपिण्डीकरणमहैकोद्दिष्टमासिकाब्दिकप्रत्याब्दिकश्राद्धेष्वेव। दर्शादौ तु वमने तद्दिने एवामेन[3] श्राद्धं कार्यम्। एवमष्टकान्वष्टकापूर्वेद्युःश्राद्धेष्वपि। तत्रामश्राद्धे साग्नेर्बह्वृचस्य व्यतिषङ्गादियथोक्तप्रयोगासंभवात्सांकल्पिकविधिना दर्शान्वष्टकापूर्वेद्युःश्राद्धान्यामेन कार्याणि तत्तल्लोपप्रायश्चित्तं वा निबन्धोक्तं कर्तव्यमिति भाति।

पिण्डदान से पहले पितृ-ब्राह्मण के वमन होने पर उस दिन उपवास करके दूसरे दिन पुनः श्राद्ध करे। यह सपिण्डीकरण, महैकोद्दिष्ट, मासिक, आब्दिक और प्रत्याब्दिक श्राद्धों में ही है। दर्श आदि में तो वमन होने पर उसी दिन आमान्न से श्राद्ध करे। इसी प्रकार अष्टका, अन्वष्टका और पूर्वेद्युःश्राद्धों में भी करे। उसमें आम-श्राद्ध में साग्निक बह्वृच को व्यतिषंग आदि यथोक्त प्रयोग

---

१. ऋग्विधान में इसका प्रमाण है—'तदेवाग्निं समाधाय होमं कुर्याद्यथाविधि।' इति।

२. स्मृतिसंग्रहे—'अकृते पिण्डदाने तु पिता यदि वमेत्तदा। पुनः पाकं प्रकुर्वीत श्राद्धं कुर्याद्यथाविधि॥' तथा—'पित्रर्थानां त्रयाणां च पिता च वमते यदि। तद्दिने चोपवासः स्यात् पुनः श्राद्धं परेऽहनि॥ वमने वा विरेके वा तद्दिनं परिवर्जयेत्।' इति।

३. मरीचि ने कहा है—'श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम्। अमावास्यादिनियतं माससंवत्सरादृते॥' इति।

का संभव न हो तो सांकल्पिक विधि से दर्श, अन्वष्टका, पूर्वेद्युःश्राद्ध को आमान्न से करे अथवा उसके लोप का निबन्धों में कहा हुआ प्रायश्चित्त करना चाहिये, यह ठीक प्रतीत होता है।

वृद्धिश्राद्धे पिण्डरहितसंक्रान्त्यादिश्राद्धे नित्यश्राद्धे च वमने [1]आवृत्तिरेव। तीर्थश्राद्धे दर्शवदामेनैव। महालयश्राद्धे पार्वणस्थानीयविप्रवमने पुनरावृत्तिः। एकोद्दिष्टस्थानीयविप्रवमने होम एवेति भाति। वैश्वदेविकविप्रवमने सर्वश्राद्धेषु होम एवेत्युक्तमेव। होमपक्षे आवृत्तिपक्षे च सर्वत्र सूक्तजपो नित्य इत्यप्युक्तम्।

वृद्धिश्राद्ध में पिण्डरहित संक्रान्त्यादि-श्राद्ध में और नित्यश्राद्ध में वमन होने पर पुनः श्राद्ध ही करे। तीर्थश्राद्ध में दर्श की तरह आमान्न ही से श्राद्ध करे। महालयश्राद्ध में पार्वणस्थानीय ब्राह्मण के वमन करने पर पुनः श्राद्ध करे। एकोद्दिष्टस्थानीय ब्राह्मण के वमन करने पर होम ही होता है, यह ठीक प्रतीत होता है। वैश्वदेविक ब्राह्मण के वमन करने पर सब श्राद्धों में होम ही होता है, यह कहा ही है। होमपक्ष और आवृत्तिपक्ष में सर्वत्र सूक्त का जप नित्य है, यह भी कहा है।

## अथ भोजनान्ते कृत्यम्

भोजनान्ते प्राचीनावीती तृप्ताः स्थेति विप्रान्पृष्ट्वा तृप्ताः स्म इति प्रत्युक्तो गायत्रीं मधुवाता इति त्र्यृचमक्षन्नमीति च श्रावयित्वा अथवा अक्षन्नमीत्येतदन्ते तृप्तिप्रश्नं कृत्वा श्राद्धं सम्पन्नमिति पृष्ट्वा सुसम्पन्नमित्युक्तः परिवेषणकालेऽनुद्धरणेऽधुना पिण्डार्थं सर्वान्नादुद्धृत्य विकिरार्थं चोद्धृत्य,

अन्नशेषैश्च किं कार्यमिति पृच्छेत्तु स द्विजान्।
ते इष्टैः सह भोक्तव्यमिति प्रत्युक्तिपूर्वकम्॥
प्रदद्युः सकलं तस्मै स्वीकुर्युर्वा यथारुचि।

भोजन के अन्त में प्राचीनावीती होकर ब्राह्मणों से पूछे कि आप लोग तृप्त हो गये ? तब ब्राह्मण लोग कहें कि हम लोग तृप्त हो गये। तब 'मधुवाता' इन तीन ऋचाओं को 'अक्षन्नमी' इस मंत्र को सुनाकर अथवा 'अक्षन्नमी' इस मंत्र के अन्त में तृप्तिप्रश्न करके 'श्राद्धं सम्पन्नं' ऐसा पूछकर 'सुसम्पन्नं' ऐसा ब्राह्मण के कहने पर परोसने के समय में उद्धरण न करने पर इस समय पिण्ड के लिये सब अन्नों में से निकाल कर और विकिर के लिये निकाल कर, कर्ता ब्राह्मणों से पूछे कि 'बचे हुए अन्न को क्या किया जाय' तब वे लोग कहें कि 'इष्ट-मित्रों के साथ आप लोग भोजन करें' यह कहकर शेष सब अन्न श्राद्धकर्ता को दे दें, यथारुचि वे लोग स्वीकार करें।

कातीयैस्तु तृप्तान् ज्ञात्वा वक्ष्यमाणप्रकारेण विकिरं दैवे पित्र्ये च दत्त्वा विप्रेभ्यः पितृपूर्वकं सकृदपो दत्त्वा गायत्रीं मधुमतीश्च श्रावयित्वा तृप्तिप्रश्नः सम्पत्तिप्रश्नश्च कार्यः। एवं शाखान्तरेऽप्युत्तरापोशनात्पूर्वमेव विकिरदानम्[2]।

---

१. वृद्धिश्राद्धादि में भोजन की ही प्रधानता है इसलिये आवृत्ति करना स्मृतिसंग्रह में कहा है—'भुक्तिक्रियायाः प्राधान्यं श्राद्धे संकल्पसंज्ञके। तत्रैव पित्र्यविप्रस्य तूपघाते पुनः क्रिया॥' तथा—'वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतम्। नित्यश्राद्धमदैवं स्यात् पिण्डदानविवर्जितम्॥' इति।

२. मनुः—'उच्छेषणं भूमिगतमजिह्मस्याशठस्य च। दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते॥' श्राद्धकारिकायाम्—'यजमानस्य दासादीनुद्दिश्य द्विजसत्तम। तस्मादन्नं त्यजेद् भूमौ वाम-

कातीय लोग तो ब्राह्मणों को तृप्त जानकर आगे कहे जाने वाले प्रकार से दैव और पित्र्य में विकिर को देकर ब्राह्मणों को पितृपूर्वक एकबार जल देकर गायत्री और मधुमती ऋचाओं को सुनाकर तृप्तिप्रश्न और सम्पत्ति प्रश्न भी करे। इसी प्रकार दूसरी शाखाओं में भी उत्तरापोशन से पूर्व ही विकिरदान है।

बह्वृचानां तु पिण्डान्ते एव विकिरः। हिरण्यकेशीयैराचान्ते उक्तः। तत उच्छिष्टभाग्भ्योऽन्नं दीयतामित्युक्ता विप्राः पात्रस्थं भुक्तशेषं दैविकं दक्षिणे पैतृकं वामे बहिःकृत्य पितृपूर्वं दत्तमुत्तरापोशनममृतापिधानमसीति कुर्युः। पिण्डदानं त्वाचान्तेष्वनाचान्तेषु वा विप्रेषु कार्यम्। विप्राश्च मुखप्रक्षालनपूर्वकहस्त-प्रक्षालनादि शरावादौ कुर्युर्न कांस्यताम्रपात्रयोः। शुद्धोदकेनाचम्य कया न इति त्र्यृचं जपेयुः।

बह्वृचों का पिण्ड के अन्त में विकिर होता है। हिरण्यकेशीयों का आचमन के बाद कहा है। अनन्तर 'उच्छिष्ट खाने वालों को अन्न दीजिये' यह श्राद्धकर्ता के कहने पर ब्राह्मणगण पात्रस्थित भुक्त-शेष देवताओं के अन्न को दाहिने और पैतृक अन्न को बाएं भाग में बाहर कर पितृपूर्वक दिये हुए उत्तरापोशन को 'अमृतापिधानमसि' यह कहकर करें। पिण्डदान तो आचमन करने पर वा आचमन के पहले करना चाहिये। ब्राह्मण लोग मुँह धोने के बाद हस्तप्रक्षालन आदि मिट्टी के कसोरा आदि में करें, कांसे या तामे के पात्र में नहीं करें। और शुद्ध जल से आचमन कर 'कया न' इन तीन ऋचाओं का जप करें।

## अथ पिण्डदानम्

तच्चार्चनोत्तरमग्नौकरणोत्तरं भोजनोत्तरं विकिरोत्तरं स्वधावाचनोत्तरं विप्रविसर्जनोत्तरमिति षट् पक्षाः स्मृत्युक्ताः। तेषां शाखाभेदेन व्यवस्थेति सिन्धुः। तत्राश्वलायनानां भुक्तवत्स्वनाचान्तेष्वाचान्तेषु वा विप्रेषु पिण्डदानं ततो विकिरः। आपस्तम्बहिरण्यकेशीयादीनां विप्रविसर्जनान्ते पिण्डदानम्।

पिण्डदान — पूजन, अग्नौकरण, भोजन, विकिर, स्वधावाचन और विप्रविसर्जन के बाद करने के ये छ पक्ष स्मृतियों में कहे हैं। इन सब पक्षों की व्यवस्था शाखाभेद से करे, यह निर्णयसिन्धु-कार कहते हैं। उसमें आश्वलायनों का भोजनकर्ता ब्राह्मणों के आचमन नहीं करने पर या आचमन करने पर पिण्डदान होता है इसके बाद विकिर। आपस्तम्ब-हिरण्यकेशीय आदि का ब्राह्मणविसर्जन के बाद पिण्डदान होता है।

कातीयानां विकिरोत्तरमाचान्तेष्वनाचान्तेषु वा। तत्राग्निहोमेऽग्निसमीपे पाणिहोमे विप्रसमीपे बह्वृचानां पिण्डदानम्। अन्येषां प्रायो विप्रसमीप एव। तत्र द्विजोच्छिष्टादुत्तरतो व्याममात्रेऽरत्निमात्रे वा पिण्डदानं संकल्प्य बह्व-

---

भागेषु पैतृके॥' याज्ञवल्क्यः—'अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च। तदन्नं प्रकिरेद् भूमौ दद्यादापः सकृत्सकृत्॥' देवलः—'ततः सर्वाशनं पात्रे गृहीत्वा विविधं पुनः। तेषामुच्छेषणस्थाने विकिरं भुवि निक्षिपेत्॥' विकिर का अन्न कुशपर देना चाहिये, क्योंकि 'दर्भेषु विकिरश्च यः' ऐसा वचन है।

चानामेककरेणान्येषां कराभ्यां घृतेन स्फ्येन खादिरकाष्ठेन दर्भमूलेन वा अपहता असुरा इति मन्त्रं प्रतिलेखां पठन्नाग्नेय्यग्रं प्रत्यगपवर्गं पार्वणसंख्यया रेखामेकां द्वित्र्यादिकां वोल्लिख्य प्रत्येकमभ्युक्षेत्। पिण्डसंकल्पे रेखाकरणे च सव्यापसव्ययोर्विकल्पः।

कातीयों का पिण्डदान विकिर के बाद आचमन करने या न करने पर होता है। बह्वृचों का पिण्डदान, अग्निहोम में अग्निके समीप में पाणिहोम में ब्राह्मण के समीप में होता है। अन्य का प्रायः ब्राह्मण के समीप में ही होता है। उसमें ब्राह्मणों के उच्छिष्ट से उत्तर की ओर व्याममात्र में या अरत्निमात्र में पिण्डदान का संकल्प कर बह्वृचों को एक हाथ से अन्य का दोनों हाथों से पकड़े हुए 'स्फ्य' से या खैर की लकड़ी से या कुशमूल से 'अपहता असुरा' इस मन्त्र को प्रत्येक रेखा में पढ़ते हुए आग्नेयी दिशा में अग्र हो जिसकी और पश्चिम दिशा में समाप्ति हो जिसकी ऐसी एक दो, तीन आदि रेखाओं का पार्वण की संख्या के अनुसार उल्लेखन कर जल से प्रत्येक का अभ्युक्षण करे। पिण्ड-संकल्प में और रेखा करने में सव्य एवं अपसव्य का विकल्प है।

अत्र कातीयैर्ये रूपाणीति मन्त्रेणाग्नौकरणाग्नेरुल्मुकं रेखादक्षिणतो निधेयम्। रेखासु सकृदाच्छिन्नं बर्हिर्दक्षिणाग्रमास्तीर्य शुन्धन्तां पितरः शुन्धन्तां पितामहा इत्यादिमन्त्रैस्तिलोदकं बर्हिष्यासिञ्चेत्। अत्र कातीयानां पितरममुकनामगोत्रावनेनिक्ष्वेत्यादिमन्त्राः। अन्येषां मार्जयन्तां पितरः सोम्यास इत्यादयो मन्त्राः। अग्नौकरणशेषयुतसर्वान्नेन [1]मधुसर्पिस्तिलमिश्रेण पिण्डान् पत्न्या कारयित्वा रेखायां पराचीनपाणिना पितृतीर्थेन पित्रादिभ्यो दद्यात्—एतत्तेऽस्मत्पितर्यथानामगोत्ररूप ये च त्वामत्रानुपित्रे अमुकनामगोत्ररूपायायं पिण्डः स्वधा नमस्तेभ्यश्च गयायां श्रीरुद्रपदे दत्तमस्त्वित्यादिमन्त्रैरूहेन।

इसमें कातीयगण 'ये रूपाणि' इस मन्त्र से अग्नौकरण की अग्नि के उल्मुक को रेखा से दक्षिण की ओर रखे। एकबार काटे हुए कुश जिनका अग्रभाग दक्षिण की ओर हो उसे रेखाओं में बिछाकर 'शुन्धन्तां पितरः' 'शुन्धन्तां पितामहाः' इत्यादि मन्त्रों से तिल-जल से कुश पर सिंचन करे। इसमें कातीयों का 'पितरमुक-नाम-गोत्रावनेनिक्ष्व' इत्यादि मन्त्र है। दूसरों का 'मार्जयन्तां पितरः सोम्यास' इत्यादि मन्त्र हैं। अग्नौकरण के शेषयुक्त सब अन्न से जिसमें मधु, घृत और तिल मिले हों ऐसे पिण्डों को पत्नी से बनवाकर रेखा में दाहिने हाथ से पितृतीर्थ द्वारा पिता आदि को पिण्डदान करे—'एतत्तेऽस्मत्पितर्यथानामगोत्ररूप०' इत्यादि मूलोक्त मन्त्रों के ऊह से।

अत्र केषांचित्पिण्डपात्रावनेजनं पात्रन्युब्जीकरणं च। केचित्पिण्डेषु माषान्नं [2]वर्जयन्ति। ततो लेपभाक्तृप्तये हस्तलेपं पिण्डदर्भमूलेषु निमृज्यात्र पितरो माद-

---

१. वायुपुराणे—'मधुसर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्वपेद् बुधः।' त्रिस्थलीसेतौ—'तिलमन्नं च पानीयं धूपं दीपं पयस्तथा। मधुसर्पिःखण्डयुतं पिण्डमष्टाङ्गमुच्यते॥' इति।

२. इनके मत में स्मृतिसार का प्रमाण है—'माषाः श्राद्धेषु वै ग्राह्या वर्ज्याश्चैवाग्निपिण्डयोः। ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिण्डयोः॥' तथा—'माषान् सर्वत्र वै दद्यात् पिण्डेऽग्नौ च विवर्जयेत्।' इति।

यध्वं यथाभागमावृषायध्वमिति पिण्डान्सकृदनुमन्त्र्य सव्यपार्श्वेनोदङ्ङावृत्त्य यथाशक्ति प्राणान्नियम्य पर्यावृत्त्यामीमदन्त पितर इति तथैवानुमन्त्र्य सव्येन पिण्डशेषमाघ्रायाचम्यान्यपवित्रे धृत्वाऽपसव्येन शुन्धन्तामित्यादि यथासूत्रं जल-निनयनं पूर्ववत्कुर्यात्। अत्र भुक्तशेषान्नाभावे द्रव्यान्तरेण पिण्डदानं कार्यम्।

इसमें कुछ लोगों का पिण्डपात्रावनेजन और पात्र का न्युब्जीकरण होता है। कोई पिण्डों में उर्द अन्न का वर्जन करते हैं। इसके अनन्तर लेपभाक् की तृप्ति के लिये हाथ में लगे हुए को पिंड के कुश-मूलों से स्वच्छ कर 'अत्र पितरो मादयध्वं यथाभागमावृषायध्वं' इस मन्त्र से पिण्डों का एकबार अनुमन्त्रण कर वामपार्श्व से उत्तर की ओर मुख घुमाकर शक्ति के अनुसार प्राणायाम कर मुंह फेर कर 'अमीमदन्त' इससे वैसे ही अनुमन्त्रण कर सव्य से पिण्डशेष को सूँघकर और आचमन कर अन्य दो पवित्र को धारण कर अपसव्य से 'शुन्धन्ताम्' इत्यादि सूत्रानुसार जल-निनयन पूर्ववत् करे। इसमें भोजन से बचे हुए अन्न के न रहने पर दूसरे द्रव्य से पिण्डदान करे।

## अथ पिण्डप्रमाणम्

कपित्थबिल्वकुक्कुटाण्डामलकबदराणां मध्ये शक्तितोऽन्यतमप्रमाणाः [1]पिण्डाः। केचित्पार्वणपिण्डत्रये यथोत्तरं प्रमाणाधिक्यमाहुः। तथा हस्तलेपाभावेऽपि दर्भेषु हस्तं निमृज्यादेवेति मेधातिथिः। एकोद्दिष्टश्राद्धेषु दर्भलेपो नेति [2]सुमन्तुः। अत्र नीवीं विस्रस्याभ्यञ्जनादीति केचित्। पिण्डपूजनान्ते उपस्थानात्प्राङ् नीवी-विस्रंस इति श्राद्धसागरे।

पिण्ड का प्रमाण—कपित्थ (कैंत) बेल, मुर्गी का अण्डा, आँवला, बैर के फल, इनमें से यथाशक्ति कोई एक के बराबर होना चाहिये। कुछ लोग पार्वण के तीन पिण्डों को पहले पिण्ड के नाप से दूसरा बड़ा और दूसरे से तीसरे का बड़ा होना कहते हैं। एवं हस्तक्षेप नहीं होने पर भी कुशाओं से हाथ स्वच्छ करे ही, ऐसा मेधातिथि कहते हैं। सुमन्तु का यह कहना है कि एकोद्दिष्ट श्राद्धों में दर्भलेप नहीं होता। कुछ तो इसमें नीवीविस्रंसन करके अभ्यञ्जन आदि कहते हैं। पिण्ड-पूजन के अन्त में उपस्थान से पहले नीवीविस्रंसन करना यह 'श्राद्धसागर' में है।

## अथ पिण्डेऽभ्यञ्जनादिकम्

अथास्मत्पितरमुकनामगोत्ररूपाभ्यङ्क्ष्वेति यथालिङ्गमन्त्रावृत्त्या पिण्डेषु तैलं

---

१. हेमाद्रि में अङ्गिरा की उक्ति है—'कपित्थबिल्वमात्रान् वा पिण्डान् दद्याद् विधानतः। कुक्कुटाण्डप्रमाणान् वाऽऽमलकैर्बदरैः समान्॥' धूम्रः—'कपित्थस्य प्रमाणेन पिण्डान् दद्यात् समाहितः। तत्समं विकिरं दद्यात् पिण्डान्ते तु षडङ्गुले॥' अन्त्येष्टिपद्धति में भट्ट ने कहा है—'एकोद्दिष्टे सपिण्डे तु कपित्थं तु विधीयते। नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा॥ तीर्थे दर्शे च सम्प्राप्ते कुक्कुटाण्डप्रमाणतः। महालये गयाश्राद्धे कुर्यादामलकोपमम्॥ कलिका में आचार्य ने कहा है—'यत्र स्युर्बहवः पिण्डास्तत्र बिल्वफलोपमाः। यत्र चैको भवेत् पिण्डस्तत्र खर्जूरसन्निभः॥ प्रेतपिण्डस्तु दैर्घ्येण द्वादशाङ्गुल उच्यते।' लौगाक्षिः—'महालये गयायां च प्रेतश्राद्धे दशाहिके। पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत्॥' वायुपुराणे—'पत्नी पिण्डांस्तु मृद्गीयात् त्रिवर्गस्य सहायिनी।' इति।

२. कलिका में सुमन्तु का कथन है—'एकोद्दिष्टेषु वर्षासु दर्भलेपो न विद्यते। सपिण्डी-करणादौ तु लेपः सर्वत्र शस्यते॥' इति।

घृतं वाऽभ्यञ्जनं दर्भैर्दत्त्वा तथैवाङ्क्ष्वेति कज्जलं दद्यात्। आपस्तम्बानामादावञ्जनं ततोऽभ्यञ्जनम्। एतद्वः पितरो वास इति मन्त्रं प्रतिपिण्डं पठन् वासोदशां वा त्रिगुणसूत्रं वा प्रतिपिण्डे दद्यादिति हेमाद्रिः। सकृन्मन्त्रं पठन्सकृदेव दद्यादित्यन्ये। कातीयैस्तु मन्त्रेण प्रतिपिण्डं नामगोत्राद्युच्चार्य त्रिगुणं सूत्रं देयम्।

इसके बाद 'मेरे पिता अमुक-नाम-गोत्र रूप अभ्यञ्जन कीजिये' इस प्रकार यथालिङ्ग मन्त्र की आहुति से पिण्डों पर तेल वा घृत का अभ्यञ्जन कुशों से देकर इसी प्रकार 'अङ्क्ष्व' ऐसा कहकर काजल दे। आपस्तम्बों के यहां आदि में अञ्जन इसके बाद अभ्यञ्जन होता है। 'हे पितृगण यह आप के लिये वस्त्र है' ऐसा प्रत्येक पिण्ड के लिये पढ़ता हुआ वस्त्र का किनारा या तिगुना सूत प्रतिपिण्ड पर चढ़ावे, ऐसा हेमाद्रि कहते हैं। एकबार मन्त्र पढ़ते हुए एकबार ही दे, ऐसा दूसरे कहते हैं। कातीय तो मन्त्र से प्रतिपिण्ड के लिये नाम-गोत्रादि का उच्चारण कर तिगुना सूत दें।

ततः कशिपूपबर्हणे निवेद्यास्मत्पितृभ्य इति चतुर्थ्याक्षतगन्धपुष्पधूपदीपसर्वप्रकारकनैवेद्यताम्बूलदक्षिणादिभिः पिण्डपूजां [2]सव्येनापसव्येन वा कुर्यात्।

यत्किंचित्पच्यते भक्ष्यं भोज्यमन्नमगर्हितम्।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथंचन॥

ततो नमो वः पितर इषे इत्यादिमन्त्रैः पिण्डानुपस्थायोत्तानहस्तेन परेतन इति मन्त्रेण सकृदुक्तेन युगपत्प्रवाहयेत्।

इसके बाद तकिया बिछौना निवेदन कर हमारे पितरों के लिये हैं ऐसा चतुर्थी विभक्ति से अक्षत, गन्ध, पुष्प, धूप, दीप और सब प्रकार के नैवेद्य, ताम्बूल तथा दक्षिणा आदि से सव्य या अपसव्य से पिण्डपूजा करे। अनिन्दित जो कुछ भी भक्ष्य अन्न बने पिण्डमूल में बिना निवेदन किये स्वयं भोजन नहीं करे। तदनन्तर 'नमो वः पितर' और 'इषे' इत्यादि मन्त्रों से पिण्डों का उपस्थान कर उत्तान हाथ से 'परेतन' इस मन्त्र से एकबार कहकर एक ही समय में प्रवाहित करे।

ततो दक्षिणाग्निहोमपक्षेऽग्ने तमद्याश्वमित्यग्निसमीपमागत्य यदन्तरिक्षमिति मन्त्रेण गार्हपत्योपस्थानम्। औपासने होमपक्षे गार्हपत्यपदरहिततन्मन्त्रेणोपस्थानमिदं बह्वृचानामेव। पाणिहोमे तु तेषामपि नास्त्येव।

इसके अनन्तर दक्षिणाग्नि-होमपक्ष में 'अग्ने तमद्याश्व' इससे अग्नि के समीप आकर 'यदन्तरिक्षं' इस मन्त्र से गार्हपत्य का उपस्थान करे। औपासन-होमपक्ष में गार्हपत्यपदरहित उस मन्त्र से उपस्थान करे, यह बह्वृचों ही के लिये है। पाणिहोम में तो उनके यहाँ भी नहीं ही है।

---

१. हेमाद्रि में ब्रह्मपुराण का वचन है—'श्रेष्ठमाहुस्त्रैककुदमञ्जनं नित्यमेव हि। तैलं कृष्णतिलेभ्यश्च दद्यादभ्यञ्जनं हितम्॥' त्रैककुदं='सुरमा' इति प्रसिद्धम्।

२. माधव-मत से पितरों के उद्देश से अपसव्य और विप्रों के उद्देश से सव्य होकर दक्षिणा देनी चाहिये। व्याघ्रः—'गन्धपुष्पाणि धूपं च दीपं च विनिवेदयेत्।' देवलः—'दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत्। भक्ष्याण्यपूपानिक्षूंश्च व्यञ्जनान्यशनानि च॥' नागरखण्डे—'उत्तानमर्घ्यपात्रं तु कृत्वा दद्याच्च दक्षिणाम्। हिरण्यं देवतानां च पितॄणां रजतं तथा॥' बृहस्पतिः—'तस्मात् पणं काकिणीं वा फलं पुष्पमथापि वा। प्रदद्याद्दक्षिणां यज्ञे तया स सफलो भवेत्॥' इति।

## अथ पुत्रकामनया पत्न्यै पिण्डदानम्

वीरं मे दत्तपितर इति मन्त्रेण मध्यममेकपिण्डं पार्वणद्वये मध्यपिण्डद्वयमन्वष्टक्यादौ मध्यपिण्डत्रयमादाय पत्न्यै दद्यात्। पत्नी आधत्त पितर इति मन्त्रेण सकृत्पठितेनैव पिण्डमेकमनेकं वा प्राशयेत्। आपस्तम्बस्तु अपां त्वौषधीनां रसं प्राशयामि भूतकृतं गर्भं धस्त्वेति मध्यपिण्डं पत्न्यै प्रयच्छति। प्राशनमन्त्रः स एव। यथेह पुरुषो असदिति पाठमात्रं भिद्यते। इत्थमेव कातीयानाम्। इदं भार्यायाः पिण्डप्राशनं प्रजाकामत्व एव। केचिन्नित्यमाहुः। भार्यानेकत्वे पिण्डं विभज्य प्रतिपत्नि मन्त्रेण प्राशयेत्। पार्वणद्वये पिण्डद्वयं द्वाभ्यां देयम्। पत्नीबहुत्वे गुणतो वयसा च योग्यायै पिण्डो देयः। बह्वीनां योग्यत्वे एकस्मिन् दर्शे एकस्यै अन्यस्मिन्नपरस्यै इति।

'वीरं मे दत्त पितरः' इस मन्त्र से मध्यम एक पिण्ड को, दो पार्वण में दो मध्य पिण्ड को, अन्वष्टका आदि में तीन मध्य पिण्ड को लेकर पत्नी को दे दे। पत्नी 'आधत्त पितर' इस मन्त्र को एक बार पढ़ कर एक अथवा अनेक पिण्ड का भक्षण करे। आपस्तम्ब तो 'अपां त्वौषधीनां रसं प्राशयामि भूतकृतं गर्भं धत्स्व' इस मंत्र से पत्नी को मध्यमपिण्ड देते हैं। प्राशन का मन्त्र वही है। 'यथेह पुरुषो असत्' ऐसा पाठमात्र का भेद है। इसी प्रकार कातीयों का है। पत्नी का पिण्डप्राशन सन्तान की कामना होने पर ही होता है। कुछ लोग इसे नित्य कहते हैं। अनेक पत्नी के होने पर पिण्ड का विभाजन करके प्रत्येक पत्नी को मन्त्र से खिलावे। दो पार्वण में दो पिण्ड दो पत्नियों को दे। बहुत पत्नी हो तो गुण और अवस्था से जो योग्य हो उसे पिण्ड दे। बहुत सी पत्नियां योग्य हों तो एक अमावास्था में एक को, दूसरी अमावास्या में दूसरी को दे।

> पत्नी रुग्णान्यदेशस्था गुर्विणी सूतिकापि वा।
> तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति॥

इतरौ जले क्षिपेत्।

> पुत्रादिकामनाऽभावे क्षिपेदग्नौ जलेपि वा।
> पिण्डांस्तु गोऽजविप्रेभ्यो वायसेभ्यः [1]प्रदापयेत्॥
> तीर्थश्राद्धे सदा पिण्डान्क्षिपेत्तीर्थे समाहितः।

यदि पत्नी रुग्णा हो, या दूसरे देश में हो, गर्भिणी हो, या प्रसूता हो तो उस पिण्ड को भक्षण करने योग्य बूढा बैल या बकरा होता है। दो अन्य पिण्डों को जलमें फेंक दे। पुत्र आदि की कामना न होने पर अग्नि में या जल में डाल दे, या गाय को बकरे को ब्राह्मण को, या कौवे को दिला दे। तीर्थ श्राद्ध में पिण्डों को समाहित चित्त से सदैव तीर्थ में प्रक्षेप करे।

---

१. ब्रह्माण्ड में कामना से पिण्ड-प्रतिपत्ति का महत्त्व—'पिण्डमग्नौ सदा दद्याद् भोगार्थी प्रथमं नरः। पत्न्यै प्रजार्थी दद्याद् वै मध्यमं मन्त्रपूर्वकम्॥ उत्तमां गतिमन्विच्छन् गोषु नित्यं प्रयच्छति। आज्ञां प्रज्ञां यशः कीर्तिमप्सु पिण्डं प्रवेशयेत्॥ प्रार्थयन् दीर्घमायुष्यं वायसेभ्यः प्रयच्छति। आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः॥' इति।

## अथ पिण्डोपघाते निर्णयः

श्वसृगालखरैः स्पृष्टः पिण्डो भिन्नः प्रमादतः ।
मार्जारमूषकैः स्पृष्टश्चाण्डालपतितादिभिः ॥
प्राजापत्यं चरेत्स्नात्वा पुनः पिण्डान् यथाविधि ।

'पाकान्तरेण तेन पाकेन वा पिण्डदानमात्रं पुनः कार्यं न सर्वश्राद्धावृत्ति-रिति सर्वसम्मतम् । काकस्पर्शे तु न दोषः ।

कुत्ता, स्यार और गदहा से स्पर्श होने पर या प्रमाद से पिण्ड के भिन्न होने पर, बिलार, चूहा, चाण्डाल और पतित आदि से स्पर्श होने पर प्राजापत्य व्रत करके स्नान करके दूसरे पाक से या उसी पाक से पिण्ड बनाकर यथाविधि केवल पुनः पिण्डदान करे न कि सम्पूर्ण श्राद्ध की आवृत्ति करे, यह सम्मत है। कौवे के स्पर्श में तो दोष नहीं है।

## अथ पिण्डनिषेधनिमित्तानि

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
संस्कारेषु तथान्येषु वृद्धिमात्रे च मासकम् ॥
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ।

श्राद्धाङ्गतर्पणं नित्यतर्पणं च तिलैर्न कार्यमित्यर्थः । महालये गयायां पित्रोः प्रत्यब्दे यस्य कस्यापि मृतस्य सपिण्डीषोडशमासिकान्तेषु प्रेतकृत्येषु कृतमङ्ग-लोऽपि पिण्डान् दद्यात्[2] । केचिद् भ्रात्रादिवार्षिकेऽप्याहुः । पिण्डयज्ञे च यज्ञे च सपिण्डयां दद्युरेव च । तथा विकृतावन्वष्टकादौ यत्र पुनः पिण्डदानविधिः यत्र वा पूर्वेद्युःश्राद्धादौ पिण्डपितृयज्ञविकृतित्वं तत्रापि न पिण्डदाननिषेध इति सिन्धुः । तेनाष्टकाश्राद्धेऽपि न निषेध इति भाति । अयं च मङ्गलोत्तरं पिण्डदान-तिलतर्पणनिषेधस्त्रिपुरुषसपिण्डानामिति भाति ।

विवाह में एक वर्ष, उपनयन में छ महीने चूड़ा में तीन महीने तक तथा अन्य संस्कारों और वृद्धिमात्र में एक महीना तक पिण्डदान, मृत्तिकास्नान एवं तिल से तर्पण नहीं करें। श्राद्धाङ्ग तर्पण और नित्य तर्पण तिल से नहीं करे। महालय में, गया में, माता-पिता के प्रतिवार्षिक श्राद्ध में जिस किसी मरे हुए के सपिण्डी सोलह मासिकान्त प्रेतकर्मों में, जिसने मङ्गल-कृत्य किया हो वह भी पिण्डदान करे। कुछ लोग भाई आदि के वार्षिक श्राद्ध में भी पिण्डदान करना कहते हैं। पिण्ड-यज्ञ, यज्ञ और सपिण्डी में अवश्य दे। वैसे विकृति और अन्वष्टका आदि में जहां पुनः पिण्डदान की

---

१. आपस्तम्ब के—'न च नक्तं श्राद्धं कुर्वीतारब्धे चाऽऽभोजनसमापनात्' इस सूत्र की व्याख्या में हरदत्त ने लिखा है—'रात्रौ भोजनमात्रं पूर्वेद्युः कार्यम् । श्राद्धसमाप्तिस्तु परदिने एव । समाप्तिपर्यन्तं कर्तुरुपवासश्च' इसलिये दूसरे पाक से पिण्डदानमात्र करे। अथवा स्मृतिदर्पण में अत्रि के—'मार्जारमूषकस्पर्शे पिण्डे च द्विदलीकृते । पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात् ॥' इस वचन के अनुसार उसी पाक से तत्क्षण पिण्डदानमात्र करना चाहिये।

२. हेमाद्रौ—'महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि । यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ॥ कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वापणं सदा । निर्णयामृत में कहा है—'सपिण्डीकरणं नवश्राद्ध-षोडशश्राद्धोपलक्षणार्थम्' इति ।

विधि है या जहां पूर्वेद्युःश्राद्ध आदिमें पिण्डपितृयज्ञ का विकृतित्व है वहां भी पिण्डदान का निषेध नहीं, ऐसा निर्णयसिन्धुकार कहते हैं। इससे अष्टकाश्राद्ध में भी पिण्डदान का निषेध नहीं होता, ऐसा उचित प्रतीत होता है। मङ्गलकृत्य के बाद जो यह पिण्डदान और तिलतर्पण का निषेध है वह तीन पीढ़ी के सपिण्डों के लिये है, यह युक्त प्रतीत होता है।

## अथ विकिरदानप्रकारः

अथ पिण्डोद्वासनान्ते[1] विकिरो देयः। उपवीती दैविकद्विजसन्निधौ सदर्भभुवि [2]असोमपाश्च ये देवा इति मन्त्रेण सजलयवमन्नं विकिरेत्। प्राचीनावीती पित्र्यद्विजसन्निधौ सदर्भभुवि ये अग्निदग्धा ये अनग्निदग्धेति ऋचा सतिलमन्नं विकीर्य,

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्॥

इति कातीयसौत्रमन्त्रेण सतिलजलेन प्लावयेत्। पिण्डवद्विकिरोऽपि सार्ववर्णिकान्नस्यैव।

पिण्ड-विसर्जन के बाद विकिर देना चाहिये। सव्य होकर दैविक ब्राह्मण की सन्निधि में कुशयुक्त भूमि में 'असोमपाश्च ये देवा' इस मन्त्र से जल-यव-सहित अन्न का विकिरण करे। अपसव्य से पित्र्य-ब्राह्मण के समीप कुशयुक्त भूमि में 'ये अग्निदग्धा' इस ऋचा से तिलसहित अन्न का विकिरण करके—अग्नि से दग्ध या अदग्ध जो प्राणी मेरे कुल में हैं वे भूमि में दिये अन्न से तृप्त होकर परम गति को प्राप्त करें—इस आशय के 'अग्निदग्धाश्च ये जीवा' इत्यादि इस कातीय सौत्र मन्त्र से तिलसहित जल से उस अन्न का सिञ्चन करें। पिण्ड की तरह विकिर भी सर्वविध अन्न ही का होता है।

केचिदसोमपा इति दैवे विकिरं दत्त्वा [3]असंस्कृतप्रमीता येति पौराणमन्त्रेण पित्रे दत्त्वा ये अग्निदग्धा इत्यृचा पृथगुच्छिष्टपिण्डं कुशोपरि दद्यादित्याहुः। हस्तौ प्रक्षाल्य द्विराचम्यान्यपवित्रे धृत्वा हरिं स्मरेत्। विकिरं पृथगेव निष्कास्य काकेभ्य उत्सृजेदिति काशिका। देवद्विजहस्ते शिवा आपः सन्त्वित्यादिभिरपो गन्धपुष्पयवान्दत्त्वा भूमौ तेषु त्यक्तेष्वन्येऽक्षता आशीरर्थं देयाः।

कुछ लोग 'असोमपा' इससे देव में विकिर देकर 'असंस्कृतप्रमीता ये' पुराण के इस मन्त्र से पिता को देकर 'ये अग्निदग्धा' इस ऋचा से उच्छिष्ट पिण्ड को कुश के ऊपर दे, ऐसा कहते हैं। दोनों हाथ का प्रक्षालन करके दो बार आचमन करके दोनों पवित्र को धारण कर विष्णु का स्मरण

---

१. पिण्ड के अन्त में विकिर का अन्नदान आश्वलायनों के लिये है, क्योंकि सूत्रकार ने ऐसा लिखा है। विशेष पूर्व में कहा है।

२. हेमाद्रि में देवश्राद्ध के विकिर का यह गोभिलोक्त मन्त्र है—'असोमपाश्च ये देवा यज्ञभागविवर्जिताः। तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम्॥' इति।

३. इनके अनुसार पितृश्राद्ध में विकिर का अग्निपुराणोक्त मन्त्र है—'असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः। दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम्॥' ये दोनों मन्त्र कातीयेतर वालों के लिये हैं। विकिर का अन्न दर्भयुक्त भूमि में देना चाहिये, क्योंकि वचन है—'दर्भेषु विकिरश्च यः' इति।

करे। विकिर को अलग ही निकालकर कौवों को दे, ऐसा काशिका में कहा है। देवब्राह्मण के हाथ में 'शिवा आपः सन्तु' इत्यादि से जल, गन्ध, पुष्प और यव देकर भूमि में इन सबको छोड़ देने पर दूसरे अक्षत आशीर्वाद के लिये देवे।

## अथ आशिषः प्रार्थनादि

एवं पित्र्यहस्तेष्वपसव्येनापो गन्धपुष्पतिलदानादि कृत्वा सव्येनामुकगोत्रशर्माहमभिवादयामि अस्मद्गोत्रं वर्धतामित्यादि। केचिदत्र पित्र्यहस्ते गन्धतिलादिदानं सव्येनाहुः। कातीयास्तु हस्तेऽक्षतदानान्ते अक्षय्योदकं दत्त्वा अघोराः पितरः सन्त्वित्युक्त्वाऽभिवादनं दातारो नोभिवर्धन्तामित्यादिकमाहुः।

इसी प्रकार पित्र्यब्राह्मण के हाथों में अपसव्य से जल, गन्ध, पुष्प और तिल आदि देकर सव्य से अमुक गोत्रशर्मा मैं आपको अभिवादन करता हूँ हमारा गोत्र बढ़े इत्यादि कहे। कुछ लोग यहां पित्र्य-विप्र के हाथ में गन्ध, तिल आदि का दान सव्य से कहते हैं। कातीय तो हाथ में अक्षत-दान के अन्त में अक्षय्योदक देकर 'अघोराः पितरः सन्तु' ऐसा कहकर अभिवादन और 'दातारो नोभिवर्द्धन्ताम्' इत्यादि कहते हैं।

## अथ पात्रचालनम्

एवमाशिषो गृहीत्वाक्षतान् मूर्धनि धृत्वा स्वयं शिष्यादिभिर्वा भोजनपात्राणि चालयित्वाचामेत्। अनुपनीतो नारी चासजातिश्च न [1]चालयेत्। सव्येन दैवे पित्र्ये च स्वस्तिवाचनम्—देवेभ्यः स्वस्तीति ब्रूत पितृभ्योऽमुकनामगोत्रादिभ्यः स्वस्तीति ब्रूतेति। ततः सव्यापसव्याभ्यां तत्तदुच्चारपूर्वकमक्षय्योदकदानम्।

इसी प्रकार आशीर्वाद ग्रहण कर अक्षतों को सिर पर धारण कर स्वयं या शिष्य आदि से भोजनपात्र हटवाकर आचमन करे। अनुपनीत बालक, स्त्री और असमान जाति, ये पात्रों का चालन न करें। सव्य होकर दैव और पित्र्य में स्वस्तिवाचन करावे—देवताओं के लिये 'स्वस्ति' ऐसा कहें, अमुक नाम-गोत्र आदि पितरों के लिये 'स्वस्ति' ऐसा कहें। इसके बाद सव्य और अपसव्य से उन-उनके उच्चारणपूर्वक अक्षय्योदकदान करे।

ततो न्युब्जपात्रमुत्तानं कृत्वा ततः परं सर्वमुपवीत्येव कुर्यात्। द्विजेभ्यः सकर्पूरताम्बूलादि दत्त्वा पितृपूर्वकं नामगोत्राद्युच्चार्य [2]दक्षिणां दद्यात्—'अमुकशर्माहममुकनामगोत्रपित्रादिस्थानोपविष्टाय विप्राय रजतदक्षिणां प्रतिपादयामि' इत्यादि। दैवे सुवर्णम्। अशक्तावुभयत्र यज्ञोपवीतं दक्षिणा।

तदनन्तर उलटे पात्र को सीधा करके इसके बाद सब कृत्य सव्य होकर ही करे। ब्राह्मणों को कपूरसहित ताम्बूल आदि देकर पितृपूर्वक नाम-गोत्र आदि का उच्चारण कर दक्षिणा दे—'अमुक

---

१. कात्यायन ने कहा है—'पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः। न स्त्रीभिर्न च बालेन नासजात्या कथंचन ॥' इति।

२. नागरखण्ड में कहा है—'उत्तानमर्घ्यपात्रं तु कृत्वा दद्याच्च दक्षिणाम्। हिरण्यं देवतानां च पितॄणां रजतं तथा ॥' बृहस्पतिः—'तस्मात् पणं काकिणीं वा फलं पुष्पमथापि वा। प्रदद्याद्दक्षिणां यज्ञे तया स सफलो भवेत् ॥' माधव ने कहा है पितरों के उद्देश से अपसव्य और ब्राह्मणों के उद्देश से सव्य होकर दक्षिणा देवे।

शर्मा मैं अमुक नाम-गोत्र पिता आदि के स्थान में बैठे हुए आप ब्राह्मण को चांदी की दक्षिणा देता हूँ, दैव में सुवर्ण दक्षिणा दे। असमर्थता में दोनों जगह यज्ञोपवीत दक्षिणा दे।

## अथ स्वस्तिवाचनविसर्जनादि

दक्षिणाः पान्त्वित्युक्त्वा स्वधां वाचयिष्ये इति पृष्ट्वा वाच्यतामित्युक्ते पितृ-पितामहेत्याद्युच्चार्य स्वधोच्यतामित्युक्त्वाऽस्तु स्वधेति तैरुक्ते पिण्डसमीपे जलं निषिच्य स्वधा संपद्यतामिति सम्पत्ति वाचयेत्। कातीयसूत्रे दातारो नोभिवर्धन्तामित्याशिषोऽर्थनं स्वधावाचनं न्युब्जपात्रोत्तानीकरणं दक्षिणादानं चेति क्रमः। ततो देवादिप्रीतिं वाचयित्वा पिण्डस्थानेऽक्षतादि क्षिप्त्वा सव्येनैव वाजे वाजे इति मन्त्रेणोत्तिष्ठन्तु पितरो विश्वेदेवैः सहेति युगपद्दर्भेण पितृपूर्वं विप्रान्स्पृशन् विसृजेत्।

'दक्षिणाः पान्तु' ऐसा कहके 'स्वधां वाचयिष्ये' ऐसा पूछकर 'वाच्यतां' ऐसा ब्राह्मण के कहने पर पितृ-पितामह इत्यादि का उच्चारण कर 'स्वधोच्यताम्' ऐसा कहकर 'अस्तु स्वधा' ऐसा उन ब्राह्मणों के कहने पर पिण्ड के समीप जल से सिंचन करके 'स्वधा सम्पद्यताम्' इससे सम्पत्ति-वाचन करावे। कातीय सूत्र में—'दातारो नोभिवर्द्धन्ताम्' इससे आशीः-प्रार्थना, स्वधावाचन, उलटे पात्र का उत्तानीकरण और दक्षिणादान—यह क्रम है। इसके बाद देवादि की प्रीति का वाचन कहवाकर पिण्ड के स्थान में अक्षत आदि छीट कर सव्य ही से 'वाजे वाजे' इस मन्त्र से 'उत्तिष्ठन्तु पितरो विश्वदेवैः सह' इससे एककाल में कुश से पितृपूर्वक ब्राह्मणों का स्पर्श करते हुए विसर्जन करे।

आमा वाजस्येति प्रदक्षिणीकृत्य ततो दातारो नोभिवर्धन्तामित्यादि वरयाचनम्। येषां विसर्जनान्ते पिण्डदानं तेषामाचान्तेषु सौमनस्यदक्षिणादिकाक्षय्य-स्वधावाचनान्ते दातारो नोभिवर्धन्तामित्यादि ततः पिण्डदानादीति क्रमः। हिरण्यकेशीयानां पिण्डदानादिप्रयोगो विस्तृतत्वान्नोक्तः। विप्रैर्वरे दत्ते स्वादुषं सदः० ब्राह्मणासः पितरः० इति मन्त्रौ पठेत्। विप्राः इहैवस्तं० आयुः प्रजामिति वदेयुः। आशीर्भिर्नन्दितो विप्रान्पादाभ्यङ्गादिना संतोष्य नत्वा अद्य मे सफलं जन्म० मन्त्रहीनं० यस्य स्मृत्येत्यादिविष्णुस्मरणपूर्वकं कर्मार्पयित्वा विप्रान्क्षमापयेत्।

'आमा वाजस्य' इस मन्त्र से प्रदक्षिणा करके इसके बाद 'दातारो नोभिवर्द्धन्ताम्' इत्यादि से वर की याचना करे। जिनका विसर्जन के अन्त में पिण्डदान होता है उनका आचमन करने पर सौमनस्य दक्षिणा आदि अक्षय्य स्वधावाचन के अन्त में 'दातारो नोभिवर्द्धन्ताम्' इत्यादि तदनन्तर पिंडदान आदि ऐसा क्रम है। हिरण्यकेशियों का पिण्डदान आदि का प्रयोग विस्तृत होने से नहीं कहा है। ब्राह्मणों के वर देने पर 'स्वादुषं स०' 'ब्राह्मणासः पितरः' इन दो मन्त्रों को पढ़े। सब ब्राह्मण 'इहैवस्तं' 'आयुः प्रजाम्' इन दो मन्त्रों को पढ़े। आशीर्वाद से प्रसन्न होकर ब्राह्मणों के चरणों को अभ्यङ्ग आदि से सन्तुष्ट कर प्रणाम करके 'अद्य मे सफ ं जन्म०' 'मन्त्रहीनं०' 'यस्य स्मृत्या' इत्यादि से विष्णुस्मरणपूर्वक कर्म का अर्पण करके ब्राह्मणों से क्षमा-याचना करे।

अष्टौ पदान्यनुव्रज्य दक्षिणीकृत्य चागतः।
दीपं हस्तेन निर्वाप्य पवित्रत्यागपूर्वकम्॥

पादशुद्धिर्द्विराचामेदुच्छिष्टोद्वासनं ततः ।
बह्वृचो वैश्वदेवं तु यथाविधि चरेत्ततः ॥
ततस्तु वश्वदेवान्ते सभृत्यसुतबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ।

आठ पग ब्राह्मणों के पीछे चलकर ब्राह्मणों के दाहिनी ओर से लौटकर पवित्रत्यागपूर्वक हाथ से दीप बुझाकर जल से पैर शुद्ध कर दो बार आचमन करे। इसके बाद जूठ को हटावे। तदनन्तर बह्वृच विधि से वैश्वदेव करे। वैश्वदेव करने के बाद भृत्य, पुत्र, बन्धु और अतिथियों के साथ-पितृ प्रसादीकृत अन्न का भोजन करे।

## अथ श्राद्धशेषभोजनविचारः

श्राद्धशेषान्नं शिष्याय[1] ज्ञातिभ्यश्च देयं न शूद्राय। द्विजभुक्तावशिष्टं तु शुचिभूमौ निखानयेत्। अत्र पर्वादौ निषिद्धं माषाद्यपि भोक्तव्यं वैधत्वेन[2] निषेधाप्रवृत्तेरिति केचित्। अनिषिद्धभोजनेनापि श्राद्धशेषभोजनविधिसिद्धिरित्यन्ये। श्राद्धशेषभोजनाकरणे दोषः[3]। श्राद्धदिने उपवासनिषेधाच्छ्राद्धशेषाभावे पाकान्तरेण भोजनम्। एकादश्यादाववघ्राणम्। यत्र तूपवासो नावश्यकस्तत्रैकभक्तम्। श्राद्धशेषं दिवैव भोक्तव्यं न रात्रौ, तेन नक्तव्रतेऽवघ्राणमेव।

श्राद्ध से बचे अन्न को शिष्य और ज्ञाति-बान्धवों को दे, शूद्र को न दे। ब्राह्मणों के भोजन से बचे हुए अन्न को पवित्र भूमि में गड़वा दे। इसमें पर्व आदि में निषिद्ध उर्द आदि का भी भोजन करना चाहिये, वैध होने से निषेध की प्रवृत्ति नहीं होती ऐसा कुछ लोग कहते हैं। अनिषिद्ध भोजन से भी श्राद्धशेष भोजन-विधि की सिद्धि होती है, ऐसा दूसरे लोग कहते हैं। श्राद्धशेष का भोजन न करने में दोष होता है। श्राद्ध के दिन उपवास का निषेध होने से श्राद्धशेष के न रहने पर दूसरे पाक से भोजन करे। एकादशी आदि में श्राद्धशेष को सूँघे। जहां उपवास आवश्यक न हो वहां एकभक्त करे। श्राद्ध से बचे अन्न को दिन में ही भोजन करे रात में नहीं, इससे नक्तव्रत में सूँघना ही चाहिये।

## अथ श्राद्धशेषभोजने प्रायश्चित्तम्

श्राद्धावशिष्टभोक्तारस्ते वै निरयगामिनः ।
सगोत्राणां सकुल्यानां ज्ञातीनां च न दोषकृत् ॥

ब्रह्मचारियतिविधवानां नित्यं निषिद्धम्। ज्ञातिगोत्रसंबन्धिभिन्नगृहे श्राद्ध-

---

१. ब्रह्माण्डपुराणे—'कामं दद्याच्च सर्वं तु शिष्याय च सुताय च'। तथा—'शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत्'। जातूकर्ण्यः—'द्विजभुक्तावशिष्टं तु शुचिभूमौ निखानयेत्'। इति।

२. स्मृतिसार में कहा है—'माषाः श्राद्धेषु वै ग्राह्या वर्ज्याश्चैवाग्निपिण्डयोः। ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिण्डयोः॥' स्मृत्यन्तरे—'माषान् सर्वत्र वै दद्यात् पिण्डेऽग्नौ च विवर्जयेत्।'

३. देवल ने कहा है—'श्राद्धं कृत्वा तु यो मर्त्यो न भुङ्क्तेऽथ कदाचन। देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा॥' श्राद्ध के दिन दूसरे के घर भोजन करना शातातप ने निषिद्ध किया है—'श्राद्धं कृत्वा परगृहे यो भुङ्क्ते मदविह्वलः। पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः॥' इति।

शेषभोजने[1] प्राजापत्यं प्रायश्चित्तम्। यतीनां वपनं लक्षप्रणवजपश्च। गुरोर्योगिनो वा श्राद्धशेषं गृहिणो न दोषाय।

न शूद्रं भोजयेत्तस्मिन्गृहे यत्नेन तद्दिने।
श्राद्धशेषं न शूद्रेभ्यः प्रदद्यादखिलेष्वपि॥ इति पार्वणश्राद्धप्रक्रिया।

श्राद्ध से बचे अन्न का भोजन करने वाले नरकगामी होते हैं। सगोत्र और सकुल्य ज्ञातियों को श्राद्धावशिष्ट भोजन में दोष नहीं है। ब्रह्मचारी, संन्यासी और विधवा का नित्य निषेध है। ज्ञाति-गोत्र-सम्बन्धी से भिन्न के घर में श्राद्धशेष भोजन करने से प्राजापत्य प्रायश्चित्त होता है। यतियों का श्राद्धशेष भोजन में मुण्डन और एक लाख प्रणव का जप प्रायश्चित्त है। गुरु अथवा योगी के श्राद्धशेष का भोजन गृहस्थ को दूषित नहीं है। श्राद्ध के दिन उस घर में यत्नपूर्वक शूद्र को भोजन न करावे। सम्पूर्ण कर्मों में श्राद्ध-शेष शूद्रों को न दे। पार्वणश्राद्ध की प्रक्रिया समाप्त।

## अथ श्राद्धदिने वैश्वदेवनिर्णयः

तत्र तावच्छ्रौताग्निमतां च बह्वृचानां श्राद्धात्पूर्वं पृथक्पाकेन [2]वैश्वदेवः। स्मार्ताग्निमतां निरग्निकानां च बह्वृचानां श्राद्धान्त एव श्राद्धशेषेण पृथक्पाकेन वा। कातीयानां तु स्मार्तश्रौताग्निमतां श्राद्धीयपाकेन पूर्वमेव। निरग्निकानामन्ते श्राद्धशेषेण पृथक्पाकेन वा। तैत्तिरीयाणां तु साग्निकानां सर्वत्रादौ वैश्वदेवः।

---

१, हेमाद्रि में जाबालि का वचन है—'विप्रस्त्वन्यगृहे श्राद्धशिष्टान्नं भोजनं चरेत्। प्राजापत्येन शुद्धिः स्याज्ज्ञातिगोत्रे न दोषकृत्॥' आपत्तिग्रस्त होने पर नवश्राद्धादि श्राद्धभोजन का प्रायश्चित्त विष्णु ने कहा है—'प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके। त्रैपक्षिके तदर्धं तु पञ्चगव्यं द्विमासिके॥'—

आपत्तिग्रस्त न होने पर यदि श्राद्ध में भोजन करे तो हारीत ने कहा है—'चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके। एकाहस्तु पुराणेषु प्राजापत्यं विधीयते॥' द्वितीयादि में षट्त्रिंशन्मतोक्त यह वचन है—'प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके। त्रैपक्षिके तदर्धं स्यात् पादो द्वैमासिके तथा॥ पादोनकृच्छ्रमुद्दिष्टं षण्मासे च तथाऽऽब्दिके। त्रिरात्रं चान्यमासेषु प्रत्यहं चेदहः स्मृतम्॥' मिताक्षरा—'नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितं च यत्। दम्पत्योर्भुक्तशिष्टं च न भुञ्जीत कदाचन॥' नवश्राद्ध से इतने श्राद्ध ग्राह्य हैं—'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते॥' मिश्रक-पुराण-संज्ञक-श्राद्ध के वचन पूर्व में लिखे गये हैं।—

जाबालि ने अपवाद किया है—'श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः। ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य योगिनः॥ एतेषां श्राद्धशिष्टान्नं भुक्त्वा दोषो न विद्यते। इति केचित्प्रशंसन्ति मुनयस्तदसाम्प्रतम्॥' इति।

२.लौगाक्षिः—'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः। पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः॥ पित्रर्थं निर्वपेत् पाकं वैश्वदेवार्थमेव च। वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकम्॥' शालङ्कायनः—श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः। एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते॥' परिशिष्टे—'सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च। अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि॥' 'आदौ वृद्धौ क्षये चान्ते दर्शे मध्ये महालये। एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते॥' इति।

उसमें श्रौताग्नि वाले बह्वृचों का श्राद्ध से पहले पृथक् पाक से वैश्वदेव होता है। स्मार्ताग्नि वाले और निरग्निकों का बह्वृचों के श्राद्ध के अन्त में श्राद्ध-शेष से या पृथक्पाक से वैश्वदेव होता है। स्मार्त-श्रौत अग्नि वाले कातीयों का ब्राह्मण-भोजन से पहले श्राद्धीय पाक से वैश्वदेव होता है और निरग्निक कातीयों का अन्त में श्राद्धशेष या पृथक्पाक से होता है। साग्निक तैत्तिरीयों का तो सर्वत्र आदि में वैश्वदेव होता है।

पञ्चमहायज्ञास्त्वन्ते। अन्येषामादावन्ते वेति विकल्पः। तैत्तिरीयाणामेव वैश्वदेवात्पञ्चयज्ञा भिन्नाः। सर्वशाखिनां वृद्धिश्राद्धे पाकेन क्रियमाणे पूर्वमेव वैश्वदेवः। बह्वृचानामन्ते वा पूर्वं वा। आमादिना वृद्धिश्राद्धे सर्वेषां पूर्वमन्ते वेति भाति। नित्यश्राद्धे पूर्वमेव। एकादशाहाद्येकोद्दिष्टेषु साग्निरनग्निश्च सर्वोऽपि श्राद्धशेषं द्विजाधीनं कृत्वा पाकान्तरेणैव वैश्वदेवादि कुर्यात्।

पञ्चमहायज्ञ तो अन्त में होता है। दूसरों का आदि या अन्त में विकल्प है। तैत्तिरीयों का ही वैश्वदेव से पञ्चमहायज्ञ भिन्न है। सब शाखा वालों का वृद्धिश्राद्ध में पाक करने से पहले ही वैश्वदेव होता है। बह्वृचों का पहले या अन्त में होता है। कच्चे अन्न आदि से वृद्धिश्राद्ध में सब का पूर्व या अन्त में करे, ऐसा युक्त मालूम होता है। नित्य श्राद्ध में पहले ही होता है। एकादशाह आदि एकोद्दिष्ट साग्निक व निरग्निक सभी श्राद्ध-शेष को ब्राह्मणाधीन करके दूसरे पाक से ही वैश्वदेव आदि करे।

## अथ नित्यश्राद्धम्

वार्षिकादिश्राद्धदिने श्राद्धात्पश्चात्तेनैव पाकेन पाकान्तरेण वा 'नित्यश्राद्धं कार्यम्। नित्यश्राद्धीयसर्वदेवतानां प्रथमश्राद्धे प्रवेशे प्रसङ्गसिद्धिरेव। तथा च दर्शादिषु महालयान्वष्टकादिषु नित्यश्राद्धलोप एव। एतच्च देवहीनं दर्शवत् षड्दैवतं द्वावेकं वा विप्रं निमन्त्र्य देशकालान्ननियमहीनं पुनर्भोजनब्रह्मचर्यादिकर्तृभोक्तृनियमरहितं[2] यादृशतादृशेनैवानिषिद्धान्नेन दिवैव रात्रौ प्रहरपर्यन्तं वा कार्यम्। स्वस्याशक्तौ पुत्रादिना। सूतके दर्शादिवल्लोपः। वृद्ध्युत्तरं मण्डपोत्थानावधि सपिण्डैर्न कार्यम्। नित्यवैश्वदेवान्तर्गतपितृयज्ञोत्तरं मनुष्ययज्ञात्प्रागेव भाति। तत्र दर्शवत् षट्पितॄन् देवहीनानुच्चार्यं 'नित्यश्राद्धं करिष्ये' इति।

वार्षिक आदि श्राद्ध दिन में श्राद्ध के बाद उसी पाक से या दूसरे पाक से नित्यश्राद्ध करना चाहिये। नित्यश्राद्धीय सब देवताओं का प्रथम श्राद्ध में प्रवेश होने पर प्रसङ्ग-सिद्धि ही है। दर्श आदि में महालय और अन्वष्टका आदि में नित्यश्राद्ध का लोप ही है। इस नित्यश्राद्ध को देवहीन दर्श के सदृश षड्दैवत दो या एक ब्राह्मण को निमन्त्रित कर देश-काल-अन्न के नियम से हीन, पुनर्भोजन-ब्रह्म-

१. प्रचेता ने बतलाया कि नित्यश्राद्ध में क्या-क्या नहीं करना चाहिये—'नामन्त्रणं न होमं च नाह्वानं न विसर्जनम्। न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम्॥' इति।

२. भविष्ये—'आवाहनं स्वधाकारं पिण्डाग्नौकरणादिकम्। ब्रह्मचर्यादिनियमा विश्वेदेवा न चैव हि॥ दातॄणामथ भोक्तॄणां नियमो न च विद्यते।' बृहन्नारदीय में बताया कि यह श्राद्ध दिन में नहीं कर सके तो रात्रि में प्रथमप्रहरपर्यन्त में कर ले—'दिवोदितानि कर्माणि प्रमादादकृतानि वै। यामिन्याः प्रहरं यावत्तावत् कर्माणि कारयेत्॥' संग्रहेऽपि—'रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत्। ब्रह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः॥' इति।

चर्य आदि कर्ता और भोक्ता के नियम से रहित जिस किसी अनिषिद्ध अन्न से दिन में ही अथवा एक प्रहरपर्यन्त रात में करना चाहिये। स्वयं अशक्त हो तो पुत्र आदि से करावे। सूतक में दर्श आदि की तरह लोप होता है। वृद्धि के बाद मण्डपोत्थानपर्यन्त सपिण्डों को नहीं करना चाहिये। नित्य वैश्वदेव के अन्तर्गत पितृयज्ञ के बाद मनुष्ययज्ञ से पहले ही करना ठीक प्रतीत होता है। उसमें दर्श की तरह देवहीन छ पितरों का उच्चारण करके 'नित्य श्राद्ध करूँगा' ऐसा संकल्प है।

शिष्यादिश्चेद्यजमानस्य पितृपितामहेत्याद्युच्चार्य संकल्पयेत्। पितॄणामिदमासनमित्यासनं, नित्यश्राद्धे क्षणः क्रियतामिति क्षणः। पूर्वोच्चारिताः पितरः अयं वो गन्ध इत्येवं गन्धादिभिर्विप्रमभ्यर्च्य वर्तुले चतुरस्रे वा मण्डले पात्रेऽन्नं परिविष्य पृथ्वी ते पात्रमित्यादि ब्रह्मार्पणान्तं दर्शवत्। भोजनान्ते दक्षिणां दत्त्वा न वा दत्त्वा नमस्कारेण विसर्जयेत्। विप्रस्यान्नादेर्वाऽभावे यथाशक्त्यन्नमुद्धृत्य षोढा विभज्यास्मत्पितृपितामहेत्यादि चतुर्थ्यन्तं षड्देवता उच्चार्येदमन्नं स्वधा न ममेति त्यजेत्। तदन्नं विप्राय गोभ्यो वा देयं जलादौ वा त्याज्यम्। अन्नत्यागस्यापि लोपे आर्चन्नत्र मरुत इति ऋचो दशवारं जपेत्। इति नित्यश्राद्धविधिः।

यदि शिष्य आदि हो तो यजमान के पिता-पितामह इत्यादि का उच्चारण कर संकल्प करे। पितरों का यह आसन है यह कह कर आसन, नित्यश्राद्ध में क्षण कीजिये ऐसा कहकर क्षण दे। पहले उच्चारण किये गये पितृगण यह आपका गन्ध है इस प्रकार गन्धादिक से ब्राह्मण का पूजन करके गोल या चौकोन मण्डल में अन्न परोस कर 'पृथ्वी ते पात्रं' इत्यादि ब्रह्मार्पणपर्यन्त दर्श की तरह करे। भोजन के अन्त में दक्षिणा देकर या न देकर नमस्कार करके विसर्जन करे। ब्राह्मण या अन्न आदि के अभाव में शक्त्यनुसार अन्न को निकाल कर छ विभाग करके चतुर्थी विभक्ति से हमारे पिता-पितामह इत्यादि छ देवता का उच्चारण कर 'इदमन्नं स्वधा न मम' ऐसा कहकर त्याग करे। उस अन्न को ब्राह्मण या गाय को दे अथवा जल आदि में छोड़ दे। अन्न-त्याग का भी लोप होने पर 'आर्चन्नत्र मरुत' इस ऋचा का दसबार जप करे। नित्यश्राद्धविधि समाप्त।

## अथ श्राद्धानुकल्पाः

अनेकविप्रालाभे देवस्थाने शालग्रामादिकं [1]स्थापयित्वैकविप्रे पित्रादित्रयं मातामहादिसहितदेवताषट्कं चावाह्य सर्वं श्राद्धं कार्यमित्युक्तम्। सर्वथा विप्रालाभे [2]दर्भबटुश्राद्धमित्याद्यप्युक्तम्।

अनेक ब्राह्मणों के न मिलने पर देवता के मन्दिर में शालग्राम आदि की स्थापना करके एक ब्राह्मण में पिता आदि तीन और मातामह आदि के सहित छ देवता का आवाहन कर सब श्राद्ध करे, ऐसा कहा है। सर्वथा ब्राह्मण के न मिलने पर कुश का बटु बनाकर श्राद्ध करे इत्यादि भी कहा है।

---

१. पद्मपुराण उत्तरखण्ड में—'सकृदभ्यर्चितं लिङ्गं शालग्रामशिलां च यः। पीठे संस्थापयित्वा तु श्राद्धं च कुरुते नरः॥ पितरस्तस्य तिष्ठन्ति कल्पकोटिशतं दिवि।' इति।

२. देवल का वचन है—'निधाय वा दर्भबटूनासनेषु समाहितः। प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत्॥' योग्य ब्राह्मण के अलाभ में कुशबटु स्थापित करने पर प्रैषानुप्रैष स्वयं करना चाहिये।

## अथ आमश्राद्धम्

तत्र केनचित्संकटेन पाकासम्भवे जातकर्मणि च 'ग्रहणनिमित्तकश्राद्धे चामश्राद्धं कार्यम्। सपिण्डनश्राद्धं मासिकं प्रतिवार्षिकं महालयाष्टकान्वष्टकादिश्राद्धं चामेन न कार्यम्। शूद्रस्य तु दशाहपिण्डादिश्राद्धमात्रमामेन[2], न कदापि पाकेन। तत्र पितॄनुद्दिश्य 'अमुकश्राद्धं सदैवं सपिण्डमामेन हविषा करिष्ये' इति संकल्पः। अन्यः प्रयोगः पूर्वोक्त एव। पाकप्रोक्षणस्थाने आमप्रोक्षणम्।

आमश्राद्ध में किसी संकट से पाक न होने पर और जातकर्म तथा ग्रहणनिमित्त श्राद्ध में आमश्राद्ध करे। सपिण्डनश्राद्ध, मासिक, प्रतिवार्षिक, महालय और अन्वष्टकाश्राद्ध आदि भी कच्चे अन्न से नहीं करे। शूद्र का तो दशाह पिण्ड आदि श्राद्ध केवल आमान्न से करे पाकान्न से कभी न करे। उसमें पितरों के उद्देश्य से 'अमुक श्राद्ध दैव और पिण्डसहित आम हविष्य से करूँगा' ऐसा संकल्प है। अन्य प्रयोग पहिले कहा हुआ ही है। पाक प्रोक्षण की जगह आमान्न प्रोक्षण करे।

आवाहने उशन्तस्त्वेति मन्त्रे हविषे अत्तवे इत्यत्र हविषे स्वीकर्तवे इत्यूहः। भस्ममर्यादान्तं प्राग्वत्। विप्रहस्तेषु तण्डुलैरग्नौकरणम्। अन्नाच्चतुर्गुणं[3] द्विगुणं समं वा तत्तदामं पात्रेषु संस्थाप्य पाणिहोमशेषं पिण्डार्थं संस्थाप्य पात्रेषु दत्त्वा पृथ्वी ते पात्रमित्यादि, इदमामं हव्यं कव्यमित्यादि, इदमाममृतरूपं स्वाहेत्यादि, यथाधर्मं मध्वित्यन्तं प्राकृतम्। यथासुखं जुषध्वमित्यस्यापोशनप्राणाहुतितृप्तिप्रश्नानां लोपः। सम्पन्नवाचनान्तेऽन्नशेषप्रश्नलोपः।

आवाहन में 'उशन्तः' इस मन्त्र में 'हविष्ये अत्तवे' यहां पर 'हविषे स्वीकर्तवे' ऐसा ऊह करे। भस्म-मर्यादा तक पहले के सदृश है। ब्राह्मण के हाथों में चावल से अग्नौकरण करे। अन्न से चौगुना, दुगुना या बराबर उस-उस कच्चे अन्न को पात्रों में स्थापित कर पाणिहोम के शेष को पिण्ड के लिये रखकर पात्रों में देकर 'पृथ्वी ते पात्रम्' इत्यादि, यह हव्य-कव्य-स्वरूप आमान्न आदि, अमृतरूप आमान्न स्वाहा इत्यादि, यथाधर्म मधुपर्यन्त पहले किया हुआ जानें। 'यथासुखं जुषध्वम्' इसका आपोशन, प्राणाहुति और तृप्तिप्रश्न, आमश्राद्ध में नहीं होते। सम्पन्न-वाचन के अन्त में अन्नशेषप्रश्न नहीं होता।

---

१. विष्णु और उशना ने कहा है—'आत्मनो देशकालाभ्यां विप्लवे समुपस्थिते। आपद्यनग्नौ तीर्थे च प्रवासे पत्न्यसम्भवे॥ चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः। न पक्वं भोजयेद् विद्वान् सच्छूद्रोऽपि कदाचन॥ भोजयन् प्रत्यवायी स्यान्न च तस्य फलं भवेत्।' कात्यायनः—'आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि। आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे॥' कूर्मपुराणे—'अनग्निरधनो वाऽपि तथैव व्यसनान्वितः। आमश्राद्धं द्विजः कुर्याद् वृषलस्तु सदैव हि॥' स्मृतिदर्पणे—'मृताहं च सपिण्डं च गयाश्राद्धं महालयम्। आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित्॥' इति।

२. प्रचेताः—'स्त्री शूद्रः स्वपचश्चैव जातकर्मणि चाप्यथ। आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु॥' स्वयं पचतीति स्वपचः अपत्नीक इत्यर्थः।

३. व्यासः—'आमं ददतु कौन्तेय दद्यादामं चतुर्गुणम्। द्विगुणं त्रिगुणं वाऽपि न त्वेकगुणमर्पयेत्॥ सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः। आवाहनादि सर्वं स्यात् पिण्डदानं च भारत॥ दद्याच्च द्विजातिभ्यः श्रुतं वाऽश्रुतमेव वा। तेनाग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत्॥'

सर्वमते तण्डुलैः सक्तुभिर्वा पिण्डदानम्। केचिद् गृहसिद्धान्नेन पायसेन वा पिण्डानाहुः। एवं विप्रसमीपे पिण्डदानान्ते नमो वः पितर इषे इत्यत्रोपस्थानमन्त्र इषेस्थाने आमद्रव्यायेत्यूहः। पिण्डोद्वासनान्ते पिण्डजातीयद्रव्येण विकिरदानम्। आमश्राद्धे स्वस्तीति ब्रूतेति वर्ज्यम्। वाजे वाजे इति मन्त्रे तृप्ता यातेति स्थाने तर्प्स्यंथ यातेत्यूहः। ततः प्राग्वच्छेषं समापयेत्। आमश्राद्धं द्विजैः पूर्वाह्णे कार्यं शूद्रैरपराह्ण एव।

सब के मत में चावल अथवा सत्तू से पिण्डदान है। कुछ लोग घर में बने अन्न से या खीर से पिण्डदान करना बतलाते हैं। इसी प्रकार ब्राह्मण के समीप में पिण्डदान के अन्त में 'नमो वः पितरः इषे' यहां पर उपस्थान मन्त्र में 'इषे' के स्थानमें 'आमद्रव्याय' ऐसा ऊह है। पिण्ड विसर्जन के अन्त में पिण्डजाति के द्रव्य से विकिरदान करे। आमश्राद्ध में, 'स्वस्तीति ब्रूत' इस अंश का त्याग करे। 'वाजे वाजे' इस मन्त्र में 'तृप्ता यात' के स्थान में 'तर्प्स्यंथ यात' ऐसा ऊह है। तदनन्तर पहले की तरह शेष की समाप्ति करे। ब्राह्मण आमश्राद्ध को पूर्वाह्ण में और शूद्र अपराह्ण में ही करें।

## अथ हिरण्यश्राद्धप्रकारः

आमान्नाभावे[1] हिरण्यश्राद्धमप्येवमेव। संकल्पादौ सर्वत्र हिरण्यपदमामपदस्थाने योज्यम्। आमवद्धेमप्रोक्षणम। अत्तव इत्यादिमन्त्रत्रयोहः प्राग्वदेव। तण्डुलादिभिर्हस्तेऽग्नौकरणम्। हिरण्यमन्नादष्टगुणं [2]चतुर्गुणं द्विगुणं समं वा देयम्। हिरण्यश्राद्धे दक्षिणास्त्येव। श्राद्धीयमामं हेम वा द्विजदत्तं यथेष्टं विनियोज्यम्। शूद्रदत्तं तु भोजनादन्यत्र विनियोज्यम्। श्राद्धीयामेन पञ्चयज्ञाः श्राद्धं च न कार्यम्।

---

व्यास ने पक्षान्तर का निर्देश किया है—'आमं ददद्धि कौन्तेय तदामं द्विगुणं चरेत्। त्रिगुणं चतुर्गुणं वाऽपि न त्वेकगुणमर्पयेत्॥'—

षट्त्रिंशन्मत में—'आमश्राद्धं यदा कुर्यात् पिण्डदानं कथं भवेत्। गृहपाकात् समुद्धृत्य सक्तुभिः पायसेन वा॥ पिण्डान् दद्याद्यथालाभं तिलैः सह विमत्सरः।' आमश्राद्ध का कर्तव्याकर्तव्य धर्मप्रदीप में इस प्रकार बतलाया है—'आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैव च। व्यतीपातादिके श्राद्धे नियमान् परिवर्जयेत्॥ गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा। पिण्डदानं प्रकुर्वीत आमे हैमे कृते सति॥ आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च। विकिरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत्॥ आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम्। तृप्तिप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवम्॥ आवाहनाग्नौकरणं विकिरं पात्रपूरणम्। तृप्तिप्रश्नं न कुर्वीत आमे हैमे कदाचन॥' स्मृत्यन्तरे—'तृप्तिप्रश्नोऽवगाहश्च क्षुत्प्रश्नो यथासुखम्। आमश्राद्धे भवेन्नैतदपोशानं च पञ्चमम्॥' इति।

१. मरीचि ने हेमश्राद्ध के सम्बन्ध में कहा है—'आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान्। धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा॥' इति।

२. स्मृत्यर्थसारे—'हिरण्यमष्टगुणं चतुर्गुणं समं वा दद्यात्।' पुत्र जन्म में संवर्त ने हेमश्राद्ध ही का निर्देश किया है—'पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्। न पक्वेन न चामेन कल्याणान्यभिकामयन्॥' इति।

आमान्न के अभाव में सुवर्ण-श्राद्ध भी इसी प्रकार होता है। संकल्प आदि में सब जगह आम पद के स्थान में सुवर्ण पद की योजना करे। आमान्न के सदृश सुवर्ण का प्रोक्षण करे। 'अत्तवे' इत्यादि तीन मन्त्र का ऊह पहले के समान है। चावल आदि से हाथ में अग्नौकरण करे। सोना—अन्न से अठगुना, चौगुना, दुगुना या समान देना चाहिये। सुवर्ण-श्राद्ध में दक्षिणा है ही। द्विजदत्त श्राद्धीय आमान्न या सुवर्ण का यथेष्ट उपयोग करे। शूद्र का दिया हुआ तो भोजन से भिन्न कार्य में लगाने योग्य है। श्राद्ध के आमान्न से पञ्चयज्ञ और श्राद्ध नहीं करे।

हेमश्राद्धे आमश्राद्धे च पिण्डदानविकल्पात्सांकल्पिकविधिनाप्येतद्द्वयम्। सांकल्पिके च समन्त्रकावाहनार्घ्याग्नौकरणपिण्डदानविकिराक्षय्यस्वधावाचनप्रश्ने-त्येतत्सप्तकं [1]वर्ज्यम्। तत्र 'अमुकश्राद्धमामेन हविषा हिरण्येन वा सांकल्पिकविधिना करिष्ये' इति संकल्पः। शूद्रगृहेऽन्यदीयमपि क्षीराद्यपि न भक्ष्यं किमुत तदीयमामादि। तद्गृहे पक्त्वा न भक्ष्यमिति। तस्माच्छूद्राल्लब्धं द्विजगृहे पक्त्वा भक्ष्यम्। इत्यामश्राद्धहेमश्राद्धविधिः।

सुवर्ण-श्राद्ध और आमश्राद्ध में पिण्डदान के विकल्प होने से सांकल्पिक-विधि से भी ये दोनों होते हैं। सांकल्पिक में मन्त्रसहित आवाहन, अर्घ्य, अग्नौकरण, पिण्डदान, विकिर, अक्षय्य, स्वधा-वाचन, प्रश्न, ये सात वर्जनीय हैं। उसमें 'अमुक श्राद्ध आमहवि या सुवर्ण से सांकल्पिकविधि से करूँगा' ऐसा संकल्प है। शूद्र के घर में दूसरे का भी दूध आदि भक्षण नहीं करे फिर उसका आमान्न आदि कैसे भक्ष्य होगा। शूद्र के घर में पकाकर भी भक्षण नहीं करे। इसलिये शूद्र से प्राप्त आमान्न द्विज के घर में पकाकर भक्ष्य होता है। आमहेमश्राद्धविधि समाप्त।

### अथ पक्वान्नद्रव्यकसांकल्पिकश्राद्धविधिः

तत्र येषु संक्रान्तियुगमन्वादिषु वृद्ध्युत्तरकालिकदर्शादिषु वा पिण्डदानं निषिद्धं[2] तत्र सर्वत्र सांकल्पिकविधिः। यश्च पिण्डदानादि बहुविस्तृतं श्राद्धमनुष्ठातुमशक्तः सोऽपि [3]सांकल्पिकं कुर्यात्। तद्यथा—'अमुकं श्राद्धं सांकल्पिकविधिनान्नेन हविषा करिष्ये' इति संकल्प्य तृतीयक्षणदानान्तं पूर्ववत्कृत्वार्घ्यदानसमन्त्रकावाहनं च वर्जयेत्। देवानावाहयामीति पितॄनावाहयामीत्येवावाह्य

१. पृथ्वीचन्द्रोदय में वसिष्ठ का वचन है—'आवाहनं स्वधाशब्दं पिण्डाग्नौकरणं तथा। विकिरं चार्घ्यदानं च सांकल्पे षड् विवर्जयेत् ॥' स्मृत्यन्तरे—'त्यजेदावाहनं चार्घ्यमग्नौकरणमेव च। पिण्डांश्च विकिराक्षय्ये श्राद्धे सांकल्पसंज्ञके ॥' विकिर में विकल्प है क्योंकि उसका विधायक वचन वृद्धशातातप का है—'पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते। स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते ॥' इति।

२. छागलेयः—'पिण्डो यत्र निवर्तेत मघादिषु कथंचन। सांकल्पं तु तदा कार्यं नियमाद् ब्रह्मवादिभिः ॥' कार्ष्णाजिनिः—'मौञ्जीबन्धाद् वत्सरार्धं वत्सरं पाणिपीडनात्। पिण्डान् सपिण्डा नो दद्युः प्रेतपिण्डं विनाऽत्र तु ॥' इति।

३. सपिण्डश्राद्ध करने की असमर्थता में संवर्त की उक्ति है—'समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम्। अपि संकल्पविधिना काले तस्य विधीयते ॥ पात्रे भोज्यस्य चान्नस्य त्यागः संकल्प उच्यते ॥' इति।

गन्धादिपूजनादिभस्ममर्यादान्तेऽग्नौकरणं वर्जयित्वा परिवेषणादिसम्पन्नवचनान्ते उत्तरापोशनं विकिरपिंडदानवर्जमक्षय्यवचनान्तं कृत्वा स्वधां वाचयिष्ये स्वधोच्यतामिति वाक्यरहितं सर्वं पूर्ववत्समापयेत् । इति सांकल्पिकप्रयोगः ।

उसमें जिन संक्रान्ति, युगादि, मन्वादि और वृद्धि के उत्तरकालिक दर्श आदि में पिण्डदान का निषेध है उसमें सब जगह सांकल्पिक विधि है। पिण्डदान आदि बहुत विस्तृत श्राद्ध करने में असमर्थ हो तो वह भी सांकल्पिक विधि से करे। वह जैसे—'अमुक श्राद्ध सांकल्पिक विधि से अन्न हवि से करूंगा' ऐसा संकल्प कर तीसरे क्षणदान तक पहले की तरह करके अर्घ्यदान और मन्त्रसहित आवाहन नहीं करे। देवताओं का आवाहन करता हूँ या पितरों का आवाहन करता हूँ इस प्रकार आवाहन कर गन्ध आदि पूजन भस्ममर्यादा के अन्त में अग्नौकरण को छोड़कर परिवेषण आदि सम्पन्न-वचन के अन्त में विकिर पिण्डदान को छोड़कर उत्तरापोशन से अक्षय्य-वचनपर्यन्त कर्म करके 'स्वधां वाचयिष्ये' 'स्वधोच्यताम्' इस वाक्य से रहित सब पूर्व की तरह समापन करे। सांकल्पिक प्रयोग समाप्त।

## अथान्येऽप्यनुकल्पाः

तत्र द्विजाद्यभावे दर्भबटुविधानेन पिण्डदानमात्रमुक्तम् । अथवा द्रव्यविप्रयोरभावे पक्वान्नस्य पैतृकसूक्तेन[1] होमः कार्यः ।

यद्वा श्राद्धदिने प्राप्ते भवेन्निरशनः पुमान् ।
किंचिद्दद्यादशक्तो वा उदकुम्भादिकं द्विजे ॥
तृणानि वा गवे दद्यात्पिण्डान्वाप्यथ निर्वपेत् ।
तिलदर्भैः पितॄन्वापि तर्पयेत्स्नानपूर्वकम् ॥

अथवा तृणभारं दहेद्, धान्यं वा तिलान्वा स्वल्पां दक्षिणां वा द्विजाय दद्यात् । अथवा संकल्पादिसर्वश्राद्धप्रयोगं पठेत् ।

उसमें ब्राह्मण आदि के अभाव में कुशबटु के विधान से पिण्डदानमात्र कहा है। अथवा द्रव्य और ब्राह्मण के अभाव में पक्वान्न का पैतृकसूक्त से होम करे। अथवा श्राद्ध का दिन आने पर पुरुष भोजन न करे, या असमर्थ पुरुष जलपूर्ण कुम्भ आदि ब्राह्मण को दे, या उस दिन गाय को घास दे, या पिण्ड का निर्वाप अथवा स्नान करके पितरों को तिल कुशा से तृप्त करे, या तृण के बोझा को जला दे, या धान्य या तिल या अल्प दक्षिणा ब्राह्मण को दे, या संकल्प से लेकर सम्पूर्ण श्राद्ध-प्रयोग का पाठ करे।

सर्वाभावे वनं गत्वोर्ध्वबाहुः स्वकक्षं दर्शयन्निदं पठेत्—

न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोगिस्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य[2] ॥

इति प्रभासखण्डेऽन्येपि मन्त्रा उक्ताः । इत्यनुकल्पाः ।

---

१. बृहन्नारदीये—'द्रव्याभावे द्विजाभावे अन्नमात्रं तु पाचयेत् । पैतृकेन तु सूक्तेन होमं कुर्याद् विचक्षणः ॥' देवलः—'पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः । श्राद्धीयाहनि सम्प्राप्ते भवेन्निरशनोऽपि वा ॥' इति ।

२. इसके आगे का श्लोक है—'श्राद्धर्णमेतद्भवतां प्रदत्तं मह्यं दयध्वं पितृदेवताद्याः ॥'

सब के अभाव में वन में जाकर ऊपर दोनों बाहु उठाकर अपनी कुक्षि को दिखाकर यह पढ़े—मेरे पास न वित्त है न श्राद्धोपयोगी धन न अन्य कुछ है। अपने पितरों को मैं प्रणाम करता हूँ। मेरी भक्ति से पितृगण तृप्त हों। मैंने दोनों बाहु वायु के मार्ग में किये हैं। इस प्रकार प्रभासखंड में इस आशय के अन्य भी मन्त्र कहे हैं। अनुकल्प समाप्त।

## अथ श्राद्धभोजने प्रायश्चित्तानि

दर्शश्राद्धे षट् प्राणायामाः, महालयादिश्राद्धेषु त्रिवर्षोर्ध्वं प्रतिवार्षिकेषु च षट् प्राणायामाः, गायत्र्या दशकृत्वोभिमन्त्रितस्य जलस्य पानं वा। एवमन्येष्वप्यनुक्तप्रायश्चित्तश्राद्धे षूक्तजलपानमेव[1]। वृद्धिश्राद्धे प्राणायामत्रयम्। जातकर्मादिचूडान्तसंस्काराङ्गवृद्धिश्राद्धे सान्तपनकृच्छ्रम्। जातकर्माङ्गश्राद्धे चान्द्रायणं वा। अन्यसंस्काराङ्गश्राद्धे उपवासः। सीमन्तसंस्कारे तत्संस्काराङ्गश्राद्धे च चान्द्रायणम्।

दर्श श्राद्ध में भोजन करने पर छ प्राणायाम, महालय आदि श्राद्धों में तीन वर्ष के बाद प्रतिवार्षिक में छ प्राणायाम, अथवा गायत्री से दस बार अभिमन्त्रित जल का पान प्रायश्चित्त है। इसी प्रकार अन्य श्राद्धों में भी जिनके प्रायश्चित्त नहीं कहे गये हैं उनमें गायत्री से दस बार अभिमन्त्रित जल का पान ही है। वृद्धिश्राद्ध में तीन प्राणायाम करे। जातकर्म आदि चूड़ापर्यन्त संस्कारों के अङ्गभूत वृद्धिश्राद्ध में सान्तपनकृच्छ्र प्रायश्चित्त करे। या जातकर्माङ्ग श्राद्ध में चान्द्रायण व्रत करे। अन्य संस्काराङ्ग श्राद्ध में उपवास प्रायश्चित्त करे। सीमन्त संस्कार में और सीमन्तसंस्काराङ्ग श्राद्ध में चान्द्रायण व्रत प्रायश्चित्त करे।

आपदि दशाहान्तर्नवसंज्ञकश्राद्धेषु एकादशाहे च श्राद्धभोजने प्राजापत्यकृच्छ्रम्। द्वादशाहिकसपिण्डीश्राद्धे ऊनमासे च पादोनकृच्छ्रः। द्वितीयमासिकत्रैपक्षिकोनषाण्मासिकोनाब्दिकेष्वर्धकृच्छ्रः। अन्यमासिकेषु प्रथमाब्दिके वर्षान्तसपिण्डश्राद्धे च पादकृच्छ्रः, उपवासो वा। गुरवे द्रव्यं दातुं श्राद्धभोजने सर्वत्रोक्तार्धम्। जपशीले तदर्धम्।

आपत्ति में दशाहान्त नवसंज्ञक श्राद्धों में और एकादशाह में श्राद्ध-भोजन करने पर प्राजापत्य कृच्छ्र करे। बारह दिन के सपिण्डी श्राद्ध में और ऊनमासिक श्राद्ध में एकपाद-कम कृच्छ्र प्रायश्चित्त करे। द्वितीय मासिक, त्रैपक्षिक, ऊनषाण्मासिक और ऊनाब्दिक में कृच्छ्र करे। अन्य मासिक श्राद्ध, प्रथमाब्दिक और वर्षान्त सपिण्ड श्राद्ध में पादकृच्छ्र, अथवा उपवास करे। गुरु को द्रव्य देने के

---

आख्याय चोत्क्षिप्य भुजो ततो वै दिवा च रात्रिं समुपोष्य तिष्ठेत्॥ भवेत् स वै तेन कृतेन तेषामृणेन मुक्तः पितृदेवतानाम्।' विष्णुपुराण और वाराहपुराण में भी कहा है—'असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः। प्रदास्यति तिलान् वापि स्वल्पां वाऽपि च दक्षिणाम्॥ सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः। सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति॥ न मेऽस्ति वित्तं न धनं न चान्नं श्राद्धोपयोगि स्वपितॄन्नतोऽस्मि। तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य॥ इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम्। यः करोति कृतं तेन श्राद्धं भवति भारत॥' इति।

१. जहां श्राद्ध के भोजन में प्रायश्चित्त नहीं कहा है वहां के लिये मिताक्षरा में विज्ञानेश्वर ने उशना का यह वचन उद्धृत किया है—'दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः।' इति।

लिये श्राद्धभोजन करने में सब जगह कहे हुए प्रायश्चित्त का आधा करे। जपशील हो तो आधे का आधा प्रायश्चित्त करे।

अनापद्यूनमासान्तेषु चान्द्रायणं प्राजापत्यं च। द्विमासाद्युक्तचतुर्षु पादोनकृच्छ्रः। त्रिमासादिषु पूर्वोक्तेष्वर्धकृच्छ्रः। प्रथमाब्दिके पादोनकृच्छ्रः। द्वितीयतृतीयाब्दिके एकोपवासः। क्षत्रियश्राद्धे एतद्द्विगुणम्, वैश्यश्राद्धे त्रिगुणम्, शूद्रश्राद्धे सर्वत्र चतुर्गुणम्, चाण्डालविषजलसर्पपश्वादिहतपतितक्लीबादिनवश्राद्धे चान्द्रायणम्। एकादशाहान्तं पराकश्चान्द्रं च। द्वादशाहादौ पराकः, द्विमासादिचतुर्ष्वतिकृच्छ्रः, अन्यमासिकेषु कृच्छ्रः, आब्दिके पादः। अभ्यासे सर्वत्र सर्वं द्विगुणम्। आमहेमश्राद्धे सांकल्पिके च तत्तदुक्तप्रायश्चित्तार्धम्।

आपत्ति न रहने पर ऊनमासिकपर्यन्त श्राद्ध-भोजन में चान्द्रायण और प्राजापत्य करे। दो महीने आदि कहे हुए चार श्राद्धों में पादोन-कृच्छ्र करे। पहले कहे हुए त्रिमासादि श्राद्धों में अर्धकृच्छ्र करे। प्रथमाब्दिक श्राद्ध में पादोन-कृच्छ्र करे। दूसरे और तीसरे वार्षिक श्राद्ध में एक उपवास करे। क्षत्रिय के श्राद्ध में इससे द्विगुण, वैश्य के श्राद्ध में तिगुना, शूद्र के श्राद्ध में सब जगह चौगुना, चाण्डाल, विष, जल, सर्प और पशु आदि से मरे हुए तथा पतित, नपुंसक आदि के नवसंज्ञक श्राद्ध में भोजन करने पर चान्द्रायण व्रत करे। एकादशाहपर्यन्त भोजन में पराक और चान्द्रायण करे। द्वादशाह आदि में पराक, द्विमास आदि चारो श्राद्ध में अतिकृच्छ्र, अन्य मासिक श्राद्धों में कृच्छ्र और वार्षिक श्राद्ध में पादकृच्छ्र करे। अभ्यास में सब जगह सब प्रायश्चित दुगुना करे। आमश्राद्ध और सुवर्ण श्राद्ध में तथा सांकल्पिक में उन-उनमें कहे हुए प्रायश्चित्त का आधा करे।

यतिश्च ब्रह्मचारी च पूर्वोक्तप्रायश्चित्तं कृत्वोपवासत्रयं प्राणायामशतं घृतप्राशनं चाधिकं चरेत्। अनापदि द्विगुणं चरेत्। दर्शादौ गृहिवदेव। ब्रह्मचारिणश्चौलसंस्कारे भोजने कृच्छ्रः, सीमन्ते चान्द्रम्, अन्येषूपवासः, एकादशाहश्राद्धभोजने चान्द्रं पुनःसंस्कारश्चेति हेमाद्रिः।

यति और ब्रह्मचारी पहले कहा हुआ प्रायश्चित्त करके तीन उपवास, सौ प्राणायाम और घृतप्राशन अधिक करे। आपत्काल न होने पर दुगुना करे। दर्शश्राद्ध आदि में गृहस्थ ही के सदृश करे। ब्रह्मचारी को चौल-संस्कार में भोजन करने पर कृच्छ्र, सीमन्त में चान्द्रायण, अन्य में उपवास, एकादशाह श्राद्ध में भोजन करने पर चान्द्रायण और पुनःसंस्कार करे, ऐसा हेमाद्रि कहते हैं।

## अथ क्षयाहश्राद्धे विशेषः

तत्र यस्य पित्रादेर्मरणं यन्मासे यत्पक्षे यत्तिथौ तद्दिनं तस्य 'मृताहस्तत्र

१. मृताहः=क्षयाहः। क्षयाह का स्वरूप व्यास ने कहा है—'मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि। प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः॥' नारदीय में लिखा है—'पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।' गर्ग के वचन से यहां मास चान्द्रमान से ही माननीय है—'आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते।' मलमास में मरने पर सौर मास ग्राह्य है जैसा हेमाद्रि में कहा है—'मलमासमृतानां तु सौरं मानं समाश्रयेत्।' इति।

पित्रादित्रिदैवत्यं वार्षिकश्राद्धं पुरूरवार्द्रवदेवसहितं कार्यम्। न चात्र सपत्नीकत्वं पित्रादीनाम्। नाप्यत्र मातामहादित्रयम्। अत्र तिथिद्वैधे निर्णयो रात्रावपि कार्यत्वम्। ग्रहणदिने तत्प्राप्तौ निर्णयो मलमासादिनिर्णयो दर्शदिने तत्प्राप्तौ निर्णयः शुद्धिश्राद्धनिर्णयश्च श्राद्धकालनिर्णयप्रसङ्गेन पूर्वोक्तोऽनुसन्धेयः। 'पारणे मरणे चैव तिथिस्तात्कालिकी मता' इति वचनात्। मरणकालिकतिथेरपराह्णादिव्याप्त्याब्दिकश्राद्धनिर्णयो ज्ञेयः। पित्रोः प्रथमाब्दिकश्राद्धं विभक्तैर्भ्रातृभिः पृथक्कार्यम्। अविभक्तत्वे ज्येष्ठेनैव। मातृमृताहे मात्रादित्रिदैवत्यं श्राद्धम्।

उसमें जिस पिता आदि की मृत्यु जिस महीने में, जिस पक्ष में, जिस तिथि में हो वह उसका मृताह कहलाता है उसमें पिता आदि का त्रिदैवत्य वार्षिक श्राद्ध, पुरूरव और आर्द्रव देव सहित करे। इसमें पिता आदि का सपत्नीकत्व नहीं होता और न इसमें मातामह आदि तीन का होता है। इसमें दो तिथि के होने पर रात में भी करने का निर्णय है। ग्रहण के दिन में क्षयाह-श्राद्ध-प्राप्ति का निर्णय, मलमास आदि का निर्णय, दर्श के दिन उसकी प्राप्ति का और शुद्धि-श्राद्ध का निर्णय श्राद्ध-काल के निर्णय के प्रसंग से पहले कहे हुए का अनुसन्धान योग्य है। पारण और मरण में तात्कालिक तिथि ली जाती है, इस आशय के वचन से मरणकालिक तिथि का अपराह्ण आदि की व्याप्ति से वार्षिक श्राद्ध का निर्णय जानना चाहिये। माता और पिता का प्रथमाब्दिक श्राद्ध अलग हुए भाइयों को अलग करना चाहिये। इकट्ठे रहने पर ज्येष्ठ ही करे। माता के क्षयाह में माता आदि का त्रिदैवत्य श्राद्ध होता है।

## अथ मातापित्रोर्मृताहैक्ये निर्णयः

मातापित्रोर्मृताहैक्ये पूर्वं पितुः श्राद्धं कृत्वा स्नात्वा मातुः श्राद्धं कार्यम्। एवमेकदिने पित्रोर्मरणेन मातुर्भर्त्रा सह दाहकरणेऽपि ज्ञेयम्। सहगमने त्वेकमेव पाकं कृत्वा पितृमातृपार्वणद्वययुतं श्राद्धम्। षट्पिंडा अर्घ्याश्च। विश्वेदेवास्तु न भिन्नाः।

माता-पिता का क्षयाह एक ही दिन पड़ जाय तो पहले पिता का श्राद्ध करके स्नान कर माता का श्राद्ध करे। इसी प्रकार एक दिन माता-पिता के मरने से माता का पति के साथ दाह करने में भी जानना चाहिये। एक साथ मरने में तो एक ही पाक करके माता-पिता का दो पार्वणयुक्त श्राद्ध करे। छ पिण्ड और छ अर्घ्य होते हैं। विश्वेदेव भिन्न नहीं होते।

## अथ सहगमने सुवासिनीमरणे च कृत्यम्

सहगमने सुवासिनीमरणे च विप्रपंक्तौ सुवासिनीमधिकां भोजयेत्। सुवासिन्यै कुंकुमादिस्त्र्यलंकारान् दद्यात्। सर्वत्र स्त्रीणां श्राद्धे वस्त्रयज्ञोपवीतगन्धादिकमेव विप्रेभ्यो देयं न कुङ्कुमादि।

पति-पत्नी के साथ मरने पर और सौभाग्यवती के मरने पर ब्राह्मण की पंक्ति में एक सुहागिन को अधिक भोजन करावे। सुहागिन के लिये स्त्री के कुङ्कुम आदि अलङ्कारों को दे। स्त्रियों के श्राद्ध में सर्वत्र वस्त्र यज्ञोपवीत गन्ध आदि ही ब्राह्मणों को दे, कुङ्कुम आदि नहीं दे।

## अथ सापत्नमात्रादीनां श्राद्धनिर्णयः

एवं सापत्नमातुर्मातामहतत्पत्न्योर्मातुलस्य पितृव्यतत्पत्न्योर्भ्रातुः श्वश्रूश्वशुरयोर्गुरोः पितृष्वसुर्मातृष्वसुर्भार्याया भर्तुर्भगिन्यादेश्चैतेषामपुत्रत्वे[1] पार्वणविधिनैव प्रतिवार्षिकं श्राद्धं कार्यम्। केचित्पितृमातृमातामहमातामहीव्यतिरिक्तानां सर्वेषामेकोद्दिष्टविधानेनैवेत्याहुः। अत्र देशाचारानुसारेण[2] व्यवस्था।

इसी प्रकार सौतेली माता का, मातामह और उसकी पत्नियों का, मांमा-चाचा और इनकी स्त्रियों का, भाई के सास-ससुर का, गुरु का, बुआ-मौसी-स्त्री-पति और बहिन आदि इन सब का पुत्र न रहने पर पार्वण-विधि से ही प्रतिवार्षिक श्राद्ध करना चाहिये। कुछ लोग पिता, माता, मातामह और मातामही को छोड़कर सब का प्रतिवार्षिक श्राद्ध एकोद्दिष्ट विधान ही से होता है, ऐसा कहते हैं। इसमें देशाचार से व्यवस्था करनी चाहिये।

पित्रादिवार्षिकदिने पितृव्यादिवार्षिकप्राप्तौ स्वयं पित्रादिश्राद्धं कार्यं पितृव्यादिश्राद्धं तु पुत्रशिष्यादिद्वारा कार्यं दिनान्तरे वा स्वयं कार्यम्। संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्यात्सपार्वणम्[3]। प्रथमे वर्षे वर्षान्तसपिण्डनपक्षे मृताहात्पूर्वदिने सपिण्डनमब्दपूर्तिश्राद्धं च कृत्वा परेद्युर्वार्षिकं कार्यम्।

पिता आदि के वार्षिक श्राद्ध के दिन पितृव्य आदि के वार्षिक पड़ने पर पिता आदि का श्राद्ध स्वयं करे। पितृव्य आदि का श्राद्ध तो पुत्र या शिष्य के द्वारा करा दे, अथवा दूसरे दिन स्वयं करे। संन्यासी पिता का भी आब्दिक आदि पार्वणसहित श्राद्ध को पुत्र स्वयं करे। पहले वर्ष में वर्षान्त सपिण्डन पक्ष में मृताह से पहले दिन सपिण्डन और अब्द-पूर्ति श्राद्ध करके दूसरे दिन वार्षिक श्राद्ध करे।

## अथ क्षयाहाज्ञाने निर्णयः

यस्य मृतस्य देशान्तरमरणादिना मासो ज्ञायते तिथिर्न ज्ञायते तस्य तन्मासे

---

१. अपुत्रों के लिये आपस्तम्ब ने कहा है—'अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्॥ मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारीभ्य एव च। दद्याद् वै मासिकं श्राद्धं सांवत्सरमतोऽन्यथा॥' चतुर्विंशतिमत में कहा है—'पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत्। एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथः॥ अपुत्रस्य पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः। पितामहस्य तत्पत्न्याः श्राद्धं पार्वणवद् भवेत्॥' इति।

२. निर्णयसिन्धुकार ने भी लिखा है—'वस्तुतस्तु सर्वेषां पार्वणैकोद्दिष्टयोर्व्रीहियववद् विकल्पः। स च देशाचाराद् व्यवस्थित इति सर्वनिबन्धसिद्धान्तः।' इसीलिये पृथ्वीचन्द्रोदय में वृद्धपराशर ने—'मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि' यह कहकर कहा है—'देशधर्मं समाश्रित्य वंशधर्मं तथा परे। सूरयः श्राद्धमिच्छन्ति पार्वणं च क्षयाहयपि॥' जो एकोद्दिष्ट करते हैं उनके लिये भी कहीं पार्वण ही कर्तव्य है जैसा शंख का वचन है—'अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः। पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन॥' इति।

३. वायवीये—'संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद् यथाविधि। महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत्॥' प्रचेताः—'एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह। सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा॥' इति।

दर्शे[1] शुक्लैकादश्यां कृष्णैकादश्यां वा प्रतिवार्षिकश्राद्धम्। मृततिथिर्ज्ञाता मासो न ज्ञातस्तदा [2]मार्गशीर्षे माघे वा भाद्रे वाऽऽषाढे वा तत्तिथौ वार्षिकम्। तिथिमासयोरज्ञाने यद्दिने देशान्तरं प्रस्थितस्तन्मासदिवसौ ग्राह्यौ।

जिस मृतक का दूसरे देश में मरने आदि से मास का ज्ञान है किन्तु तिथि का ज्ञान नहीं हो, उसका उसी मासकी अमावास्या में अथवा शुक्ल या कृष्ण पक्ष की एकादशी में प्रतिवार्षिक श्राद्ध करे। मृत तिथि का ज्ञान हो मास का ज्ञान नहीं हो तब मार्गशीर्ष या माघ में अथवा भाद्रपद वा आषाढ़ की उस तिथि में वार्षिक करे। तिथि और मास दोनों के ज्ञान न होने पर जिस दिन परदेश गया हो उसी मास और तिथि में वार्षिक श्राद्ध करे।

प्रस्थानदिनादेरज्ञाने मृतवार्ताश्रवणतिथिमासौ। प्रस्थानवार्ताश्रवणयोर्मासज्ञाने तिथेरज्ञाने तन्मासे दर्शादौ। प्रस्थानादिमासविस्मरणे तिथिस्मरणे मार्गशीर्षादिषूक्तचतुर्षु तत्तिथौ वार्षिकम्। मरणतच्छ्रवणप्रस्थानानां दिनमासयोरज्ञाने माघस्य मार्गस्य वा दर्शे श्राद्धम्। [3]द्वादशादिवर्षप्रतीक्षोत्तरं प्रतिकृतिदाहे दाहदिने वार्षिकादि।

यात्रा दिन का भी ज्ञान न होने पर मरने की बात जिस दिन सुने वही तिथि और मास वार्षिक का जानना चाहिये। प्रस्थान दिन और मृतवार्ता-श्रवण से मास के ज्ञान होने और तिथिके ज्ञान न होने पर उसी मास के अमावास्या आदि में वार्षिक करे। प्रस्थान आदि के मास के भूलने पर तिथि के स्मरण होने पर मार्गशीर्ष आदि कहे हुए चारो मासों में किसी में उसी तिथि में वार्षिक करे। मरण, मरने की बात श्रवण और प्रस्थान का दिन-मास के न जानने पर माघ या अगहन मास की अमावास्या में श्राद्ध करे। बारह आदि वर्ष की प्रतीक्षा के बाद पुतला का दाह कर दाह के दिन वार्षिक आदि करे।

## अथ श्राद्धविघ्ने निर्णयः

निमन्त्रणोत्तरं विप्रस्य सूतके मृतके वा प्राप्ते आशौचं न[4]। निमन्त्रणं च

---

१. मरीचिः—'श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि। एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः॥' 'विशेषतः' इस कथन से शुक्ल एकादशी में भी करना चाहिये। बृहस्पतिः—'न ज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति। मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यादथाब्दिकम्॥ दिनमासौ न विज्ञातौ मरणस्य यदा पुन । प्रस्थानमासदिवसौ ग्राह्यौ पूर्वोक्तया दिशा॥' इति।

२. भविष्यपुराणे—'मृताहं यो न जानाति मानवो विनतात्मज। तेन कार्यममावास्याश्राद्धं सांवत्सरं सदा॥ दिनमेव तु जानाति मासं नैव तु यो नरः। मार्गशीर्षेऽथवा भाद्रे माघे वा तद्दिनं भवेत्॥' निर्णयामृत में बृहस्पति का वचन है—'यदा मासो न विज्ञातो विज्ञातं दिनमेव तु। तदा चाषाढके मासि माघे या तद्दिनं भवेत्॥' इति।

३. यमः—'गतस्य न भवेद् वार्ता यावद् द्वादशवार्षिकी। प्रेतावधारणं तस्य कर्तव्यं सुतबान्धवैः॥ यन्मासि यदहर्यातस्तन्मासि तदहः क्रिया। दिनाज्ञाने कुहूस्तस्य आषाढस्याथवा कुहूः॥' इति।

४. निमन्त्रण के बाद ब्राह्मण को आशौच नहीं होता, ऐसा ब्रह्मपुराण में कहा है—'निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि। निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च॥ देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्॥' इति।

द्वितीयक्षणरूपं समन्त्रकं ग्राह्यं न लौकिकमिति भाति। कर्तुस्तु पाकपरिक्रियोत्तरमाशौचाभावः[1]। पाकपरिक्रिया च समन्त्रकं पाकप्रोक्षणमित्याहुः। कर्तुर्गृहे भोजनारम्भोत्तरं जनने मरणे वा भोजनशेषं त्यक्त्वा [2]परकीयजलेनाचामेत्। मम तु प्रतिभाति सर्वस्याप्याशौचापवादस्यानन्यगतिविषयत्वात्संकटाभावे पाकपरिक्रियोत्तरमपि कर्तुराशौचे तदन्ते श्राद्धम्।

निमन्त्रण के बाद ब्राह्मण के यहां जननाशौच या मरणाशौच हो जाने पर आशौच नहीं होता। निमन्त्रण मंत्रसहित द्वितीय क्षणरूप ग्राह्य है लौकिक नहीं, ऐसा युक्त प्रतीत होता है। श्राद्ध कर्ता का तो पाकपरिक्रिया के अनन्तर आशौच नहीं होता। कोई—मन्त्रसहित पाकप्रोक्षण को पाकपरिक्रिया कहते हैं। श्राद्धकर्ता के घरमें भोजन-प्रारम्भ के बाद जन्म या मरण का आशौच होने पर भोजन करने वाले शेष भोजन का त्याग कर दूसरे के जल से कुल्ला करें। मुझे तो यह ठीक मालूम होता है कि सभी आशौच के अपवाद का अनन्यगतिविषयक होने से संकट के न होने पर पाकपरिक्रिया के अनन्तर भी श्राद्धकर्ता के आशौच होने पर आशौचान्त में श्राद्ध होता है।

भोक्तुस्तु भोजनारम्भात्प्रागाशौचज्ञानेऽन्यो निमन्त्रणीयः। भोजनारम्भोत्तरमाशौचे तु कर्त्रा तथैव श्राद्धं समापनीयम्। भोक्त्रा तु भोजनान्ते आशौचप्रकरणे वक्ष्यमाणं[1] प्रायश्चित्तं कार्यम्। संकटे तु पूर्वोक्तमिति युक्तं चेद् ग्राह्यम्।

खाने वाले ब्राह्मण को तो प्रारम्भ से पूर्व आशौच के ज्ञान हो जाने पर दूसरे को निमन्त्रित करना चाहिये। भोजनारम्भ के बाद आशौच में तो श्राद्धकर्ता को उसी प्रकार श्राद्ध की समाप्ति करनी चाहिये। भोजन करने वाले विप्र को तो भोजन के अन्त में आशौच प्रकरण में कहे जाने वाले प्रायश्चित्त करना चाहिये। संकट में तो पहले कहा हुआ यदि ठीक हो तो वही करे।

अथ सिन्धौ पाकोत्तरमाशौचाभाववचनस्य कर्तृमात्रपरत्वाद्भोक्तुः प्रायश्चित्तमाशौचं चोक्तम्। तद्यथा—ब्राह्मणस्याशौचे श्राद्धे सकृत्कामतोऽन्नभोजने सान्तपनकृच्छ्रम्[3]। अभ्यासे मासं कृच्छ्रं चरेत्।

निर्णयसिन्धु में पाक के बाद आशौचाभाव वचन का कर्तृमात्रपरक होने से भोजन करने वाले को प्रायश्चित्त और आशौच भी कहा है। जैसे—ब्राह्मण को आशौच में श्राद्धान्न को जानकर एक बार भोजन करने में सान्तपन कृच्छ्र प्रायश्चित्त करना चाहिये। अभ्यास में एकमास तक कृच्छ्र करे।

---

१. कर्ता के लिये विष्णु ने कहा है—'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥' श्राद्ध का प्रारम्भ पाक-परिक्रिया से होता है, ऐसा विष्णु ने ही कहा है—'प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥' तिथितत्त्वादि में विष्णु के—'निमन्त्रणोत्तरं श्राद्धे प्रारम्भः स्यादिति श्रुतिः' इस वचन से निमंत्रण के अनन्तर कर्ता और भोक्ता दोनों को आशौच नहीं लगता ऐसा कहा है।

२. षट्त्रिंशन्मते—'भुञ्जानेषु तु विप्रेषु त्वन्तरा सूतसूतके। अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः॥' इति।

३. जानकर एकबार भोजन करने पर मार्कण्डेय ने कहा है—'भुक्त्वा तु ब्राह्मणाशौचे चरेत्सान्तपनं द्विजः।' पुनः भोजन करने पर शंख ने कहा है—'ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती भवेत्।' इति।

अज्ञानाद्विप्रादीनां जाताशौचानामन्नभक्षणे[1] एकाहं त्र्यहं पञ्चाहं सप्ताहं क्रमेणाभोजनमन्ते पञ्चगव्याशनं च। अभ्यासे द्विगुणम्। आशौचं तु ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचं तदन्ते प्रायश्चित्तं कुर्यादिति विष्णूक्तं ज्ञेयम्। श्राद्धकालेऽन्यकाले चैतत्सममेवेति ज्ञेयम्। दातृभोक्तृभ्यामुभाभ्यामाशौचं न ज्ञातं चेन्न दोषः।

अज्ञान से आशौच प्राप्त ब्राह्मण आदि चारो वर्णों के अन्न खाने में एक दिन, तीन दिन, पाँच दिन और सात दिन क्रम से अनशन और अन्त में पञ्चगव्य-प्राशन करे। अभ्यास में दुगुना करे। आशौच तो ब्राह्मण आदि के आशौच में जो एकवार भी अन्न खाता है उसको उतना ही आशौच होता है जितना उसका आशौच होता है, आशौच के बाद प्रायश्चित्त करे ऐसा विष्णुस्मृति में कहा हुआ जानें। श्राद्ध या अन्य काल में यह बराबर ही है ऐसा जानना चाहिये। देने वाला खाने वाला दोनों को आशौच का ज्ञान न हो तो दोष नहीं है।

## अथ श्राद्धदिनातिक्रमे निर्णयः

आशौचमध्ये श्राद्धदिनपाते आशौचान्ते एकादशाहे कार्यम्। एकादशाहो मलमासे चेन्मलेऽपि कार्यम्। तत्रातिक्रमे शुद्धमासे। एतन्मासिके प्रतिवार्षिके च ज्ञेयम्। दर्शादीनां तु पञ्चमहायज्ञादिवल्लोप एव नाशौचान्ते कर्तव्यत्वं नापि प्रायश्चित्तम्। आशौचं विना दर्शादीनां लोपेऽप्युपवासादिरूपं प्रायश्चित्तमेव न कालान्तरेऽनुष्ठानम्। एकादशाहेऽसंभवेऽमावास्यायां[2] शुक्लकृष्णैकादश्योर्वार्षिकम्।

मासिकं चोदकुम्भं च यद्यदन्तरितं भवेत्।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं[3] प्रचक्षते ॥

आशौच में श्राद्ध दिन के पड़ने पर आशौच के अन्त में ग्यारहवें दिन श्राद्ध करे। एकादशाह यदि मलमास में पड़े तो मलमास में ही करे। उसमें अतिक्रमण होने पर शुद्ध मास में करे। यह मासिक और प्रतिवार्षिक में जानना चाहिये। दर्शश्राद्ध आदि का तो पञ्चमहायज्ञ आदि के समान

---

१. अज्ञान से ब्राह्मणादि वर्णों का अन्न खा लेने पर छागलेय ने वर्णक्रम से प्रायश्चित्त कहा है—'एकाहं च त्र्यहं पञ्चसप्तरात्रमभोजनम्। ततः शुचिर्भवेद् विप्रः पञ्चगव्यं पिबेन्नरः ॥' इति।

२. षट्त्रिंशन्मते—'मासिके चाब्दिके त्वह्नि सम्प्राप्ते मृतसूतके। वदन्ति शुद्धौ तत्कार्यं दर्शे वापि विचक्षणाः ॥' गोभिलः—'देये प्रत्याब्दिके श्राद्धे अन्तरा मृतसूतके। आशौचानन्तरं कुर्यात्तन्मासेन्दुक्षये तथा ॥' मरीचिः—'श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि। एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषत. ॥' 'विशेषतः' इस उक्ति से शुक्ल एकादशी में भी करे।

३. यहां 'सातन्त्र्य' में तन्त्र शब्द का 'इतिकर्तव्यता' अर्थ है। 'तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे। प्रधाने तन्तुवाये च शाखाभेदे परिच्छदे ॥ श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके। इतिकर्तव्यतायां च' इति मेदिनी। समानं तन्त्रं सतन्त्रं, सतन्त्रस्य भावस्तस्मात् सातन्त्र्यात्। नवश्राद्ध में विघ्न होने पर निर्णयसिन्धुमें निर्णयामृत के कण्व का इसी तरह का वचन उद्धृत किया है—'नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत्। तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥' इति। व्याधि आदि या विस्मरण के कारण श्राद्ध अन्तरित हो जाय तब इस वचन के अनुसार श्राद्ध की पूर्ति करे।

लोप ही होता है, न तो आशौच के अन्त में कर्तव्य है और न प्रायश्चित्त। आशौच के विना दर्श आदि के लोप में भी उपवास रूप प्रायश्चित्त ही होता है न कि दूसरे समय में उसका अनुष्ठान। एकादशाह में न हो सके तो अमावास्या या शुक्लपक्ष या कृष्णपक्ष की एकादशी में वार्षिक श्राद्ध करे। कहा है—मासिक और उदकुम्भ जो विघ्नवश न हुआ हो उसे आगे कर्म के साथ करे।

केचिदाब्दिकमप्यन्तरितं दर्शादिकालासंभवेऽग्रिममासे तत्तिथौ[१] कार्यमित्याहुः। आशौचेतरव्याध्याद्विविघ्ने विस्मृतौ चैवमेव। केचिद्व्याध्यादिविघ्ने पुत्रादिना तद्दिने एवान्नेनाब्दिकमाहु.।

कोई कहते हैं—आब्दिक श्राद्ध भी विघ्नवश न हो सका हो और दर्श के समय में असम्भव हो तो आगे वाले मास में उसी तिथि में करे। आशौच से भिन्न व्याधि आदि से विघ्न में या भूल से श्राद्ध नहीं हो सके तो इसी प्रकार से करे। कुछ लोग कहते हैं—व्याधि आदि से विघ्न में पुत्र आदि से उसी दिन अन्न से आब्दिक करा ले।

## अथ भार्यारजोदोषे विचारः

तत्र दर्शयुगादिमन्वाद्यष्टकान्वष्टकादिश्राद्धानि[२] पाककर्त्रन्तरसत्त्वेऽन्नेन तद्दिने कार्याण्यन्यथाऽऽमादिद्रव्येण। कालादर्शो दर्शश्राद्धं पञ्चमेऽहनीति पक्षान्तरमाह। सकृन्महालयस्तु दर्शे भार्यारजसि मुख्यकालातिक्रमभिया तत्रैव कार्यः। एवमाश्विनशुक्लपञ्चम्यन्तकालेऽप्यूह्यम्। अष्टम्यादौ सकृन्महालयो भार्यारजोदोषे न कार्यः, कालान्तरसत्त्वादित्यादिमहालयप्रकरणोक्तमनुसंधेयम्।

वहां दूसरे पाक बनाने वाले के रहते दर्श, युगादि, मन्वादि, अष्टका और अन्वष्टका श्राद्ध अन्न से उसी दिन करे, नहीं हो तो कच्चे आदि द्रव्य से करे। 'कालादर्श' तो दर्श श्राद्ध पाचवें दिन करे ऐसा दूसरा पक्ष कहता है। एक दिन के महालय करने के पक्ष में तो पत्नी के रजस्वला होने पर मुख्य समय के व्यतिक्रमण के भय से उसी में करे। इसी प्रकार आश्विन शुक्ल पञ्चमीपर्यन्त समय में भी कल्पना करनी चाहिये। अष्टमी आदि में एकदिन का महालय पत्नी के रजोदोष में नहीं करे। क्योंकि उसके करने का दूसरा समय है इत्यादि महालय प्रकरण में कहे हुए का अनुसन्धान करना चाहिये।

प्रत्याब्दिकं मासिकं च रजोदोषेऽपि तद्दिन एव कार्यमित्येकः पक्षः। पञ्चमेऽहनि कार्यमित्यपरः। पक्षद्वयेऽपि ग्रन्थसंमतिः शिष्टाचारसंमतिश्च। भार्यान्तरसत्त्वे तद्दिन एवेति सर्वसंमतम्। तद्दिने करणपक्षे श्राद्धकाले रजस्वलादर्शनादिकं वर्ज्यम्। तेन तादृशगृहासंभवे योग्यपाककर्त्रसंभवे[२] च पञ्चमेऽहनीति पक्षः श्रेयान्। अपुत्रास्त्रीरजोदोषे भर्तुराब्दिकं पञ्चमेऽहनि कुर्यान्ति त्वन्यद्वारा तद्दिने।

---

१. इनके मत में देवल का वचन है—'एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते। मासेऽन्यस्मिंस्तिथौ तस्मिन् श्राद्धं कुर्याद् प्रयत्नतः॥' इति।

२. सुमन्तु के—'पाकाभावे द्विजातीनामामश्राद्धं विधीयते' इस वचन से दूसरे पाककर्ता के रहने पर पक्वान्न से अन्यथा आमान्न से श्राद्ध करे 'मासिकानि सपिण्डानि अमावास्या तथाब्दिकम्। अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला॥' इति। विशेष अन्यत्र देखें।

एक पक्ष यह है कि प्रत्याब्दिक और मासिक श्राद्ध, रजस्वला होने पर भी उसी दिन करना चाहिये। दूसरा पक्ष यह है कि पांचवें दिन रजःशुद्धि के बाद करे। दोनों पक्ष में ग्रन्थ और शिष्टाचार की सम्मति है। दूसरी पत्नी के रहने पर उसी दिन करे यह सर्व सम्मत है। उसी दिन करने के पक्ष में श्राद्ध-समय में रजस्वला को देखना आदि वर्जित है। इससे वैसे घरके न रहने पर और योग्य पाक बनाने वाले के न मिलने पर पाचवें दिन वाला पक्ष श्रेष्ठ है। विना पुत्र वाली स्त्री के रजोदोष में पतिका वार्षिक श्राद्ध पांचवें दिन करे न कि अन्य के द्वारा उस दिन करावे।

## अथ पतिमुद्दिश्याग्निप्रवेशे विचारः

तत्र सहगमनमेव विप्राणाम्। क्षत्रियादेस्तु सहगमनमनुगमनं च। एकचित्यारोहेण दंपत्योः सहैव मन्त्रवद्दाहः सहगमनम्। भर्तुः समन्त्रकदाहोत्तरं पृथक्चितावग्निप्रवेशोऽनुगमनम्। तत्रोभयत्रापि तिथ्यैक्ये एकदिने एव [1]तन्त्रेण पाकादि कृत्वा दर्शवत्षट्पिण्डषडर्घ्यविप्रभेदयुतं पितृपार्वणमातृपार्वणविशिष्टं श्राद्धं कार्यम्। विश्वेदेवास्तु न भिन्ना भिन्ना वा। तिथिभेदेऽपि श्राद्धदिनैक्ये एवमेव। तिथिभेदाच्छ्राद्धदिनभेदे तु वार्षिकादि पृथगेव कार्यम्। केचित्तु सहगमने तिथिभेदेऽपि भर्तुः क्षयाहश्राद्धदिने एव पत्न्याः श्राद्धं न तु दिनान्तर इत्याहुस्तदल्पकालव्यवधाने योज्यं न तु द्वित्र्यादितिथिव्यवधाने।

उसमें ब्राह्मणों का सहगमन ही है। क्षत्रिय आदि का सहगमन और अनुगमन दोनों है। पति-पत्नी के एक चिता पर आरोहण करके मन्त्रों के साथ दाह को सहगमन कहते हैं। पति के मन्त्र सहित दाह के बाद दूसरी चिता पर अग्नि में प्रवेश को अनुगमन कहते हैं। उसमें दोनों स्थिति में एक तिथि हो तो एक दिन में ही तन्त्र से पाक आदि करके दर्श के समान छ पिण्ड, छ अर्घ्य ब्राह्मण-भेद से युक्त पितृपार्वण और मातृपार्वण-विशिष्ट श्राद्ध करना चाहिये। विश्वेदेवता भिन्न नहीं होते या भिन्न होते हैं। तिथि-भेद में भी श्राद्ध दिन एक होने पर इसी प्रकार श्राद्ध करे। तिथि-भेद से श्राद्ध दिन के भेद में तो वार्षिक आदि अलग ही करना चाहिये। कुछ लोग तो—सहगमन में तिथि-भेद के रहने पर भी पति के क्षयाह में ही स्त्री का श्राद्ध होता है न कि दूसरे दिन ऐसा कहते हैं, उसे थोड़े समय के व्यवधान में लगाना चाहिये न कि दो तीन दिन आदि के व्यवधान में।

## अथ श्राद्धसम्पाते निर्णयः

तत्र पित्रोर्मृताहैक्ये [2]पूर्वं पितुः श्राद्धं ततः पाकभेदेन मातुरित्युक्तम्।

---

१. मदनरत्न में प्रचेता का वचन है कि सहगमन में सर्वत्र श्राद्ध के लिये एक पाक होगा—'एकचित्यां समारूढौ म्रियेत दम्पती यदि। तन्त्रेण श्रपणं कुर्यात् पृथक् पिण्डं समावपेत् ॥' विशेष विचार अन्य निबन्धों में देखें।

२. कार्ष्णाजिनिस्मृतिः—'पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा। पितृपूर्वं सुतः कुर्यादन्यत्रासन्नियोगतः ॥' इस वचन के आधार पर माधवादि सर्वत्र पितृपूर्वक भिन्न प्रयोग कहते हैं। 'अन्यत्रासन्नियोगतः' में अन्यत्र का अर्थ है दोनों के भिन्न काल में मरने पर। पार्वण और एकोद्दिष्ट के संपात में जाबालि ने कहा है—'यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम्। पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ॥' इति।

[1]गृहदाहादिना सपिण्डानां युगपन्मरणे संबन्धसामीप्यक्रमेण श्राद्धानि पाकभेदेन पृथक्कुर्यात्। पृथक्पाकेन भिन्नश्राद्धाशक्तौ तन्त्रेण[2]श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक्पृथक्। क्रमेणैकदिने मरणे मरणक्रमेण। तत्रैकदिने एकस्त्रयाणां श्राद्धानि न कुर्यात्। वार्षिकश्राद्धत्रयप्राप्तौ श्राद्धद्वयं स्वयं कुर्यात्। [3]तृतीयादि भ्रात्रादिना कारयेद्दिनान्तरे वा कुर्यात्। पित्रोः सपिण्डस्य च संपाते तूक्तम्—

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने।
नैमित्तिकं तु कर्तव्यं निमित्तोत्पत्त्यनुक्रमात्।

उसमें माता-पिता के मृताह एक दिन पड़ने पर पहले पिता का श्राद्ध उसके बाद दूसरे पाक से माता का श्राद्ध करे यह कहा है। घर जलने आदि से एक काल में सपिण्डों के मरने पर समीप संबन्ध के क्रम से श्राद्धों को पाक भेद से अलग करना चाहिये। पृथक्-पृथक् पाक से भिन्न-भिन्न श्राद्ध करने में अशक्त हो तो तन्त्र से पाक बनाकर पृथक्-पृथक् श्राद्ध करे। क्रम से एक दिन में मरने पर मरने के क्रम से करे। एक दिन में एक पुरुष तीन श्राद्धों को नहीं करे। तीन वार्षिक श्राद्ध आ पड़ने पर दो श्राद्ध स्वयं करे। तीसरे आदि श्राद्धों को भाई आदि से करावे या दूसरे दिन करे। माता-पिता और सपिण्ड के श्राद्ध संपात में तो कहा है—श्राद्ध करके पुनः उसी का श्राद्ध तो उसी दिन न करे। नैमित्तिक श्राद्ध तो निमित्त की उत्पत्ति-क्रम से करना चाहिये।

तथा षण्णवतिश्राद्धेषु समानदेवताकत्वे तन्त्रेण श्राद्धानि। अधिकदेवताकत्वे पृथक्श्राद्धानि। वार्षिकमासिकोदकुम्भश्राद्धेषु नित्यश्राद्धं दर्शादिश्राद्धं च देवतानां [4]भेदात्पृथक्कार्यम्। महालये तीर्थश्राद्धे दर्शादिषण्णवतिषु च नित्यश्राद्धस्य प्रसङ्गसिद्धिः। मासिकेनोदकुम्भश्राद्धस्य प्रसङ्गसिद्धिः। तत्र प्रसङ्गसिद्धिस्थले दर्शादिकं प्रसङ्गिश्राद्धमेव संकल्पपूर्वकं साङ्गमनुष्ठेयम्।

---

१. गृहदाहादि से एक ही काल में मरने पर भृगु का कथन है—'एककाले गतासूनां बहूनामथवा द्वयोः। तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक् पृथक्॥ पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः। तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः॥' ऋष्यशृंगः—'भवेद्यदि सपिण्डानां युगपन्मरणं तदा। सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत्॥' इति।

२. पृथक् पाक से श्राद्ध करने की असमर्थता के अभिप्राय से पुलस्त्य ने कहा है—'महालये गयाश्राद्धे गतासूनां क्षयेऽहनि। तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात् पृथक्-पृथक्॥' मुख्य पक्ष तो पृथक् पाक से श्राद्ध करना ही है।

३. एक ही दिन दो श्राद्ध पड़े तो आश्वलायन ने कहा है—'नैकस्मिन् दिवसे श्राद्धत्रयाणां कुत्रचिद् द्विजः। एकः कुर्यात्तथा प्राप्ते अन्यो भ्राता समाचरेत्॥ भ्रातर्यविद्यमाने तु तत्परेऽह्नि समाचरेत्। अन्यथा श्राद्धहन्ता स्याच्छ्राद्धसंकरकृद् भवेत्॥' इसी प्रकार तीन श्राद्ध में दो स्वयं करे और तीसरा भाई आदि से करावे या दूसरे दिन स्वयं करे।

४. निर्णयसिन्धु में देवताभेद से अपवाद का वचन है—'नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि। दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि॥ नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि। युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा॥ प्रत्याब्दिकस्य चाभ्युदयोगेषु विहितस्य च। सम्पाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत्॥ निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणम्। पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि॥' इति।

उसी प्रकार छयानबे श्राद्धों में समान देवता होने से तन्त्र से श्राद्ध करे। अधिक देवता होने में अलग श्राद्ध करे। वार्षिक, मासिक और उदकुम्भ श्राद्धों में देवताओं के भेद से नित्यश्राद्ध और दर्श आदि श्राद्ध पृथक् करे। महालय में, तीर्थश्राद्ध में और दर्श आदि छयानबे श्राद्धों में भी नित्य श्राद्ध की प्रसङ्ग से सिद्धि होती है। मासिक से उदकुम्भ श्राद्ध की प्रसङ्गसिद्धि है। उसमें प्रसङ्ग-सिद्धि स्थल में दर्श आदि प्रसङ्गी श्राद्ध को ही संकल्पपूर्वक अङ्गसहित करना चाहिये।

प्रसङ्गसिद्धं तु नित्यादिकं न संकल्पादावुच्चार्यमिति लोपापरपर्याय एव प्रसङ्गसिद्धिपदेनोच्यते। तन्त्रसिद्धौ तु प्रकारद्वयं भाति। दर्शव्यतीपातश्राद्धयो-स्तन्त्रानुष्ठाने षट्पुरुषानुद्दिश्य 'दर्शश्राद्धं व्यतीपातश्राद्धं च तन्त्रेण करिष्ये' इति संकल्प्य दर्शपातश्राद्धयोः देवार्थे क्षणः करणीय इति दैवे निमन्त्र्य दर्शपातश्राद्धयोः पित्राद्यर्थे क्षणः करणीय इति वर्गद्वयार्थं विप्रद्वयादिकं निमन्त्र्यैकमेव श्राद्धं कार्य-मित्येकः प्रकारः।

प्रसंग से सिद्ध नित्य आदि श्राद्ध का तो संकल्प आदि में उच्चारण नहीं करे इस प्रकार लोप का दूसरा पर्याय ही प्रसङ्गसिद्धि-पद से कहा जाता है। तन्त्रसिद्धि में तो दो प्रकार ठीक प्रतीत होता है। दर्श और व्यतीपात श्राद्ध को तन्त्र से करने में छ पुरुषों के उद्देश से 'दर्श श्राद्ध और व्यतीपात श्राद्ध तन्त्र से करूँगा' ऐसा संकल्प करके दर्श और पात श्राद्ध में देवार्थ क्षण कीजिये इस प्रकार दैव में ब्राह्मण को निमन्त्रण देकर दर्श और पात श्राद्धों में पिता आदि के लिये क्षण कीजिये इस प्रकार दो वर्ग के लिये दो ब्राह्मण आदि को निमन्त्रित कर एक ही श्राद्ध करे, यह एक प्रकार है।

अथवा पूर्ववत्संकल्प्य दवे तन्त्रेणैकमेव विप्रं निमन्त्र्य षोडशमासिकतन्त्र-वद्दर्शश्राद्धे क्षणः करणीय इति दर्शविप्रनिमन्त्रणानन्तरं व्यतीपातश्राद्धे क्षण इति विप्रान्तरं निमन्त्र्य विप्रचतुष्टयादियुतं पातश्राद्धे पिण्डाभावात् षडर्घ्यपि-ण्डयुतं श्राद्धमेकेनैव पाकेन कार्यमित्यपरः प्रकारः। एवं त्रिचतुरादिश्राद्धानां तन्त्रे ऊह्यम्। अत्र पक्षद्वये विचार्य युक्ततरपक्षः सद्भिरनुष्ठेयः।

अथवा पहले के समान संकल्प करके दैव में तन्त्र से एक ही ब्राह्मण को निमन्त्रित कर षोडश मासिक तन्त्र की तरह करके दर्श श्राद्ध में क्षण कीजिये, इस प्रकार दर्श ब्राह्मण के निमन्त्रण के बाद व्यतीपात श्राद्ध में क्षण कीजिये, इस तरह दूसरे विप्र को निमन्त्रित कर चार ब्राह्मणों आदि से युक्त पात श्राद्ध में पिण्ड के न होने से छ अर्घ्य पिण्डों से युक्त दर्श श्राद्ध को एक ही पाक से करे, यह दूसरा प्रकार है। इस प्रकार तीन चार आदि श्राद्धों के तन्त्र में कल्पना कर ले। इन दोनों पक्षों में विचार कर जो अतिशय युक्त पक्ष हो उसका अनुष्ठान सज्जनगण करें।

मयूखे तु सपिण्डकेन दर्शश्राद्धेनापिण्डकस्य व्यतीपातादिश्राद्धस्यैकदेवता-कस्य प्रसङ्गसिद्धिरेव न तन्त्रसिद्धिस्तन्त्रोदाहरणं तु पातसंक्रान्त्यादिरित्युक्तम्। यत्त्वष्टक्येन पितृमातृवार्षिकमासिकयोः प्रसङ्गसिद्धिरित्युक्तं तन्महालयेन वार्षिक-सिद्ध्यापत्त्या बहुग्रन्थविरुद्धम्। यत्र च दर्शवार्षिकश्राद्धादौ देवताभेदाच्छ्राद्ध-भेदस्तत्र निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणमिति वाक्यात् पूर्वं वार्षिकं ततो

दर्शः । यत्सर्वान्प्रत्येकरूप्येणकदा न प्राप्नोनि तदनियतनिमित्तकं वार्षिकं मासिकं वा पूर्वं कार्यमिति वाक्यार्थः ।

मयूख में तो सपिण्डक दर्श-श्राद्ध से एक देवता वाले अपिण्डक व्यतीपात आदि श्राद्ध की प्रसङ्गसिद्धि ही है तन्त्रसिद्धि नहीं, तन्त्र का उदाहरण तो पात और संक्रान्ति आदि है यह कहा है। जो किसी ने अष्टका से पिता माता के वार्षिक और मासिक की प्रसंगसिद्धि कहा है वह महालय से वार्षिक श्राद्ध की प्रसंगसिद्धि से की जानेवाली आपत्ति से बहुत ग्रन्थों के विरुद्ध है। क्योंकि जहाँ दर्श और वार्षिक श्राद्ध आदि में देवता-भेद से श्राद्ध भेद है वहां—निमित्त की अनियति यहां पूर्व अनुष्ठान का कारण है—इस वाक्य से पहिले वार्षिक तब दर्श होता है। जो सब को एक रूप से एक समय में नहीं प्राप्त हो वह अनियत निमित्तक वार्षिक या मासिक पहले करना चाहिये यह वाक्य का अर्थ है।

वार्षिकमासिकादीनां सम्पाते पितृपूर्वकत्वं संबन्धसामीप्यादिकं चानुपदमेवोक्तम्। दर्शमहालययोः सम्पाते पूर्वं महालयस्ततो दर्शः। दर्शे वार्षिकमहालययोः प्राप्तौ पूर्वं वार्षिकं ततो महालयस्ततो दर्श इति त्रयं पाकभेदेन विस्तरो महालयप्रकरणे। तथा काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिद्धयति।

वार्षिक और मासिक आदि के संपात में पितृपूर्वक और सम्बन्ध-सामीप्य आदि अभी ही कहा है। दर्श और महालय के सम्पात में पहले महालय बाद में दर्श श्राद्ध करे। दर्श में वार्षिक और महालय के प्राप्त होने पर पहले वार्षिक तब महालय इसके बाद दर्श श्राद्ध, इस तरह पाकभेद से तीनों करे, विस्तृत महालय प्रकरण में है। एवं काम्य श्राद्ध के तन्त्र से नित्यश्राद्ध का तन्त्र सिद्ध होता है।

## अथ अपिण्डकश्राद्धपरिगणनम्

अथ संक्रान्त्ययनद्वयविषुवद्वययुगादिमन्वादिभाद्रकृष्णत्रयोदशीश्रोत्रियागमनप्रयुक्तमघाभरणीमघायुतत्रयोदशीवैधृतिव्यतीपातोपरागपुत्रोत्पत्तिनिमित्तकालभ्ययोगनिमित्तकश्राद्धानि प्रोष्ठपदीभिन्नसर्वपौर्णमासीश्राद्धानि चैतानि श्राद्धानि पिण्डरहितानि सांकल्पविधिना कार्याणि। एषु दर्शवत् षट्पुरुषोद्देशः। तेनैषामेककालसम्पाते तन्त्रेण सिद्धिः। नित्यश्राद्धस्य प्रसङ्गसिद्धिः।

अब संक्रान्ति, दोनों अयन, दोनों विषुव, युगादि, मन्वादि, भाद्रकृष्ण त्रयोदशी, श्रोत्रियागमन प्रयुक्त, मघा, भरणी, मघायुक्त त्रयोदशी, वैधृति, व्यतीपात, ग्रहण, पुत्रोत्पत्ति निमित्तक और अलभ्ययोग निमित्तक श्राद्ध, भाद्रपदी भिन्न सब पूर्णिमा श्राद्ध, ये सब श्राद्ध विना पिण्ड के सांकल्पिक विधि से करना चाहिये। इसमें दर्श के समान छ पुरुष के उद्देश से श्राद्ध होता है। इससे इनका एक समय में संपात होने पर तन्त्र से सिद्धि होती है और नित्य श्राद्ध की प्रसंगसिद्धि होती है।

उपरागश्राद्धस्य भिन्नकालत्वे पृथगनुष्ठानम्। उपरागश्राद्धेन संक्रान्तिदर्शादिश्राद्धानां प्रसङ्गसिद्धिरिति प्रथमपरिच्छेदे मतान्तरमुक्तम्। पुत्रोत्पत्तिनिमित्त-

कश्राद्धस्य नवदेवताकत्वात्पृथगनुष्ठानम्। तच्च 'हेम्नैव कार्यं न त्वामेन नाप्यन्नेनेति। इति श्राद्धसम्पाते निर्णयः।

ग्रहण-श्राद्ध का काल भिन्न होने से अलग करे। ग्रहण-श्राद्ध से संक्रान्ति और दर्श आदि श्राद्ध की प्रसङ्गसिद्धि होती है, यह पहले परिच्छेद में मतान्तर कहा है। पुत्रोत्पत्ति निमित्तक श्राद्ध का नव देवता होने से उसे पृथक् करे। इसे सुवर्ण ही से करे न कि आमान्न से और पक्वान्न से। श्राद्धसंपात का निर्णय समाप्त।

## अथ तिलतर्पणम्

तच्च यच्छ्राद्धे यावन्तः पितरस्तर्पितास्तावत्पितृगणोद्देशेन तच्छ्राद्धाङ्गत्वेन तिलैस्तर्पणं कार्यम्। तत्र कालनियमः ''पूर्वं तिलोदकं दर्शे प्रत्यब्दे तु परेहनि' इत्यादि। तदयं निष्कर्षः—दर्शश्राद्धे श्राद्धात्पूर्वं श्राद्धाङ्गतिलतर्पणम्। तत्र विप्रनिमन्त्रणोत्तरं पाकारम्भोत्तरं वा ब्रह्मयज्ञकरणे ब्रह्मयज्ञाङ्गनित्यतर्पणेनैव दर्शाङ्गतिलतर्पणस्य सिद्धिः। ततः पूर्वं वैश्वदेवोत्तरं वा ब्रह्मयज्ञकरणे श्राद्धीयषट्पुरुषोद्देशेन श्राद्धाङ्गतर्पणं कृत्वा श्राद्धारम्भः कार्यः।

वह जिस श्राद्ध में जितने पितर तृप्त किये गये हैं उतने पितृगण के उद्देश्य से उस श्राद्ध के अंग होने से तिलों से तर्पण करना चाहिये। उसमें काल का नियम है—दर्श में पहले और प्रतिवार्षिक में दूसरे दिन तिल जल दे। इससे यह निष्कर्ष निकला—कि दर्श श्राद्ध में श्राद्ध से पहले श्राद्धाङ्ग तिल तर्पण करे। उसमें विप्रनिमन्त्रण के बाद या पाकारम्भ के पश्चात् ब्रह्मयज्ञ करने में ब्रह्मयज्ञ के अङ्गभूत नित्य तर्पण से ही दर्शाङ्ग तिल-तर्पण की सिद्धि होती है। उसके पहले या वैश्वदेव के पश्चात् ब्रह्मयज्ञ करने में श्राद्धीय छ पुरुषों के उद्देश्य से श्राद्धाङ्ग तर्पण करके श्राद्ध का आरम्भ करे।

प्रत्याहिकं सर्वपितृतर्पणं तु ब्रह्मयज्ञकाले कार्यम्। एवं युगादिमन्वादिसंक्रान्तिपौर्णमासीवैधृतिव्यतीपातश्राद्धेषु दर्शवत्पूर्वमेव। तीर्थश्राद्धे सर्वपित्रुद्देशेन पूर्वम्। वार्षिकश्राद्धे परेद्युरेव श्राद्धीयदेवतात्रयोद्देशेन। वार्षिकश्राद्धदिने नित्यतर्पणं तिलैर्न कार्यम्। सकृन्महालये सर्वपित्रुद्देशेन परेद्युरेव।

प्रतिदिन का सब पितृतर्पण तो ब्रह्मयज्ञ के समय में करना चाहिये। इसी प्रकार युगादि, मन्वादि, संक्रान्ति, पौर्णमासी, वैधृति और व्यतीपात श्राद्धों में दर्श के सदृश पहले ही करे। तीर्थ श्राद्ध में सब पितरों के उद्देश से पहले ही करे। वार्षिक श्राद्ध में श्राद्धीय तीन देवता के उद्देश से दूसरे ही दिन करे। वार्षिक श्राद्ध के दिन तिलों से नित्य तर्पण नहीं करें। सकृन्महालयों में सब पितरों के उद्देश से दूसरे ही दिन करे।

---

१. संवर्त ने कहा है—'पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान्। न पक्वेन न चामेन कल्याणान्यभिकामयन्॥' भविष्ये—'अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि। हेमश्राद्धं सग्रहे च तथा स्त्रीशूद्रयोरपि॥' इति।

२. गर्ग का वचन इस प्रकार है—'पूर्वं तिलोदकं कृत्वा अमाश्राद्धं तु कारयेत्। प्रत्यब्दे न भवेत् पूर्वं परेऽहनि तिलोदकम्॥' कारयेत्=कुर्यादित्यर्थः। यहां णिच्प्रत्यय अविवक्षित है।

अन्येषु महालयपक्षेष्वष्टकान्वष्टकापूर्वेद्युःश्राद्धेषु माघ्यावर्षार्धोदयगजच्छायाषष्ठीभरणीमघाश्राद्धेषु हिरण्यश्राद्धे चानुव्रज्य तर्पणं श्राद्धीयदेवतोद्देशेन। श्राद्धसंपाते तु यदि तत्प्रसङ्गसिद्धिस्तदा तदीयमेव तर्पणम्।

अन्य महालय पक्षों में अष्टका, अन्वष्टका और पूर्वेद्युःश्राद्धों में माघ्यावर्ष, अर्धोदय, गजच्छाया, षष्ठी, भरणी और मघा श्राद्धों तथा सुवर्ण श्राद्ध में श्राद्धीय देवता के उद्देश से विप्रगण के पीछे चल कर तर्पण करे। श्राद्ध का संपात होने पर तो यदि उसकी प्रसङ्गसिद्धि हो तब उसका ही तर्पण करे।

तन्त्रत्वे तु पूर्वतर्पणवतां पश्चात्तर्पणवतां च श्राद्धानां समसंख्यत्वे आदावन्ते वा तर्पणम्। विषमसंख्यत्वे बह्वनुरोधेन संक्रान्तिषु ग्रहणे पित्रोः श्राद्धे दर्शे व्यतीपाते पितृव्यादिश्राद्धे महालये च निषिद्धेऽपि दिने श्राद्धाङ्गतिलतर्पणं कार्यमिति केचित्। अन्ये तु सर्वत्र श्राद्धाङ्गतर्पणे कोऽपि तिथ्यादिनिषेधो नेत्याहुः।

तन्त्र हो तो पहले और पीछे तर्पण वाले श्राद्धों की तुल्य संख्या की स्थिति में आदि अथवा अन्त में तर्पण करे। कोई कहते हैं कि—विषम संख्या हो तो बहुतों के अनुरोध से संक्रान्तियों, में ग्रहण, पिता-माता के श्राद्ध, दर्श, व्यतीपात पितृव्य आदि के श्राद्ध और महालय में तथा निषिद्ध दिन में भी श्राद्धाङ्ग तिलतर्पण करना चाहिये। अन्य लोग तो—सब जगह श्राद्धाङ्ग तर्पण में कोई भी तिथि आदि का निषेध नहीं होता है—ऐसा कहते हैं।

### अथ श्राद्धाङ्गतर्पणनिषेधः

वृद्धिश्राद्धे सपिण्ड्यां च प्रेतश्राद्धेऽनुमासिके।
संवत्सरविमोके च न कुर्यात्तिलतर्पणम्॥

तत्र तर्पणप्रकारः—परेऽहनि तर्पणे स्नात्वा तर्पणं कृत्वा नित्यस्नानं प्रातःसंध्यां च कुर्यात्। यद्वा नित्यस्नानप्रातःसंध्योत्तरं श्राद्धाङ्गतर्पणं सम्बन्धनामगोत्ररूपाणि द्वितीयान्तान्युच्चार्य स्वधा नमस्तर्पयामीति बह्वृचैर्दक्षिणहस्तेनान्यैरञ्जलिना[1] त्रिस्त्रिस्तर्पयेत्। प्रत्यञ्जलि मन्त्रावृत्तिः। एवं नित्यतर्पणेऽपि ज्ञेयम्।

वृद्धिश्राद्ध, सपिण्डी, प्रेतश्राद्ध, अनुमासिक और वर्ष की समाप्ति में तिल से तर्पण न करे। उसमें तर्पण का प्रकार यह है—दूसरे दिन तर्पण में स्नान-तर्पण करके नित्य स्नान और प्रातः सन्ध्या करे। अथवा नित्य स्नान और प्रातःसन्ध्या के बाद श्राद्धाङ्ग का तर्पण द्वितीया विभक्त्यन्त सम्बन्ध-नाम-गोत्र-रूपों का उच्चारण कर 'स्वधानमस्तर्पयामि' ऐसा कह कर बह्वृच दाहिने हाथ से, तदितर अञ्जलि से तीन-तीन बार तर्पण करें। प्रत्येक अञ्जलि में मन्त्र की आवृत्ति करें। इसी प्रकार नित्य तर्पण भी जानना चाहिये।

---

१. यहां कातीयों को प्रत्येक अंजलि में मन्त्रावृत्ति करनी चाहिये। बह्वृचों को दाहिने हाथ से तर्पण कहा है—'अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत्॥' स्मृत्यर्थसार में पितरों के वस्वादि रूप का निर्देश किया है—'वसुरुद्रादितिसुतान् श्राद्धार्थे तर्पयेत् पितॄन्।' इति।

## अथ तिलतर्पणनिषेधकालः

अथ ब्रह्मयज्ञाङ्गे नित्यतर्पणे तिलयुक्ततर्पणनिषेधकालः—रविभौमभृगुवारेषु प्रतिपत्षष्ठ्येकादशीसप्तमीत्रयोदशीषु, भरणीकृत्तिकामघासु निशि संध्यासु गृहे जन्मनक्षत्रे शुभकार्यदिनेऽन्यदीये शोभनयुतगृहे मन्वादिषु युगादिषु गजच्छायायामयनद्वये च तिलतर्पणं मृदा स्नानं पिण्डदानं च [1]न कार्यम्। केचिदयनद्वये युगादिमन्वादिषु तिलतर्पणं न दोषायेत्याहुः।

ब्रह्मयज्ञाङ्ग नित्य तर्पण में तिलयुक्त तर्पण का निषिद्ध समय है—रवि-मङ्गल-शुक्रवार में, प्रतिपदा-षष्ठी-एकादशी-सप्तमी-त्रयोदशी में, भरणी कृत्तिका-मघा नक्षत्र में, रात में, सन्ध्या में, घर में, जन्मनक्षत्र में, शुभ कार्य के दिन में, दूसरे के शोभनयुत घर में, मन्वादि में, युगादि में, गजच्छाया में, दोनों अयन में, तिल से तर्पण मिट्टी से स्नान और पिण्डदान नहीं करे। कुछ लोग—दोनों अयन में मन्वादि और युगादि में तिल से तर्पण करने में दोष नहीं है—ऐसा कहते हैं।

विवाहव्रतचूडासु वर्षमर्धं तदर्धकमन्यत्र संस्कारे मासं मासार्धं वा तिलतर्पणादिकं महालयगयाक्षयाहश्राद्धं विना न कार्यमित्युक्तम्। अत्र निषिद्धदिने तिलालाभे वा हेमरौप्ययुतहस्तेन दर्भयुतहस्तेन[2] वा नित्यतर्पणं कार्यम्।

महालय, गया और क्षयाह श्राद्ध को छोड़कर विवाह में एक वर्ष, उपनयन में छ महीने, चौल में तीन महीने, अन्य संस्कार में एक मास या १५ दिन तक तिल तर्पण आदि नहीं करे, यह कहा है। इसमें निषिद्ध दिन में या तिल न मिलने पर सोना चान्दीयुक्त हाथ से अथवा कुशयुक्त हाथ से नित्य तर्पण करना चाहिये।

## अथ तिथ्यादिनिषेधापवादः

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रतम्॥ इति।

तिथिविशेषोऽष्टकादिरिति मयूखे। अत्र कातीयानां केषांचिद्वार्षिकादौ परेऽहनि भरण्यादौ विसर्जनान्ते च श्राद्धाङ्गतर्पणाचारो न दृश्यते तत्र मूलं मृग्यम्। क्षयाहश्राद्धदिने नित्यतर्पणे तिलग्रहणं तु बहुग्रन्थविरुद्धम्।

तीर्थ में, तिथि-विशेष में, गया में और प्रेत-पक्ष में और निषिद्ध दिन में भी तिल मिलाकर तर्पण करना चाहिये। तिथिविशेष पद से अष्टका का ग्रहण है, ऐसा मयूख में लिखा है। इसमें किन्हीं कातीयों का वार्षिक आदि में दूसरे दिन भरणी आदि में और विसर्जन के अन्त में श्राद्धाङ्ग तर्पण का आचार नहीं देखा जाता, इसका मूल अन्वेषणीय है। क्षयाह श्राद्ध के दिन नित्य तर्पण में तिल का ग्रहण तो बहुत ग्रन्थों के विरुद्ध है।

---

१. गार्ग्यः—'भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च। पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥' मरीचिः— सप्तम्यां रविवारे च गृहे जन्मदिने तथा। निशासन्ध्यासु पुत्रार्थी न कुर्यात्तिलतर्पणम्॥' स्मृत्यर्थसारे—'विवाहव्रतचूडासु वर्षमर्धं तदर्धकम्।' 'वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणम्।' इति।

२. गोभिल ने कहा है—'तिलाभावे निषिद्धाहे सुवर्णरजतान्वितम्। तदभावे निषिञ्चेत्तु दर्भमन्त्रेण वा पुनः॥' इति।

## अथ नान्दीश्राद्धसंकल्पादि

अथ नान्दीश्राद्धे यद्वक्तव्यं तत्पूर्वार्धे प्रपञ्चितम्। एतच्चोपनयनादिमहाकर्मसु पूर्वेद्युः[१] कार्यं जातकर्माद्यल्पकर्मसु तदहरेव। तत्र देशकालौ संकीर्त्य सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः मातृपितामहीप्रपितामह्यो नान्दीमुख्यः पितृपितामहप्रपितामहा नान्दीमु० मातामहमातु:० पत्नीसहिता नान्दी० एतानुद्दिश्य 'पार्वणविधानेन सपिण्डं नान्दीश्राद्धं करिष्ये' इति संकल्पः।

नान्दीश्राद्ध में जो कहना है वह पूर्वार्ध में कहा है। इसे उपनयन आदि बड़े कर्मों में पहले दिन और जातकर्मादि छोटे कर्मों में उसी दिन करे। उसमें देश-काल को कह कर सत्य-वसु-नामक विश्वेदेव-नान्दीमुख, माता-पितामही-प्रपितामही नान्दीमुखी, पिता-पितामह-प्रपितामह नान्दीमुख, मातामह-प्रमातामह-वृद्धप्रमातामह सपत्नीक नान्दीमुख, इन सब का उद्देश कर 'पार्वण विधि से सपिण्ड नान्दीश्राद्ध करूंगा' यह संकल्प है।

अर्घ्यकाले नवैव पात्राण्यासाद्य तेषु द्वौ द्वौ कुशौ निधाय यवोसि सोमदैवत्य इति पूर्वोक्तोहेन यवानोप्योशन्तस्त्वेति द्वयोर्द्वयोरावाह्यामुकविश्वेदेवाः प्रीयन्तां नान्दीमुखा मातरः प्रीयन्तां नान्दीमुखाः पितामह्यः प्रीयन्तामित्यादिना यथालिङ्गं पात्राणि पुरतो न्यसेत्। नान्दीमुखा मातर इदं वोऽर्घ्यमित्यादिना यथालिङ्गं द्वाभ्यामर्घ्यपात्रं विभज्य देयम्। द्विर्द्विर्गन्धदानम्। चतुर्थ्यन्तानुदिश्य स्वाहा हव्यं न ममेत्यादिदेववदन्नदानम्।

अर्घ्य काल में नव ही पात्र रखकर तथा उनमें दो-दो कुश रखकर 'यवोसि सोमदैवत्यो' ऐसा पूर्वोक्त ऊह करके यवों का प्रक्षेप कर 'उशन्तस्त्वा' इस मन्त्र से दो-दो अर्घ में आवाहन करके अमुक विश्वेदेवा प्रसन्न हों, नान्दीमुख मातायें प्रसन्न हों, नान्दीमुख पितामही प्रसन्न हों, इत्यादि यथालिङ्ग पात्रों को सामने रखे। 'नान्दीमुखा मातर इदं वोर्घ्यम्' इत्यादि से यथालिङ्ग दो-दो की बांट कर अर्घ्यपात्र दे। दो दो बार गन्ध दे। चतुर्थ्यन्त उद्देश करके 'स्वाहा हव्यं न मम' इत्यादि देवसदृश अन्नदान करे।

पिण्डदानकाले नान्दीमुखाभ्यो मातृभ्यः स्वाहा नान्दीमुखाभ्यः पितामहीभ्यः स्वाहेत्येवं प्रत्येकं द्वौ द्वावित्यष्टादश पिण्डान्दद्यात्। अत्रानुमन्त्रणं कृताकृतम्।

---

१. वृद्धमनुः—'अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः। पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्॥' यहां गृह्यपरिशिष्ट के—'महत्सु पूर्वेद्युस्तदहरल्पेषु' इस वचन से व्यवस्था जाननी चाहिये। शातातप के— पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्' इस वचन से प्रातः काल में करे। यहां गार्ग्य के—'प्रहरोऽप्यर्धसंयुक्तः प्रातरित्यभिधीयते' इस वचन से प्रातः का डेढ़ प्रहर (साढ़े चार घंटा) अर्थ है। पुत्र जन्म में तो अत्रि के—'पूर्वाह्णे वै भवेद् वृद्धिर्विना जन्मनिमित्तकम्। पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः॥' इस वचन से जिस समय जन्म हो उसी समय करना चाहिये।—

आधानाङ्ग नान्दीश्राद्ध अपराह्ण में कर्तव्य है, जैसा गालव का वचन है—'आमश्राद्धं तु पूर्वाह्णे सिद्धान्नेन तु मध्यतः। पार्वणं चापराह्णे तु वृद्धिश्राद्धं तथाग्निकम्॥' विष्णु ने भी कहा है—'नान्दीमुखाद्वयं प्रातराग्निकं त्वपराह्णतः।' इति। विशेष वचन पूर्वार्ध में सुधाविवृति में देखिये।

एवं सर्वं पित्र्यमपि सव्यादिना देवधर्मेणैव कार्यमित्यादि सर्वं पूर्वार्धतो ज्ञेयम्। तत्रानुक्तो विशेष एवात्रोक्तः।

पिण्डदान काल में नान्दीमुखी माताओं को स्वाहा, नान्दीमुखी पितामही को स्वाहा, इस प्रकार प्रत्येक को दो-दो पिण्ड, इस तरह अठारह पिण्ड देवे। इसमें अनुमन्त्रण करना न करना समान है। इसी प्रकार सब पितृकर्म सव्य आदि देव धर्म से ही करे, इत्यादि सब पूर्वार्ध से जानना चाहिये। वहाँ जो नहीं कहा था यहाँ विशेष कहा है।

## अथ विभक्ताविभक्तनिर्णयः

तत्र जीवत्पितृकनिर्णये श्राद्धाधिकारिनिर्णये च प्रायेणोक्तं, विशेषस्तूच्यते। [1]विभक्तधनानां भ्रात्रादीनां सर्वे धर्माः पृथगेव। सपिण्डचन्तप्रेतकर्मषोडशमासिकानि [2]चैकस्यैवेत्यादि तु प्रागुक्तम्। अविभक्तानां तु धननिरपेक्षाणि स्नानसंध्याब्रह्मयज्ञमन्त्रजपोपवासपारायणादीनि नित्यनैमित्तिककाम्यानि पृथगेव। अग्निसाध्यं श्रौतस्मार्तनित्यकर्मापि पृथगेव। 'पितृपाकोपजीवी स्याद् भ्रातृपाकोपजीविकः' इति पक्षान्तरं कात्यायनादिपरम्।

उसमें जीवत्पितृकनिर्णय में और श्राद्धाधिकारी के निर्णय में विभक्ताविभक्त का निर्णय प्रायः कहा है, विशेष तो कह रहा हूँ—जिन भाइयों का धन बँट चुका है उनका सब धर्म अलग ही होते हैं। सपिण्डनान्त प्रेत कर्म और षोडशमासिक श्राद्ध एक को ही करना चाहिये, इत्यादि पहले कहा है। जो अलग नहीं हुए हैं उनका तो धन की अपेक्षा जिन कर्मों में नहीं है ऐसे कर्म जैसे स्नान, सन्ध्या, ब्रह्मयज्ञ, मन्त्रजप, उपवास और पारायण आदि नित्य नैमित्तिक तथा काम्य कर्म अलग ही होंगे। अग्निसाध्य श्रौत, स्मार्त और नित्य कर्म भी अलग ही होंगे। पिता के पाक से जीवे या भाई के पाक से जीवे, यह दूसरा पक्ष कात्यायनादि-परक है।

पञ्चमहायज्ञमध्ये देवभूतपितृमनुष्ययज्ञा ज्येष्ठस्यैव। पाकभेदे आश्वलायनानां वैश्वदेवभेदो विकल्पेन। ज्येष्ठेन कृते वैश्वदेवे कनिष्ठस्य पाकसिद्धौ तेन तूष्णीं किंचिदन्नमग्नौ क्षिप्त्वा विप्राय दत्त्वा भोक्तव्यमिति [3]केचित्। देवपूजा तु पृथगेकत्र वा। प्रतिवार्षिकदर्शसंक्रान्तिग्रहणादिश्राद्धानि ज्येष्ठस्यैव। तीर्थश्राद्धाद्यपि युगपत्सर्वेषामविभक्तानां प्राप्तावेकस्यैव। भेदेन प्राप्तौ भिन्नम्। एवं [4]गयाश्राद्धेऽपि

---

१. मिताक्षरा में नारद का वचन है—'भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते। विभागे सति धर्मोऽपि भवेत्तेषां पृथक्पृथक्॥ बृहस्पति ने भी कहा है—'एकपाकेन वसतां पितृदेवद्विजार्चनम्। एकं भवेद् विभक्तानां तदेव स्याद् गृहे गृहे॥' इति।

२. लघुहारीतः—'सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश। पृथङ् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्॥' यहां सपिण्डन-शब्द मासिक का उपलक्षण है, व्यासः—'अर्वाक् संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात् समेत्य तु। ऊर्ध्वं सपिण्डीकरणात् सर्वे कुर्युः पृथक्पृथक्॥' उशनाः—'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि॥' इति।

३. इनके मत में गोभिल का वचन है—'यस्य त्वेषामग्रतोऽन्नं सिद्ध्येत् स नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा भुञ्जीत' इति।

४. हेमाद्रि में कूर्मपुराण का वचन है—'एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः। तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत्॥ तारिताः स्मो वयं तेन स याति परमां गतिम्॥' इति।

योज्यम् । काम्ये दानहोमादौ द्रव्यसाध्ये भ्रात्राद्यनुमत्याधिकारः । मघात्रयोदशी-श्राद्धं पृथगेवेत्युक्तम् ।

पंचमहायज्ञों के मध्य में देव-भूत-पितर-मनुष्य यज्ञ, ज्येष्ठ ही करे । पाकभेद में वैश्वदेवभेद विकल्प से आश्वलायनों का है । कोई कहते हैं—जेठे से किये वैश्वदेव में छोटा भाई पाक सिद्ध होने पर उससे चुपचाप कुछ अन्न अग्नि में छोड़कर ब्राह्मण को देकर भोजन करे । देवपूजन तो अलग करे या एक में । प्रतिवार्षिक-दर्श-संक्रान्ति-ग्रहण निमित्तक श्राद्ध आदि जेठा भाई ही करे । तीर्थ श्राद्ध आदि भी एक काल में सभी इकट्ठे भाइयों के प्राप्त होने पर एक ही करे । भेद से प्राप्त होने पर भिन्न-भिन्न करे । इसी प्रकार गया श्राद्ध में भी योजना कर ले । द्रव्य से होने वाले काम्य दान-होम आदि में भाई आदि की अनुमति से अधिकार है । मघा त्रयोदशी का श्राद्ध तो अलग ही होता है यह पहिले कहा है ।

## अथ तीर्थश्राद्धम्

अत्र गङ्गादितीर्थप्राप्तावर्घ्यावाहनद्विजांगुष्ठनिवेशनतृप्तिप्रश्नविकिरविसर्जनदिग्बन्धवर्ज्यं सकृन्महालयवत्सर्वपितृगणोद्देशेन धूरिलोचनसंज्ञकविश्वेदेवसहितं तीर्थश्राद्धं कुर्यात् । अग्नौकरणं कृताकृतम् । करणपक्षे तीर्थजलसमीपे श्राद्धं चेत्तदा प्राकृतमन्त्रयुतं तीर्थजले कार्यम्, अन्यथा हस्तादौ । पिण्डानां तीर्थे प्रक्षेप एव प्रतिपत्तिः । अत्र तीर्थवासिन एव विप्रा विगुणा[1] अपि मुख्याः, तदभावेऽन्ये ।

गङ्गा आदि तीर्थ की प्राप्ति में अर्घ्य, आवाहन, विप्राङ्गुष्ठनिवेशन, तृप्तिप्रश्न, विकिर, विसर्जन और दिग्बन्ध को छोड़ महालय के समान सब पितृगण के उद्देश से धूरिलोचन नामक विश्वेदेव सहित तीर्थ श्राद्ध करे । अग्नौकरण कृताकृत है । करने के पक्ष में तीर्थ जल के समीप में यदि श्राद्ध हो तब प्राकृत मन्त्रयुक्त तीर्थ जल में करे, नहीं तो हाथ आदि में । तीर्थ में पिण्डों का प्रक्षेप ही प्रतिपत्ति है । इसमें विगुण भी तीर्थवासी ब्राह्मण मुख्य हैं, उनके अभाव में दूसरे ।

अत्र श्राद्धीये देशेऽन्नादिद्रव्ये च काकश्वादिभिर्दृष्टेऽपि न दोषः । तीर्थश्राद्धाङ्गतर्पणं दर्शवत्पूर्वं कार्यम् । देशकालौ संकीर्त्य सर्वपितृगणमुच्चार्य 'एतेषाममुकतीर्थप्राप्तिनिमित्तकं तीर्थश्राद्धं सपिण्डं सदैवं सद्यः करिष्ये' इति संकल्पः । धूरिलोचनविश्वेदेवादिसर्वं सकृन्महालयवत् । तीर्थयात्रायां साग्नेः[2] सपत्नीकस्यैवाधिकारः । निरग्निकस्य त्वपत्नीकस्यापि स्त्रियाः स्नानदानतीर्थयात्रा नामस्मरणादिकं पुत्राद्यनुमत्यैव । सधवाया यात्रादिकं पत्या सहैव ।

इसमें श्राद्धीय देश और अन्न आदि द्रव्यों में कौआ और कुत्ता आदि के देखने पर भी दोष नहीं है । तीर्थश्राद्धाङ्ग तर्पण दर्श की तरह पहले करना चाहिये । देशकाल को

---

१. पद्मपुराणे—'तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन । अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥' स्कन्दपुराणे—'ब्राह्मणान्न परीक्षेत तीर्थे क्षेत्रनिवासिनः ।' इसी तरह गया के प्रसंग में अग्निपुराण में कहा है—'न विचार्यं कुलं शीलं विद्यां च तप एव च । पूजितैस्तैस्तु सन्तुष्टा देवाः सपितृगुह्यकाः ॥' इति ।

२. कूर्मपुराणे—'सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः । प्रायश्चित्ती व्रजेत्तीर्थं पत्नीविरहितोऽपि वा ॥ यज्ञेष्वनधिकारी वा यश्च वा मन्त्रसाधकः ।' इति ।

कहकर सब पितृगण का उच्चारण कर 'इनका अमुक तीर्थ प्राप्ति निमित्तक दैवसहित सपिण्ड तीर्थ श्राद्ध तुरंत करूँगा' यह संकल्प है। धूरिलोचन विश्वेदेवा आदि सब सकृन्महालय के तुल्य होता है। तीर्थयात्रा में सपत्नीक साग्निक का ही अधिकार है। निरग्निक का तो विना पत्नी के भी अधिकार है। स्त्री का स्नान, दान, तीर्थयात्रा और नामस्मरण आदि का अधिकार पुत्र आदि की अनुमति से ही है। सधवा स्त्री की यात्रा आदि पति के साथ ही होती है।

## अथ तीर्थयात्राविधिः

तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे।
पारणाहे घृतश्राद्धं वृद्धिधर्मयुतं चरेत्॥

तथा च षड्दैवतं नवदैवतं वा द्वादशदैवतं वा [1]बहुसर्पिर्युतेनान्नेन श्राद्धं कुर्यात्। निवेदनकाले इदं घृतं सान्नं दत्तं दास्यमानं चेत्यादि वदेत्। गणेशं विप्रान्साधूंश्च शक्त्या संपूज्य यात्रासंकल्पं कृत्वा श्राद्धशेषेण पारणां [2]कृत्वा व्रजेदिति केचित्।

तीर्थ यात्रा करने का इच्छुक मनुष्य पहले घर में उपवास करके पारणा के दिन घृतश्राद्ध वृद्धिश्राद्ध की धर्मविधि से करे। षड्दैवत या नवदैवत या द्वादशदैवत श्राद्ध अधिक घृतयुक्त अन्न से करे। निवेदन के समय 'इदं सान्नं दत्तं दास्यमानं च' अर्थात् अन्न सहित यह घृत दिया या दिया जानेवाला आपको प्राप्त हो इत्यादि कहे। कुछ लोग कहते हैं—गणेश, ब्राह्मण और साधुओं का शक्ति के अनुसार सम्यक् पूजन कर यात्रा का संकल्प करके श्राद्ध से बचे अन्न का पारण कर यात्रा करे।

अन्ये तु श्राद्धान्ते यात्रासंकल्पं कृत्वा श्राद्धशेषघृतमात्रमादाय ग्रामान्तरं क्रोशन्यूनं गत्वा[3] तत्र श्राद्धशेषघृतसहितान्नान्तरेण पारणामित्याहुः। 'श्रीपरमेश्वरप्रीतिकामः पितृमुक्तिकामो वाऽमुकप्रायश्चित्तार्थं वामुकतीर्थयात्रां करिष्ये' इति यात्रासंकल्प ऊह्यः। उपवासात्पूर्वं [4]मुण्डनं कार्यमिति केचित्। अन्ये तु प्रायश्चित्तार्थयात्रायामेव मुण्डनमित्याहुः।

---

१. गौतम का वचन है—'तीर्थयात्रासमारम्भे तीर्थात्प्रत्यागमेऽपि च। वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिस्समन्वितम्॥' विष्णुपुराणे—'गच्छेद्देशान्तरं यस्तु श्राद्धं कुर्यात्स सर्पिषा।' इति।

२. स्कन्दपुराणे—'तीर्थयात्रां चिकीर्षुः प्राग् विधायोपोषणं गृहे। गणेशं च पितॄन् विप्रान् साधून् शक्त्या प्रपूज्य च॥ कृतपारणको हृष्टो गच्छेन्नियमधृक् पुनः। आगत्याभ्यर्च्य च पितॄन् यथोक्तफलभाग् भवेत्॥' इति।

३. वायुपुराण में गया के प्रसंग में कहा है—'उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः। विधाय कार्पटीवेषं ग्रामं कृत्वा प्रदक्षिणम्॥ ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्।' श्राद्धशेषस्य=घृतस्य इति।

४. विष्णु ने कहा है—'प्रयागे तीर्थयात्रायां पितृमातृवियोगतः। कचानां वपनं कुर्याद्यथा न विकचो भवेत्॥' इति।

दूसरे तो —श्राद्ध के अन्त में यात्रा का संकल्प करके श्राद्ध से बचे घृतमात्र को लेकर कोस भर से कम दूसरे ग्राम में जाकर वहां श्राद्ध से बचे घृत के साथ दूसरे अन्न से पारण करे—ऐसा कहते हैं। 'श्रीपरमेश्वर की प्रीति या पितरों की मुक्ति की कामना से अमुक प्रायश्चित्त के लिये अथवा अमुक तीर्थ की यात्रा करूंगा' ऐसा यात्रा-संकल्प का ऊह करे। कोई कहते हैं—उपवास से पहले मुण्डन करना चाहिये। दूसरे तो— प्रायश्चित्त के लिये यात्रा में ही मुण्डन करने को कहते हैं।

एवं गयोद्देश्यकयात्रायामपि मुण्डनविकल्पः।

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा घृताधिकम्।
विधाय कार्पटीवेषं ग्रामं कृत्वा प्रदक्षिणम्॥
ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः।
यश्चान्यं कारयेच्छक्त्या तीर्थयात्रां नरेश्वरः॥
स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणम्।

यात्रामध्ये आशौचे रजोदोषे वा शुद्धिपर्यन्तं[1] स्थित्वा तदन्ते गच्छेत्। विषममार्गे तु न दोषः।

इसी प्रकार गया के उद्देश से यात्रा करने में भी मुण्डन का विकल्प है। कहा है – गया जाने को उद्यत पुरुष तो अधिक घृत से श्राद्ध करके संन्यासी का वेष धारण कर तथा ग्राम की प्रदक्षिणा करके प्रतिग्रह न लेता हुआ प्रतिदिन चले। जो दूसरे को शक्ति के अनुसार अपने धन और सवारी से तीर्थयात्रा कराता है उसको चौगुना पुण्य होता है। यात्रा के बीच में आशौच या रजोदोष हो जाय तो उसकी शुद्धि तक ठहर कर उसके बाद यात्रा करे। कठिन मार्ग में तो दोष नहीं होता।

संकल्पितयात्रामध्ये तीर्थान्तरप्राप्तौ श्राद्धादिकं कार्यमेव। वाणिज्याद्यर्थं गतेनापि मुण्डनोपवासादि कार्यम्। कार्यान्तरप्रसंगेन तीर्थगमनेऽर्धं फलम्[2]। वाणिज्यार्थं गमने पादफलम्। मार्गे द्विर्भोजनादिकरणे छत्रोपानहसेवने च पादोनम्। यानमारुह्य गमनेऽर्धम्। अनुषङ्गेण तीर्थप्राप्तौ तीर्थस्नानात्स्नानजं फलं, न तीर्थयात्राफलम्।

मार्गेऽन्तरा नदीप्राप्तौ स्नानादि परपारतः।
अर्वागेव सरस्वत्या एष मार्गगतो विधिः॥

संकल्प की हुई यात्रा के बीच में दूसरे तीर्थ की प्राप्ति होने पर श्राद्ध आदि करना ही चाहिये। व्यापार आदि के लिये तीर्थ जाने वाले को भी मुण्डन और उपवास करना चाहिये। दूसरे कार्य के प्रसंग से तीर्थ जाने में आधा फल होता है। व्यापार के लिये तीर्थ जाने में चौथाई फल

---

१. रजोनिवृत्ति के अनन्तर पांचवें दिन यात्रा करे। कहा भी है—'दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति।' इति।

२. ब्रह्मपुराण में कहा है—'अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति।' स्कन्दपुराणे—'द्विर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च। वाणिज्यं त्रींस्तथा भागान् हन्ति सर्वं प्रतिग्रहः॥ यानमर्धं चतुर्थांशं छत्रोपानहमेव च।' इति।

होता है। रास्ते में दो बार भोजन आदि करने में और छाता-जूता के उपयोग करने पर चौथाई से कम फल होता है। सवारी से जाने में आधा फल होता है। आनुषङ्गिक तीर्थ की प्राप्ति होने पर तीर्थ स्नान से स्नान का फल होता है, तीर्थयात्रा का फल नहीं होता। मार्ग के बीच में नदी पड़ने पर स्नान आदि उस पार में और सरस्वती नदी पड़े तो इसी पार में करे, यह मार्ग की विधि है।

## अथ तीर्थसामीप्यप्राप्तौ विधिः

यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः।
भक्त्या च विलुठेत्तत्र कुर्याद्वेषं च कार्पटम्॥

तीर्थप्राप्तिपूर्वदिने तीर्थप्राप्तिदिने [1]वोपवासः कार्यः। तीर्थे मुसलस्नानं कृत्वोदङ्मुखः प्राङ्मुखो वा केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत्। ततः समन्त्रकं स्नानम्। तत्र [2]प्रणवेन जलमालोड्य तीर्थमवगाह्य,

ॐ नमो देवदेवाय शितिकण्ठाय दण्डिने।
रुद्राय चापहस्ताय चक्रिणे वेधसे नमः॥
सरस्वती च सावित्री वेदमाता गरीयसी।
सन्निधात्री भवत्वत्र तीर्थे पापप्रणाशिनी॥

इति मन्त्रेण स्नायात्। शेषः स्नानविधिर्नित्यवत्। ततस्तर्पणादितीर्थश्राद्धम्। श्राद्धोत्तरदिने ततो गमनं न श्राद्धदिने।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम्॥

सर्वतीर्थेष्विति प्रसिद्धमहातीर्थेष्वित्यर्थः। दशमासोत्तरं पुनस्तीर्थप्राप्तौ [3]मुण्डनादितीर्थविधिः।

सवारी छोड़कर पैदल चले और भक्ति से जमीन में लोटे और संन्यासी का वेष धारण करे। तीर्थ प्राप्ति के पहले दिन या उसी दिन उपवास करना चाहिये। तीर्थ में मुसल-स्नान ( सिर को जल में पहले डालकर स्नान ) करके उत्तरमुख या पूर्वमुख हो उत्तरसंस्थ बाल-दाढ़ी-मूछ-नख का वपन करावे। तदनन्तर मन्त्रसहित स्नान करे। उसमें प्रणव ( ओं ) से जल का आलोडन कर

---

१. काशीखण्ड के—'यदह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे। उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत्॥' इस वचन में तीर्थप्राप्ति के पूर्व दिन और 'उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रतः' यहाँ प्राप्ति-दिन में उपवास की विधि है अतः उपवास के लिये पूर्व-दिन या प्राप्ति-दिन का विकल्प है।

२. प्रभासखण्डे—'प्रथमं चालयेत्तीर्थं प्रणवेन जलं शुचि। अवगाह्य ततः स्नायाद्यथावन्मन्त्रयोगतः॥' इति।

३. स्मृत्यन्तरे—'ऊर्ध्वमब्दाद् द्विमासोनात् पुनस्तीर्थं व्रजेद्यदि। मुण्डनं चोपवासं च ततो यत्नेन कारयेत्॥ तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विज।' बृहस्पतिः—'क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्। पित्र्यादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके॥' स्कन्दपुराणे—'उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत् सुधीः। केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत्॥' इति।

और तीर्थ का अवगाहन कर—देव-देव दण्डधारी शितिकंठ पिनाक-हस्त शंकर को नमस्कार है। चक्रधारी विष्णु और ब्रह्मा को नमस्कार है। पाप का नाश करने वाली सरस्वती, सावित्री और पूज्य वेदमाता ( गायत्री ) इस तीर्थ में सन्निधान करें – इस आशय के मन्त्र से स्नान करे। बाकी स्नान-विधि नित्य के समान है। तदनन्तर तर्पण आदि तीर्थश्राद्ध करे। श्राद्ध के दूसरे दिन वहां से चले, श्राद्ध के दिन नहीं चले। कुरुक्षेत्र, विशाला, विरजा और गया को छोड़कर सभी प्रसिद्ध महातीर्थों में मुंडन और उपवास की यह विधि है। सर्वतीर्थेषु का प्रसिद्ध महा-तीर्थों में यह अर्थ है। दस मास के बाद फिर तीर्थ की प्राप्ति हो तो मुण्डन आदि तीर्थ की विधि करे।

## अथ प्रयागे वेणीदानम्

प्रयागे तु योजनत्रयादागतस्य दशमासादर्वागपि। प्रयागे जीवत्पितृकगु-र्विणीपतिकृतचूडबालानामपि सभर्तृकस्त्रीणामपि प्रथमयात्रायां वपनम्। केचि-त्सभर्तृकस्त्रीणां 'सर्वान्केशान्समुद्धृत्य छेदयेदंगुलद्वयम्' इत्याहुः। तत्र वेणीदान-विधिर्द्वितीयपरिच्छेदे उक्तः।

प्रयाग में तो बारह कोस से आये हुए का दस महीने से पहले आने पर भी तीर्थ-विधि होती है। प्रयाग में जिसके पिता जीते हों, गर्भिणी का पति, चौलसंस्कारयुक्त बालक और पतिवाली सौभाग्यवती स्त्रियों का पहली यात्रा में मुण्डन होता है। कुछ लोग—पतिवाली स्त्रियों के सब बाल छोड़कर केवल दो अङ्गुल कटवा दे—ऐसा कहते हैं। उसमें वेणीदान की विधि द्वितीय परिच्छेद में कहा है।

यतिभिस्तु तीर्थेऽप्यृतुसंधिष्वेव कक्षोपस्थवर्जं वपनं कार्यम्। तीर्थप्राप्तावविलम्बेन स्नानपितृतर्पणश्राद्धादि कुर्यात्। न पर्वादिकालं विचारयेत्। आकस्मिकमहातीर्थप्राप्तौ द्वित्रिदिनादिवासासंभवे भुक्तेनापि रात्रावपि सूतकिनापि ग्रहण-पर्वणीव स्नानं हिरण्यादिना तीर्थश्राद्धं च कार्यम्। एवं मलमासेऽपि योज्यम्।

यतियों को तो तीर्थ में ऋतुसन्धियों में ही कांख और उपस्थ को छोड़कर सब बालों का मुंडन कराना चाहिये। तीर्थ में पहुँचने पर विना विलम्ब किये स्नान, तर्पण और पिता का श्राद्ध आदि करे। पर्व आदि के काल का विचार नहीं करना चाहिये। अकस्मात् महातीर्थ में पहुँचने पर दो तीन दिन आदि का निवास न हो सके तो भोजन करके भी रात में भी सूतकी को भी ग्रहण पर्व के समान स्नान और सुवर्ण आदि से तीर्थश्राद्ध करना चाहिये। इसी प्रकार मलमास में भी योजना कर ले।

## अथ परार्थस्नानम्

मातरं पितरं जायां भ्रातरं सुहृदं गुरुम्।
तीर्थे स्नायाद्यमुद्दिश्य सोऽष्टमांशं लभेन्नरः॥
यद्वा प्रतिकृतिं दर्भमयीं सत्तीर्थवारिषु।
मज्जयेच्च यमुद्दिश्य सोऽष्टमांशं फलं लभेत्॥

'पक्वान्नेन तीर्थे श्राद्धे तेनैव पिण्डाः। हिरण्यादिना कृते पिण्डद्रव्याणि—

१. पद्मपुराणे— 'तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः। आमान्नेन हिरण्येन कन्द-मूलफलैरपि॥' इति।

[1]सक्तुसंयावपायसपिण्याकगुडान्यतमानि। पिण्डानां तीर्थे प्रक्षेप एव नान्याः प्रतिपत्तिः।

माता, पिता, स्त्री, भाई, मित्र और गुरु, इनमें से जिसके उद्देश से तीर्थ में स्नान करता है वह पुरुष तीर्थस्नान का आठवां भाग का फल पाता है। अथवा जिसकी कुश-प्रतिमा बनाकर उत्तम तीर्थ जल में स्नान करता है वह तीर्थ-फल का आठवां भाग पाता है। पक्कान्न से तीर्थ में श्राद्ध करे तो पक्कान्न से ही पिण्ड दे। सुवर्ण आदि से श्राद्ध करे तो पिण्ड द्रव्य ये हैं—सत्तू, हलुआ, खीर, पिण्याक ( तिल की खली ) और गुड इनमें से कोई एक द्रव्य। पिण्डों का तीर्थ में प्रक्षेप ही है दूसरी प्रतिपत्ति ( विधि ) नहीं है।

एतच्चापुत्रया विधवया कार्यम्। 'सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचन' इति स्मृतेः। अनुपनीतेनापि कार्यम्। यतिना तु [2]न कर्तव्यम्।

दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः।
दण्डस्पर्शाद्विष्णुपदे पितृभिः सह मुच्यते॥

एवं कूपवटादिष्वपि दण्डप्रदर्शनमेव। तीर्थे वृत्तिदौर्बल्येन प्रतिग्रहे [3]दशमांशदानेन शुद्धिः।

इसे विना पुत्र वाली विधवा करे, क्योंकि पुत्रवती को पति का श्राद्ध कभी नहीं करना चाहिये, इस आशय की स्मृति है। अनुपनीत पुत्र भी पितृश्राद्ध करे। यति को तो नहीं करना चाहिये। यति तो गया में जाकर केवल दण्डप्रदर्शनमात्र करे, पिण्ड नहीं दे। विष्णुपद में दण्डस्पर्श से पितरों के साथ मुक्त हो जाता है। इसी प्रकार कुआं वट आदि में भी दण्डप्रदर्शन ही करे। तीर्थ में जीविका की कमी से दान लेने पर उसमें से दशमांश दान करने से शुद्धि होती है।

# अथाशौचनिर्णयः

श्रीविठ्ठलं रुक्मिणीं च पितरौ दीनवत्सलौ।
ध्यात्वेष्टसिद्धये नत्वा वक्ष्येऽथाशौचनिर्णयम्॥

श्रीविट्ठल भगवान् और रुक्मिणी तथा दीनवत्सल माता-पिता का ध्यान कर और इष्टसिद्धि के लिये प्रणाम कर अब आशौच का निर्णय कहता हूँ।

## तत्रादौ गर्भनाशजननाद्याशौचम्

आचतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः।
अत ऊर्ध्वं प्रसूतिः स्यात्तत्राशौचं विविच्यते॥

---

१. देवीपुराणे ब्रह्मपुराणे च—'सक्तुभिः पिण्डदानं च संयावैः पायसेन वा। कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा॥' इति।

२. स्मृत्यन्तरे—'न कुर्यात् सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम्। त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम्॥ गोत्रादिचरणं सर्वं पितृमातृकुलं धनम्।' इति।

३. प्रभासखण्ड में कहा है—'तीर्थे चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिदुर्लभः। दशांशमर्जितं दद्यादेवं कुर्वन्न हीयते॥' इति।

तत्र गर्भस्रावे[1] आद्यमासत्रये मातुस्त्रिरात्रं चतुर्थमासे चतूरात्रमस्पृश्यत्वरूपमाशौचम्। पित्रादिसपिण्डानां स्रावमात्रे स्नानाच्छुद्धिः। पञ्चमषष्ठमासयोर्गर्भपाते गर्भिण्या [2]माससमसंख्यं क्रमेण पञ्चषड्दिनान्यस्पृश्यत्वलक्षणमाशौचम्। पित्रादिसपिण्डानां तु त्रिदिनं जननाशौचम्। मृताशौचं तु नास्ति। इदं स्रावपाताशौचं सर्ववर्णसाधारणम्।

चौथे मास तक गर्भनाश को स्राव कहते हैं और पांचवे छठे मास तक गर्भनाश को पात कहते हैं। इसके अनन्तर प्रसव होता है उसमें आशौच का विवेचन है। गर्भस्राव में पहले तीन महीने में माता का तीन रात, चौथे महीने में चार रात का स्पर्शायोग्यरूप आशौच होता है। पिता आदि सपिण्डों को केवल स्राव में स्नानमात्र से शुद्धि होती है। पाँचवें छठे मास के गर्भपात में गर्भिणी को पाँच मास के गर्भपात में पाँच दिन और छ महीने के पात में छ दिन स्पर्श का अयोग्यरूप आशौच होता है। पिता आदि सपिण्डों को तो तीन दिन का जननाशौच होता है। मरणाशौच तो नहीं है। यह स्राव और पात का आशौच सब वर्णों का साधारण है।

गर्भिण्याः सप्तममासप्रभृतिप्रसवे मातुः पित्रादिसपिण्डानां च संपूर्णजननाशौचम्। [3]तच्च विप्रे दशाहम्, क्षत्रिये द्वादशाहम्, वैश्ये पञ्चदशाहम्, शूद्रे मासः, सङ्करजातीनां शूद्रवत्। विज्ञानेश्वरस्तु नैषामाशौचं किंतु स्नानमात्रमित्याह। सर्ववर्णेषु दशाहं[4] वा। जननाशौचे गर्भिण्या दशाहमस्पृश्यत्वम्। [5]कर्मानधिकारस्तु कन्योत्पत्तौ मासं पुत्रोत्पत्तौ विंशतिरात्रम्। इदं स्वस्वाशौचोत्तरमिति विप्रस्त्रियाः क्रमेण चत्वारिंशत्त्रिंशद्दिनान्यनधिकारः।

गर्भिणी को सातवें आदि मास में प्रसव होने पर माता और पिता आदि सपिण्डों को संपूर्ण जननाशौच होता है। वह ब्राह्मण को दस दिन का, क्षत्रिय को बारह दिन का, वैश्य को पन्द्रह दिन का,

---

१. मरीचिः—'स्रावे मातुस्त्रिरात्रं स्यात् सपिण्डाशौचवर्जनम्। पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्॥' इति।

२. आदिपुराणे—'षण्मासाभ्यन्तरं यावद् गर्भस्रावो भवेद्यदि। तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते॥ अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते। सद्यःशौचं सपिण्डानां गर्भस्य पतने सति॥' मनुः—'रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुद्ध्यति।' वृद्धवशिष्ठः—'गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां, स्नानमात्रमेव पुरुषस्य' इति।

३. पराशरः—'जाते विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति॥' संवर्तः—'जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते। माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥' इति।

४. हारलता में प्रचेता की उक्ति है—'सूतिका सर्ववर्णेषु दशरात्रेण शुद्ध्यति। ऋतौ च न पृथक् शौचं सर्ववर्णेष्वयं विधिः॥' अङ्गिराः—'सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते। संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते॥ नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति। रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते॥ संसर्गः = मैथुनम्। बृहस्पतिः—'यस्तैः सहासपिण्डोऽपि प्रकुर्याच्छयनासनम्। बान्धवो वा परो वापि स दशाहेन शुद्ध्यति॥' इति।

५. पैठीनसिः—'सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीम्' इति।

शूद्र कोएक मास का और संकर जातियों को शूद्र के समान आशौच होता है। विज्ञानेश्वर तो—इनको आशौच नहीं किन्तु स्नानमात्र होता है—ऐसा कहते हैं। अथवा सब वर्णों को दस दिन का आशौच होता है। जननाशौच में गर्भिणी दस दिन तक स्पर्श योग्य नहीं होती। कर्म का अधिकाराभाव तो कन्या की उत्पत्ति में एक महीना और पुत्र के जन्म में बीस दिन है। यह अपने-अपने आशौच के बाद है, इस प्रकार ब्राह्मण की स्त्री को क्रम से चालीस और तीस दिन तक कर्म का अधिकार नहीं होता है।

पितुः सापत्नमातुश्च कन्यायाः पुत्रस्य वोत्पत्तौ सचैलस्नानात्प्रागस्पृश्यत्वम्। पित्रादिसपिण्डानां जननाशौचे कर्मानधिकारमात्रम्। कर्माद्यतिरिक्तकाले स्पर्शे दोषो न। जातकर्मणि दाने च नालच्छेदनात्पूर्वं पितुरधिकारः। एवं पञ्चमषष्ठदशमदिनेषु दाने जन्मदादिपूजने चाधिकारः[1]। तत्र विप्राणां प्रतिग्रहेऽपि दोषो न।

पिता और सौतेली माता को लड़की या लड़के की उत्पत्ति में वस्त्रसहित स्नान के पहले स्पृश्यत्व नहीं होता। पिता आदि सपिण्डों को जननाशौच में कर्म का अधिकाराभाव मात्र है। कर्म आदि के अतिरिक्त समय में स्पर्श करने में दोष नहीं होता। जातकर्म और दान में नालच्छेदन से पहले पिता का अधिकार है। इसी प्रकार पाचवें छठे और दसवें दिन दान में तथा जन्मदा के पूजन में अधिकार है। इसमें ब्राह्मणों को दान लेने में भी दोष नहीं है।

## अथ सपिण्डसमानोदकसगोत्रनिर्णयः

कूटस्थमारभ्य [2]सप्तमपुरुषपर्यन्ताः सपिण्डाः, ततः सप्त समानोदकाः, ततः सप्तैकविंशतिपर्यन्ताः सगोत्राः। तत्र सपिण्डानां दशाहमित्युक्तम्। सोदकानां त्रिरात्रं सगोत्राणामेकरात्रमिति नागोजीभट्टीये। अन्ये तु सगोत्राणां नाशौचमित्याहुः। अयं सपिण्डसोदकाद्याशौचविभागो जनने मरणे च समानः। मरणे त्वाशौचविच्छेदेऽपि स्नानमात्रं यावदेककुलत्वज्ञानं तावद्भवत्येवेति विशेषः।

मूल-पुरुष से सात पुरुष तक सपिण्ड, उसके बाद सात पुरुष तक समानोदक और सात से इक्कीस पुरुष तक सगोत्र कहलाते हैं। उसमें सपिण्डों को दस दिन का आशौच कहा है। समानोदकों को तीन रात का और सगोत्रों को एक दिन का आशौच है, ऐसा नागोजीभट्ट के ग्रन्थ में है। दूसरे तो—सगोत्रों को आशौच नहीं होता—ऐसा कहते हैं। यह सपिण्ड समानोदक आदि का आशौच-विभाग जन्म और मरण में समान है। मरने में तो आशौच के विच्छेद होने पर भी स्नान मात्र है, जब तक एक कुल का ज्ञान रहे तब तक तो होता ही है यह विशेष है।

अत्रेदं बोध्यम्—कूटस्थादारभ्य सन्ततिभेदे एकसन्ततौ कश्चिदष्टमोऽपरसन्ततौ च कश्चित्सप्तमस्तयोश्चैकतः सापिण्ड्यानुवृत्तिः परतो निवृत्तिरित्युक्तम्। तत्राष्टमेन

---

१. व्यासः—'प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा। त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि।।' अत्र पुत्रशब्दोऽपत्यमात्रपरः। ब्रह्मपुराणे—'देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्। आयान्ति तस्मात्तदहः पुण्यं षष्ठं च सर्वदा।।' इति।

२. अग्निपुराणे—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। समानोदकभावस्तु निवर्तेत चतुर्दशे।। जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते।' बृहस्पतिः—'दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः।।' इति।

निवृत्तसापिण्ड्यकेन सप्तमादीनां परसन्ततिस्थानां जनने मरणे त्रिदिनमाशौचं कार्यम्। सप्तमेन त्वनुवृत्तसापिण्ड्यकेनाष्टमादीनां जनने मरणे वा दशाहमेव कार्यम्। एवं सोदकत्रिरात्रादौ कन्याविषयकत्रिपुरुषसापिण्डये चोह्यम्। तत्राष्टमस्य मृतपितृकत्वे जीवत्पितृकत्वेपि च त्रिदिनमेव। त्र्यम्बकीये भट्टोजीये नागोजीये चाशौचप्रकरणेऽन्यत्र च पित्रादिजीवनाजीवनकृतविशेषादर्शनादिति केचित्।

यहां यह जानना चाहिये—मूल-पुरुष से लेकर सन्तान के भेद में एक सन्तति में कोई आठवां और दूसरी सन्तति में सातवां है, इन दोनों में एक ओर से सपिण्ड की अनुवृत्ति और दूसरी ओर से निवृत्ति होती है, यह कहा है। जिससे सापिण्ड्य की निवृत्ति हो गई है ऐसे आठवें को सातवें आदि दूसरी सन्तति में स्थितों के जनन और मरण में तीन दिन का आशौच करना चाहिये। जिससे सापिण्ड्य की अनुवृत्ति है ऐसे सातवें को तो आठवें आदि के जनन या मरण में दस दिन का ही आशौच करना चाहिये। इसी प्रकार सोदक के त्रिरात्र आदि में और कन्याविषयक तीन पुरुष के सापिण्ड्य में भी ऊह करे। उसमें आठवें के पिता के मरने या जीवित रहने पर भी तीन दिन का ही आशौच होता है। क्योंकि—त्र्यम्बक, भट्टोजी और नागोजी के आशौच-प्रकरण में एवं अन्यत्र भी पिता आदि के जीने न जीने में कोई विशेषता नहीं देखी जाती—ऐसा कुछ लोग कहते हैं।

अपरे तु निर्णयसिन्धौ सापिण्डचप्रकरणे आदशमाद्धर्मविच्छित्तिरित्यादिसुमन्तुवाक्यस्य शूलपाणिकृतव्याख्याने एकपिण्डदानक्रियान्वयित्वरूपसापिण्डचलक्षणमनुसृत्य जीवत्पित्रादित्रिकस्य प्रपितामहात्परे त्रयः पिण्डभाजस्तदूर्ध्वं त्रयो नवपुरुषपर्यन्ता लेपभाजः श्राद्धकर्ता च दशम इति दशमादूर्ध्वं सापिण्डचनिवृत्तिः। पितृपितामहजीवने नवपुरुषपर्यन्तं पितृजीवनेऽष्टपुरुषपर्यन्तं सापिण्डचमिति प्रतिपादनादष्टमादेः पित्रादिजीवनदशायां दशाहमाशौचं पित्रादिमरणोत्तरमेव त्रिदिनमिति वदन्ति। अत्र मम द्वितीयपक्ष एव युक्तो भाति।

दूसरे तो—निर्णयसिन्धु में सापिण्ड्य-प्रकरण में दसवें पुरुष तक धर्म-विच्छेद होता है इत्यादि सुमन्तु-वाक्य का शूलपाणि के व्याख्यान में एक पिण्डदान-क्रियान्वयित्वरूप सापिण्ड्य-लक्षण का अनुसरण कर जीवत्पित्रादि तीन का प्रपितामह से आगे के तीन पिण्डभागी हैं, इनके बाद के तीन नौ पुरुष तक लेपभागी हैं और श्राद्ध करने वाला दसवां इस तरह दसवें के बाद सापिण्ड्य की निवृत्ति होती है। पिता-पितामह के जीते रहने में नौ पुरुष तक, पिता के जीते रहने में आठ पुरुष तक सापिण्ड्य के प्रतिपादन करने से अष्टम आदि के पिता आदि की जीवन-दशा में दस दिन का आशौच और पिता आदि के मरने के अनन्तर ही तीन दिन का आशौच होता है—ऐसा कहते हैं। इसमें मुझे दूसरा पक्ष ही युक्त प्रतीत होता है।

## अथ पित्रादिगृहे कन्याप्रसूतावाशौचम्

पितृगृहे कन्याप्रसूतौ पित्रोस्तद्गृहवर्तिभ्रातॄणां चैकाहः। पितृगृहवर्तिपितृव्यादीनां सर्वेषां पितृसपिण्डानामेकाह इति स्मृत्यर्थसारे। एवं भ्रात्रादिगृहे भगिन्यादिप्रसवेऽपि तेषामेकाहः। माधवस्तु पितृगृहे कन्यायाः प्रसूतौ पित्रोस्त्रि-

रात्रं[1] तद्गृहवर्तिभ्रातॄणामेकाह इत्याह। कन्यायाः पतिगृहे प्रसवे पित्रादीनां नाशौचम्।

पिता के घर में कन्या के प्रसव में पिता-माता और उस घर में रहने वाले भाइयों को एक दिन का आशौच होता है। स्मृत्यर्थसार में कहा है—पिता के घर में रहने वाले पितृव्य आदि सब पिता के सपिण्डों को एक दिन का आशौच होता है। इसी प्रकार भाई आदि के घर में बहिन आदि के प्रसव में भी उन लोगों को एक दिन का आशौच होता है। माधव तो—पिता के घर में कन्या के प्रसव होने पर माता-पिता को तीन दिन का और उस घर में रहने वाले भाइयों को एक दिन का आशौच है—ऐसा कहते हैं। कन्या का अपने पति के घर में प्रसव होने पर पिता आदि को आशौच नहीं है।

## अथ मृतजाते जननोत्तरं मृते चाशौचम्

मृतजाते शिशौ सपिण्डानां सम्पूर्णमेव जननाशौचम्। मृताशौचं नास्ति। जननोत्तरं[2] नालच्छेदनात्पूर्वं शिशुमरणे पित्रादिसपिण्डानां त्रिदिनं जननाशौचम्। मातुस्तु दशाहमेव। मृताशौचं तु नास्ति। [3]नालच्छेदनोत्तरं दशाहाभ्यन्तरे शिशुमरणे सपिण्डादीनां सम्पूर्णमेव जननाशौचम्। मरणाशौचं तु नास्ति।

मरा बच्चा पैदा होने पर सपिण्डों को पूरा जननाशौच होता है। मरणाशौच नहीं है। जन्म के बाद नालच्छेदन से पहिले बच्चे के मरने पर पिता आदि के सपिण्डों को तीन दिन का जननाशौच होता है। माता को तो दस दिन का आशौच होता ही है। मरणाशौच तो नहीं है। नालच्छेदन के बाद दस दिन के भीतर बालक के मरने पर सपिण्ड आदि को पूरा ही जननाशौच होता है। मरणाशौच तो नहीं है।

## अथ मृताशौचम्

तत्र मृताशौचवतामस्पृश्यत्वं कर्मानधिकारश्च। दशाहानन्तरं नामकरणात्प्राक् शिशुमरणे सपिण्डानां स्नानमात्रम्। मातापित्रोस्तु पुत्रमृतौ त्रिरात्रं कन्यामृतौ चैकाहः। सापत्नमातुः सर्वत्र पितृवत्। नाम्नः पूर्वं खननमेव नित्यम्।

---

१. पिता के घर में कन्या के प्रसव होने या मरने पर माधव-मत के अनुसार ही वाचस्पति ने निर्णय किया है—'विवाहिता स्त्री यदि पितृगृहे प्रसूयते म्रियते वा तदा मातापित्रोस्त्रिरात्रमाशौचम्। एकाश्रमवासिनां भ्रातृवैमात्रेयपितृव्यपुत्राणां तत्पुत्राणां पितृव्यस्य च एकरात्रं, पितुर्भिन्नाश्रमवासिनां पुत्रादीनामशौचं न भवति। पितुरभावे भ्रातृगृहे भगिन्याः प्रसवे मरणे वा भ्रात्रादीनामेकरात्रमशौचं भवति।' इसी तरह का निर्णय रुद्रधर का भी है।

२. नालच्छेदन के पूर्व मरने पर बृहन्मनु ने जननाशौच का दिन-निर्देश किया है—'जीवन् जातो यदि ततो मृतः सूतक एव तु। सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्॥' बृहन्मनु ने कहा है—'दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः। शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते॥' इति।

३. जैमिनी के—'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते॥' इसी से हारीत ने नालच्छेदन के अनन्तर शिशु के मरने पर जननाशौच का दिन-निर्देश किया है—'जातमृते मृतजाते वा सपिण्डानां दशाहम्' इति।

नामकरणानन्तरं चूडाकरणपर्यन्तं तदभावे वर्षत्रयपूर्तिपर्यन्तं [1]दाहखननयोर्विकल्पः। नामकरणोत्तरं दन्तोत्पत्तेः प्राक् पुत्रमरणे दाहे सपिण्डानामेकाहः। खनने तु [2]स्नानाच्छुद्धिः। मातापित्रोरुभयत्रापि त्रिरात्रम्।

उसमें मरणाशौच वालों का स्पृश्यत्व और कर्म का अधिकार नहीं होता है। दस दिन के बाद और नामकरण के पहले बालक के मरने पर सपिण्डों को स्नानमात्र है। माता-पिता को तो पुत्र के मरने पर तीन दिन का और लड़की के मरने पर एक दिन का आशौच होता है। सौतेली माता को सर्वत्र पिता के समान आशौच है। नामकरण के पहले मरने पर गाड़ना ही नित्य है। नामकरण के बाद चूड़ाकरण पर्यन्त और चूड़ाकरण नहीं हुआ हो तो पूरे तीन वर्ष तक दाह और गाड़ने में विकल्प है। नामकरण के बाद दांत निकलने के पहले पुत्र के मरने में दाह करने पर सपिण्डों को एक दिन का आशौच है। गाड़ने में तो स्नानमात्र से शुद्धि होती है। माता-पिता को दोनों ( दहन-खनन ) में त्रिरात्र आशौच होता है।

कन्यामृतौ तु त्रिपुरुषसपिण्डानामुभयत्र स्नानाच्छुद्धिः। मातापित्रोः कन्यामृतौ दन्तोत्पत्तिपर्यन्तमुभयत्रैकाहः। अत्र नामकरणं द्वादशदिनोपलक्षणम्। दन्तजननं सप्तममासोपलक्षणम्। तेन द्वादशदिनमारभ्य षण्मासपर्यन्तमेकाहादि फलितम्। सप्तममासप्रभृतिचूडाकरणपर्यन्तं तदभावे तृतीयवर्षपूर्तिपर्यन्तं दाहे खनने वा सपिण्डानामेकाहः। केचित्खनने एकाहो दाहे त्रिरात्रमित्याहुः। मातापित्रोरुभयत्र त्रिरात्रम्। एतत्पुत्रमृतौ। कन्यामृतौ तु वर्षत्रयपर्यन्तं सपिण्डानां स्नानाच्छुद्धिः। मातापित्रोः सप्तममासप्रभृति कन्यामृतौ त्रिरात्रम्[3]।

कन्या के मरने में तो तीन पीढ़ी तक के सपिण्डों को दोनों में स्नान से शुद्धि होती है। माता-पिता को कन्या के मरने पर दांत जमने तक दोनों में एक दिन का आशौच है। यहां नामकरण बारह दिन का और दन्तजननं सातवें मास का उपलक्षण है। इससे बारह दिन से लेकर छ महीने तक एक दिन आदि का आशौच फलतः सिद्ध हुआ। सात मास से चूड़ाकरण तक और चूड़ाकरण न हुआ हो तो पूरे तीन वर्ष तक दाह अथवा गाड़ने में सपिण्डों को एक दिन का आशौच होता है। कोई— गाड़ने में एक दिन और दाह में त्रिरात्र—कहते हैं। माता-पिता को दोनों में त्रिरात्र आशौच है। यह पुत्र के मरने में है। कन्या के मरने पर तो तीन वर्ष तक सपिण्डों को स्नान से शुद्धि होती है। माता-पिता को सातवें मास से लेकर कन्या के मरने पर त्रिरात्र आशौच होता है।

विज्ञानेश्वरस्त्वेकादशदिनमारभ्य यावदुपनयनं पुत्रमृतौ, कन्यामृतौ तु यावद्वि-

---

१. दाह का विकल्प लौगाक्षि ने कहा है—'तूष्णीमेवोदकं कुर्याचूर्णीं संस्कारमेव च। सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥' अन्यत्र=अकृतचूडे। मनु ने भी कहा है—'नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ॥' इति।

२. नामकरण के बाद दन्तोत्पत्ति के पूर्व याज्ञवल्क्य ने सद्यःशौच कहा है—'आदन्तजननात्सद्यः'। दन्तोत्पत्ति के बाद तीन वर्ष तक के शिशु के मरने पर विष्णु ने अहोरात्र में शुद्धि कही है— दन्तजातेऽप्यकृतचूडे त्वहोरात्रेण शुद्धिः' इति।

३. कश्यप ने कहा है—'बालानामजातदन्तानां त्रिरात्रेण शुद्धिः'। मनु ने भी कहा है— 'बैजिकादभिसम्बन्धादनुरुध्यादघं त्र्यहम्।' इति।

वाहं मातापित्रोस्त्रिरात्रमेवेत्याह। प्रथमवर्षादौ कृतचूडस्य पुत्रस्य मरणे पित्रादीनां सर्वेषां त्रिदिनं नियतं दाहश्च नियतः। त्रिवर्षोर्ध्वं कृतचूडस्याकृतचूडस्य वा मरणे प्रागुपनयनात्पित्रादिसर्वसपिण्डानां त्रिदिनं[1] दाहो नियतः। सोदकानां त्वनुपनीतमरणेऽनूढकन्यामरणे च नाशौचं किंतु स्नानमात्रम्।

विज्ञानेश्वर तो—पुत्र के मरने में ग्यारह दिन से लेकर उपनयन तक और कन्या के मरने में तो विवाह तक माता-पिता को त्रिरात्र ही आशौच है—ऐसा कहते हैं। पहले वर्ष आदि में चूड़ा-संस्कार किये हुए पुत्र के मरने में पिता आदि सब को तीन दिन का आशौच और दाह भी नियत है। तीन वर्ष के बाद चूड़ा किये हुए या चूड़ा नहीं किये हुए बालक के मरने में उपनयन से पहले पिता आदि सब सपिण्डों को तीन दिन का आशौच और दाह नियत है। समानोदकों को तो अनुपनीत बालक के मरने में अविवाहित कन्या के मरने में आशौच नहीं है किन्तु स्नानमात्र है।

अनुपनीतभ्रातृमरणे भगिन्या नाशौचम्। ऊनद्विवर्षस्य [2]खननं मुख्यम्। अनुगमनं वैकल्पिकम्। पूर्णद्विवर्षस्य दाहो मुख्यः। अनुगमनं नित्यम्। अत्र दाहो-

---

१. तीन वर्ष के बाद चूडाकरण हुआ हो या नहीं हुआ हो उपनयन के पूर्व तक अङ्गिरा ने तीन दिन का आशौच कहा है—'यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः। तथापि दाहयित्वैनमाशौचं त्र्यहमाचरेत्॥' त्रिरात्राशौच में पारस्करोक्त पिण्डदान विधि—'प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः। द्वितीये चतुरो दद्यादस्थिसंचयनं तथा॥ त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः।' इति।

वाचस्पति मिश्र के आशौचनिर्णय में बालाद्यशौच की व्यवस्था इस प्रकार है—'जन्म से छ मास के भीतर बालक के मरने पर सभी वर्णों का सद्यःशौच है। सप्तम मास से दो वर्ष तक के ब्राह्मण-बालक के मरने पर अहोरात्र, तीसरे वर्ष से छ वर्ष तक के तीन रात्र और इसके बाद अपनी जाति का कहा हुआ आशौच होता है। क्षत्रिय बालकों का सप्तम मास से दो वर्ष तक तीन दिन, तीन वर्ष से छ वर्ष तक छ दिन और इसके बाद अपनी जाति का आशौच होता है। वैश्य-बालक का सप्तम मास से दो वर्ष तक तीन दिन, इसके बाद छ वर्ष तक नव दिन, तदनन्तर अपनी जाति का आशौच होता है। शूद्र-बालक का सप्तम मास से दो वर्ष तक पांच दिन, इसके बाद सोलह वर्ष तक अविवाहित मरने पर बारह दिन, विवाहित मरने तर छ वर्ष के बाद ही एक मास का आशौच होता है। सत्-शूद्र जो द्विजों का उच्छिष्ट, शुश्रूषा और प्रतिमास मुण्डन करवाता हो उसका सात मास से वर्ष तक के बालक के मरने पर त्रिरात्र, सोलह वर्ष तक अविवाहित मरने पर बारह दिन, इसके बाद अपनी जाति का आशौच होता है।

वाचस्पति ने बालिकाओं के आशौच की व्यवस्था इस प्रकार की है—सभी वर्णों के दो वर्ष तक की कन्या के मरण में सद्यःशौच, तदनन्तर विवाह के पूर्व त्रिरात्र, विवाह के बाद पतिकुल में सम्पूर्णाशौच। जहाँ वाग्दान हो जाता है और वाग्दान के बाद बालिका मर जाय तो पितृकुल पतिकुल दोनों को त्रिरात्राशौच होता है। रुद्रधर के निर्णयानुसार विवाह के बाद पितृकुल में आशौच नहीं होता।

२. याज्ञवल्क्य ने कहा है—'ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः।' यमः—'ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद् भुवि। यमगाथां गायमानो यमसूक्तमनुस्मरन्॥' यमसूक्तं = 'ये ईयिवांसम्' इति षोडशर्चम्। ब्रह्मपुराणे—'स्त्रीणां तु पतितो गर्भः सद्यो जातो मृतोऽथवा। अजातदन्तो मासैर्वा मृतः षड्भिर्गतैर्बहिः॥ वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तं तु काष्ठवत्। खनित्वा शनकैर्भूमौ सद्यःशौचं विधीयते॥' इति।

दकदानादि तूष्णीमेव । कृतचूडाय पूर्णत्रिवर्षाय च [1]भूमौ पिण्डदानम् । दन्तजननपर्यन्तं तत्तुल्यवयस्केभ्यो द्वितीयदिने तदुद्देशेन [2]दुग्धदानम् । त्रिवर्षान्तं चौलान्तं वा पायसदानम् । तदूर्ध्वमुपनयनपर्यन्तमाशौचान्ते सवयोभ्यस्तदुद्देशेन भोजनादिदानम् ।

अनुपनीत भाई के मरने में बहिन को आशौच नहीं है । दो वर्ष से कम बालक के मरने पर उसे गाड़ना मुख्य है । अनुगमन में विकल्प है । पूरे दो वर्ष के बच्चे का दाह मुख्य है । अनुगमन नित्य है । इसमें दाह और जलदान चुपचाप ही है । जिसका चूड़ाकरण हो चुका है । जो पूरे तीन वर्ष का हो गया है उसका पिण्डदान भूमि में करे । दांत उत्पन्न हो जाने तक उसके समान अवस्था वाले बालक को दूसरे दिन उसके उद्देश से दूध दे । तीन वर्ष पर्यन्त या चूड़ाकरण तक खीर दे । उसके बाद उपनयन तक आशौच के अन्त में उसके समान अवस्था के बालक को उसके उद्देश से भोजन आदि दे ।

## अथ शूद्रबालकस्य कन्यायाश्च मरणे आशौचम्

स्त्रीशूद्रयोस्तु कृतचूडयोरप्युदकदानादि वैकल्पिकम् । शूद्रस्य त्रिवर्षपर्यन्तमेतदेवाशौचम् । अस्योपनयनस्थाने विवाहः । तथा च त्रिवर्षोर्ध्वं विवाहपर्यन्तं तदभावे षोडशवर्षपर्यन्तं वा शूद्रस्य मरणे त्रिदिनं तदूर्ध्वं जात्याशौचम् । कन्याया वर्षत्रयानन्तरं वाग्दानात्प्राङ्मरणे त्रिपुरुषसपिण्डानामेकाहः[3] । मातापित्रोस्त्रिदिनम् । दाहादि तूष्णीम् । वाग्दानोत्तरं विवाहात्प्राक्कन्यामरणे पितृसपिण्डानां भर्तृसपिण्डानां च त्रिदिनम्[4] । अत्रोभयकुलेऽपि सप्तपुरुषं सापिण्डयम् । दाहादि तूष्णीमेव ।

---

१. प्रचेताः—'असंस्कृतानां भूमौ पिण्डं दद्यात् संस्कृतानां कुशेषु' । मरीचिरपि—'प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् ।' इति ।

२. देवयाज्ञिकनिबन्धे—'गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते । परं च पायसं क्षीरं दद्याद् बालविपत्तितः ॥ एकादशं द्वादशाहं वृषोत्सर्गविधिं विना ।' तथा—'यत्र प्रमीयते बालस्तत्र प्रायः प्रदीयते । किञ्चित्समानवयसां संस्कृत्यान्नं यथाविधि ॥ भक्ष्यं भोज्यं च दातव्यं तथा च सुलभक्षिका । तद्वस्त्राणि प्रदेयानि सोपानत्कानि तत्समे ॥ कुमाराणां च बालानां भोजनं वस्त्रवेष्टनम् । यच्चोपजीवते बालस्तत्तद्विप्राय दीयते ॥—

शिशु-बाल आदि का विचार देवयाज्ञिकनिबन्ध में ही किया है—'शिशुरादन्तजननाद् बालः स्याद् यावदाशिखः । कथ्यते सर्वशास्त्रेषु कुमारो मौञ्जिबन्धनात् ॥ आपञ्चवर्षात् कौमारं पौगण्डो नवहायनः ।' इति ।

३. ब्रह्मपुराणे—'आजन्मनस्तु चौलान्तं कन्या यदि विपद्यते । सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥ ततो वाग्दानपर्यन्तं यावदेकाहमेव हि । ततः परं प्रवृद्धायां त्रिरात्रमिति निश्चयः ॥ वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् । पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ॥ स्वबात्युक्तमशौचं स्यान्मृतके जातके तथा ।' इति ।

४. मनुः—'स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुद्धयन्ति बान्धवाः । यथोक्तेनैव कल्पेन शुद्धयन्ति तु सनाभयः ॥' सनाभयः = सपिण्डाः । शंखः—'प्रत्ताऽप्रत्तासु योषित्सु संस्कृताऽसंस्कृतासु च । मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥' इति ।

चूड़ा किये हुए स्त्री-शूद्र का तो जलदान आदि देने में विकल्प है। तीन वर्ष तक के शूद्र का यही आशौच है। शूद्र का उपनयन की जगह विवाह है। इसलिये तीन वर्ष के बाद विवाह तक या इसके अभाव में सोलह वर्ष तक के शूद्र के मरने में तीन दिन, इसके बाद अपनी जाति का आशौच है। कन्या का तीन वर्ष के बाद वाग्दान के पहले मरने में तीन पीढ़ी के सपिण्डों को एक दिन का आशौच है। माता-पिता को तीन दिन का। दाह आदि चुपचाप करें। वाग्दान के अनन्तर विवाह के पहले कन्या के मरने में पिता के सपिण्डों और पति के सपिण्डों को तीन दिन का आशौच है। इसमें दोनों कुल में भी सात पीढ़ी का सापिण्ड्य होता है। दाह आदि मौन ही होता है।

जननेऽनुपनीतमरणे चातिक्रान्ताशौचं नास्ति। पितुरपत्यजननश्रवणे देशान्तरे कालान्तरे स्नानं भवत्येव। अनुपनीतमरणेऽतिक्रान्तेऽपि स्नानं भवत्येवेति स्मृत्यर्थसारः। अनुपनीतस्यानूढकन्यायाश्च मातापितृमरणे एव दशाहाशौचम्। अन्यमरणे तु न किमपि। उपनयनोत्तरं मरणे सपिण्डानां दशाहं सोदकानां त्रिरात्रं सगोत्राणामेकाहं स्नानाच्छुद्धिर्वेत्यादिविशेषः प्रागुक्तोऽत्रानुसन्धेयः। स्त्रीशूद्रयोर्विवाहोत्तरं मरणे दशाहः। शूद्रस्य विवाहाभावे षोडशवर्षोत्तरमित्युक्तम्।

जन्म में और अनुपनीत के मरने में अतिक्रान्ताशौच नहीं होता। पिता की सन्तति के जन्म को सुनने में दूसरे देश और दूसरे समय में स्नान तो होता ही है। अनुपनीत के मरने में अतिक्रान्ताशौच में भी स्नान होता ही है, ऐसा स्मृत्यर्थसार का कथन है। अनुपनीत बालक और अविवाहिता कन्या को माता-पिता के मरने में ही दस दिन का आशौच होता है। दूसरे के मरने में तो कुछ आशौच नहीं होता। उपनयन के बाद मरने में सपिण्डों को दस दिन का, सोदकों को तीन रात का और सगोत्रों को एक दिन का आशौच होता है या स्नान से शुद्धि होती है इत्यादि पूर्वोक्त विशेष का अनुसन्धान करें। स्त्री और शूद्र को विवाह के बाद मरने में दस दिन का आशौच है। विवाह नहीं होने पर शूद्र को सोलह वर्ष के बाद आशौच है, यह कहा है।

## अथ विवाहितकन्यामरणाशौचम्

विवाहोर्ध्वं कन्यायाः [1]पितृगृहे मरणे मातापित्रोः सापत्नमातुः सापत्नभ्रातुः सोदरभ्रातुश्च त्रिरात्रम्। पितृव्यादीनां तद्गृहवर्तिनामेकाहः। तद्गृहवर्तिनामपि सपिण्डानामेकाह इति केचित्। ग्रामान्तरमृतौ पित्रोः पक्षिणीति केचित्। ऊढायाः कन्यायाः पतिगृहे मरणे पित्रोः सापत्नमातुश्च त्रिरात्रं भ्रातुः पक्षिणी। पितृव्यादीनामेकाह इति केचित्।

---

१. पिता के घर में कन्या के मरने पर रुद्रधर ने इसी तरह का निर्णय किया है—'विवाहिता स्त्री यदि पितृगृहे प्रसूयते म्रियते वा तदा मातापित्रोस्त्रिरात्रमशौचं भवति। एकाश्रमवासिनां भ्रातृवैमात्रेयपितृव्यतत्पुत्राणां चैकरात्रम्। पितृभिन्नाश्रमवासिनां भ्रात्रादीनामशौचं न भवति। पितुरभावे भ्रातृगृहे दुहितुर्मरणे प्रसवे वा मातुस्त्रिरात्रम्। पितुरभावे भ्रातृगृहे प्रसवे मरणे वा भ्रात्रादीनामेकरात्रमशौचं भवति।' इति। ब्रह्मपुराणे—'दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा। तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः॥' विष्णुः—'संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत् पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं च'। इसकी व्यवस्था विज्ञानेश्वर ने प्रसव में एकरात्र और मरण में त्रिरात्र आशौच होता है, इस प्रकार की है।

विवाह के बाद पिता के घर में कन्या के मरने पर माता-पिता को, सौतेली माता को, सौतेले भाई को और सहोदर भाई को तीन रात का आशौच होता है। उस घर में रहने वाले पितृव्य आदि को एक दिन का और उस घर में रहने वाले सपिण्डों को भी एक दिन का आशौच है, ऐसा कुछ लोग कहते हैं। कुछ लोग—दूसरे ग्राम में मरने पर पिता-माता को पक्षिणी आशौच होता है—ऐसा कहते हैं। ब्याही हुई कन्या का पति के घर में मरने पर पिता-माता और सौतेली माता का त्रिरात्राशौच होता है, भाई का पक्षिणी। कोई—पितृव्य आदि को एक दिन का आशौच कहते हैं।

## अथ मातापित्रोर्मृतौ कन्याया आशौचम्

मातापित्रोर्मरणे सापत्नमातुर्मृतौ चोढकन्यायास्त्रिरात्रं दशाहान्तः। दशाहोर्ध्वं कालान्तरे वत्सरान्तरेऽपि पक्षिणी। भ्रातुरुपनीतस्य विवाहितभगिन्याश्च परस्परगृहमरणे परस्परस्य त्रिरात्रम्। गृहान्तरमृतौ परस्परस्य पक्षिणी। ग्रामान्तरे त्वेकाहः। अत्यन्तनिर्गुणत्वे एकग्रामेऽपि स्नानम्। एवं सापत्नभ्रातृभगिन्योरपि। भगिनीमृतौ भगिन्या अप्येवमेवेति भाति। ऊढकन्यायाः पितामहपितृव्यादिमरणे स्नानमेव।

माता-पिता और सौतेली माता के मरने में विवाहिता कन्या का दस दिन के भीतर सुनने में त्रिरात्र और दस दिन के बाद दूसरे समय दूसरे वर्ष में भी पक्षिणी आशौच है। उपनीत भाई और विवाहित बहिन के परस्पर घरमें मरने पर परस्पर दोनों को त्रिरात्र आशौच है। दूसरे घरमें मरने पर परस्पर दोनों को पक्षिणी। दूसरे ग्राम में मरने पर तो दोनों को एक दिन का आशौच होता है। दोनों अत्यन्त निर्गुण हों तो एक ग्राम में भी स्नानमात्र आशौच है। इसी प्रकार सौतेला भाई और सौतेली बहिनके मरने में भी आशौच है। बहिन के मरने में बहिन को भी ऐसा ही आशौच है, यह ठीक प्रतीत होता है। विवाहिता कन्या का पितामह और पितृव्य आदि के करने में केवल स्नान ही है।

## अथ मातुलादिमरणाशौचम्

मातुलमरणे भगिनीपुत्रस्य भगिनीकन्यायाश्च पक्षिणी। उपकारमातुलमरणे स्वगृहे मातुलमरणे च त्रिरात्रम्। अनुपनीतमातुलमरणे ग्रामान्तरे मातुलमरणे चैकरात्रम्। एवं सापत्नमातुलमरणेऽपि। मातुलानीमरणे भर्तृभगिन्यपत्यस्य स्त्रीपुंसरूपस्य पक्षिणी। सापत्नमातुलानीमरणे तु नाशौचम्। उपनीतभागिनेयमरणे मातुलस्य मातुलभगिन्याश्च त्रिरात्रम्। एवं सापत्नभागिनेये मृतेऽपि। अनुपनीतभागिनेयमरणे मातुलस्य मातुलभगिन्याश्च पक्षिणी। एवं सापत्नभागिनेये मृतेऽपि। अनुपनीतपदेनावशिष्टोपनयनमात्रः कृतचूडश्चूडाया अभावे त्रिवर्षोर्ध्ववयस्को वा ग्राह्य इति भाति। एवमग्रेऽप्यनुपनीतपदस्यार्थो बोध्यः। भागिनेयीमरणे तु स्नानमात्रमिति भाति।

मामा के मरने में बहिन के पुत्र और बहिन की कन्या को पक्षिणी आशौच है। उपकार करने वाला मामा के मरने में और अपने घर में मामा के मरने में भी त्रिरात्र आशौच होता है। अनुपनीत मामा के मरने में और दूसरे ग्राम में मामा के मरने में भी एक रात का आशौच है। इसी प्रकार सौतेले मामा के मरने में भी आशौच है। मामी के मरने में पति की बहिन की स्त्रीपुरुषरूप सन्तति को पक्षिणी आशौच है। सौतेली मामी के मरने में तो आशौच नहीं है। उपनीत भानजा के

मरने में मामा और मामा की बहिन का त्रिरात्राशौच है। इसी प्रकार सौतेला भानजा के मरने में भी त्रिरात्राशौच है। अनुपनीत भानजा के मरने में मामा और मामा की बहिन को पक्षिणी आशौच है। इसी तरह सौतेला भानजा के मरने में भी पक्षिणी आशौच है। अनुपनीत पद से जिसका केवल उपनयन नहीं हुआ हो चूड़ाकरण हो गया हो या तीन वर्ष से ऊपर की अवस्था का हो इसका ग्रहण है, यह उचित प्रतीत होता है। इसी प्रकार आगे भी उपनीत पद का अर्थ जानना चाहिये। भानजी के मरने में तो स्नानमात्र ठीक प्रतीत होता है।

मातामहमरणे दुहित्रपत्यस्य पुत्ररूपस्य कन्यारूपस्य वा त्रिरात्रम्। ग्रामान्तरे पक्षिणी। मातामह्यां मृतायां दौहित्रस्य दौहित्र्याश्च पक्षिणी। अत्र सर्वत्र पुरुषस्योपनीतस्यैव स्त्रियाश्च विवाहिताया एव मातापित्रतिरिक्ताशौचेऽधिकार इत्युक्तम्। अत्र मातुलमातुलानीमातामहादिमृतौ स्त्र्यपत्यस्याशौचोक्तिस्त्र्यम्बकीयानुसारेणान्यत्र तु नैवं स्पष्टमुपलभ्यते।

नाना के मरने में लड़की की सन्तति पुत्ररूप या कन्यारूप को त्रिरात्र आशौच है। दूसरे ग्राम में मरने पर पक्षिणी आशौच होता है। नानी के मरने में नाती और नतिनी को पक्षिणी आशौच होता है। यहां सब जगह उपनीत पुरुष और विवाहिता स्त्री का ही माता-पिता से अतिरिक्त के आशौच में अधिकार है, यह कहा है। इसमें मामा-मामी और नाना आदि के मरने पर कन्या के लिये आशौच का कथन त्र्यम्बकीय निर्णय के अनुसार है दूसरी जगह तो ऐसा स्पष्ट नहीं मिलता।

उपनीतदौहित्रमरणे[1] मातामहस्य मातामह्याश्च त्रिरात्रम्। अनुपनीते दौहित्रे मृते मातामहस्य मातामह्याश्च पक्षिणी। दौहित्रीमरणे तु नाशौचमिति भाति। श्वश्रूश्वशुरयोर्मरणे जामातुः सन्निधौ त्रिरात्रम्। असन्निधौ तु पक्षिणी। उपकारकयोर्मरणे त्वसन्निधावपि त्रिरात्रमेव। ग्रामान्तरे एकरात्रम्। भार्यामरणेन निवृत्तसम्बन्धयोः श्वश्रूश्वशुरयोरनुपकारकयोर्मृते तु पक्षिण्येकाहो वेति भाति।

उपनीत नाती के मरने में नाना और नानी को तीन रात का आशौच है। अनुपनीत

---

१. वृद्ध मनु का वचन है—'संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते। संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः॥' मिताक्षरा में इसी प्रकार का वचन वृद्ध वसिष्ठ के नाम से उद्धृत है—'संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते। संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः॥ पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत्। त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः॥ श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले। पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्॥' तथा—'मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च। आशौचं पक्षिणीं रात्रिं मृता मातामही यदि॥' गौतमः—'पक्षिणीमसपिण्डे योनिसम्बद्धे सहाध्यायिनि च'। योनिसम्बद्धाः = मातुलमातृष्वस्रीयपितृष्वस्रीयादयः।—

जाबालिः—'एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम्। मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा॥' विष्णुः—'असपिण्डे स्ववेश्मनि मृते एकरात्रम्'। तथा वृद्धः—'भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते। मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते॥ शालके तत्सुते चैव सद्यःस्नानेन शुद्धयति। ग्रामेश्वरे कुलपतौ श्रोत्रिये वा तपस्विनि॥ शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात्। ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित्॥ ग्रामस्य तावदाशौचं निर्गते शुचितामियात्।' इत्यादि आशौचविशेषप्रतिपादक स्मृतियों के मूलवचन निबन्धग्रन्थों में देखिये।

नाती के मरने में नाना और नानी को पक्षिणी आशौच है। नतिनी के मरने में तो नाना-नानी को आशौच नहीं होता, ऐसा ठीक मालूम होता है। सास-ससुर के मरने में दामाद की सन्निधि में रहने पर तीन रात का आशौच है। सन्निधि में न रहने पर तो पक्षिणी आशौच है। उपकार करने वाले सास-ससुर के मरने में तो सन्निधि में न रहने पर भी त्रिरात्राशौच ही है। दूसरे ग्राम में मरने पर एकरात्राशौच है। पत्नी के मरने से सम्बन्ध छूटे हुए अनुपकारी सास-ससुर के मरने में तो पक्षिणी या एक रात का आशौच ही मुझे उचित प्रतीत होता है।

जामातरि मृते श्वश्रूश्वशुरयोरेकरात्रं स्नानाच्छुद्धिर्वा। स्वगृहे जामातृमरणे त्रिरात्रम्। उपनीते शालके मृतेभगिनीभर्तुरेकाहः। अनुपनीते शालके मृते तु स्नानम्। ग्रामान्तरे मृतेऽपि स्नानम्। भार्यामरणेन निवृत्तसंबन्धे शालके स्नानमिति नागोजीभट्टीये। शालकसुतमरणे स्नानम्। कश्चिच्छालिकायां मृतायां शालकवदेकाहादिकमाह। मातुः स्वसरि मृतायां स्वस्रपत्ययोः कन्यापुत्रयोः पक्षिणी। एवं सापत्नमातुः स्वसृमरणेऽपि। पितुः स्वसरि मृतायां भ्रात्रपत्ययोः कन्यापुत्रयोः पक्षिणी। पितुः सापत्नस्वसृमरणे तु स्नानमात्रम्। भ्रात्रपत्यमरणे तु पितृष्वसुः स्नानम्। स्वगृहे पितृष्वसृमातृष्वसृमरणे त्र्यहम्।

दामाद के मरने में सास-ससुर को एक दिन का आशौच है या स्नान से शुद्धि होती है। अपने घर में दामाद के मरने में त्रिरात्राशौच है। उपनीत साला के मरने में बहनोई को एक दिन का आशौच है। अनुपनीत साला के मरने में तो स्नान से शुद्धि है। दूसरे ग्राम में मरने में भी स्नान है। स्त्री के मरने पर सम्बन्ध छूटे हुये साले के मरने में स्नान है, ऐसा नागोजीभट्ट के ग्रन्थ में है। साला के पुत्र के मरने में स्नानमात्र है। कोई—साली के मरने में साला की तरह एक दिन आदि का आशौच—कहते है। मौसी के मरने में उसकी बहिन की सन्तति पुत्र या पुत्री को पक्षिणी आशौच है। इसी प्रकार सौतेली मौसी के मरने में भी है। पिता की बहिन (बुआ) के मरने में भाई की संतति कन्या-पुत्र को पक्षिणी है। पिता की सौतेली बहिन के मरने में तो स्नानमात्र है। भाई की सन्तान के मरने में तो बुआ का स्नानमात्र है। अपने घर में बुआ और मौसी के मरने में तीन दिन का आशौच है।

### अथ बन्धुत्रयाशौचनिर्णयः

उपनीतबन्धुत्रयमरणे पक्षिणी। अनुपनीतस्य गुणहीनस्य वा बन्धुत्रयस्य मरणे एकाहः। स्वगृहे मरणे तु त्रिरात्रम्। अत्र बन्धुत्रयपदेनात्मबन्धुत्रयं पितृबन्धुत्रयं मातृबन्धुत्रयमिति नवबन्धवो ग्राह्याः। ते यथा—

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥ इति।

पितृष्वस्रादिकन्यानां तु विवाहितानां मरणे 'तद्बन्धुवर्गस्त्वेकेन' इति वचनबलादेकाहोऽनूढानां तु मरणे स्नानमात्रमिति निर्णयसिन्ध्वाशयः।

उपनीत तीनों बन्धुओं के मरने में पक्षिणी आशौच है। अनुपनीत या गुणहीन बन्धुत्रय के मरने में एक दिन का आशौच है। अपने घर में मरने में तो त्रिरात्राशौच है। यहां बन्धुत्रय पद से तीन आत्मबन्धु, तीन पितृबन्धु और तीन मातृबन्धु, इस प्रकार नौ बन्धु ग्राह्य हैं। वे जैसे—अपने पिता की बहिन के पुत्र, अपनी मौसी के पुत्र और मामा के पुत्र, ये आत्मबन्धु हैं। पिता की बुआ के पुत्र, पिता की मौसी के पुत्र और पिता के मामा के पुत्र, ये पितृबान्धव हैं। माता की बुआ के पुत्र, माता की मौसी के पुत्र और माता के मामा के पुत्र, ये मातृबान्धव हैं। बुआ आदि की विवाहिता कन्याओं के मरने में तो–उनका बन्धुवर्ग तो एक में दिन शुद्ध होता है—इत्यादि वचन के बल से एक दिन का आशौच है और अविवाहिता कन्या के मरने में तो स्नानमात्र है, यह निर्णयसिन्धु का आशय है।

नागोजीभट्टास्तु बन्धुत्रयवाक्ये पुत्रपदं कन्योपलक्षकमित्याहुः। तन्मते पितृष्वस्रादिकन्यानामूढानां मरणे पक्षिणी, अनूढानामेकाह इत्यादि। पितृष्वस्रादिकन्याभिस्तु बन्धुत्रयमरणे स्नानमात्रं कार्यमिति सिन्ध्वाशयेन सिद्ध्यति।

नागोजीभट्ट तो बन्धुत्रय वचन में पुत्रपद कन्या का बोधक है, ऐसा कहते हैं। उनके मत में बुआ आदि की विवाहिता कन्या के मरने में पक्षिणी और अविवाहिता के मरने में एक दिन का आशौच इत्यादि है। बुआ आदि की कन्याओं को तो बन्धुत्रय के मरने में स्नानमात्र करना चाहिये, यह निर्णयसिन्धु के आशय से सिद्ध होता है।

भट्टमते तु पुत्रपदवत्तद्वाक्यस्थात्मपदस्यापि कन्यापरत्वापत्त्या कन्याभिरपि बन्धुत्रयाशौचं कार्यमित्यापतति। तत्र च बहुशिष्टाचारविगानमिति सिन्ध्वाशयो युक्तो भाति। अत्रेदं तत्त्वम्—देवदत्तीयबन्धुनवकमध्ये आत्मबन्धुत्रये संबन्धसाम्यात्परस्परमाशौचम्। अवशिष्टबन्धुषट्के तु बन्धुषट्कमरणे देवदत्तस्य आशौचम्। देवदत्तस्य मरणे तु बन्धुषट्कस्य नाशौचं सम्बन्धाभावादिति सुधीभिरूह्यम्।

भट्ट के मत में तो पुत्रपद के समान उस वाक्य में स्थित आत्म पद का कन्यापरक हो जाने से कन्यायें भी बन्धुत्रय का आशौच करें, यह आता है। वह बहुशिष्टाचार से निन्द्य है, इससे निर्णयसिन्धु का आशय ठीक है। इसमें तत्त्व यह है—देवदत्त के नौ बन्धुओं के मध्य में आत्मबन्धुत्रय में संबन्ध के साम्य से परस्पर आशौच है। बचे हुए शेष छ बन्धुओं में तो छ बन्धुओं के मरने में देवदत्त को आशौच है। देवदत्त के मरने में तो छ बन्धुओं को सम्बन्ध के अभाव से आशौच नहीं है, यह पण्डितों को विचारणीय है।

## अथ दत्तकादिमरणे आशौचम्

दत्तकस्य मरणे पूर्वापरपित्रोस्त्रिरात्रं सपिण्डानामेकाहमाशौचम्। नीलकण्ठीये दत्तकनिर्णये तूपनीतदत्तकमरणादौ पालकपित्रादिसपिण्डानां दशाहादिकमेवाशौचमित्युक्तम्। दत्तकेनापि पूर्वापरपित्रोर्मृतौ त्रिरात्रम्। पूर्वापरसपिण्डानां मरणे एकाहः। पित्रोरौर्ध्वदेहिककरणे तु कर्माङ्गं दशाहमेव। दत्तकस्य पुत्र-

पौत्रादेर्जनने मरणे वा पूर्वापरसपिण्डानामेकाहः। एवं पूर्वापरसपिण्डमरणादावपि दत्तकपुत्रपौत्रादेरेकाहः। इदं सपिण्डसमानोदकभिन्ने दत्तीकृते ज्ञेयम्। सगोत्रसपिण्डे सोदके च दत्तीकृते यथाक्रमं दशाहं त्रिरात्रं च यथाप्राप्तं भवत्येव।

दत्तक के मरने पर पहले और बाद के माता-पिता को तीन रात का और सपिण्डों को एक दिन का आशौच है। नीलकण्ठ के दत्तकनिर्णय में तो उपनीत दत्तक के मरण आदि में पालक पिता आदि के सपिण्डों को दस दिन का ही आशौच है, यह कह चुका हूँ। दत्तक को भी पहले और बाद वाले माता-पिता के मरने में त्रिरात्र तथा पहले और बाद वाले सपिण्डों के मरने में एक दिन का आशौच है। माता-पिता के और्ध्वदेहिक कर्म करने में तो कर्माङ्ग दस दिन का आशौच है ही। दत्तक के पुत्र-पौत्र आदि के जन्म या मरण में पहले और बाद वाले सपिण्डों को एक दिन का और इसी प्रकार पूर्व और बाद के सपिण्डों के मरने आदि में दत्तक के पुत्र-पौत्र आदि को एक दिन का आशौच होता है। यह निर्णय सपिण्ड और समानोदक से भिन्न दत्तक करने पर जानना चाहिये। सगोत्र, सपिण्ड और समानोदक के दत्तक करने पर यथाक्रम दस दिन और तीन रात का जैसा आशौच प्राप्त हो वैसा होता ही है।

## अथ आचार्यादिमरणाशौचम्

आचार्ये[1] मृते त्रिरात्रम्। ग्रामान्तरे मृते पक्षिणी। उपनीय वेदाध्यापक आचार्यः। स्मार्तकर्मनिर्वाहकोऽप्याचार्यः। आचार्यभार्यासुतयोर्मरणे एकाहः। मन्त्रोपदेशकगुरुमरणे त्रिरात्रम्। ग्रामान्तरे पक्षिणी। शास्त्राध्यापको व्याकरणज्योतिःशास्त्राद्यङ्गाध्यापकश्चानूचानसंज्ञकस्तन्मरणे एकाहः। सकलवेदाध्यापकगुरुमरणे पक्षिणी। वेदैकदेशाध्यापक उपाध्यायस्तन्मरणे एकाहः। शिष्यस्योपनीयाध्यापितस्य मृतौ त्रिरात्रम्। निवृत्ताध्ययनस्य मृतौ पक्षिणी।

आचार्य के मरने पर त्रिरात्र आशौच है। दूसरे गांव में मरने पर पक्षिणी। उपनयन करके वेद पढ़ाने वाला आचार्य कहा जाता है। स्मार्त कर्म को कराने वाला भी आचार्य है। आचार्य की पत्नी और पुत्र के मरने में एक दिन का आशौच है। मन्त्र का उपदेश करने वाले गुरु के मरने में त्रिरात्र आशौच है। दूसरे ग्राम में मरने पर पक्षिणी। शास्त्र का अध्यापक और व्याकरण-ज्योतिष शास्त्र आदि अङ्गों का अध्यापक, अनूचान ( वेद-वेदाङ्गों का पारंगत विद्वान् ), इनके मरने पर एक दिन का आशौच है। सकल वेद के पढ़ाने वाले गुरु के मरने पर

---

१. मनुः—'त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति। तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥' आचार्यादि के अन्त्यकर्म करने पर मनु ने दशरात्र का आशौच कहा है—'गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेतहारैः समं तत्र दशरात्रेण शुद्ध्यति ॥' संक्षेप में आशौच का प्रतिपादक त्रिंशच्छ्लोकी का यह पद्य स्मरण योग्य है—'प्रेतेष्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्रीयेषु त्रिरात्रं त्रिदिवसमशुचिः सोदकस्तूभयत्र। पक्षिण्याशौचमृत्विग्दुहितृसुतसहाध्यायिबन्धुत्रयान्तेवासिश्वश्रूसुमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे ॥ मातामह्यां च पित्रोः स्वसरि च विरतौ मातुले मातुलान्यां चाथो सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे। शिष्योपाध्यायबन्धुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषु स्वगृहपरमृतौ मातुले चैकरात्रम् ॥ रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वल्पसम्बन्धयुक्ते स्नानं वासोयुतं स्यादिदमपि सकलं सर्ववर्णेषु तुल्यम् ॥' यहाँ के मूल वचन इसके पूर्व सुधाविवृति में और अवशिष्ट वचन महानिबन्धों में देखें।

पक्षिणी आशौच है। वेद के एकदेश का पढ़ाने वाला उपाध्याय है, इसके मरने पर एक दिन का आशौच है। उपनयन करके पढ़ाये हुए छात्र के मरने पर त्रिरात्र। पढ़ने से निवृत्त हुए शिष्य के मरने पर पक्षिणी आशौच है।

परोपनीतस्य बहुकालमध्यापितस्य मरणे एकाहः। सहाध्यायिमृतौ पक्षिणी। ऋत्विज्यनिवृत्तर्त्विक्कर्मणि मृते त्रिरात्रम्। ग्रामान्तरे पक्षिणी। कर्मनिवृत्तौ ग्रामान्तरे एकाहः। एकग्रामे पक्षिणी। एवं याज्यमरणेऽपि। सार्थवेदाध्यायी श्रौतस्मार्तकर्मनिष्ठश्च श्रोत्रियस्तयोर्मरणे मैत्रीगृहानन्तर्यादिसंबन्धे त्रिरात्रम्। एकतरसंबन्धे पक्षिणी। संबन्धाभावे एकाहः। सवर्णमित्रमरणे एकाहः। यतिमरणे सर्वसपिण्डानां स्नानमात्रम्। स्वगृहे उदासीनासपिण्डमरणे एकाहः। स्वाधिष्ठितस्वगृहे[1] असपिण्डमरणे त्र्यहम्। आशौचप्रयोजकसंबन्धिनि स्वगृहे मृते त्रिरात्रम्। ग्रामाधिपदेशाधिपादेमृतौ सज्योतिः।

दूसरे से उपनीत बहुत दिन तक पढ़ाये हुए छात्र के मरने में एक दिन का आशौच है। साथ पढ़ने वाले के मरने में पक्षिणी है। ऋत्विज कर्म की समाप्ति से पहले ऋत्विजके मरने में तीन रात। दूसरे ग्राम में मरने में पक्षिणी। कर्मकी निवृत्ति के बाद दूसरे ग्राम में मरने पर एकदिन का आशौच है। एक ग्राम में पक्षिणी है। इसी प्रकार यजमान के मरने में भी है। अर्थ के साथ वेद पढ़ने वाले छात्र और श्रौत-स्मार्त-कर्म-निष्ठ श्रोत्रिय, इन दोनों के मरने में मित्रता और घर का सामीप्य आदि सम्बन्ध होने पर त्रिरात्र आशौच होता है। इनमें से कोई एक सम्बन्ध के न होने पर पक्षिणी है। कोई सम्बन्ध न होने पर एक दिन का आशौच है। सवर्ण मित्र के मरने में एक दिन का आशौच है। संन्यासी के मरने में सब सपिण्डों को स्नानमात्र है। अपने घर में उदासीन असपिण्ड के मरने में एक दिन और अपने निवास के घर में स्थित असपिण्ड के मरने में तीन दिन का आशौच होता है। आशौच प्रयोजक सम्बन्धी के अपने घर में मरने पर त्रिरात्र आशौच होता है। गांव का मालिक और देश का मालिक आदि के मरने में सज्योति आशौच है।

## अथ सज्योतिःपक्षिणीशब्दयोरर्थः

दिवामरणे रात्रौ स्नानाच्छुद्धिः, रात्रिमरणे दिवाशुद्धिरिति सज्योतिःपदार्थः। पक्षिणीपदार्थस्तु दिवामरणे स दिवसः सा रात्रिर्द्वितीयदिवसे नक्षत्रदर्शनपर्यन्तमिति। आगामिवर्तमानाहर्द्वययुता मध्यगता रात्रिः। रात्रिमरणे सा रात्रिस्तदुत्तरमहोरात्रिश्चेति पक्षिणी। केचित्तु रात्रिमरणेऽपि मरणदिनाद् द्वितीयदिनस्थनक्षत्रपर्यन्तमेव पक्षिणीपदार्थं इत्याहुः। एवमतिक्रान्ते विषये दिवारात्रौ वा मरणज्ञानानुसारेण पक्षिणीव्यवस्था योज्या। आचार्यमातुलादीनां

---

१. कूर्मपुराणे—'त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च।' अङ्गिरा ने कहा है—'गृहे यस्य मृतः कश्चिदसपिण्डः कथंचन। तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः॥' संवर्त ने घर की शुद्धि बतलायी है—'गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते। प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नं तथैव च॥ गोमयेनोपलिप्याथ छागेन घ्रापयेद् बुधः। ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभिः॥ सर्वमभ्युक्षयेद् वेश्म ततः शुद्ध्यत्यसंशयम्।' इति।

त्रिरात्राद्याशौचमन्यस्मिन्नन्त्यकर्मकर्तरि ज्ञेयम्। शिष्यादीनामन्त्यकर्मकर्तृत्वे तु दशाहाद्येव।

दिन में मरने पर रात में स्नान करने से शुद्धि होती है तथा रात में मरने पर दिन में स्नान करने से शुद्धि होती है, यह सज्योति पदार्थ है। पक्षिणी पद का अर्थ तो—दिन में मृत्यु हो तो मृत्यु का दिन और उस दिन की रात तथा दूसरे दिन नक्षत्रदर्शन तक—यह है। आनेवाला और वर्तमान दिन, इन दोनों के बीच की रात पक्षिणी होती है। रात में मरने पर मरने वाली रात इसके बाद का दिन और रात यह पक्षिणी है। कोई तो—रात में मरने पर भी मरण दिन से दूसरे दिन स्थित नक्षत्र तक ही पक्षिणी पदार्थ है—यह कहते हैं। इसी प्रकार बीते हुए आशौच के विषय में दिन या रात में मरण-ज्ञान के अनुसार पक्षिणी की व्यवस्था करनी चाहिये। आचार्य और मामा आदि का त्रिरात्र आदि आशौच—शिष्य से भिन्न दूसरे अन्त्येष्टि कर्म करने वाले में जानना चाहिये। शिष्य आदि अन्त्येष्टि कर्म करने वाले हों तो दशाहादि आशौच ही होता है।

## अथ ग्रामे शवस्थितौ विचारः

'ग्राममध्ये यावच्छवस्तिष्ठति तावद् ग्रामस्याशौचम्। नगरे तु नैवम्। ग्रामनगरलक्षणान्यन्यत्र। गृहे गवादिपशुमृतौ यावच्छवस्तिष्ठेत्तावदाशौचम्।[2] द्विजगृहे शुनो मृतौ गृहस्य दशरात्रमाशौचम्। शूद्रमरणे मासम्। पतितमृतौ मासद्वयम्। म्लेच्छादिमृतौ मासचतुष्टयम्। दासानां गृहजातक्रीतऋणमोक्षितलब्धत्वादिप्रकाराणां स्वामिमरणे स्वजातीयाशौचम्।

गांव में मुर्दा जब तक रहे तब तक गांव भर को आशौच होता है। नगर में तो ऐसा नहीं होता। गांव और नगर के लक्षण अन्य ग्रन्थों में हैं। घर में गाय आदि पशु के मरने में जब तक मृतपशु रहे तब तक आशौच है। द्विज के घर में कुत्ता के मरने पर घर को दस दिन का आशौच है। शूद्र के मरने में एक महीना का आशौच है। पतित के मरने पर दो महीना का आशौच है। म्लेच्छ आदि के मरने पर चार महीने का आशौच होता है। घर में पैदा हुए, खरीदे हुये, कर्ज से मुक्त किये गये और प्राप्त आदि भेद के दासों को मालिक के मरने में अपनी जाति का आशौच होता है।

## अथ युद्धे मृतानामाशौचम्

युद्धे शस्त्रघातेन[3] सद्योमृते स्नानमात्रं नाशौचमन्त्यकर्मापि दशाहादिकं सद्य एव कर्तव्यम्। युद्धक्षतेन कालान्तरे मरणे एकाहः। त्र्यहादूर्ध्वं युद्धक्षतेन

---

१. बृहद्विष्णु ने कहा है—'ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित्। ग्रामस्य तावदाशौचं निर्गते शुचितामियात्॥' इसी प्रकार घर में गवादि पशुओं के मरण में भी जानना चाहिये।

२. शुद्धितत्त्व में बृहन्मनु का वचन है—'श्वशूद्रपतिताश्चान्त्या मृताश्चेद् द्विजमन्दिरे। शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा॥ दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः। द्वाभ्यां तु पतिते गेहमन्त्ये मासचतुष्टयात्॥ अत्यन्त्ये वर्जयेद् गेहमित्येवं मनुरब्रवीत्।' अन्त्यः=म्लेच्छः, अत्यन्त्यः = श्वपाकः, इति वाचस्पतिः। तत्रैव—'द्विजस्य मरणे वेश्म विशुद्ध्यति दिनत्रयात्।' इति।

३. युद्ध में शस्त्रघात से तत्क्षण मरने पर मनु ने कहा है—'उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च। सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः॥' अतः स्नानमात्र से शुद्धि होती है। कालान्तर में मरने पर मिताक्षरा में वचन है—'ब्राह्मणार्थे विपन्नानां योषितां गोग्रहेऽपि च।

मरणे पराङ्मुखहते युद्धे कपटेन हते च त्रिरात्रम्। युद्धक्षतेन सप्तरात्रादूर्ध्वं मृतौ दशाहमित्याहुः। शिष्टास्तु युद्धे हतस्य सद्यःशौचादिकं [1]लोकविद्विष्टत्वान्न वदन्ति। प्रयागादौ काम्यमरणे स्नानमात्रम्। प्रायश्चित्तार्थमग्न्यादिमरणे एकाहः। महारोगपीडाक्षमाणां जलादिप्रवेशे त्रिरात्रम्। अत्रापि न शिष्टाचारसंमतिः। एवं कारागृहे मृतस्यैकरात्रेऽपि।

युद्ध में, हथियार के प्रहार से शीघ्र मरने में स्नानमात्र है, कोई आशौच नहीं और अन्त्य-कर्म भी दस दिन आदि का शीघ्र ही कर लेना चाहिये। युद्ध में घायल होने से दूसरे समय में मरने पर एक दिन का आशौच है। युद्ध में घायल होने से तीन दिन के बाद मरने पर पराङ्मुख होकर मरने पर और कपट से मारे जाने पर त्रिरात्र आशौच होता है। युद्ध में घायल होने से सात दिन बाद मरे तो उसका दस दिन का आशौच है, कोई ऐसा कहते हैं। शिष्टजन तो लोक में निन्द्य होने से युद्ध में मरे हुए का सद्यः शौच आदि को नहीं कहते हैं। प्रयाग आदि में कामना से मरण में स्नान मात्र है। प्रायश्चित्त के लिये अग्नि आदि से मरने में एक दिन का आशौच है। महारोगों की पीड़ा न सह कर जल आदि में प्रवेश करने में त्रिरात्र आशौच होता है। इसमें भी शिष्टाचार की संमति नहीं है। इसी प्रकार जेल में मरने वाले का एक दिन के आशौच में भी शिष्टाचार नहीं है।

## अथ अतिक्रान्ताशौचम्

तत्र जननाशौचेऽतिक्रान्ताशौचं [2]नास्ति। पितुःस्नानमात्रं तत्रापि भवति। मृताशौचेऽप्यनुपनीतमरणादिनिमित्तेषु त्रिरात्रैकरात्रेषु मातुलादिपरगोत्रीयमरण-निमित्तकेषु पक्षिणीत्रिरात्रादिषु चातिक्रान्ताशौचं नास्ति। तत्रोढकन्यायाः पित्रोर्मरणे त्रिरात्रेऽतिक्रान्तेऽपि दशाहान्तस्त्र्यहम्। तदूर्ध्वं वत्सरान्तरेऽपि पक्षिणीत्युक्तम्।

जननाशौच में बीता हुआ आशौच नहीं होता। उसमें भी पिता का स्नानमात्र होता है। मरणाशौच में भी अनुपनीत के मरण आदि निमित्त वाले त्रिरात्र-एकरात्र के आशौच में और मामा आदि दूसरे गोत्र के मरण निमित्त वाले पक्षिणी-त्रिरात्र आदि आशौच में अतिक्रान्ताशौच नहीं होता। उसमें विवाहिता कन्या के माता-पिता के मरने में तीन रात बीतने पर भी दस दिन के भीतर सुने तो तीन दिन का आशौच है। इसके बाद दूसरे वर्ष में भी सुने तो पक्षिणी आशौच कहा है।

---

आहवेऽपि हतानां च एकरात्रमशौचकम्॥' व्याघ्र ने विशेष कहा है—'क्षतेन म्रियते यस्तु तस्याशौचं भवेद् द्विधा। आसप्ताहात् त्रिरात्रं स्याद् दशरात्रमतः परम्। शस्त्राघाते त्र्यहादूर्ध्वं यदि कश्चित् प्रमीयते। आशौचं प्राकृतं तस्य सर्ववर्णेषु नित्यशः॥' इति।

१. इसी लिये कर्णादि का श्राद्ध किया गया है, जिनका वर्णन महाभारत में है। महाभारत के राजधर्म में—'अशोच्यो हि हतः शूरः स्वर्गलोके महीयते। न ह्यन्नमुदकं तस्य न स्नानं नाप्यशौच-कम्॥' इस वचन से जो श्राद्धादिका निषेध है वह पुत्रादि का अभावपरक है।

२. देवल ने कहा है—'नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि।' पिता को तो स्नान करना चाहिये, जैसा मनु ने कहा है—'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च। सवासा जलमाप्लुत्य शुद्धो भवति मानवः॥' इति।

एवं सोदकादिविषयत्रिरात्रादिष्वतिक्रान्ताशौचं न। स्नानमात्रं त्वत्रापि कालान्तरेऽपि भवत्येव। किंतु दशाहादि मृताशौचविषयमेवातिक्रान्ताशौचं कर्तव्यम्। तत्र दशाहाद्याशौचानां त्रिरात्रादीनां च तत्तदाशौचमध्ये ज्ञानेऽवशिष्टदिनैः[1] शुद्धिः। पुत्रादेरपि शेषदिनैरेव शुद्धिः। अन्त्यकर्मापि शेषदिनैरेव समापनीयम्। एवमस्थिपर्णशरसंस्कारोऽपि शेषेणैव। एवं सोदकत्रिरात्रेऽपि शेषेण शुद्धिः।

इसी प्रकार समानोदक आदि विषयक त्रिरात्र में बीता हुआ आशौच नहीं होता। स्नानमात्र तो इसमें भी दूसरे समय में भी होता ही है। किन्तु दशाहादि मरणाशौच विषयक ही अतिक्रान्ताशौच करना चाहिये। उसमें दशाहादि और त्रिरात्र आदि आशौच का उस-उस आशौच के मध्य में ज्ञान होने पर शेष दिनों से शुद्धि होती है। पुत्र आदि का भी शेष दिनों ही से शुद्धि होती है। अन्त्यकर्म भी बचे दिनों से ही समाप्त करे। इसी प्रकार अस्थि और पर्णशर संस्कार भी शेष दिनों ही से करे। इसी तरह समानोदक के त्रिरात्र में भी शेष से शुद्धि होती है।

त्रिरात्राद्युत्तरं तु दशाहन्यूनाशौचानां दशाहमध्ये ज्ञानेऽपि नातिक्रान्ताशौचं किंतु स्नानमात्रम्। मातापित्रोर्मरणे दूरदेशेपि वत्सरान्तरेपि श्रवणे पुत्रस्य श्रवणप्रभृतिदशाहादिपूर्णमेवाशौचम्। दम्पत्योः परस्परं देशान्तरे कालान्तरेऽपि पूर्णं दशाहमेव। सपत्नीनां परस्परं देशकालविशेषानपेक्षं दशाहमेव। सापत्नमातुर्मरणे पुत्रस्य दशाहोर्ध्वं देशकालानपेक्षं त्रिरात्रम्।

त्रिरात्र आदि के बाद तो दशाह से कम आशौचों का दशाह के भीतर ज्ञान होने पर भी अतिक्रान्ताशौच नहीं होता किन्तु केवल स्नान होता है। माता-पिता के मरने में दूर देश में भी दूसरे वर्ष में भी सुनने पर पुत्र को सुनने के दिन से दशाह आदि पूर्ण ही आशौच होता है। पति-पत्नी के परस्पर दूसरे देश में और दूसरे समय में भी पूरा दस दिन का ही आशौच होता है। सौतों को परस्पर देश और काल विशेष की अपेक्षा के विना दस दिन का ही आशौच होता है। सौतेली माता के मरने में पुत्र को दस दिन के बाद देशकाल की अपेक्षा के विना त्रिरात्राशौच है।

औरसपुत्रमृतौ मातापित्रोर्वत्सरान्तरेऽपि त्रिरात्रम्। [2]दशाहोर्ध्वमेकदेशे सपिण्डमरणे ज्ञाते मासत्रयपर्यन्तं त्रिरात्रं, षण्मासपर्यन्तं पक्षिणी, नवमासपर्यन्तमेकरात्रं, ततो वर्षपर्यन्तं सज्योतिः, स्नानमात्रं वा। [3]माधवमते पक्षत्रयपर्यन्तं

१. मनु ने कहा है—'विगतं तु विदेशस्थं शृणुयाद् यो ह्यनिर्दशम्। यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥' कोई कहते हैं कि 'विगतं तु' यह वचन पुत्र से भिन्न के लिये है और इसका अपवाद-वचन है—'पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः। श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्॥' इसलिये आशौच के मध्य में सुनने पर भी श्रवण-दिन से दशाहादि का आशौच लगेगा यह ठीक नहीं है, क्योंकि 'अनग्निमतः उत्क्रान्तेः' इत्यादि वचन से विरोध होगा और स्मृत्यर्थसार में पुत्रादि के लिये आशौच के शेष दिन से ही शुद्धि लिखी है—'जनने मरणे वा प्रथमदिनादूर्ध्वं ज्ञाते पुत्रादीनां शेषेणैव शुद्धिः' इति।

२. दशाह के बाद आशौच की जानकारी होने पर वृद्ध वशिष्ठ ने कहा है—'मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणं तथा। अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुद्ध्यति॥' इति।

३. माधवीय में देवल का वचन है—'आ त्रिपक्षात् त्रिरात्रं स्यात् षण्मासात् पक्षिणी ततः। परमेकाहमावर्षादूर्ध्वं स्नातो विशुद्ध्यति॥' इति।

त्रिरात्रं, षण्मासपर्यन्तं पक्षिणी, वर्षपर्यन्तमेकरात्रं, वर्षोर्ध्वं स्नानमात्रमिति। अत्रापदनापद्विषयत्वेन व्यवस्था।

औरस पुत्र के मरने पर माता-पिता को दूसरे वर्ष में भी त्रिरात्र आशौच है। दस दिन के बाद तीन महीने तक एक देश में सपिण्ड का मरण जानने पर त्रिरात्र, छ महीने तक पक्षिणी, नौ महीने तक एकरात्र, इसके बाद वर्ष पर्यन्त सज्योति या स्नानमात्र आशौच होता है। माधव के मत में तीन पक्ष तक त्रिरात्र, छ महीने तक पक्षिणी, वर्ष पर्यन्त एकरात्र और वर्ष के बाद स्नानमात्र आशौच है। इन दोनों पक्षों में आपत्ति-अनापत्ति विषय से व्यवस्था करनी चाहिये।

अथ देशान्तरे [1]सपिण्डमरणे दशाहोर्ध्वं ज्ञाते पक्षत्रयपर्यन्तं त्रिरात्रं, षण्मासपर्यन्तं पक्षिणी, नवमासपर्यन्तमेकाहः, वर्षपर्यन्तं सज्योतिरिति माधवमतम्। [2]विज्ञानेश्वरस्तु देशान्तरे सपिण्डमरणे दशाहोर्ध्वं ज्ञाते स्नानमात्रमित्याह। अत्र माधवमतमेव युक्तम्। अतिक्रान्ताशौचं वयोवस्थानिमित्तकाशौचं च सर्ववर्णसाधारणम्।

देशान्तर में दस दिन के बाद सपिण्ड का मरण ज्ञात होने पर तीन पक्ष तक त्रिरात्र, छ महीने तक पक्षिणी, नौ महीने तक एकरात्र, वर्ष तक सज्योति आशौच होता है, ऐसा माधव का मत है। विज्ञानेश्वर तो—देशान्तर में सपिण्ड का मरण दस दिन के बाद ज्ञात हो तो स्नानमात्र—कहते हैं। इसमें माधव का मत ही ठीक है। अतिक्रान्ताशौच और वयोवस्था निमित्तक आशौच सब वर्णों का साधारण है।

## अथ देशान्तरलक्षणानि

देशान्तरं तु विप्रस्य विंशतियोजनात्परम्। क्षत्रियादेः क्रमेण चतुर्विंशतित्रिंशत्षष्टियोजनैः। केचिद्विप्रस्य त्रिंशद्योजनोत्तरं देशान्तरमाहुः। भाषाभेदसहितमहागिरिणा भाषाभेदसहितमहानद्या वा व्यवधानमपि [3]देशान्तरम्। यत्तु

---

१. माधव के मत में विष्णु का वचन है—'अर्वाक् त्रिपक्षात् त्रिनिशं षण्मासाच्च दिवानिशम्। अहः संवत्सरादर्वाग्देशान्तरमृतेष्वपि॥' यह वचन माता-पिता से भिन्न के लिये है। माता-पिता के लिये तो स्मृत्यर्थसार में दशाहादि पूर्णाशौच का ही निर्देश है—'मातापितृमरणे दूरदेशेऽपि संवत्सरोर्ध्वमपि पुत्रो दशाहादिकं पूर्णमाशौचं कुर्यात्। स्त्रीपुंसयोः परस्परं सपत्नीषु चैवम्' इति।

२. विज्ञानेश्वर के मत में पराशर का वचन है—'देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ। मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः॥' यह वचन भी माता-पिता से भिन्न के लिये है। माता-पिता के लिये तो पुत्र का दशाहादि पूर्णाशौच ही है।

३. बृहस्पतिः—'महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः। वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते॥ देशान्तरं वदन्त्येके षष्टियोजनमायतम्। चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च॥' वाचस्पति ने कहा है—'एकाहेन यत्रत्या वार्ता न श्रूयते स विदेश इति रत्नाकरः' अर्थात् रत्नाकर का मत है कि एक दिन में जहाँ की वार्ता न सुन सके उसे विदेश कहते हैं।

कानामाशौचिगृहस्थितानां च ग्रहणे दोषो न। आशौचिहस्तात्तु किमप्येतन्न ग्राह्यम्। 'पण्ये तु वणिजादेराशौचेऽपि तद्धस्ताल्लवणादेरामान्नस्य च क्रये न दोषः। जलदधिलाजादिकं तु क्रयेणापि तद्धस्तान्न ग्राह्यम्।

द्रव्य से—आशौच वाले को और आशौच वाले के घर में रखे हुए पुष्प-फल-मूल-नमक-मधु-मांस-साग-तृण-लकड़ी-जल-दूध-दही घी-औषध-तिल, तिल के विकार, ऊख, ऊख के विकार, लावा आदि भुने हुए अन्न और लड्डु आदि के ग्रहण में दोष नहीं है। आशौच वाले के हाथ से तो ये सब वस्तु कुछ भी नहीं ग्रहण करे। बाजार में तो बनिया आदि के आशौच में भी उसके हाथ से नमक आदि तथा कच्चा अन्न के खरीदने में दोष नहीं है। जल, दही और लावा आदि को तो खरीद कर भी उसके हाथ से नहीं लेना चाहिये।

अथ मृतदोषतः—शास्त्रानुज्ञां विना शस्त्राग्निविषजलपाषाणभृगुपातानशनादिभिर्बुद्धिपूर्वकं[2] स्वेच्छयात्मघातकानां नाशौचम्। तच्चात्मघातनं क्रोधात्परोद्देशेन वास्तु स्वत एवेष्टसाधनताभ्रमेण वा। तथा चौर्यादिदोषे राजहतानां पारदार्ये तत्पत्यादिहतानां विद्युद्धतानां च नाशौचम्। अन्यैर्निषिद्धोऽपि गर्वान्नदीतरणवृक्षाधिरोहकूपावरोहादौ प्रवृत्तो मृतस्तस्यापि नाशौचम्।

मृतदोष से—शास्त्र की आज्ञा के विना हथियार, आग, विष, जल, पत्थर, ऊंचे पर्वत आदि से गिरकर जानबूझकर अपनी इच्छा से आत्मघात करनेवालों का आशौच नहीं है। वह आत्मघात क्रोध से या दूसरे के उद्देश से हो अथवा इष्टसाधन के भ्रम से हो। और चोरी आदि करने के दोष में राजा द्वारा मारे हुए का आशौच नहीं होता। दूसरों से मना करने पर भी घमण्ड से नदी में तैरने, पेड़ पर चढ़ने, कुएं में उतरने आदि में लगा हुआ पुरुष मर जाय तो उसका भी आशौच नहीं होता है।

यो गवादिहरणार्थं तद्धननार्थं वा प्रवृत्तो गोसर्पनखिशृंगिदंष्ट्रिगजचोरविप्रान्त्यजादिभिर्हतस्तस्य नाशौचम्। महापातकिनां तत्संसर्गिणां च महापापितुल्या-

---

बथुवा पालक आदि का, करीर बाँस का अंकुर, अग्र बेंत आदि का, फल कोंहड़ा परवल आदि का, काण्ड कमलादि का नाल, अधिरूढक तालबीजांकुरादि, त्वक् विजौरा नीबू आदि का, पुष्प कचनार अगस्त आदि का, कवक = छत्राक, ( कुकुरमुत्ता )। कोई शाक का छ प्रकार कहते हैं—'पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा। शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम्॥' संस्वेदजं=छत्राकम्।

१. मरीचिः—'लवणे मधुमांसे च पुष्पमूलफलेषु च। शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च। तिलौषधाजिने चैव पक्वापक्वे स्वयं ग्रहः। पण्येषु चैव सर्वेषु नाशौचं मृतसूतके॥' पक्व लड्डू आदि, अपक्व तण्डुल आदि।

२. बुद्धिपूर्वक अपनी इच्छा से आत्मघात करने पर षट्त्रिंशन्मत और कूर्मपुराण में कहा है—'व्यापादयेऽद्य आत्मानं स्वयमग्न्युदकादिभिः। विहितं तस्य नाशौचं नापि कार्योदकक्रिया॥' भविष्ये—'स्वेच्छया मरणं विप्राच्छृङ्गिदंष्ट्रिसरीसृपैः। अन्त्यान्त्यजविषोद्बन्धैरात्मना चैव ताडनैः॥ पाखण्डमाश्रिताश्चैव महापातकिनस्तथा। स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा॥ न तेषां स्नानसंस्कारो न श्राद्धं न सपिण्डनम्।' अङ्गिराः—'चण्डालादुदकात् सर्पाद् ब्राह्मणाद् वैद्युतादपि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥ उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते। नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति॥' इति।

नां च पतितानां नपुंसकानां च मरणे नाशौचम्। स्त्रीणां च पत्यादिहन्त्रीणां हीनजातिगामिनीनां गर्भघ्नीनां कुलटानां च पूर्वोक्तात्मघातादिपापयुक्तानां च मृतौ नाशौचम्। तत्रैषां शवानां स्पर्शाश्रुतपातवहनदहनान्त्यकर्माणि न कुर्यात्।

जो गाय आदि के चुराने या उसे मारने में प्रवृत्त हुआ पुरुष—गाय, बैल, सांप, नखवाले, सींगवाले दांत वाले, हाथी, चोर, ब्राह्मण और अन्त्यजादि द्वारा मारा गया है उसका आशौच नहीं होता। महापातकी और उससे संसर्ग करनेवालों के तथा महापापी के समानों के पतित और नपुंसकों के मरने में आशौच नहीं है। पति आदि को मारने वाली, नीच जाति से गमन करनेवाली, गर्भ का हनन करनेवाली, कुलटा और पूर्वोक्त आत्मघात आदि पापयुक्ता स्त्रियों के मरने में आशौच नहीं होता। उसमें इनके मुर्दे का स्पर्श, आंसू गिराना, ढोना और दाह रूप अन्त्य कर्मों को नहीं करे।

स्पर्शादिकरणे ज्ञानाज्ञानाभ्यासादितारतम्येन कृच्छ्रातिकृच्छ्रसांतपनचान्द्रायणादिप्रायश्चित्तानि सिन्धवादिग्रन्थान्तरतो ज्ञेयानि। तेनैषां मृतदेहस्य जले प्रक्षेपः। ततः संवत्सरोत्तरं पुत्रादिस्तदीयात्मघातादिपापानुसारेण प्रायश्चित्तं तस्य कृत्वा नारायणबलिं च कृत्वा पर्णशरदाहादिपूर्वकमाशौचमौर्ध्वदेहिकं च कुर्यात्।

स्पर्श आदि करने में ज्ञान, अज्ञान और अभ्यास आदि के तारतम्य से कृच्छ्र, अतिकृच्छ्र, सान्तपन और चान्द्रायण आदि प्रायश्चित्तों को निर्णयसिन्धु आदि दूसरे ग्रन्थों से जानना चाहिये। इससे इनके मरे शरीर को जल में फेंक दें। उसके बाद साल भर के बाद उसके पुत्र आदि उसके आत्मघात आदि पाप के अनुसार उसका प्रायश्चित्त और नारायणबलि करके पर्णशरदाहादि पूर्वक आशौच और और्ध्वदेहिक करे।

केचित्प्रेतशरीरं दग्ध्वा दाहनिमित्तं चान्द्रायणत्रयं कृत्वाऽस्थीनि संस्थाप्याब्दान्ते पूर्वोक्तरीत्यौर्ध्वदेहिकमित्याहुः। अथवा लौकिकाग्निना तूष्णीं दग्ध्वा स्वजीवनसंदेहाद्वा भक्त्या वा पुत्रादयः संवत्सरादर्वागपि तत्तदात्मघातादिपापोक्तद्विगुणप्रायश्चित्तपूर्वकं नारायणबलिं कृत्वा पर्णशरदाहमस्थिदाहं वा कृत्वाशौचमौर्ध्वदेहिकं च कुर्युः। इदं च प्रायश्चित्तार्हाणामेव। प्रायश्चित्तानर्हाणां घटस्फोटेन बहिष्कृतानां च दासीद्वारा पतितोदकविध्यनन्तरं सपिण्डीकरणवर्जमौर्ध्वदेहिकम्। तेन सांवत्सरिकमप्येकोद्दिष्टविधिनैव।

कुछ लोग कहते हैं कि प्रेत के शरीर का दाह कर दाह के निमित्त तीन चान्द्रायण करके अस्थियों को स्थापित कर साल के अन्त में पूर्वोक्त रीति से और्ध्वदेहिक करे। अथवा लौकिक अग्नि से विना मन्त्र के चुपचाप दाह करके या अपने जीवन के सन्देह से या भक्ति से पुत्र आदि वर्ष से पूर्व भी उन-उन आत्मघात आदि पापों के पूर्वोक्त प्रायश्चित्त दुगुना करके एवं नारायण बलि करके पर्णशरदाह या अस्थिदाह कर आशौच और और्ध्वदेहिक करे। यह भी उन्हीं के लिये

१. मिताक्षरायाम्—'आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया। तेषामपि तथा गङ्गातोये संस्थापनं हितम्॥' इति।

है जो प्रायश्चित्त योग्य हैं। जो प्रायश्चित्त के अयोग्य हैं और जो घटस्फोट-विधि से बहिष्कृत हैं उनका दासी द्वारा पतितोदक-विधि के बाद सपिण्डीकरण को छोड़कर और्ध्वदेहिक कर्म करे। इससे वार्षिक श्राद्ध एकोद्दिष्ट विधि से ही करे।

यद्वात्मघातिनां पुत्रादिर्मृतजातीयवधोक्तब्रह्महत्यादिप्रायश्चित्तसहितं चान्द्रायणं तप्तकृच्छ्रद्वयं च कृत्वा नारायणबलिपूर्वकं तं दहेत्। तथा चात्मघातिनां गोगजव्याघ्रादिहेतुकदुर्मरणवतां च पतितादीनां च पूर्वोक्तानां सर्वेषां न मरणदिनादारभ्याशौचं किंतु तत्तत्प्रायश्चित्तनारायणबलिपूर्वकसमन्त्रकदाहदिनमारभ्यैवाशौचम्।

या आत्मघात करनेवालों का पुत्र आदि मृत जाति के वध का कहे हुए ब्रह्महत्या आदि प्रायश्चित्त के साथ चान्द्रायण और दो तप्तकृच्छ्र तथा नारायण बलि करके उसे जलावे। इसलिये आत्मघात करनेवालों का बैल हाथी-बाघ आदि के द्वारा दुर्मरण होने वालों का, पतित आदि का और पूर्वोक्त सब का मरण दिन से आशौच नहीं होता किन्तु उन-उनके नारायण बलिपूर्वक प्रायश्चित्त और मन्त्रसहित दाह-दिन से ही आशौच होता है।

जलाग्न्यादिभिः [1]प्रमादमृतानां तु मरणदिनादारभ्याशौचादिकमस्त्येव। तच्च त्रिरात्रमिति केचित्। दशाहमिति बहवः। किंतु प्रमादमरणस्यापि दुर्मरणत्वात्तन्निमित्तप्रायश्चित्तपूर्वकमेव दाहादि कार्यम्। तदुक्तं स्मृत्यर्थसारे—'चण्डालगोब्राह्मणचोरपशुदंष्ट्रिसर्पाग्न्युदकादिभिः [2]प्रमादान्मरणे चान्द्रायणं तप्तकृच्छ्रद्वयं च तत्प्रायश्चित्तं कृत्वा पञ्चदश कृच्छ्राणि वा प्रायश्चित्तं कृत्वा विधिवद्दहनाशौचोदकदानादि सर्वं कार्यमेव' इति। प्राणान्तिकप्रायश्चित्तेन मृतस्य दशाहमाशौचं सर्वाणि प्रेतकार्याणि च कर्तव्यानि, प्रायश्चित्तेन तस्य शुद्धत्वात्। एवमारब्धप्रायश्चित्तमध्ये मरणेऽपि शुद्धत्वादिकं ज्ञेयम्।

जल और अग्नि आदि से और प्रमाद से मरे हुए का तो मरने के दिन से आशौच आदि है ही। वह आशौच त्रिरात्र होता है, ऐसा कोई कहते हैं। बहुत लोग दस दिन का आशौच कहते हैं। किन्तु प्रमाद से मरण भी दुर्मरण है इसलिये उसके निमित्त पहले प्रायश्चित्त करके ही दाह

---

१. प्रमादवश मरण में आशौचादि सभी कृत्य होंगे, जैसा अङ्गिरा ने कहा है—'अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः। तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया॥' ब्राह्मे—'प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः। शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः॥ चण्डालैरथवा चौरैर्निहतो वापि कुत्रचित्। तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः॥' इति।

२. ब्रह्मपुराण में भी कहा है—'प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः। चाण्डालैर्ब्राह्मणैश्चौरैर्निहतो यत्र कुत्रचित्॥ तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः। चान्द्रायणं तप्तकृच्छ्रद्वयं तस्य विशुद्धये॥ यद्वा कृच्छ्रान् पञ्चदश कृत्वा तु विधिना दहेत्। बुद्धिपूर्वमृतानां तु त्रिंशत्कृच्छ्रं समाचरेत्॥' स्मृतिरत्नावली में तो—'द्विगुणं प्रायश्चित्तं कृत्वार्वागप्यब्दात्सर्वं कार्यम्' ऐसा कहा है। 'आत्मनो घातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयम्। तप्तकृच्छ्रचतुष्कं च त्रिंशत्कृच्छ्राणि वा पुनः। अर्वाक् संवत्सरात् कुर्याद्दहनादि यथोदितम्। कृत्वा नारायणबलिमनित्यत्वात्तदायुषः॥' इति।

आदि करे। इसे स्मृत्यर्थसार में कहा है— चाण्डाल, गाय, बैल, ब्राह्मण, चोर, पशु, दांत वाले, सांप, अग्नि और जल आदि से प्रमाद से मरने में चान्द्रायण, दो तप्तकृच्छ्र तथा उसका प्रायश्चित्त करके या पन्द्रह तप्तकृच्छ्रोंको करके विधि के साथ दाह, आशौच और जलदान आदि सब करे ही। प्राणान्तिक प्रायश्चित्त से मृतक के दस दिन का आशौच और सब प्रेतकार्यों को करना चाहिये, क्योंकि प्रायश्चित्त से वह शुद्ध हो जाता है। इसी प्रकार आरम्भ किये हुए प्रायश्चित्त वालों की प्रायश्चित्त के बीच में मरने पर भी शुद्धि आदि जाने।

आहिताग्नेस्तु पतितादेर्मरणे दर्पादिना चाण्डालशृङ्गिचोरादिहेतुके च मरणे विशेषः—

त्रेताग्नीन्प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे।
पात्राणि तु दहेदग्नौ साग्निके पापकर्मणि॥

ततः प्रायश्चित्तार्हत्वानर्हत्वादिपूर्वोक्तव्यवस्थया निर्मथ्याग्निना दाहाद्यन्त्यकर्मेति।

महापातकसंयुक्तः साग्निको यदि जीवति।
पुत्रादिः पालयेदग्नीन्प्रायश्चित्तक्रियावधि॥
प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि।
जलेऽग्नीन्प्रक्षिपेदग्नौ पात्राणि तु जलेषु वा॥

आहिताग्नि का तो जो पतित आदि हैं उस के मरने में और उसके अभिमान से चाण्डाल, सींग वाले पशु, चोर आदि के द्वारा मरने में विशेष है—आहिताग्नि के पातित्य आदि दुर्मरण में त्रेता अग्नि को जल में और आवसथ्य ( गृह्य ) अग्नि को चौराहे पर फेंक दे, पात्रों को तो आग में जला दे। तदनन्तर प्रायश्चित्त की योग्यता अयोग्यता आदि पूर्वोक्त व्यवस्था से मन्थन की हुई अग्नि से दाह आदि अन्त्य कर्म करे। महापातकी आहिताग्नि यदि जीवित है तो उसके पुत्र आदि प्रायश्चित्त पर्यन्त अग्नियों की रक्षा करें। जो प्रायश्चित्त करते हुए मर जाय तो उसकी अग्नियों को जल में फेंक दे और पात्रों को अग्नि में या जल में फेंक दे।

माधवीये आहिताग्नेर्दुर्मरणेऽप्यात्मघाते च तं लौकिकाग्निना तूष्णीं दग्ध्वा तदस्थीनि क्षीरेण प्रक्षाल्य तत्प्रायश्चित्तं कृत्वा श्रौताग्निभिः समन्त्रकं दाहादि कार्यमित्युक्तम्। इदं निरग्नेरपि दुर्मरणे योज्यम्।

माधवीय में आहिताग्नि के दुर्मरण में भी और आत्मघात में उसको लौकिक अग्नि से मौन जलाकर उसकी अस्थियों को दूध से धोकर और उसके प्रायश्चित्त को करके श्रौत अग्नि से मन्त्रसहित दाह आदि करे, यह कहा है। यह निरग्नि के भी दुर्मरण में योजना करे।

### अथ सर्पहते विशेषः

प्रमादेन वा दर्पादिना वा सर्पतो मृतावाशौचादि न कार्यम्। वक्ष्यमाणं नागपूजाव्रतं कृत्वा नारायणबलिसौवर्णनागदानप्रत्यक्षगोदानानि[1] कृत्वा दाहा-

---

१. व्यासः—'सौवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम्। व्यासाय दत्त्वा विधिवत् पितुरानृण्यमाप्नुयात्।' भविष्ये—'पञ्चम्यां पन्नगं हैमं स्वर्णेनैकेन कारयेत्। क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत्॥ प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शम्भुना॥' इति।

शौचादि कार्यम्। सर्वत्र दुर्मरणे पतितादिमरणे च तत्तत्प्रायश्चित्तादि कृत्वा दाहाशौचादि कार्यमित्युक्तम्।

प्रमाद से या घमंड आदि से या सांप से मरने में आशौच आदि नहीं करे। आगे कहा जाने वाला नागपूजाव्रत करके नारायणबलि, सोने के नाग का दान और प्रत्यक्ष गोदान करके दाह आशौच आदि करे। सब जगह दुर्मरण और पतित आदि के मरने में उन उनके प्रायश्चित्त आदि को करके दाह और आशौच आदि करे, ऐसा कहा है।

तत्र प्रायश्चित्तानि प्रसङ्गादुच्यन्ते—बुद्धिपूर्वकमात्मघातेन मृतानां त्रिंशत्कृच्छ्राणि प्रायश्चित्तम्। एतच्च जातिवधप्रायश्चित्तेन समुच्चितं कार्यम्। तद्यथा—ब्राह्मणेनात्मघाते कृते द्वादशाब्दं ब्रह्महत्याप्रायश्चित्तं त्रिंशत्कृच्छ्रमात्मघातप्रायश्चित्तं च तत्पुत्रादिः कुर्यात्। ब्राह्मणस्त्रियात्मघाते कृते ब्राह्मणस्त्रीवधप्रायश्चित्तं त्रिंशत्कृच्छ्राणि च। एवं शूद्राद्यात्मघातेऽप्यूह्यम्। अशक्तावात्मघाते चान्द्रायणद्वयं तप्तकृच्छ्रचतुष्कं च।

उसमें प्रसङ्ग से प्रायश्चित्तों को कहता हूँ। जानबूझ कर आत्मघात से मरे हुए का तीस कृच्छ्र प्रायश्चित्त है। इसे जातिवध के प्रायश्चित्त के साथ करे। वह इस प्रकार, जैसे—ब्राह्मण द्वारा आत्मघात करने पर बारह वर्ष का प्रायश्चित्त, ब्रह्महत्या का प्रायश्चित्त, तीस कृच्छ्र और आत्मघात का प्रायश्चित्त आत्मघाती का पुत्र आदि करे। ब्राह्मण की स्त्री के आत्मघात करने पर ब्राह्मण के स्त्री-वध का प्रायश्चित्त और तीस कृच्छ्र भी करे। इसी प्रकार शूद्र आदि के आत्मघात में भी कल्पना करनी चाहिये। असमर्थता में आत्मघात में दो चान्द्रायण और चार तप्तकृच्छ्र हैं।

प्रमादेन जलादिमरणे पञ्चदश कृच्छ्राणि, चान्द्रायणपूर्वकं तप्तकृच्छ्रद्वयं वा। पतितमृते षोडश कृच्छ्राणि। ब्रह्महत्यादिपापिनां प्रायश्चित्तात्पूर्वं मरणे तत्तत्पापप्रायश्चित्तं पुत्रेण कार्यम्। प्रायश्चित्तानर्हाणां तु पतितोदकदानविधिरेव न प्रायश्चित्तादीत्युक्तम्।

प्रमाद से जल आदि में मरने पर पन्द्रह कृच्छ्र करे, अथवा चान्द्रायण करके दो तप्तकृच्छ्र करे। पतित के मरने पर सोलह कृच्छ्र करे। ब्रह्महत्या आदि पापवालों का प्रायश्चित्त से पहले मरने पर उन-उन पापों का प्रायश्चित्त पुत्र को करना चाहिये। प्रायश्चित्त के अयोग्यों का तो पतित की जलदान विधि ही है प्रायश्चित्त आदि नहीं, यह कहा है।

सिन्धौ तु प्रायश्चित्तानर्हाणामपि पुत्रादिर्नारायणबलिपूर्वं सर्वमौर्ध्वदेहिकं सपिण्डीकरणं दर्शादिश्राद्धं गयादिश्राद्धं च कुर्यादेव। एवं म्लेच्छीकृतस्यापि पतितोदकविधिरपुत्रविषय इत्युक्तम्। इदमेव युक्तम्। यस्तु किंचित्कालं म्लेच्छीकृतः प्रायश्चित्तार्हस्तस्य षोडशकृच्छ्रादिप्रायश्चित्तं पुत्रेण कृत्वा पर्णशरदाहादि कार्यम्। प्रमादमरणभिन्नेषु चौर्यपारदार्यादिहेतुकेषु दुर्मरणे चान्द्रायणद्वयं तप्तकृच्छ्रं वेत्याकरतो विचार्य योज्यम्।

निर्णयसिन्धु में तो प्रायश्चित्त के अयोग्यों का भी पुत्र आदि नारायणबलि करके सब और्ध्वदेहिक, सपिण्डीकरण, दर्श आदि श्राद्ध और गया आदि श्राद्ध करे ही। एवं म्लेच्छ बनाये

हुए की भी पतितोदक-विधि अपुत्रविषयक है, यह कहा है। यही ठीक है। जो कि कुछ समय तक म्लेच्छ बनाया गया हो और प्रायश्चित्त के योग्य हो, उसका सोलह कृच्छ्र आदि प्रायश्चित्त पुत्र द्वारा करके पर्णशरदाह आदि करना चाहिये। प्रमाद से भिन्न चोरी परस्त्री आदि के कारण दुर्मरण में दो चान्द्रायण या तप्तकृच्छ्र की विशद ग्रन्थों से विचार कर योजना करे।

## अथ दुर्मरणेषु दानादिविधिः

किं च व्याघ्रादिहेतुकदुर्मरणेषु [1]शातातपोक्तदानादिविधिरपि कार्यः। तथा हि—व्याघ्रहते विप्रकन्याविवाहनम्। गजहते चतुर्निष्कपरिमितहेमनिर्मितगजदानम्। राजहते सौवर्णपुरुषदानम्। चोरहते प्रत्यक्षधेनुदानम्। वैरिहते वृषदानम्। वृषभेण हते यथाशक्ति हेमदानम्। शय्यायां च मृते देया शय्या तूलीसमन्विता, निष्कहेमनिर्मितविष्णुप्रतिमाधिष्ठिता च।

और बाघ आदि के द्वारा हुए दुर्मरणों में शातातप कथित दान आदि की विधि करनी चाहिये। जैसे—बाघ से मरने पर ब्राह्मण की कन्या का विवाह करा दे। हाथी से मरने पर चार निष्क सुवर्ण के बने हाथी का दान करे। राजा से मरने पर सोने के पुरुष का दान करे। चोर से मरने पर प्रत्यक्ष गोदान करे। शत्रु से मरने पर बैल का दान करे। बैल से मरने पर यथाशक्ति सोने का दान करे। खटिया पर मरने से तोसकसहित खटिया का दान करे, जिस पर एक निष्क सोने की निर्मित विष्णुप्रतिमा रखी हुई हो।

शौचहीनमरणे द्विनिष्कहैमविष्णुदानम्। संस्कारहीनमरणे विप्रपुत्रोपनयनम्। अश्वहते निष्कत्रयहेमकृताश्वदानम्। शुना हते क्षेत्रपालस्थापनम्।

---

१. शातातपोक्त दुर्मरणनिमित्तक दान—'व्याघ्रेण निहते विप्रे विप्रकन्यां विवाहयेत्। सर्पदष्टे नागबलिर्देयः सर्पश्च काञ्चनः॥ चतुर्निष्कमितं हैमं गजं दद्याद् गजैर्हते। राज्ञा विनिहते दद्यात् पुरुषं तु हिरण्मयम्। चौरेण निहते धेनुं वैरिणा निहते वृषम्। वृषेण निहते दद्याद्यथाशक्त्या तु काञ्चनम्॥—

शय्यामृते प्रदातव्या शय्या तूलीसमन्विता। निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता॥ शौचहीने मृते चैव द्विनिष्कं स्वर्णजं हरिम्। संस्कारहीने च मृते कुमारमुपनाययेत्॥ निष्कत्रयं स्वर्णमितं दद्यादश्वं हयाहते। शुना हते क्षेत्रपालं स्थापयेन्निजशक्तितः॥ सूकरेण हते दद्यान्महिषं दक्षिणान्वितम्। कृमिभिश्च मृते दद्याद् गोधूमान् पञ्चखारिकाः॥—

वृक्षं वृक्षहते दद्यात्सौवर्णं वस्त्रसंयुतम्। शृङ्गिणा निहते दद्याद् वृषभं वस्त्रसंयुतम्॥ शकटेन मृते दद्याद् द्रव्यं सोपस्करान्वितम्। भृगुपातमृते चैव प्रदद्याद् धान्यपर्वतम्॥ अग्निना निहते कार्यमुदपानं स्वशक्तितः। दारुणा निहते चैव कर्तव्या सदने सभा॥ शस्त्रेण निहते दद्यात् सवत्सां गां पयस्विनीम्॥ वृषेण च मृते दद्यान्मेदिनीं हेमनिर्मिताम्। उद्बन्धनेन च मृते कपिं कनकनिर्मितम्॥—

मृते जलेन वरुणं हैमं दद्याद् द्विनिष्कजम्। विषूचिका मृते स्वादु भोजयेच्च शतं द्विजान्॥ घृतधेनुः प्रदातव्या कण्ठान्नकवले मृते। कासरोगेण च मृते अष्टकृच्छ्रं व्रतं चरेत्॥ अतिसारमृते लक्षं गायत्र्याः प्रयतो जपेत्। शाकिन्यादिग्रहग्रस्ते जपेद् रुद्रं यथोदितम्॥ विद्युत्पातेन निहते विद्यादानं समाचरेत्। अन्तरिक्षमृते कार्यं वेदपारायणं तथा॥ सच्छास्त्रपुस्तकं दद्यादस्पृश्यस्पर्शतो मृते। पतिते च मृते कुर्यात्प्राजापत्यांस्तु षोडश॥ मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेत्। एवं कृते विधाने तु विदध्यादौर्ध्वदेहिकम्॥' इति।

सूकरहते महिषदानम् । कृमिभिर्हते पञ्चखारीमितगोधूमदानम् । वृक्षहते वस्त्र-युतसौवर्णवृक्षदानम् । शृङ्गिणा हते वस्त्रयुतवृषभदानम् । शकटहते सोपस्करं किंचिद् द्रव्यदानम् । भृगुपातमृते धान्यपर्वतदानम् ।

अशुचि अवस्था में मरने पर दो निष्क सोने की विष्णुप्रतिमा का दान करे । संस्कार-रहित मरने में ब्राह्मण के पुत्र का यज्ञोपवीत करावे । घोड़े से मरने में तीन निष्क सुवर्ण का घोड़ा बना कर दान करे । कुत्ते से मरने पर क्षेत्रपाल का स्थापन करे । सूअर से मरने पर भैंसे का दान करे । कीड़ों से मरने में पांच खारी परिमित गेहूं का दान करे । ( डेढ़ सूप की एक खारी होती है इसका पांच गुना) । वृक्ष से मरने पर वस्त्रसहित सुवर्ण-वृक्ष का दान करे । सींग वाले पशु से मरने पर वस्त्रयुक्त बैल का दान करे । गाड़ी से मरने पर सामग्रीसहित कुछ द्रव्य का दान करे । पहाड़ की समतल भूमि से गिरकर मरने में धान के पर्वत का दान करे ।

अग्निना मृते उदपानोत्सर्गविधिः । काष्ठहते धर्मार्थंसभाकरणम् । शस्त्रहते महिषीदानम् । अश्महते सवत्सपयस्विन्या गोदानम् । विषेण हते हेमनिर्मितपृथ्वीदानम् । उद्बन्धनेन मृते हेमकपिदानम् । जले मृते द्विनिष्कहेमनिर्मितवरुणदानम् ।

अग्नि से मरने पर कूपोत्सर्ग की विधि करे । काठ से मृत्यु होने पर धर्म के लिये सभा करे । शस्त्र से करने पर मैंस का दान करे । पत्थर से मरने पर बछड़े के साथ दूध वाली गाय का दान करे । विष से मरे तो सोने की पृथिवी का दान करे । फांसी लगाकर मरने में सोना का बन्दर बनाकर दान करे । जल में मरने से दो निष्क परिमित सोने के वरुण का दान करे ।

विषूचिकामृते स्वाद्वन्नेन शतविप्रभोजनम् । कण्ठस्थितकवलस्य मरणे घृतधेनुदानम् । कासरोगमृतेऽष्टकृच्छ्राणि । अतीसारमृते लक्षगायत्रीजपः । शाकिन्यादिग्रहैर्मृते रुद्रैकादशिनीजपः । विद्युत्पातमृते विद्यादानम् । अन्तरिक्षमृते वेदपारायणम् । पतिते मृते षोडशकृच्छ्राणि । अस्पृश्यस्पर्शयुक्तमरणे सच्छास्त्रपुस्तकदानमित्यादि ।

हैजे में मरने से स्वादिष्ट अन्न से सौ ब्राह्मणों को खिलावे । गले में रुके ग्रास से मरने में घृतधेनु का दान करे । खांसी के रोग से मरने में आठ कृच्छ्र करे । अतीसार से मरने में एक लाख गायत्री जपे । शाकिनी आदि ग्रहों से मरने पर रुद्रैकादशिनी का जप करे । बिजली गिरने से मरने पर विद्यादान करे । अन्तरिक्ष में मरने से वेद का पारायण करे । पतित के मरने पर सोलह कृच्छ्र व्रत करे । अस्पृश्य से स्पर्श करके मरने में अच्छे शास्त्रों की पुस्तकों का दान करे । इत्यादि ( दान और प्रायश्चित्त है । )

अत्र शय्यामरणे शौचहीनसंस्कारहीनमरणे कृमिविषूचिकाकण्ठकवलकासातिसाररोगग्रहग्रहणैर्मरणेऽन्तरिक्षमृतेऽस्पृश्यस्पर्शमरणे च दानादिविधिरेव न प्रायश्चित्तं नैव नारायणबलिविधिर्नापि वर्षादिकालप्रतीक्षा । व्याघ्रादिहेतुकं विषजलशस्त्रादिहेतुकं च मरणं प्रमादेन दर्पादिना बुद्धया चेत्यनेकधा संभवति । तत्रोक्तव्यवस्थया प्रायश्चित्तं नारायणबलिर्दानादिविधिश्चेति त्रयाणां समुच्चयः ।

यहां खटिया पर मरने में, शौचहीन-संस्कारहीन के मरने में, कृमि-विषूचिका-कण्ठकवल-कास-अतिसार, इन रोगों से एवं ग्रहों के ग्रहण करने से मरने में अन्तरिक्ष में और अस्पृश्यस्पर्श से मरने में दान आदि विधि ही है, न तो प्रायश्चित्त है न नारायणबलि और न वर्ष आदि काल की प्रतीक्षा। बाघ आदि, विष, जल और शस्त्र से तथा प्रमाद से अहंकार आदि से और जानकर, इस तरह अनेक प्रकार से मरना सम्भव है। उसमें कही गई व्यवस्था से प्रायश्चित्त, नारायणबलि और दान आदि विधि, इन तीनों का समुच्चय है।

यदि पुत्रादिः पितुर्जलादिदुर्मरणप्रायश्चित्तं ब्रह्महत्यादितत्तत्पापप्रायश्चित्तं वात्मघातप्रायश्चित्तं वा कर्तुं न शक्नोति तदोक्तदानादिविधिं नारायणबलिं च कृत्वाऽत्यशक्तौ नारायणबलिमात्रं कृत्वौर्ध्वदेहिकं कुर्यात्, तावता पुत्रादिसपिण्डानां शुद्धिसिद्धेः। पित्रादेस्तु पुत्रादिभिस्तत्तत्प्रायश्चित्ताकरणे नरकादिभोगः स्यादेवेति बोध्यम्।

यदि पुत्र आदि पिता के जल आदि से दुर्मरण प्रयुक्त प्रायश्चित्त या ब्रह्महत्या आदि उन-उन पापों का प्रायश्चित्त अथवा आत्मघात का प्रायश्चित्त नहीं कर सकता तब कही हुई दान आदि की विधि और नारायणबलि को करके अत्यन्त अशक्त अवस्था में केवल नारायणबलि करके और्ध्वदेहिक करे, क्योंकि इतने ही से पुत्र आदि सपिण्डों की शुद्धि की सिद्धि हो जाती है। पुत्र आदि से उन-उन प्रायश्चित्तों के नहीं करने से पिता आदि का तो नरक आदि का भोग होगा ही यह जानना चाहिये।

### अथ विधिविहितजलादिमरणे

तत्र प्रयोगे सर्ववर्णानां रोगिणामरोगिणां च भागीरथीप्रवेशादिना मरणे कामिकमहाफलम्। शूद्रस्यारोगिणोऽपि प्रयागभिन्नेऽपि जलादिमरणमनुज्ञातम्।

व्याधितो भिषजा त्यक्तो विप्रो वृद्धोऽथवा युवा।
तनुं त्यजेज्जलाग्न्याद्यैः स यथेष्टं फलं लभेत्॥
दुश्चिकित्स्यैर्महारोगैः पीडितो जीवनाक्षमः।
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा॥
अगाधतोयराशिं च भृगोः पतनमेव च।
गच्छेन्महापथं वापि तुषारगिरिमादरात्॥
प्रयागवटशाखाग्राद्देहत्यागं करोति च।
उत्तमान्प्राप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्॥
नराणामथ नारीणां सर्ववर्णेषु सर्वदा।
आशौचं स्यात्त्र्यहं तेषां वज्रानलहते तथा।
वाराणस्यां म्रियेद्यस्तु प्रत्याख्यातभिषक्क्रियः।
काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः॥
अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः।

प्रणवं तारकं ब्रूते इत्यादिवचनोच्चयः ॥
पुराणस्थो माधवादिनिबन्धेषु ह्युदाहृतः ।

उस प्रयोग में सब वर्णों के रोगियों तथा नीरोगियों का भागीरथी में प्रवेश आदि से मरण होने पर ऐच्छिक महाफल होता है। रोगरहित शूद्र को भी प्रयाग से भिन्न जल आदि में मरने की आज्ञा है। व्याधि के कारण वैद्य के छोड़ देने पर ब्राह्मण बूढ़ा हो या जवान जल या अग्नि आदि से शरीर त्याग करे तो वह यथेच्छ फल पाता है। दुःख से चिकित्सा के योग्य महाव्याधियों से पीडित और जीने में असमर्थ व्यक्ति अग्नि में प्रवेश करे तथा अनशन करे, अथाह जलराशि में प्रवेश करे, पर्वत की समतल भूमि से गिरे अथवा महामार्ग में गमन करे, आदर से हिमपर्वत जाय या प्रयाग के वट की शाखाग्र से देह का त्याग करे तो वह उत्तम लोकों को प्राप्त करता है, आत्मघाती कभी नहीं होता। पुरुष हो या स्त्री हो सब वर्णों में सदा उनका तीन दिन का आशौच होता है तथा वज्र की अग्नि ( बिजली ) से मरने पर उनका त्रिरात्र आशौच होता है। जो वैद्य की चिकित्सा को त्याग कर वाराणसी में मरता है, काष्ठ-पाषाण के मध्य में और गंगाजल के मध्य में स्थित होकर अविमुक्त श्रीशङ्कर की ओर उन्मुख होकर मरता है उसके कान के मूल में आकर भगवान् शङ्कर तारक प्रणव (ओंकार) को कहते हैं इत्यादि वचनसमूह पुराणों में हैं तथा माधवाचार्य आदि के निबन्धों में उद्धृत है।

अत्रानुज्ञाते बुद्धिपूर्वकात्मघाते गृहस्थादीनामेवाधिकारः। यतेस्तु नाधिकारः, त्र्यहाद्याशौचविधानात्, यतेः काम्यकर्मण्यनधिकाराच्चेति निर्णयसिन्धुः। इदानींतनशिष्टास्तु रोगादिपीडां सोढुमशक्तौ संन्यासाश्रमं गृहीत्वा तीर्थादिनात्मघातं कुर्वन्ति, गृहस्थविधुरादयश्च न कुर्वन्ति।

इसमें शास्त्रविहित बुद्धिपूर्वक आत्मघात में गृहस्थ आदि का ही ऐसा करने का अधिकार है। संन्यासी का तो इसमें अधिकार नहीं है, क्योंकि इसमें तीन दिन आदि आशौच का विधान है और संन्यासी का काम्य कर्म में अधिकाराभाव है, ऐसा निर्णयसिन्धुकार का मत है। आजकल के शिष्ट लोग तो रोग आदि की पीडा को सहने में अशक्त होने पर संन्यास आश्रम को ग्रहण कर तीर्थ आदि से आत्मघात करते हैं, गृहस्थ और विधुर आदि नहीं करते।

केचित्त्वपरिहार्यरोगादिग्रस्तवृद्धादेर्जलादिना बुद्ध्यात्मघातः कलौ प्रयागभिन्नदेशे न भवति। भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथेति कलिवर्ज्येषु परिगणनादित्याहुः। एतन्मते मरणान्तप्रायश्चित्तविधयः काशीखण्डादौ विप्रादेर्देहत्यागविधयश्च युगान्तरपराः।

कुछ लोग कहते हैं—नहीं छूटने वाले रोग से ग्रस्त वृद्ध आदि को जल आदि से जानकर आत्मघात कलियुग में प्रयाग के अतिरिक्त देश में नहीं होता, क्योंकि पर्वत की समतल भूमि से गिरकर, आग में जलकर, वृद्ध आदि के मरने का कलिवर्ज्य में परिगणन किया है। इस मत में मरणान्त प्रायश्चित्त विधियां और काशीखण्ड आदि में कही ब्राह्मण आदि के शरीरत्यागकी विधियां भी दूसरे युगों के लिये हैं।

'प्रयागमरणं स्त्रीणां सहगमनं च कलियुगे सर्वसम्मतम्। अत्र सर्वत्र सहगम-

---

१. कूर्मपुराणे—'व्याधितो यदि वा दीनो वृद्धो वाऽपि भवेन्नरः। गङ्गायमुनमासाद्य यस्तु प्राणान् परित्यजेत्॥ ईप्सितांल्लभते कामान् वदन्ति मुनिपुङ्गवाः। तथा—'या गतिर्योगयुक्तस्य

नभिन्ने विधिवाक्यानुंज्ञाते देहत्यागे त्रिरात्रमाशौचमिति बहवः। दशाहमिति केचित्। एवं फलकामनया विहितें काम्यप्रयागमरणेऽपि पक्षद्वयं ज्ञेयम्।

प्रयाग में मरना और स्त्रियों का सहगमन कलियुग में सब का सम्मत है। यहां सब जगह सहगमन के अतिरिक्त विधि-वचन से अनुज्ञात शरीरत्याग में त्रिरात्र आशौच होता है, ऐसा बहुत लोग कहते हैं। कोई—दस-दिन का आशौच कहते हैं। इसी तरह फल की इच्छा से विहित काम्य प्रयाग-मरण में भी दो पक्ष जानना चाहिये।

## अथ पतितादिविचारस्तदुदकदानविधिश्च

अथ यः पतितो घटस्फोटेन बहिष्कृतो यश्च म्लेच्छीकृतो यश्च प्रायश्चित्तानर्हपापी तस्य त्रिविधस्य पितृमातृभिन्नस्य पतितोदकविध्यनन्तरं सपिण्डीकरणवर्ज्यमन्त्यकर्म पितुर्मातुश्च त्रिविधस्यापि नारायणबलिपूर्वकं सपिण्डीकरणसहितं सर्वं भवतीत्युक्तम्।

जो पतित घटस्फोटविधि से बहिष्कृत है, जो म्लेच्छ बना दिया गया है तथा जो प्रायश्चित्त के अयोग्य पापी है, इन तीनों का पिता-माता से भिन्न का पतितोदकविधि के बाद सपिण्डीकरण को छोड़कर अन्त्यकर्म और तीनों के माता-पिता का नारायणबलि करके सपिण्डीकरणसहित सब कर्म होते हैं, यह कहा है।

तत्र पतितोदकदानविधिर्यथा—सर्वगां दासीमाहूय तस्यै वेतनं दत्त्वा अशुद्धपूर्णघटहस्तां तां ब्रूयात् हे दासि गच्छ मूल्येन तिलान् तोयपूर्णमिमं घटं च शीघ्रमानय। ततो दक्षिणामुखी उपविश्य वामपादेन घटं सतिलं क्षिप। घटक्षेपणकाले चामुकसंज्ञक पतित प्रेत पिब पिबेति मुहुरुच्चारयेति। सा दासी तद्वाक्यं श्रुत्वा मूल्यं गृहीत्वा तथा कुर्यात्। एवं कृते पतिततृप्तिर्नान्यथा। एतच्च पतितस्य [1]मृतदिने कार्यम्। इति पतितोदकविधिः। इति मृतदोषत आशौचापवादः सप्रसङ्गः सविस्तरो निरूपितः।

उसमें पतितोदकदान की विधि, जैसे—सब से संगम करने वाली दासी को बुलाकर उसको द्रव्य देकर अशुद्ध पूर्ण घट हाथ में ली हुई उससे कहे—हे दासि! जा मूल्य से तिलों को और

---

सत्त्वस्थस्य मनीषिणः। सा गतिस्त्यजतः प्राणान् गङ्गायमुनसङ्गमे॥' स्कान्दे—'यथाकथञ्चित्तीर्थेऽस्मिन् प्राणत्यागं करोति यः। तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि॥' वाराहपुराणे—'तत्र यो मुञ्चति प्राणान् वटमूलेषु सुन्दरि। सर्वकामानतिक्रम्य मम लोकं प्रपद्यते॥' ब्राह्मे—'ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्णुतत्परः। तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः॥ दुष्कृतोऽपि दुराचारो ब्रह्महत्यादिपातकी। हरिं ध्यात्वा त्यजेद्देहं प्रायशो मुक्तिमान् भवेत्॥' इति।

१. विष्णु ने कहा है—'पतितस्य दासी मृताह्नि यदा घटमपवर्जयेदेतावतायमुपचरितो भवति' इति। हेमाद्रि-ब्रह्मपुराण में पतित की उदकविधि का मूल-वचन यों है—'पतितस्य तु कारुण्याद्यः तृप्तिं कर्तुमिच्छति। स हि दासीं समाहूय सर्वगां दत्तवेतनाम्॥ अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यपि। हे दासि गच्छ मूल्येन तिलानानय सत्वरम्॥ तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी। उपविष्टा तु वामेन चरणेन ततः क्षिप॥ कीर्तयेः पातकीसंज्ञां त्वं पिबेति मुहुर्वद। निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत्॥ एवं कृते भवेत्तृप्तिः पतितानां च नान्यथा॥' इति।

जल से भरे इस घड़े को शीघ्र लाओ। फिर दक्षिण मुँह बैठकर बांए पैर से तिलसहित इस घड़े को गिरा दो। घड़ा गिराते समय अमुक नाम वाले पतित प्रेत पियो-पियो ऐसा बारंबार कहो। वह दासी उस वाक्य को सुनकर मूल्य लेकर वैसा करे। ऐसा करने से पतित तृप्त होता है, दूसरे प्रकार से नहीं। यह पतित के मरने वाले दिन में करे। यह पतितोदक विधि है। इस प्रकार मृतदोष से आशौच का प्रसंगसहित अपवाद विस्तार के साथ निरूपण किया।

अथ विधानतः—यतेर्मृतावाशौचं नास्ति, तस्य प्रेतक्रियोदकदानाशौच-सपिण्डीकरणादेर्निषिद्धत्वात्[1]। सपिण्डीस्थान एकादशेऽहनि पार्वणश्राद्धमात्रं कार्यम्। प्रतिसांवत्सरिकश्राद्धादिकं तु पार्वणविधिना सपिण्डकं भवत्येव। अत्र विस्तरो ग्रन्थान्तरे वक्ष्यते। एतच्च त्रिदण्डिनामेकदण्डिनां हंसपरमहंसादीनां सर्वेषामेव ज्ञेयम्। एवं वानप्रस्थमरणेऽपि नाशौचम्। कृतजीवच्छ्राद्धे मृते सपिण्डैराशौचादि कर्तव्यं न वेति [2]विकल्पः। ब्रह्मचारिमृतौ त्वाशौचमस्त्येव। युद्धमृतेऽप्याशौचं नेति सर्वग्रन्थेषूपलभ्यते न त्वेवं ब्राह्मणेषु शिष्टाचारः। इति पञ्चधाशौचापवादो निरूपितः।

विधान से—संन्यासी का मरणाशौच नहीं है; क्योंकि उसके प्रेतक्रिया-उदकदान-आशौच और सपिण्डीकरण आदि का निषेध है। सपिण्डीकरण की जगह ग्यारहवें दिन केवल पार्वण श्राद्ध करे। प्रतिसांवत्सरिक श्राद्धादि तो पार्वणविधि से पिण्डसहित होता ही है। इसमें विस्तार दूसरे ग्रन्थों में कहेंगे। यह त्रिदण्डी, एकदण्डी, हंस और परमहंस आदि सबके लिये जानना चाहिये। इसी प्रकार वानप्रस्थ के मरने में भी आशौच नहीं होता। जीवित श्राद्ध कर लेने पर मरने में सपिण्डों द्वारा आशौच करे या नहीं इसमें विकल्प है। ब्रह्मचारी के मरण में तो आशौच है ही। युद्ध में मरने पर भी आशौच नहीं होता, ऐसा सब ग्रन्थों में मिलता है, किन्तु ऐसा शिष्टाचार ब्राह्मणों में नहीं है। इस तरह पांच प्रकार के आशौच के अपवाद का निरूपण कर दिया।

अथ जीवतोऽप्याशौचम्—यथा पतितस्य घटस्फोटकाले सर्वसपिण्डानामेकाह-माशौचम्।

जीते हुए का भी आशौच है, जैसे पतितों के घटस्फोट के समय में सब सपिण्डों को एक दिन का आशौच होता है।

---

१. उशना ने कहा है—'एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा। अहन्येकादशे प्राप्ते पार्वणं तु विधीयते॥ सपिण्डीकरणं तेषां न कर्तव्यं सुतादिभिः। त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते॥'—

यहाँ शूलपाणि आदि का विचार है कि इस वचन में त्रिदण्डशब्द से त्रिदण्डियों की ही वार्षिकादि विधि है, एकदण्डि और परमहंसादि की कोई भी विधि नहीं करनी चाहिये। पृथ्वीचन्द्रोदय में प्रजापति का वचन है—'अहन्येकादशे प्राप्ते पार्वणं तु विधीयते। सपिण्डीकरणं तस्य न कर्तव्यं सुतादिभिः॥' इति।

२. विकल्प में हेमाद्रि-लिङ्गपुराण का वचन है—'मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयम्। कालं गते द्विजे भूमौ खनेद्वाऽपि दहेत वा। पुत्रकृत्यमशेषं च कृत्वा दोषो न विद्यते।' जीवच्छ्राद्धकर्ता के जीवन काल का कर्तव्य वहीं कहा है—'नित्यं नैमित्तिकं यत्तु कुर्याद्वा संत्यजेत वा। बान्धवेऽपि मृते तस्य नैवाशौचं विधीयते॥ सूतकं च न संदेहः स्नानमात्रेण शुद्ध्यति।' इति।

इत्याशौचं सापवादं यथामति निरूपितम् ।
समर्पितं रुक्मिणीशश्रीमद्विठ्ठलपादयोः ॥ १ ॥

इति सापवादाशौचप्रकरणम्

यह अपवादसहित आशौच बुद्धि के अनुसार निरूपण किया है और इसे रुक्मिणीपति श्रीविठ्ठल भगवान् के चरणों में समर्पित किया । सापवाद आशौच प्रकरण समाप्त ।

---

## अथ नारायणबल्यादिप्रयोगः

अथौर्ध्वदेहिकारम्भोपयोगिनारायणबल्यादिप्रकार उच्यते—तत्र दुर्मरणेष्वात्मघाते जलादिभिः प्रमादमरणे पतितादिमरणे च पूर्वोक्तव्यवस्थया 'अमुकगोत्रस्यामुकशर्मणोऽमुकदोषनाशार्थमौर्ध्वदेहिके संप्रदानत्वयोग्यतासिद्धयर्थममुकप्रायश्चित्तममुकदानं वा करिष्ये' इत्यादिसंकल्पपूर्वकं तत्तत्प्रायश्चित्तं दानं च कार्यम्। अशक्तौ दानमेव कार्यम् । ततः 'अमुकगोत्रामुकशर्मणोऽमुकदुर्मरणदोषनाशार्थमौर्ध्वदेहिकप्रदानत्वयोग्यतासिद्धयर्थं 'नारायणबलिं करिष्ये' इति संकल्प्य पूर्वार्धोक्तसंततिफलककाम्यनारायणबलिवत्सर्वं कुर्यात् । एतत्तु वर्षान्ते करणपक्षे ।

इसके बाद और्ध्वदेहिक के आरम्भ में उपयोगी नारायणबलि आदि का प्रकार कहता हूँ—उसमें दुर्मरणों में, आत्मघात में, जल आदि से प्रमादवश मरने में और पतित आदि के मरने में पूर्वोक्त व्यवस्था से 'अमुकगोत्र अमुकशर्मा के अमुकदोष के नाश के लिये और्ध्वदेहिक में संप्रदानत्व योग्यता की सिद्धि के लिये अमुक प्रायश्चित्त या अमुकदान करूँगा' इत्यादि संकल्प पूर्वक वह-वह प्रायश्चित्त और दान करे । असमर्थता में दान ही करना चाहिये । तदनन्तर 'अमुकगोत्रअमुकशर्मा के अमुक दुर्मरण-दोष नाश के लिये और्ध्वदेहिक प्रदानत्व योग्यता की सिद्धिके लिये नारायणबलि करूँगा' ऐसा संकल्प कर पूर्वार्ध में कहे सन्ततिफलक काम्य नारायणबलि के समान सब करे। यह तो वर्षा में करने के पक्ष में है ।

---

१. शौनकः—'शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम् । चण्डालादुदकात् सर्पाद् ब्राह्मणाद् वैद्युदादपि ॥ दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषादभिः । देशान्तरमृतानां च मृतानां वाऽन्यसाधनैः ॥ जीवच्छ्राद्धमृतानां च कनिष्ठानां तथैव च । यतीनां योगिनां पुंसामन्येषां मोक्षकाङ्क्षिणाम् ॥ पुण्यापक्षयार्थाय द्वादशेऽहनि कारयेत् । द्वादश्यां श्रवणेऽब्दान्ते पञ्चम्यां पर्वणोऽस्तु वा ॥' बौधायनने—'नारायणबलिश्चास्य कर्तव्यो द्वादशेऽहनि' इससे उपक्रम करके कहा है—'कृत्वा विष्णोर्महापूजां पायसं विनिवेदयेत्। अग्नौ हुत्वा तु तच्छेषं व्याहृतिभिः समाहितः ॥ यतीन् गृहस्थान् साधून् वा निमन्त्र्य द्वादशावरान् । अभ्यर्च्य गन्धपुष्पाद्यैर्मन्त्रैर्द्वादशनामभिः ॥ संभोज्य हव्येनान्नेन दक्षिणां च निवेदयेत् । त्रयोदशं द्विजश्रेष्ठमात्मज्ञं संयतेन्द्रियम् ॥ विष्णुं यथा तथाऽभ्यर्च्य पाद्याद्यैश्च विधानतः । दद्यात् पुरुषसूक्तेन गन्धपुष्पादिकं क्रमात् ॥ वस्त्रालङ्करणादीनि यथाशक्ति प्रदापयेत् । उच्छिष्टसन्निधौ तस्य दर्भानास्तीर्य भूतले ॥ भूर्भुवःस्वःस्वधायुक्तैस्तस्मै दद्याद् बलित्रयम् । अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ यत्फलं तल्लभेदेवं यः करोति यतिक्रियाम् ।' इति ।

सद्यःकरणपक्षे तु पूर्वोक्तद्विगुणप्रायश्चित्तं संकल्प्य शुक्लैकादश्यादिकालमनपेक्ष्यैव समनन्तरोक्तसंकल्पं कृत्वा विधिना स्थापिते कलशद्वये हेमप्रतिमयोर्विष्णुं वैवस्वतं यमं चावाह्य पुरुषसूक्तेन यमाय सोममिति च क्रमेण षोडशोपचारैः संपूज्य तत्पूर्वभागे रेखायां दक्षिणाग्रकुशानास्तीर्य शुन्धन्तां विष्णुरूप्यमुकप्रेत इति दशस्थानेष्वपो निनीय मधुघृततिलमिश्रानोदनपिण्डान् दशामुकगोत्रामुकशर्मन् प्रेत विष्णुदैवतायं ते पिण्ड इति दक्षिणसंस्थान् प्राचीनावीतीत्यादिपैतृकधर्मेण दद्यात् । गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यां क्षिपेत् ।

शीघ्र करने के पक्ष में तो पूर्वोक्त दूने प्रायश्चित्त का संकल्प कर शुक्ल एकादशी आदि समय की उपेक्षा कर पहले कहे हुए संकल्प को करके विधि से स्थापित दो कलशों में दो सोने की प्रतिमा में विष्णु और वैवस्वतयम का आवाहन कर पुरुषसूक्त से और 'यमाय सोमं' इससे क्रमशः षोडशोपचार से पूजन कर उसके पूर्वभाग में रेखा पर दक्षिणाग्र कुश बिछाकर 'शुन्धन्तां विष्णुरूपी अमुक प्रेत' यह कहकर दस स्थानों में जल गिराकर मधु, घी और तिल मिले भात के दस पिण्डों को 'अमुकगोत्र अमुकशर्मन् प्रेत विष्णुदैवत अयं ते पिण्डः' इस प्रकार दक्षिणसंस्थ अपसव्य इत्यादि पैतृकधर्म से दे । गन्ध आदि से पूजनकर प्रवाहण पर्यन्त करके नदी में फेंक दे ।

श्वः सद्यो वा पूर्वस्थापितं विष्णुमभ्यर्च्यैकविप्रे विप्रालाभे दर्भवटौ वा पादक्षालनादि तृप्तिप्रश्नान्तं विष्णुरूपप्रेतावाहनपूर्वकं कृत्वा विप्रसमीपे तूष्णीं रेखाः कृत्वा दर्भास्तरणे आपो निनयनं च कृत्वा दर्भेषु सव्येन विष्णवे ब्रह्मणे शिवाय च सपरिवाराय यमाय चेति चतुर्भ्यः पिण्डचतुष्टयं दत्त्वापसव्येन विष्णुरूपिप्रेतामुकगोत्रनामायं ते पिण्ड इत्येकं पञ्चमं पिण्डं दत्त्वा तथैवाभ्यर्च्य प्रवाहणान्ते विप्राचान्ततादिश्राद्धशेषसमापनान्ते प्रेतबुद्ध्या विप्राय वस्त्राभरणादि दत्त्वा विप्रेण प्रेताय तिलाञ्जलिं दापयेत्—अमुकगोत्रायामुकशर्मणे विष्णुरूपिणे प्रेतायायं तिलयोयाञ्जलिरिति मन्त्रेण । विप्रालाभे स्वयं दद्यात् ।

दूसरे दिन या तुरन्त पहले स्थापित विष्णु की पूजा कर एक ब्राह्मण में या ब्राह्मण नहीं मिलने पर कुशबटु में पैर धोने से लेकर विष्णुरूप प्रेत का आवाहन पूर्वक तृप्तिप्रश्नपर्यन्त कर्म करके और ब्राह्मण के समीप विना मंत्र के रेखा करके कुशास्तरण पर जल गिराकर कुशों में सव्य से विष्णु-ब्रह्मा-शिव और सपरिवार यम, इस प्रकार चारों को चार पिण्ड देकर और अपसव्य से 'विष्णुरूपी प्रेत अमुकगोत्र अमुकनामा यह आपका पिण्ड है' इससे एक को पांचवां पिण्ड देकर उसी प्रकार पूजन कर प्रवाहण के अन्त में ब्राह्मणों के आचमन आदि श्राद्धशेष की समाप्ति के अन्त में प्रेत बुद्धि से ब्राह्मण को वस्त्र और अलङ्कार आदि देकर ब्राह्मण से प्रेत के लिये तिलाञ्जलि दिलावे—'अमुकगोत्राय अमुकशर्मणे विष्णुरूपिणे प्रेताय अयं तिलतोयाञ्जलिः' इस मन्त्र से । विप्र के न मिलने पर स्वयं दे ।

ततो विप्रान्वाचयेत्—अनेन नारायणबलिकर्मणा भगवान्विष्णुरिमममुकं प्रेतं शुद्धमपापमहं करोत्विति । काम्यप्रयोगेऽस्मिन्प्रयोगे च संकल्पे नामगोत्रोच्चारे च विशेषः स्पष्ट एव । पूर्वत्र काश्यपगोत्र देवदत्तप्रेतेत्याद्युच्चारः । अत्र तु

गोत्रनामज्ञानसत्त्वाद् दुर्मरणेन मृतस्य यन्नामगोत्रं तदेवोच्चारयेदिति संकल्पविशेषेऽपि हेतुः स्पष्ट एवेति। इति दुर्मरणे और्ध्वदेहिकाधिकारार्थं नारायणबलेः प्रयोगः।

इसके बाद ब्राह्मणों से कहवावे कि इस नारायणबलि कर्म से भगवान् विष्णु इस अमुक प्रेत को शुद्ध, निष्पाप और योग्य करें। काम्य प्रयोग में और इस प्रयोग में संकल्प तथा नाम गोत्र के उच्चारण में विशेष स्पष्ट ही है। पहले में 'काश्यपगोत्र देवदत्त प्रेत' इत्यादि का उच्चारण करे। इसमें तो नाम और गोत्र के ज्ञान रहने से दुर्मरण से मरे हुए का जो नाम और गोत्र हो उसी का उच्चारण करे, ऐसा संकल्प विशेष में भी कारण स्पष्ट ही है। यह दुर्मरण में और्ध्वदेहिक के अधिकार के लिये नारायणबलि का प्रयोग है।

## अथ सर्पहते व्रतम्

प्रतिमासं शुक्लपञ्चम्याम् उपवासं नक्तं वा कृत्वा पिष्टमयं नागं पञ्चफणमनन्तवासुकिशङ्खपद्मकम्बलकर्कोटकाश्वतरधृतराष्ट्रशङ्खपालकालियतक्षककपिलेति द्वादशनामभिर्द्वादशमासेषु संपूज्य पायसेन विप्रान् संभोज्य वत्सरान्ते हेमनागं प्रत्यक्षां गां च दत्त्वा नारायणबलिपूर्वकं दाहाशौचादिकं कार्यम्। अथवा 'नमोऽस्तु सर्पेभ्य इति तिस्र आज्याहुतीर्जुहुयात्।

पञ्चम्यां पन्नगं हैमं स्वर्णेनैकेन कारयेत्।
क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत्।
प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुना॥ इति।

ततो नारायणबल्यादि।

प्रतिमास शुक्ल पक्ष की पञ्चमी में उपवास या नक्तव्रत करके आटे का पांच फणा वाला नाग बनाकर अनन्त-वासुकी-शङ्ख-पद्म-कम्बल-कर्कोटक-अश्वतर-धृतराष्ट्र-शङ्खपाल कालिय-तक्षक-कपिल, इन बारह नामों से बारहों मास में पूजन कर ब्राह्मणों को खीर खिलाकर वर्ष के अन्त में सोने का नाग और प्रत्यक्ष गाय देकर नारायणबलि करके दाह और आशौच आदि करे। या 'नमोऽस्तु सर्पेभ्यः' इस मन्त्र से घृत की तीन आहुति दे। पञ्चमी में एक अशर्फी भर सोने का नाग बनवाकर उसे पात्र में रख दूध घी से पूजकर ब्राह्मण को देवे। शंकर भगवान् ने सांप से काटे हुए का यही प्रायश्चित्त कहा है। इसके अनन्तर नारायणबलि आदि करे।

## अथ पालाशप्रतिकृतिदाहादिविधिः

तत्र देशान्तरमरणे पराकद्वयमष्टौ कृच्छ्रान् वा कृत्वास्थीनि दहेत्। अस्थ्नां चाण्डालश्वादिस्पर्शे पञ्चगव्योदकादिभिः प्रक्षाल्य दहेत्। यस्यास्थीनि सर्वथा न लभ्यन्ते तस्य पर्णशरदाहः।

---

१. बौधायनसूत्रे—'सर्पमृतानां नमोऽस्तु सर्पेभ्य तिस्र आहुतीर्हुत्वा, उदके मृतानां समुद्राय वयुनाय हुत्वेति क्रियां कुर्यात्'। व्यासः—'सौवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम्। व्यासाय दत्त्वा विधिवत् पितुरानृण्यमाप्नुयात्॥' इति।

कुर्याद्दर्भमयं[1] प्रेतं कुशैस्त्रिशतषष्टिभिः ।
पालाशीभिः समिद्भिर्वा संख्या चैवं प्रकीर्तिता ॥

तत्र भूमौ कृष्णाजिनमास्तीर्य तत्र शरं दक्षिणायतं निवेश्य तत्र पलाशवृन्तानि न्यसेत्—शिरसि चत्वारिंशत्, ग्रीवायां दश, बाह्वोः प्रत्येकं पञ्चाशत्, एवं शतम् । करांगुलीषु दश, उरसि विंशतिः, जठरे त्रिंशत्, शिश्ने चत्वारि, अण्डयोस्त्रयं त्रयम्, ऊर्वोः प्रत्येकं पञ्चाशदेवं शतम् । जङ्घातः पादतलान्तं प्रत्येकं पञ्चदशैवं त्रिंशत्, पादांगुलीषु दश । एवं षष्ट्यधिकशतत्रयमितैर्दर्भैः पालाशसमिद्भिर्वा शरीरं कृत्वा ऊर्णावस्त्रेण बध्वा जलमिश्रपिष्टेन लिम्पेत् । शक्तौ सत्यां[2] नारिकेलादीन्यपि । तथा हि—

उसमें दूसरे देश में मरने पर दो पराक या आठ कृच्छ्र करके अस्थियों को जलावे । चाण्डाल और कुत्ता आदि से अस्थियों के स्पर्श होने पर पञ्चगव्य-जल आदि से प्रक्षालन करके जलावे । जिसकी हड्डी किसी तरह न मिले उसका पर्णशरदाह करे । कुश का प्रेत ३६० कुशों से बनाकर या पालाश की समिधाओं से बनावे, संख्या यही कही गई है । जमीन पर काला मृगचर्म बिछाकर उस पर दक्षिण की ओर लम्बे शर को रखकर उसपर पलाश के पत्तों को रक्खे । सिर में ४०, गर्दन में १०, प्रत्येक बाहु में ५०, इस प्रकार सौ हुए । हाथ की अङ्गुलियों में १०, छाती में २०, पेट में ३०, लिङ्ग में ४, अण्डकोश में ३-३, प्रत्येक ऊरु में ५०, इस तरह सौ हुए । जांघ से पैर के तलुए तक प्रत्येक के १५ इस तरह ३०, पैर की अङ्गुलियों में १० । इस प्रकार ३६० कुशों से या पलाश की समिधा से शरीर बनाकर ऊन के वस्त्र से बांधकर जल मिले आटे से लेप करे । शक्ति रहने पर नारियल आदि भी लगावे । वह इस प्रकार—

शिरसि नारिकेलफलं वर्तुलालाबुं वा, ललाटे कदलीपत्रम्, दन्ते दाडिमबीजानि, कर्णयोः कङ्कणं ब्रह्मपत्रं वा, चक्षुषोः कपर्दौ २, नासिकायां तिलपुष्पम्, नाभावब्जम्, स्तनयोर्जम्बीरफलद्वयम्, वाते मनःशिलाम्, पित्ते हरितालम्, कफे समुद्रफेनम्, रुधिरे मधु, पुरीषे गोमयम्, मूत्रे गोमूत्रम्, रेतसि पारदम्,

---

१. यह षट्त्रिंशन्मत का वचन है । दर्भादि से पुत्तल का निर्माण अस्थि के अलाभ में है, जैसा छन्दोगपरिशिष्ट में कहा है—'विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा । दाहयेद् बर्हिषाऽऽच्छाद्य पात्रन्यासादि पूर्ववत् ॥ अस्थ्नामलाभे पार्णानि शकलान्युक्तयावृता । दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥' भविष्य में पुत्तलनिर्माण की विधि—'चत्वारिंशच्छिरःस्थाने ग्रीवायां तु दशैव तु । बाह्वोश्चैव शतं दद्याद् विंशतिं च तथोरसि ॥ उदरे विंशतिं दद्यात् त्रिंशतं कटिदेशयोः । ऊर्वोश्चैव शतं दद्यात् त्रिंशतं जानुजङ्घयोः ॥ पादाङ्गुलीषु दश वै एषा च प्रेतकल्पना ।' इति ।

२. यज्ञपार्श्वः—'मस्तके नारिकेरं तु अलाबुं तालुके तथा । पञ्चरत्नं मुखे न्यस्य जिह्वायां कदलीफलम् ॥ चक्षुषोश्च कपर्दौ द्वौ नासिकायां तु कालकम् । कर्णयोर्ब्रह्मपत्राणि केशे वटप्ररोहकाः ॥ नालकं कमलानां तु अन्त्रस्थाने विनिक्षिपेत् । मृत्तिका तु वसां धातुर्हरितालकगन्धकौ ॥ शुक्रे तु पारदं दद्यात् पुरीषे पित्तले तथा । सन्धीषु तिलपिष्टं तु मांसे स्याद्यवपिष्टकम् ॥ मधु स्याल्लोहितस्थाने त्वचास्थाने मृगत्वचा । स्तनयोर्जम्बीरे देये नासायां शतपत्रकम् ॥ कमलं नाभिदेशे स्याद् वृन्ताके वृषणाश्रिते । लिङ्गे च रक्तमूलं तु परिधानं दुकूलकम् ॥ गोमूत्रं गोमयं गन्धं सर्वौषध्यादि सर्वतः ।' इति ।

वृषणयोर्वृन्ताकद्वयम्, शिश्ने गृञ्जनम्, केशेषु वनसूकरसटा वटप्ररोहा वा, लोमसु ऊर्णाम्, मांसे माषपिष्टलेपः, पञ्चगव्यः पञ्चामृतैश्च सर्वतः सिञ्चनम्। पुनर्नो असुं० असुनीते० इत्यृग्भ्यां प्राणप्रवेशं भावयेत् । यद्वा यत्तेयममिति सूक्तेन। शुक्रमसीति पारदं क्षिप्त्वा अक्षीभ्यामिति शरीरं स्पृशेत् ।

सिर में नारियल का फल या गोलकी लौकी, ललाट में केले का पत्ता, दांत में दाडिम के बीज, कानों में कङ्कण या ब्रह्मपत्र, आंखों में कौडी २ नाक में तिल का फूल, नाभि में कमल, स्तनों में दो जंबीर फल, वात में मैनसिल, पित्त में हरताल, कफ में समुद्रफेन, खून में मधु, पाखाने में गोबर, पेशाब में गोमूत्र, वीर्य में पारा, दोनों अण्डकोश में दो बैंगन, लिङ्ग में गजरा, केशों में वन सूकर की सटा या बड़ की जटा, रोमों में ऊन, मांस में उर्द का लेप और पञ्चगव्य-पञ्चामृत से सब अङ्गों का सिंचन करे। 'पुनर्नो असुं०' 'असुनीते०' इन दो ऋचाओं से प्राणप्रवेश की भावना करे। अथवा 'यत्तेयम्' इस सूक्त से प्राणप्रवेश की भावना करे। 'शुक्रमसि' इस मन्त्र से पारा डालकर 'अक्षीभ्यां' इससे शरीर का स्पर्श करे।

शरीरं स्नापयित्वा चन्दनमनुलिप्य वस्त्रोपवीते परिधाप्य अयं स देवदत्त इत्यभिमृश्य इदं चास्योपासनमिति ध्यात्वा विधिवद्दाहादि कार्यम्। अत्राहिताग्नेरस्थिदाहे पर्णशरदाहे वा दशाहमाशौचमनाहिताग्नेस्त्र्यहमित्यादि[1] प्रागुक्तमनुसन्धेयम्। द्वादशाब्दादिप्रतीक्षोत्तरं पर्णशरदाहादि क्रियते चेत्तदा[2] त्रिंशत्कृच्छ्राणि चान्द्रायणत्रयं वा कृत्वा कार्यम्।

शरीर को नहलाकर चन्दन का अनुलेपन कर वस्त्र और यज्ञोपवीत पहिनाकर यह वह देवदत्त है कहकर स्पर्श करके यह इसकी उपासना है ऐसा ध्यान कर विधिवत् दाह आदि करे। इसमें आहिताग्नि के अस्थिदाह या पर्णशरदाह में दस दिन का आशौच है और अनाहिताग्नि के तीन दिन का इत्यादि पूर्वोक्त का अनुसन्धान करे। यदि बारह वर्ष की प्रतीक्षा करने के बाद पर्णशरदाह आदि किया जाय तब तीस कृच्छ्र या तीन चान्द्रायण करके करना चाहिये।

### अथातीतप्रेतसंस्कारकालः

प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत्।
आशौचमध्ये संस्कारे दिनं शोध्यं तु संभवे॥

---

१. अनाहिताग्नि का अस्थिदाह या पर्णशरदाह करने पर ब्रह्मपुराण में त्रिरात्राशौच कहा है—'अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयम्। तदभावे पलाशानां वृन्तैः कार्यः पुमानपि॥ वेष्टितव्यस्तथा यत्नात् कृष्णसारस्य चर्मणा। ऊर्णासूत्रेण बध्वा तु प्रलेप्तव्यो यवैस्तथा॥ सुपिष्टैर्यवसम्मिश्रैर्दग्धव्यश्च तथाग्निना। असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः॥ एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्।' इति।

२. वृद्धमनुः—'प्रोषितस्य तथा कालो गतश्चेद् द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत्॥' ग्रह्यकारिकायाम्—'तस्य पूर्ववयस्कस्य विंशत्यब्दोर्ध्वतः क्रियाः। ऊर्ध्वं पञ्चदशाब्दात्तु मध्यमे वयसि स्मृता॥ द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता। चान्द्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः॥ कुशैः प्रतिकृतिं दग्ध्वा कार्या शौचादिका क्रिया।' पराशरः—'देशान्तरगतो नष्टस्तिथिर्न ज्ञायते यदि। कृष्णाष्टमी ह्यमावास्या कृष्णा चैकादशी च या॥ उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत्।' यह वचन मास की जानकारी रहने पर है।

दशाहोत्तरं तु दिनं संशोध्यैव ग्राह्यम्। तत्र वत्सरादूर्ध्वं[1] क्रियमाणप्रेतकर्मण्युत्तरायणमेव श्रेष्ठम्। तत्रापि कृष्णपक्ष एव। तत्र नन्दात्रयोदशीचतुर्दशीदिनक्षयान् वर्जयेत्। शुक्रशनिवारौ वर्ज्यौ। भौमवारोऽपि वर्ज्य इत्येके। नक्षत्रेषु भरणीकृत्तिकार्द्राश्लेषामघाज्येष्ठामूलं धनिष्ठोत्तरार्धं शततारकादिचतुष्टयं चेति नक्षत्राणि। त्रिपुष्करयोगश्चेत्यतिदुष्टानि सर्वथा त्यजेत्।

प्रत्यक्ष शव के संस्कार में दिन का शोधन नहीं करे। आशौच के मध्य में सम्भव हो तो दिन का शोधन करे। दस दिन के बाद तो दिन का संशोधन करके ही ग्रहण करे। इसमें वर्ष भर के बाद किये जाने वाले प्रेतकर्म में उत्तरायण ही उत्तम है। उसमें भी कृष्णपक्ष हीं श्रेष्ठ है। उसमें नन्दा ( प्रतिपदा-षष्ठी-एकादशी ) तिथि, त्रयोदशी, चतुर्दशी और दिनक्षय का त्याग करे। शुक्र और शनि का वर्जन करे। किसी एक का कहना है कि मङ्गलवार भी त्याज्य है। नक्षत्रों में भरणी-कृत्तिका-आर्द्रा-आश्लेषा-मघा-ज्येष्ठा-मूल-धनिष्ठा का उत्तरार्ध, तथा शतभिषा से चार नक्षत्र और त्रिपुष्कर योग, ये अति दुष्ट हैं, इनका सर्वथा त्याग करे।

कृत्तिकापुनर्वसूत्तराफल्गुनीविशाखोत्तराषाढापूर्वाभाद्रपदा चेति त्रिपादनक्षत्राणि। द्वितीया सप्तमी द्वादशी च तिथिः कुजशनिरविवाराश्चेति त्रयाणां योगे त्रिपुष्करः[2]। कैश्चिद्रविस्थाने गुरुवार उक्तः। एतेष्वेव तिथिवारेषु मृगचित्राधनिष्ठायोगे द्विपुष्करः। त्रिपुष्करयोगो वृद्धौ लाभे नष्टे हृते मृतौ च त्रिगुणफलदः। द्विपुष्करो द्विगुणफलदः। तेन प्रेतकार्ये द्वावपि त्याज्यौ। द्वयोर्योगे द्विपुष्कर इति कश्चित्।

कृत्तिका, पुनर्वसु, उत्तराफल्गुनी, विशाखा, उत्तराषाढा और पूर्वाभाद्रपदा, ये त्रिपादनक्षत्र हैं। द्वितीया, सप्तमी और द्वादशी तिथि, मङ्गल शनि और रविवार इन तीनों के योग में त्रिपुष्कर होता है। किसी ने रवि की जगह गुरुवार कहा है। इन्हीं तिथि और वारों में मृगशिर, चित्रा और धनिष्ठा के योग में द्विपुष्कर योग होता है। त्रिपुष्करयोग, वृद्धि में, लाभ में, नष्ट हो जाने में, हरण और मरण में तिगुना फल देने वाला होता है। द्विपुष्कर योग दुगुना फल देने वाला है। इससे प्रेत कार्य में इन दोनों का त्याग करे। कोई दो के योग में द्विपुष्कर योग कहते हैं।

गुरुशुक्रास्तपौषमासमलमासा वैधृतिव्यतीपातपरिघयोगाः विष्टिः करणं [3]चतुर्थाष्टमद्वादशचन्द्रश्चेत्यपि सर्वथा त्यजेत्। रोहिणीमृगपुनर्वसुपूर्वोत्तराफल्गुनी-

---

१. गार्ग्यः—'संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि। प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम्॥ कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनक्षयम्।' ज्योतिर्नारदः—'चतुर्दशीं तिथिं नन्दां भद्रां शुक्रारवासरौ। सितेज्ययोरस्तमयं द्व्यङ्घ्रिभं विषमाङ्घ्रिभम्॥ शुक्लपक्षं च संत्यज्य पुनर्दहनमुत्तमम्। वसूत्तरार्धतः पञ्चनक्षत्रेषु त्रिजन्मसु॥ पौष्णब्रह्मर्क्षयोश्चैव दहनात्कुलनाशनम्।' इति।

२. ज्योतिषे—'त्रिपादर्क्षं तिथिर्भद्रा भौमेज्यरविभिः सह। तदा त्रिपुष्करो योगो द्वयोर्योगे द्विपुष्करः॥' इति।

३. वाराहे—'चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत्। प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा॥ करणे विष्टिसंज्ञे च शनैश्चरदिने तथा। त्रयोदश्यां विशेषेण जन्मताराश्रये तथा॥' जन्मदशमैकोनविंशानि जन्मताराः। विश्वप्रकाश में निषिद्धभद्रादि का दान कहा है—'भद्रायां भूमिदानं

चित्राविशाखाऽनूराधापूर्वोत्तराषाढाधनिष्ठेति किंचिद्दुष्टानि संभवे त्यजेत् । भौमवारोऽपि त्याज्य इत्येके । कर्तुस्तिसृषु जन्मतारासु प्रत्यरितारायां च पर्णशरादिदाहो नेष्टः । तथा चार्कगुरुचन्द्रवारा अश्विनीपुष्यहस्तस्वातीश्रवणभानि च प्रशस्तानि । मध्यमानि सर्वथा त्याज्यानि चोक्तानि ।

गुरु-शुक्र का अस्त, पौषमास, मलमास, वैधृति, व्यतीपात, परिघयोग, भद्रा और करण; चौथा, आठवां और बारहवां चन्द्रमा सर्वथा त्याज्य है। रोहिणी, मृगशिर, पुनर्वसु, पूर्वा-उत्तरा-फल्गुनी, चित्रा, विशाखा, अनूराधा, पूर्वा-उत्तराषाढ़ा और धनिष्ठा, ये कुछ दुष्ट हैं, सम्भव हो तो इनका त्याग कर दे। कोई कहते हैं कि मङ्गलवार भी त्याज्य है। कर्ता का तीनों जन्मताराओं में तथा प्रत्यरितारा में पर्णशर आदि से दाह करना अनिष्टकर है। इसी प्रकार रवि-बृहस्पति-सोमवार और अश्विनी-पुष्य-हस्त-स्वाती-श्रवण नक्षत्र, ये प्रशस्त हैं। मध्यम नक्षत्र और सर्वथा त्याज्य नक्षत्र कहा है।

नन्दायां शुक्रवारे चतुर्दश्यां त्रिजन्मताराप्रत्यरितारासु चैकोद्दिष्टश्राद्धमतिनिन्द्यम्। साक्षादेकादशाहे[1] न कोऽपि निषेधः। अस्य निषिद्धनक्षत्रादेरपवादः—

युगमन्वादिसंक्रान्तिदर्शे च प्रेतकर्मणि ।
पुनःसंस्कारादिकेऽपि नक्षत्रादि न शोधयेत् ॥
गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे ।
नातीतः पितृमेधः स्याद् गयागोदावरीं विना ॥

इति पुनः संस्कारकालः ।

नन्दा, शुक्रवार, चतुर्दशी, त्रिजन्मतारा और प्रत्यरिताराओं में एकोद्दिष्टश्राद्ध अत्यन्त निन्दित है। साक्षात् एकादशाह में कोई भी निषेध नहीं है। इस निषिद्ध नक्षत्र आदि का यह अपवाद है—युगादि, मन्वादि, संक्रान्ति, दर्शश्राद्ध, प्रेतकर्म और पुनःसंस्कार में नक्षत्र आदि का शोधन नहीं करे। गया गोदावरी को छोड़कर गुरु-शुक्र की मूढ़ता में और पौषमास एवं मलमास में बीती हुई प्रेतक्रिया नहीं होती है। पुनः संस्कार का समय समाप्त।

## अथ पर्णशरदाहोत्तरं देहलाभे विचारः

साग्निकस्य पर्णशरदाहे कृते पश्चाद्देहलाभे[2] पर्णशरदाहीयार्धदग्धकाष्ठैस्तं दहेत् । तादृशकाष्ठालाभे लौकिकाग्निना दग्ध्वा तदस्थीनि महाजले क्षिपेत् । एवमन्येषां निरग्नीनामपि पर्णशरदाहोत्तरं शरीरलाभेऽस्थिलाभे वा योज्यम् ।

---

स्यात् त्रि॰ादर्क्षे हिरण्यदः । वारेषु तत्तद् वर्णं तु वासोदानं विधीयते ॥ धनिष्ठापञ्चकमृते पञ्चरत्नानि दापयेत् । एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् ॥ नवषट्त्रिपलं वापि दद्याद् विप्राय शक्तितः ।' इति ।

१. बैजवापः—'प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि । नक्षत्रतिथिवारादि शोधनीयं न किञ्चन ॥ युगमन्वादिसंक्रान्तिदर्शे प्रेतक्रिया यदि । दैवादापतिता तत्र नक्षत्रादि न शोधयेत्॥' इति ।

२. मदनरत्न में ब्रह्मपुराण का वचन है—'अथ पर्णशरे दग्धे पात्रन्यासे कृते सति । गतेष्वग्निषु तद्देहो यद्यूर्ध्वं लभ्यते क्वचित् ॥ तदार्धदग्धकाष्ठानि तानि निर्मन्थ्य तं दहेत् । यद्यर्धदग्धकाष्ठं तु तदीयं वै न लभ्यते ॥ तदा तदस्थिखण्डं तु निक्षिप्तव्यं महाजले ।' इति ।

साग्निक के पर्णशरदाह के पश्चात् शरीर मिलने पर पर्णशरदाह वाली अधजली लकड़ी से उसको जलावे। वैसी लकड़ी के न मिलने पर लौकिक अग्नि से जलाकर उसकी हड्डियों को अगाध जल में फेंक दे। इसी प्रकार अन्य निरग्नियों का भी पर्णशरदाह के बाद शरीर मिलने पर या अस्थि के मिलने पर दाह की योजना करे।

## अथ जीवतोऽप्यौर्ध्वदेहिके कृते विचारः

अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकम्।
प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च ॥

अत्र पुनःसंस्कारादिप्रकारः[1] पूर्वार्धे उक्तः। आधानान्ते आयुष्मतीष्टिः। अनाहिताग्नेस्तु चरुः। भर्तरि जीवत्येव मरणवार्तां श्रुत्वा यदि स्त्रिया सहगमनं कृतं तदा तत्स्त्रीमरणमवैधमेव। ज्ञातमरणमेव हि सहगमने निमित्तं न तु मरण ज्ञानमात्रम्। अतस्तस्या भार्याया आत्मघातादिदोषप्रायश्चित्तं तत्पुत्रादिभिः कृत्वा नारायणबलिपूर्वकमौर्ध्वदेहिकं कार्यम्। भर्तुस्तु दाहाद्यौर्ध्वदेहिककरणनिमित्तमुक्तपुनःसंस्कारादि कार्यम्।

जीते हुए को मरा सुनकर जिसका और्ध्वदेहिक कर दिया गया हो वह स्मार्त प्रायश्चित्त करके अग्नि का आधान करे। इसमें पुनः संस्कार आदि का प्रकार पूर्वार्ध में कहा है। साग्निक आधान के अन्त में आयुष्मती इष्टि करे। अनाहिताग्नि का तो चरु है। पति के जीने में ही मरने की बात सुनकर यदि स्त्री ने सहगमन किया हो तब स्त्री का वह मरण अवैध ही है। क्योंकि जाना हुआ मरण ही सहगमन का निमित्त है, मरण का ज्ञानमात्र नहीं। इसलिये उसका पुत्रादि उस स्त्री का आत्मघात आदि दोष का प्रायश्चित्त करके नारायणबलि पूर्वक और्ध्वदेहिक कर्म करे। पति का तो दाह आदि और्ध्वदेहिक कर्म निमित्त कहा हुआ पुनः संस्कार आदि करे।

## अथ घटस्फोटविधिः

कचिज्जीवतोऽप्यन्त्यकर्म विहितम्। यथा प्रायश्चित्तानिच्छोः पतितस्य [2]घटस्फोटे। तथा हि—महापातकेनोपपातकेन वा पतितो यदि प्रायश्चित्तं न करोति तदा तं गुरूणां बान्धवानां राज्ञश्च समक्षमाहूय तत्पापं प्रकटीकृत्य तं पुनःपुनरुपादिशेत्—प्रायश्चित्तं कुरु स्वाचारं लभस्वेति। स यद्येवमपि नाङ्गीकरोति

---

१. वृद्धमनुः—'जीवन् यदि समागच्छेद् घृतकुम्भे निमज्ज्य तम्। उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥ द्वादशाहं व्रतचर्या त्रिरात्रमथवाऽस्य तु। स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥ अग्नीनाधाय विधिवद् व्रात्यस्तोमेन वा यजेत्। अथेन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥ इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः।' इति।

२. मनु ने कहा है—'पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ दासी घटमपां पूर्णं पर्यस्येत् प्रेतवत्तदा। अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह ॥' अपरार्क में वसिष्ठ की उक्ति है—'वेदविप्लावकशूद्रयाजकोत्तमवर्णवर्गपतितास्तेषां पात्रनिनयनमपात्रसंस्कारादकृत्स्नं पात्रमादाय दासोऽसवर्णपुत्रो वा बन्धुरसदृशो वा गुणहीनः सव्येन पादेन प्रवृत्ताग्रान् दर्भान् लोहितान् वोपस्तीर्यापः पूर्णपात्रमस्मै निनयेन्निनेतारं चास्य प्रकीर्णकेशा ज्ञातयोऽन्वालभेरन्नपसव्यं कृत्वा गृहेषु स्वैरमापद्येरन्नत ऊर्ध्वं तेन तं धर्मयेयुस्तद्धर्माणस्तं धर्मयन्तः।'—

तदा रिक्तादिनिन्द्यतिथौ सायाह्ने सपिण्डा बान्धवाश्च सम्भूय दासीहस्तेनानीतममेध्यकुत्सितजलादिपूर्णं घटं सर्वतो दास्याद्यन्वारम्भं कुर्वन्तो दास्या दासस्य वा वामपादेन न्युब्जं छिन्नाग्रदर्भेषु कारयित्वा दासीसहिता वदेयुरमुमनुदकं करोमीति नामग्रहणपूर्वकं प्राचीनावीतिनो मुक्तशिखाश्च सन्तः। ततोधिकारी कर्ता दाहवर्ज्यं जीवन्तमेवोद्दिश्य पिण्डोदकदानादिप्रेतकार्याण्येकादशाहान्तानि नाम्नैव कुर्यात्।

कहीं जीवितावस्था में भी अन्त्य कर्म का विधान है। जैसे प्रायश्चित्त करने की इच्छा न करने वाले पतित के घटस्फोट में। वह इस प्रकार है—महापातक से या उपपातक से पतित यदि प्रायश्चित्त नहीं करता है तब उसको गुरुओं बान्धवों और राजा के समक्ष बुलाकर उसके पाप को प्रकट करके उसको बार-बार उपदेश करे कि प्रायश्चित्त करो अपना आचार प्राप्त करो। यदि वह इस पर भी स्वीकार नहीं करता तब रिक्ता आदि निन्द्य तिथि में सायंकाल सपिण्ड और बान्धव इकट्ठे होकर दासी के हाथ से लाये हुए अपवित्र कुत्सित जल आदि से भरे घड़े के चारो ओर से दासी आदि स्पर्श करते हुए कटे हुये अग्र भाग वाले कुशों पर दासी या दास के बायें पैर से उस घड़े को न्युब्ज (औंधा) करवाकर दासी के सहित कहें कि 'इसको जलसम्बन्ध से रहित करता हूँ' इस तरह उसका नामग्रहण करते हुए अपसव्य और मुक्त शिखा होते हुए कहे। तदनन्तर अधिकारी कर्ता दाह को छोड़ जीते हुए इसके उद्देश से पिण्ड-जलदान आदि एकादशाहान्त प्रेतकर्मों को इसके नाम से ही करे।

मिताक्षरायां प्रेतकार्योत्तरं घटनिनयनमुक्तम्। एकाहमाशौचं सर्वेषाम्। यस्य घटस्फोटः कृतस्तेन सह सम्भाषणस्पर्शादिसंसर्गो न केनापि कार्यः। करणे पतिततुल्यता। घटस्फोटप्रयोजनं तु पूर्वार्धान्ते उक्तम्। घटस्फोटनिश्चयोत्तरं घटस्फोटदिनात्प्राक् पतितज्ञातीनां धर्मकार्येष्वनधिकार इति कश्चित्।

मिताक्षरा में प्रेत कार्य के बाद घट-निनयन कहा है। सब को एक दिन का आशौच होता है। जिसका घटस्फोट किया है उसके साथ बोलना, स्पर्श आदि का संसर्ग किसी को भी नहीं करना चाहिये। करने में वह पतित समान होता है। घटस्फोट का प्रयोजन तो पूर्वार्ध के अन्त में कहा है। कोई कहते हैं—घटस्फोट निश्चय के बाद घटस्फोट दिन से पहले पतित के ज्ञातियों का धर्म कार्यों में अधिकार नहीं होता।

## अथ कृतघटस्फोटस्य संग्रहविधिः

कृतघटस्फोटस्य पुंसोऽनुतापे तत्पापप्रायश्चित्तान्ते संग्रहविधिरुच्यते—तत्रादौ

---

—गौतम ने भी कहा है—'तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादिप्रेतकार्याणि कुर्युः, पात्रं चास्य विपर्यस्येयुर्दासः कर्मकरो वाऽवकरादमेध्यं पात्रमानीय दासीघटान् पूरयित्वा दक्षिणामुखः पदा विपर्यस्येदमुमनुदकं करोमीति नामग्राहं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा अप उपस्पृश्य ग्रामं प्रविशेयुः'। शङ्खः—'तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनःपुनराचारं लभस्वेति स यद्येवमप्यनवस्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येत्।' इति।

शुद्धिपरीक्षा । कृतप्रायश्चित्तो ज्ञातिसमक्षं गोभ्यस्तृणभारं दद्यात् । गोभिस्तृणे[1]भक्षिते शुद्धिः । भक्षणाभावे पुनः प्रायश्चित्तं चरेत् ।

एवं निश्चितसंशुद्धौ समानेयुर्नवं घटम् ।
हैमं वा मृन्मयं वापि पवित्रजलपूरितम् ॥

ततः सपिण्डास्तं घटं संस्पृश्याभिमन्त्र्य तज्जलैः पावमानीभिरापोहिष्ठे-त्यादिभिस्तरत्समन्दीभिश्च पापिनमभिषिच्य तेन सह सर्वे स्नात्वा तं जलघट-मस्मै दद्युः ।

घटस्फोट किये हुए पुरुष का पश्चात्ताप करने पर उसके पाप के प्रायश्चित्त के अन्त में संग्रह की विधि कहता हूँ—इसमें आदि में शुद्धि की परीक्षा होती है । प्रायश्चित्त करके ज्ञाति के समक्ष गायों को तृण का बोझ दे । गायों के तृण खा लेने पर उसकी शुद्धि जाननी चाहिये । नहीं खाने पर फिर प्रायश्चित्त करे । इस प्रकार शुद्धि का निश्चय होने पर सुवर्ण या मिट्टी का नया घड़ा ले आवे उसे पवित्र जल से भर कर उस घड़े को सपिण्डलोग स्पर्श और अभिमन्त्रण करके उस जल से पावमानी, आपोहिष्ठा इत्यादि से तथा तरत्समन्दी ऋचाओं से पापी का अभिषेक करके उसके साथ स्नान कर उस जल के घड़े को इसे दे दे ।

स च शान्ता द्यौः शान्ता पृथिवी शान्तं विश्वमन्तरिक्षं यो रोचनस्तमिह गृह्णामीति यजुर्भिस्तं घटं गृह्णीयात् । ततस्तदुदकं तेनैव साकं सर्वे पिबेयुः । ततः स कूश्माण्डमन्त्रैराज्यहोमं कृत्वा सुवर्णं गां च दद्यात् । ततस्तस्य जातकर्मादिव्रत-बन्धान्ता विवाहान्ता वा संस्काराः कार्याः । एवं कृते शुद्धेन तेन संस्पर्शसंभोज-नादिव्यवहारं कुर्यात् । एवमुपपातके महापातके च कृतघटस्फोटस्य शुद्धिर्ज्ञेया । इति संक्षेपतः कृतघटस्फोटशुद्धिः ।

वह 'शान्ता द्यौः शान्ता पृथिवी शान्तं विश्वमन्तरिक्षं यो रोचनस्तमिह गृह्णामि' इस यजुर्मन्त्र से उस घड़े को ग्रहण करे । तदनन्तर उस जल को उस ( पापी ) के साथ सब ज्ञाति वाले पियें । इसके बाद वह कूष्माण्ड मन्त्रों से घी का होमकर सुवर्ण और गाय का दान करे । तदनन्तर उसका जातकर्म आदि यज्ञोपवीत पर्यन्त या विवाह पर्यन्त संस्कारों को करे । इस प्रकार शुद्ध करने पर उसके साथ स्पर्श और भोजन आदि का व्यवहार करे । इसी प्रकार उपपातक और महापातक में भी घटस्फोट किये हुए की शुद्धि जाननी चाहिये । घटस्फोट किये हुए की संक्षिप्त शुद्धि समाप्त ।

## अथ अन्त्येष्टिनिर्णयः

वन्दे श्रीमदनन्ताभिधगुरुचरणौ सतां मताचरणौ ।
जननीमथान्नपूर्णां सम्पूर्णां सद्गुणैर्वन्द्याम् ॥
श्रीविठ्ठलं नमस्कृत्य विघ्नकक्षहुताशनम् ।
अन्त्येष्टिनिर्णयं वक्ष्ये सर्वशाखोपयोगिनम् ॥

१. मिताक्षरायाम्—'घटेऽपवर्जिते ज्ञातिमध्यस्थो यवसं गवाम् । प्रदद्यात् प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया ॥' इति ।

सज्जनों के मत का आचरण करने वाले श्री अनन्तोपाध्याय नामक पिता के चरणों और सद्गुणों से पूर्ण एवं वन्दनीय माता अन्नपूर्णा को प्रणाम करता हूँ। विघ्नरूप कक्ष ( तृणपुंज ) के अग्निस्वरूप श्री विठ्ठल भगवान् को प्रणाम कर सब शाखाओं के उपयोगी अन्त्येष्टि का निर्णय कहता हूँ।

तत्रान्त्यक्रियाधिकारिणः श्राद्धारम्भे एवोक्ताः। सर्वाभावे [1]धर्मपुत्रः कार्यः।

उसमें अन्त्यक्रिया के अधिकारियों को श्राद्ध के प्रारम्भ में ही कहा है। सब अधिकारियों के अभाव में धर्मपुत्र बनावे।

## अथ प्रायश्चित्तं दशदानानि च

तत्र पुत्राद्यधिकारिणा पित्रादिकमासन्नमरणं दृष्ट्वा सार्धाब्दादिप्रायश्चित्तं मोक्षधेन्वादिदानानि च तेन कारणीयानि स्वयं वा तमुद्दिश्य कर्तव्यानि। तत्र प्रायश्चित्तप्रयोगः प्रायश्चित्तप्रकरणे द्रष्टव्यः। शक्तौ सत्यां प्रायश्चित्तान्ते [2]दशदानानि कार्याणि। तत्र—

गवामङ्गेषु तिष्ठन्ति इति गोदानमन्त्रः।

सर्वभूताश्रया भूमिर्वराहेण समुद्धृता।
अनन्तसस्यफलदा अतः शान्ति प्रयच्छ मे॥ इति भूमेः।
महर्षेर्गोत्रसम्भूताः काश्यपस्य तिलाः स्मृताः।
तस्मादेषां प्रदानेन मम पापं व्यपोहतु॥ इति तिलानाम्।

हिरण्यगर्भगर्भस्थमिति हिरण्यस्य।

कामधेनुषु सम्भूतं सर्वक्रतुषु संस्थितम्।
देवानामाज्यमाहारमतः शान्ति प्रयच्छ मे॥ इत्याज्यस्य।
शरणं सर्वलोकानां लज्जाया रक्षणं परम्।
सुवेषधारिवस्त्र त्वमतः० ॥ इति वस्त्रं देयम्।

उसमें पुत्र आदि अधिकारी मरणासन्न पिता आदि को देखकर डेढ़ वर्ष आदि प्रायश्चित्त और मोक्षधेनु आदि के दानों को उससे करावे या उसके उद्देश से स्वयं करे। उसमें प्रायश्चित्त का

---

१. व्यास ने कहा है—'अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नामसंकीर्तनस्य च॥' इस वचन में यादृक् तादृक् ( जैसा-तैसा ) कहा है फिर भी महारोगी और पतितादि से भिन्न को ही धर्मपुत्र बनाना चाहिये।

२. जातूकर्ण्य ने दशदान में वस्तुओं का इस प्रकार निर्देश किया है—'उत्क्रान्त्यादीनि दानानि दश दद्यान्मृतस्य तु। गोभूतिलहिरण्याज्यवासो धान्यं गुडानि च। रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात्॥ एतानि दश दानानि नराणां मृत्युजन्मनोः। कुर्यादभ्युदयार्थं तु प्रेतेऽपि हि परत्र वै॥' ब्रह्मपुराणे—'ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रैर्द्विजाय तु। सहिरण्यं च यो दद्याच्छ्रद्धावित्तानुसारतः॥ सर्वपापविशुद्धात्मा लभते गतिमुत्तमाम्। उत्क्रान्तिवैतरण्यौ च दश दानानि चैव हि॥ प्रेतेऽपि कृत्वा तं प्रेतं शवधर्मेण दाहयेत्।'—

गरुडपुराण में आठ दान कहा है—'तुलसीसन्निधौ कृत्वा शालग्रामशिलां तथा। तिला लोहं हिरण्यं च कार्पासं लवणं तथा॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम्।' इति।

प्रयोग प्रायश्चित्त प्रकरण में देखें। शक्ति होने पर प्रायश्चित्त के अन्त में दस दानों को करे। उसमें— 'गवामङ्गेषु तिष्ठन्ति०' यह गोदान का मन्त्र है। सब जीवों की आश्रयभूता भूमि वराह से उद्धृत और अनन्त धान्य फल देने वाली हो इसलिये मुझे शान्ति प्रदान करो, इस अर्थ का 'सर्वभूताश्रया भूमिः०' यह भूमि दान का मन्त्र है। महर्षि काश्यप के गोत्र से तिल उत्पन्न हुए हैं इसलिये इनके दान से तिल मेरे पापों को दूर करे, इस अर्थ का 'महर्षेर्गोत्रसम्भूता' यह तिल दान का मन्त्र है। 'हिरण्यगर्भगर्भस्थं' यह सुवर्णदान का मन्त्र है। कामधेनु से उत्पन्न और सब यज्ञों में स्थित देवताओं का भोजन घृत है अतः मुझे शान्ति दे, इस अर्थ का 'कामधेनुसमुद्भूतं' यह घृत का मन्त्र है। सब लोगों का शरण और लज्जा का अत्यन्त रक्षक सुन्दर वेष धारण कराने वाला वस्त्र हो तू मुझे शान्ति प्रदान करो, इस आशय के 'शरणं सर्वलोकानां' इस मन्त्र से वस्त्र दे।

सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत्।
प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे ॥ इति धान्यम्।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः।
मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा ॥ इति गुडस्य।
प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा।
शिवनेत्रोद्भवं रूप्यमतः० ॥ इति रजतस्य।
यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना।
शंभोः प्रीतिकरं नित्यमतः० ॥ इति लवणस्य।

भूम्यादिप्रमाणानि तु जननशान्तिप्रकरणे उक्तानि। प्रायश्चित्तादिकर्मसु विष्ण्वादिनामकीर्तनात्साङ्गता।

धान्य सर्वदेवमय है और सब की उत्पत्ति करने वाला है। तथा प्राणियों के जीने का उपाय है इसलिये मुझे शान्ति दे, इस अर्थ का 'सर्वदेवमयं धान्यं०' यह धान्यदान का मन्त्र है। उसी प्रकार रसों में सर्वश्रेष्ठ ऊख का रस कहा है इसलिये हे गुड! मुझे तू सर्वदा उत्कृष्ट लक्ष्मी को दो, इस अर्थ का 'तथा रसानां प्रवरः०' यह गुड का मन्त्र है। जिससे पितरों, विष्णु और शंकर की सर्वदा प्रीति होती है तथा जो शिवनेत्र से उत्पन्न है अतः चान्दी मुझे शान्तिदे, इस अर्थ का 'प्रीतिर्यतः पितॄणां च०' यह चांदी का मंत्र है। जिससे सब अन्नरस नमक के विना अच्छे लगते तथा शङ्कर का प्रीतिदायक है इसलिये मुझे शान्ति दे, इस अर्थ का 'यस्मादन्नरसाः०' यह लवण का मन्त्र है। भूमि आदि के प्रमाण तो जन्मशान्ति प्रकरण में कहा है। प्रायश्चित्त आदि कर्मों में विष्णु आदि के नामकीर्तन से साङ्गता होती है।

## अथ मरणसमये नामोच्चारणमहिमा

प्रायश्चित्ताद्यसंभवेऽपि मरणकाले विष्णुशिवनामकीर्तनमात्रात्सर्वपापक्षयो[1] मुक्तिश्चेति सर्वपुराणादिसिद्धान्तः। तथा च श्रीभागवते—

---

१. लिङ्गपुराणे—'कलौ रुद्रो महादेवः शंकरो नीललोहितः। प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः॥ ये तं विप्रास्तु सेवन्ते येन केनापि शंकरम्। कलिदोषं विनिर्जित्य प्रयान्ति परमं पदम्॥' अग्निपुराणे—'नास्ति श्रेयस्करं नृणां विष्णोराराधनात्परम्। युगेऽस्मिंस्तामसे घोरे यज्ञवेदविवर्जिते॥ कलौ कलिमलध्वंसं सर्वपापहरं हरिम्।' इति।

यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति ।
तेऽनेकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ इत्यादि ।

मुमूर्षुं पितरं पुत्रो यदि दानं प्रदापयेत् ।
तद्विशिष्टं गयाश्राद्धादश्वमेधशतादपि ॥

प्रायश्चित्त आदि के न करने पर भी मरने के समय विष्णु तथा शिव का नाम कीर्तन मात्र से सम्पूर्ण पापों का नाश और मुक्ति भी मिलती है यह सभी पुराण आदि का सिद्धान्त है। ऐसा ही श्रीमद्भागवत में कहा है—जिसके अवतार के गुण-कर्म का अनुकरण और नामों का जप जो प्राणान्त समय में विवश होकर करते हैं वे अनेक जन्म के पापों को तुरन्त नष्ट कर खुले वैकुण्ठ को प्राप्त करते हैं, उस जन्मरहित सत्य भगवान् की शरण में हूँ इत्यादि। यदि पुत्र मरते समय पिता से दान दिलावे तो वह गयाश्राद्ध और सौ अश्वमेध से बढ़ कर है।

## अथ तिलपात्रादिदानानि

तानि च तिलपात्रदानम् ऋणधेनुमोक्षधेनुपापधेनुवैतरणीधेनूत्क्रान्तिधेनुदानादीनि ।

व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः ।
पुण्यकालास्तथा सर्वे यदा मृत्युरुपस्थितः ॥
आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।
तदभावे तु गौरेव नरकोत्तारणाय वै ॥
शुक्लपक्षे दिवा भूमौ गङ्गायां चोत्तरायणे ।
धन्यास्तात मरिष्यन्ति हृदयस्थे जनार्दने ॥ इत्यादिवचनात् ।

मुमूर्षोर्दानादौ शक्त्यभावे पुत्रादिर्दद्यात् ।

वे दान ये हैं—तिलपात्र का दान, ऋणधेनु, मोक्षधेनु, पापधेनु, वैतरणीधेनु और उत्क्रान्तिधेनु आदि। जब मृत्यु उपस्थित हो तब व्यतीपात, संक्रान्ति, सूर्यग्रहण, तथा सभी पुण्य काल वैसे ही होते हैं। आसन्नमृत्यु पुरुष को बछड़ेसहित गौ पूर्ववत् देनी चाहिये। सवत्सा गौ के न रहने पर केवल गौ नरक से पार जाने के लिये दे। शुक्ल पक्ष में, दिन में, भूमि में, गङ्गातट पर और उत्तरायण, हे भाई हृदय में भगवान् के रहते जो मरेंगे वे धन्य हैं, इत्यादि वचन हैं। मुमूर्षु को दान आदि की शक्ति न रहने पर पुत्र आदि दान करे।

तत्र तिलपात्रदानविधिः—यथाशक्ति कांस्यपात्रे ताम्रपात्रे वा तिलान्क्षिप्त्वा सुवर्णं च प्रक्षिप्य 'मम जन्मप्रभृतिमरणान्तं कृतनानाविधपापप्रणाशार्थं तिलपात्रदानं करिष्ये' विप्रं संपूज्य 'मम जन्मप्रभृतिमरणान्तं कृतनानाविधपापनाशार्थमिदं तिलपात्रं ससुवर्णं सदक्षिणम् अमुकशर्मणे तुभ्यं संप्रददे'।

तिलाः पुण्याः पवित्राश्च तिलाः सर्वंकराः स्मृताः ।
शुक्ला वा यदि वा कृष्णा ऋषिगोत्रसमुद्भवाः ॥
यानि कानि च पापानि ब्रह्महत्यासमानि च ।
तिलपात्रप्रदानेन मम पापं व्यपोहतु ॥

न ममेति विप्रहस्ते जलं क्षिपेत् ।

तिलपात्रदान की विधि—शक्ति के अनुसार कांसे या तामे के पात्र में तिलों और सुवर्ण को रखकर 'मेरे जन्म से मरण पर्यन्त किये गये अनेक प्रकार के पापों के नाश के लिये तिल पात्र का दान करूँगा'। ब्राह्मण की पूजा करके 'मेरा जन्म से मरण पर्यन्त किये गये नाना प्रकार के पापों के नाश के लिये सुवर्ण और दक्षिणा के साथ यह तिलपात्र अमुक शर्मा आपको देता हूँ'। तिल पुण्य तथा पवित्र है। तिल सब कुछ करने वाला है। तिल शुक्ल हो या कृष्ण ऋषि गोत्र से उत्पन्न है। ब्रह्महत्या के समान जो कोई पाप हो वह तिलपात्र के दान से मेरे पाप को हटावे, मेरा नहीं है, ऐसा कहकर विप्र के हाथ में जल छोड़ दे।

पुत्रादिस्त्वस्य जन्मप्रभृत्यादिसंकल्पमस्य पापं व्यपोहत्विति मन्त्रं च वदेत् ।

ऐहिकामुष्मिकं यच्च सप्तजन्मार्जितं ऋणम् ।
तत्सर्वं शुद्धिमायातु गामेकां ददतो मम ॥ इति ऋणधेनुदानमन्त्रः ।

अन्यत्सर्वं सामान्यगोदानवत् । तद्विधिस्तु द्वितीयपरिच्छेदे उक्तः ।

मोक्षं देहि हृषीकेश मोक्षं देहि जनार्दन ।
मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम ॥ इति मोक्षधेनुमन्त्रः ।
आजन्मोपार्जितं पापं मनोवाक्कायकर्मभिः ।
तत्सर्वं नाशमायातु गोप्रदानेन केशव ॥ इति पापधेनुदानमन्त्रः ।

पुत्र आदि तो 'मेरे पिता के जन्म से लेकर' इत्यादि संकल्प और 'इनके पाप को हटा दे' यह मन्त्र पढ़े। इस जन्म या दूसरे जन्म का और जो सात जन्म का संचित ऋण है वह सब इस एक गौ के दान से शुद्ध हो जाय, यह ऋणधेनु दान का मन्त्रार्थ है। बाकी सब साधारण गोदान के समान है। इसकी विधि द्वितीय परिच्छेद में कहा है। हे हृषीकेश ! मोक्ष दीजिये। हे जनार्दन ! मोक्ष दीजिये। मोक्षधेनु के देने से भगवान् मुकुन्द मुझपर प्रसन्न हों। यह मोक्षधेनुदान का मन्त्रार्थ है। हे केशव ! जन्म से अब तक मन से, वाणी से और शरीर से जो पापार्जन किया है वह सब गोदान से नाश हो जाय। यह पापधेनुदान का मन्त्रार्थ है।

अथ वैतरणीविधिः—अद्येत्यादि 'अमुकस्य मम यमद्वारस्थितवैतरण्याख्यनद्युत्तारणार्थं गोदानं करिष्ये' विप्रं पादप्रक्षालनवस्त्रगन्धमाल्यादिभिरभ्यर्च्य तद्धस्ते शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टं चास्तु यच्छ्रेयस्तदस्तु यत्पापं तत्प्रतिहतमस्त्विति कृत्वा,

धेनुके त्वं प्रतीक्षस्व यमद्वारे महापथे ।
उत्तितीर्षुरहं देवि वैतरण्यै नमोस्तु ते ॥ इति धेनुं प्रार्थ्य,
विष्णुरूप द्विजश्रेष्ठ भूदेव द्विजपावन ।
तर्तुं वैतरणीमेतां कृष्णां गां प्रददाम्यहम् ॥

इति विप्रं प्रार्थ्य 'वैतरणीसंतारणार्थमिमां गां कृष्णवस्त्ररक्तमाल्याद्यलंकृतां यथाशक्ति दक्षिणायुतां तुभ्यमहं संप्रददे'।

यमद्वारे पथे घोरे घोरा वैतरणी नदी ।
तां तर्तुकामो यच्छामि कृष्णां वैतरणीं तु गाम् ॥

न ममेति विप्रहस्ते जलं क्षिपेत् । कृष्णाया अभावेऽन्यवर्णा देया । गोरभावे द्रव्यं देयम् । पुत्रादिर्दाता चेत्प्रथमे मन्त्रे उत्तितीर्षु रयमिति पठेत् । द्वितीये ततुं वैतरणीमस्येति तृतीये तां ततुंमस्येति ।

वैतरणीविधि—अद्येत्यादि कहकर 'अमुक मेरे यमराज के द्वार में स्थित वैतरणी नदी के पार उतरने के लिये गोदान करूँगा' । ब्राह्मण का पाद-प्रक्षालन, वस्त्र, गन्ध और माला आदि से पूजन कर उसके हाथ में 'शिवा आपः सन्तु' इससे जल, 'सौमनस्यमस्तु' इससे पुष्प, 'अक्षतं चारिष्टं चास्तु' इससे अक्षत देकर 'यच्छ्रेयस्तदस्तु, यत्पापं तत्प्रतिहतमस्तु' ऐसा कहकर हे गौ ! महामार्ग यमराज द्वार पर मेरी प्रतीक्षा करो । हे वैतरणि ! मैं तुझे पार करना चाहता हूँ आपको नमस्कार है । इस तरह धेनु की प्रार्थना कर हे विष्णुस्वरूप द्विजश्रेष्ठ ! द्विजों को पवित्र करने वाले भूदेव ! इस वैतरणी को पार करने के लिये काली गौ आप को देता हूँ इस मंत्र से ब्राह्मणकी प्रार्थना कर वैतरणी पार करने के लिये कृष्ण वस्त्र और लाल माला आदि से भूषित यथाशक्ति दक्षिणा से युक्त इस गौ को आपको मैं देता हूँ । यमराज के भयङ्कर द्वार पर भयङ्कर वैतरणी नदी है उसको पार करने की इच्छा से आपको काली वैतरणी गौ देता हूँ । मेरी नहीं है ऐसा कहकर ब्राह्मण के हाथ में जल छोड़े । काली गौ के अभाव में दूसरे वर्ण की गौ देवे । गौ के अभाव में द्रव्य दे । पुत्र आदि यदि दान दे तो प्रथम मन्त्र में 'उत्तितीर्षु रहं' की जगह 'उत्तितीर्षु रयं' ऐसा कहे । दूसरे मन्त्र में 'ततुं वैतरणीमस्य' ऐसा कहे । तीसरे में 'तां ततुंमस्य' ऐसा कहे ।

अथ उत्क्रान्तिधेनुः—अद्येत्यादि 'अमुकस्य सुखेन प्राणोत्क्रमणप्रतिबन्धकसकलपापक्षयद्वारा सुखेन प्राणोत्क्रमणाय यथाशक्त्यलंकृतामिमामुत्क्रान्तिधेनुं रुद्रदैवत्याममुकशर्मणे तुभ्यं संप्रददे' गवामंगेष्विति मन्त्रान्ते न ममेति वदेत् । धेन्वभावे द्रव्यं देयम् । उक्तप्रायश्चित्तादिदानान्तविधिमकृत्वा पित्रादिमरण पुत्रादिना प्रायश्चित्तं कृत्वा दाहादि कर्तव्यम् । दानान्येकादशाहे कार्याणि । पितुः पापाभावनिश्चये प्रायश्चित्तं नावश्यकम् । केचिदुत्क्रान्तिवैतरण्यौ च दशदानानि चैव हि मृतेऽपि कृत्वा तं प्रेतं दहेदित्याहुः । तुलसीसन्निधौ कुर्याच्छालग्रामशिलां तथा । केचित्तिललोहहेमकार्पासलवणभूमिधेनुसप्तधान्येत्यष्टदानान्याहुः । क्वचिन्मुमूर्षोर्मधुपर्कदानमुक्तम्[१] ।

उत्क्रान्तिधेनु—अद्येत्यादि कहकर 'अमुक का सुख से प्राण निकलने का प्रतिबन्धक सम्पूर्ण पाप के नाश द्वारा सुख से प्राण निकलने के लिये यथाशक्ति अलंकृत रुद्र देवता वाली इस उत्क्रान्ति धेनु को अमुक शर्मा आप को देता हूँ' 'गवामङ्गेषु' इस मन्त्र के अन्त में 'मेरी नहीं' ऐसा कहे । धेनु के अभाव में द्रव्य दे । उक्त प्रायश्चित्त आदि दान पर्यन्त विधि को न करके पिता आदि के मरने में पुत्र आदि को प्रायश्चित्त करके दाह आदि करना चाहिये । दानों को एकादशाह में करे । पिता के पापाभाव के निश्चय होने पर प्रायश्चित्त आवश्यक नहीं है । कुछ लोग—उत्क्रान्ति-वैतरणी-धेनु तथा दस दानों को पिता के मर जाने पर भी करके उस प्रेत को जलावे—ऐसा कहते हैं ।

१. वाराहे—'दृष्ट्वा सुविह्वलं ह्येनं यममार्गानुसारिणम् । प्रयाणकाले तु नरो मन्त्रेण विधिपूर्वकम् । मधुपर्कं त्वरन् गृह्य इमं मन्त्रमुदाहरेत् ॥ ॐ गृहाण चेमं मधुपर्कमाद्यं संसारनाशनकरं त्वमृतेन तुल्यम् । नारायणेन रचितं भगवत्प्रियाणां दाहे च शान्तिकरणं सुरलोकपूज्यम् ॥ अनेनैव तु मन्त्रेण दद्याच्च मधुपर्ककम् । नरस्य मृत्युकाले तु परलोकसुखावहम् ॥' इति ।

तुलसी के समीप में तथा शालग्राम-शिला के समीप में करे। कुछ लोग—तिल, लोहा, सुवर्ण कपास, नमक, भूमि, धेनु और सप्तधान्य इनको आठ दान कहते हैं। कहीं मुमूर्षु को मधुपर्क दान कहा है।

## अथ क्षौरनिर्णयः

पुत्रादिः कर्तान्त्यकर्माधिकारार्थं कृच्छ्रत्रयादिकं वपनं च कुर्यात्। तत्र मातापित्रोः सापत्नमातुः पितृव्यस्य ज्येष्ठभ्रात्रादेश्चान्त्यकर्मकरणे [1]क्षौरमावश्यकम्। पुत्राणां कर्तृभिन्नानामपि क्षौरं नित्यम्। एवं पत्न्या अपि प्रथमे दशमेऽह्नि वा क्षौरं नित्यम्। तथा दत्तकस्य पूर्वापरयोर्मात्रोः पित्रोर्मृतौ क्षौरम्।

रात्रौ तु दग्ध्वा पिण्डान्तं कृत्वा वपनवर्जितम्।
वपनं वर्जितं रात्रौ श्वस्तनी वपनक्रिया॥

पत्नीपुत्रकनिष्ठभ्रात्रादेरन्त्यकर्मणि क्षौरं न कार्यम्। अन्यत्र कृताकृतम्।

पुत्र आदि कर्ता अन्त्य कर्म के अधिकार के लिये तीन कृच्छ्र आदि और मुण्डन करे। माता-पिता, सौतेली माता, चाचा और ज्येष्ठ भाई आदि के अन्त्य कर्म करने में क्षौर आवश्यक है। कर्ता से भिन्न पुत्रों का भी क्षौर नित्य है। इसी प्रकार पत्नी का भी प्रथम या दशम दिन में क्षौर नित्य है। इसी तरह दत्तक के पहले और पीछे के दोनों माता-पिता के मरने में क्षौर नित्य है। रात में तो दाह करके क्षौर को छोड़ कर पिण्डान्त कर्म करे। क्योंकि रात में क्षौर वर्जित है इसलिये दूसरे दिन करे। पत्नी-पुत्र, छोटे भाई आदि के अन्त्य कर्म में क्षौर नहीं करे। अन्यत्र करे या नहीं करे।

## अथ शवस्यास्पृश्यस्पर्शादौ प्रायश्चित्तादि

श्मशाने नीयमानशवस्य शूद्रस्पर्शे शूद्रेण वहने वा—

कुम्भे सलिलमादाय पञ्चगव्यं तथैव च।
सुमन्त्रैरभिमन्त्र्यापस्तेन संस्नाप्य दाहयेत्॥

कृच्छ्रत्रयं च कुर्यात्। [2]सूतिकारजस्वलयोः स्पर्शेऽप्येवमेव। प्रायश्चित्तं तु पञ्चदश कृच्छ्राः। शूद्रेण द्विजदाहे[3] तु चान्द्रायणपराकप्राजापत्यानि समुच्चयेन पुत्रादिः कृत्वास्थीनि पुनर्दहेत्। अस्थ्यभावे पालाशविधिः।

---

१. मिताक्षरायाम्—'गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ। आधाने सोमयागे च वपनं सप्तसु स्मृतम्॥' गालवः—'प्रथमेऽहनि कर्तव्यं वपनं चानुभाविनाम्। प्रेतस्य केशश्मश्रवादि वापयित्वाऽथ दाहयेत्॥' अनुभाविनां = सपिण्डानाम्, शावं दुःखमनुभवन्तीत्यनुभाविनः सपिण्डास्तेषामविशेषेण वपनम्। देवलः—'दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद् बहिर्भवेत्। तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च॥' अपि च देवलः—'क्रियां च कुरुते यस्तु तद्दिने तस्य मुण्डनम्। लघीयसां दशाहे तु पुत्राणां वपनं भवेत्॥' इति।

२. धर्मप्रदीपे—'चाण्डालसूतिकोदक्या स्पृष्टे प्रेते तथैव च। तस्य पापविशुद्ध्यर्थं कृच्छ्रान् पञ्चदशाचरेत्॥' इति।

३. जाबालिः—'शूद्रेण दग्धो यो विप्रो न लभेच्छाश्वतीं गतिम्। प्रायश्चित्तं प्रकुर्वीत ब्राह्मणः पापशुद्धये॥ चान्द्रायणं पराकं च प्राजापत्यं विशोधनम्॥' इति।

श्मशान में ले जाते हुए मृतक का शूद्र से स्पर्श होने या शूद्र से ढोने में—घड़े में जल लेकर उसमें पञ्चगव्य डालकर, मन्त्रों से अभिमन्त्रित करके जल से शव का स्नान कराकर दाह करावे तथा तीन कृच्छ्र करे। प्रसूतिका और रजस्वला के स्पर्श में भी ऐसा ही करे। प्रायश्चित्त तो पन्द्रह कृच्छ्र है। शूद्र द्विज के शव का दाह करे तो पुत्रादि चान्द्रायण, पराक और प्राजापत्य व्रतों को समुच्चय से करके अस्थियों को पुनः जलावे। अस्थि के अभाव में पालाशविधि करे।

'ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टेषु कृच्छ्रत्रयम्। अस्पृश्यस्पर्शनेषट् कृच्छ्राः। अन्तरालमृतौ नव, खट्वामरणे द्वादश, निगडमृतौ पञ्चदश, रजकादिसप्तविधान्त्य जादिस्पृष्टमरणे त्वेकत्रिंशत्कृच्छ्राणि। देशान्तरमरणे पराकद्वयमष्टौ कृच्छ्रा वा। कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणेऽपि च। अर्धदग्धे शवे चितेरस्पृश्यस्पर्शे[2]कृच्छ्रत्रयम्। एवं पुत्रादयः पित्रादेः पापिनः पापानुसारेण प्रायश्चित्तकाण्डोक्तं प्रायश्चित्तं दुर्मरणात्मघातादिनिमित्ते पूर्वोक्तप्रायश्चित्तं नारायणबल्यादिकं च कृत्वैवान्त्यकर्म कुर्युः। एवमुक्तप्रायश्चित्तं विना दाहादि कृतं व्यर्थं भवेद् उभयोश्च नरकः।

ऊपर के अङ्गों के उच्छिष्ट होने में, नीचे के अङ्गों के उच्छिष्ट होने में तथा दोनों अङ्गों के उच्छिष्ट होने में तीन कृच्छ्र करे। अस्पृश्य के स्पर्श में छ कृच्छ्र करे। कोठे पर मरने में नौ कृच्छ्र, खटिया पर मरने में बारह कृच्छ्र, हथकड़ी लगे मरने में पन्द्रह कृच्छ्र, धोबी आदि सात प्रकार के अन्त्यज से स्पर्श होकर मरने में तो एकतीस कृच्छ्र करे। दूसरे देश में मरने पर दो पराक या आठ कृच्छ्र करे। आशौच में मरने पर भी तीन कृच्छ्र करे। अधजले शव की चिता का अस्पृश्य से स्पर्श होने पर तीन कृच्छ्र करे। इसी प्रकार पुत्र आदि पापी पिता आदि के पाप के अनुसार प्रायश्चित्त काण्ड में कहे प्रायश्चित्त को दुर्मरण और आत्मघात आदि निमित्त में पूर्वोक्त प्रायश्चित्त और नारायणबलि आदि करके ही अन्त्यकर्म करे। इस प्रकार कहे प्रायश्चित्त को किये विना दाह आदि करना व्यर्थ हो जाता है और दोनों को नरक होता है।

पतिपत्न्योरेककाले दहने प्राप्ते भार्यायाः पत्या सह तद्द्विवचनान्तमन्त्रोहेन दाहं कृत्वा पिण्डादिकं पतिपूर्वकं [3]पृथक्कार्यम्। एवं सपत्नीनामेककाले मृतौ

---

१. मदनरत्न में स्मृत्यन्तर का वचन है—'ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च। अस्पृश्यस्पर्शने चैव खट्वादिमरणेऽपि च॥ श्वानक्रव्यादसंस्पर्शे क्रिमिकीटोद्भवेऽपि च। एतद्दोषानुसारेण प्रायश्चित्तं समाचरेत्। कृच्छ्रांस्त्रिषट्पञ्चदशाश्चान्द्रत्रयमथापि वा। शुद्ध्यै तदानीं सम्पाद्य शवधर्मेण दाहयेत्॥' इति।

२. गृह्यकारिकायाम्—'खट्वायां मरणे चैव त्रींस्त्रीन्कृच्छ्रान् प्रकल्पयेत्। सप्तान्त्यजैस्तु संस्पृष्टो मृतो दैवात् कथंचन। एकत्रिंशता कृच्छ्रैस्तु शुद्धिरुक्ता मनीषिभिः। कुणपे त्वर्धदग्धे तु चिता स्पृष्टाऽन्त्यजादिभिः॥ तत्स्पर्शने दूषणं च त्रिभिः कृच्छ्रैर्विशुद्ध्यति।' इति।

३. मदनरत्ने—'एककालमृतौ भार्या भर्ता च यदि चेद् द्वयोः। तन्त्रेण दहनं कुर्यात् पिण्डश्राद्धं पृथक्पृथक्॥ एककाले मृतौ जायापती यदि तदा पितुः। विभज्याग्निं क्रियां कुर्यादिति मत्तदसाम्प्रतम्॥ दाहान्तमेकतन्त्रत्वमिति याज्ञिकसम्मतम्। मृतं पतिमनुव्रज्य या नारी ज्वलनं गता॥ अस्थिसंचयनान्तोऽस्याः कर्तुः संस्कार एव हि। कीकसानां तु संस्कारो न्यायसिद्धोऽपि यो मतः॥ एककाले मृतेऽप्येवं कीकसानां विधिः स्मृतः। नवश्राद्धं सपिण्डान्तं भिन्नकालमृतौ यथा॥' कपर्दिकारिका—'मृते भर्तरि तद्दाहात्प्राक् पत्नी म्रियते यदि। पत्न्यां वा प्राक्प्रमीतायां दाहादर्वाक्पतिर्मृतः॥ तत्र तन्त्रेण दाहः स्यान्मन्त्रेषु द्वित्वमूह्यते।' इत्यादि।

सहैव दाहः। पिण्डादिकं तु ज्येष्ठक्रमेण पृथगेव। एवं पितापुत्रयोर्भ्रात्रोश्च लौकिकाग्निदाह्ययोर्दाहः सहैव। पिण्डादि पितृपूर्वं ज्येष्ठपूर्वं च पृथक्। पुंबालानां स्त्रीबालानां च दहने खनने चैवमेवेति नागोजीभट्टीये। रजस्वलागर्भिण्यादिमरणे सहगमने च वक्ष्यते।

पति और पत्नी का एक काल में दाह प्राप्त होने पर स्त्री का पति के साथ वह द्विवचनान्त मन्त्र के ऊह से दाह करके पिण्ड आदि को पहले पति का बाद में स्त्री का अलग करे। इसी प्रकार सपत्नियों के एक काल में मरने पर साथ ही दाह होता है। पिण्ड आदि तो ज्येष्ठ क्रमसे अलग ही करे। इसी तरह पिता और पुत्र का, भाई-भाई का जो लौकिक अग्नि से दाहयोग्य है, साथ ही दाह करे। पिण्ड आदि पहले पिता का उसके बाद ज्येष्ठ क्रम से अलग-अलग करे। बालक और बालिकाओं को जलाने तथा गाड़ने में भी इसी प्रकार करे, ऐसा नागोजीभट्ट के ग्रन्थ में है। रजस्वला और गर्भिणी आदि के मरने में तथा सहगमन में कहूँगा।

## अथ मुमूर्षोः पुण्यसूक्तादिश्रवणम्

अथ गोमयोपलिप्तभूमौ कुशेषूपविष्टो दक्षिणशिराः शयितो वा गोपीचन्दनादिमृदा कृततिलकः श्रीविष्णुं स्मरन् पुण्यसूक्तं गीतां सहस्रनामादिस्तोत्राणि पठेच्छृणुयाद्वा। 'अमृतत्वप्राप्त्यर्थं पुण्यसूक्तस्तोत्रादीनां पाठं श्रवणं वा करिष्ये' इति संकल्पः। श्रोतुः संकल्पाशक्तौ श्रावयिता 'अस्यामुकर्मणोऽमृतत्वप्राप्तयेऽमुकं श्रावयिष्ये' इति संकल्पयेत्। नानानमिति सूक्तं पुरुषसूक्तं विष्णुसूक्तमुपनिषद्भागा इत्यादिपुण्यसूक्तानि। रामकृष्णादिनामस्मरणे जातिमात्रस्याधिकारः।

गोबर से लीपी हुई भूमि में कुश पर बैठ दक्षिण सिर करके या सोये हुए गोपीचन्दन आदि मिट्टी से तिलक कर श्रीविष्णु को स्मरण करते हुए पुण्यसूक्त, गीता, विष्णुसहस्रनाम आदि स्तोत्रों को स्वयं पढ़े या सुने। 'अमृतत्व प्राप्ति के लिये पुण्यसूक्त और स्तोत्र आदिका पाठ या श्रवण करूंगा' ऐसा संकल्प करे। श्रोता के संकल्प करने में असमर्थ होने पर सुनाने वाला 'इस अमुक शर्मा के अमृतत्व प्राप्ति के लिये अमुक को सुनाऊँगा' ऐसा संकल्प करावे। 'नानानम्' यह सूक्त, पुरुषसूक्त और उपनिषद् भाग इत्यादि पुण्यसूक्त हैं। राम-कृष्ण आदि के स्मरण में सब जाति का अधिकार है।

## अथ साग्नेर्विशेषः

गृह्याग्निमतो गृह्याग्निना श्रौताग्निमतस्त्रेताग्निभिर्दाहः कार्यः। तत्र गृह्याग्निमतः श्रौताग्निमतश्च [1]कृष्णपक्षे मरणे तदैव सायंकालाहुतीर्दर्शसायंकालपर्यन्ताः पक्षहोमवत्सकृद्ग्रहणेनैव हुत्वा पुनः संकल्पपूर्वकं प्रातराहुतीश्च प्रतिपत्प्रातर्होमान्तास्तद्वदेव हुत्वा दर्शयागं कुर्यात्। यागासंभवे आज्यं संस्कृत्य स्रुचि चतुर्वारं गृहीत्वा पुरोनुवाक्यायाज्याभ्यामेकैकां प्रधानाहुतिं जुहुयात्।

---

१. कारिकायाम्—'कृष्णपक्षे प्रमीयेत यद्यहि प्रातराहुतीः। शेषास्तु जुहुयाद्दर्शपर्यन्ताः पक्षहोमवत् ॥' 'तदानीमेव जुहुयात् प्रातःकालाहुतीरपि। सायं म्रियेत चेत्सायमाहुतीर्जुहुयादथ ॥ तदानीमेव जुहुयात्प्रातःकालाहुतीरपि। सकृद्ग्रहीतमन्त्रेष्टं भिन्नं तन्त्रं च होमयोः ॥ दर्शं चापि प्रकुर्वीत स्थालीपाकं तदैव तु।' इति।

गृह्य अग्नि वाले का गृह्य अग्नि से तथा श्रौत अग्नि वाले का त्रेता अग्नियों से दाह करे। गृह्य अग्नि वाले का और श्रौत अग्नि वाले का कृष्णपक्ष में मरने पर उसी समय सायंकाल की आहुति को अमावास्या के सायंकालपर्यन्त पक्षहोम के समान एकबार ग्रहण से ही होम करके और संकल्पपूर्वक प्रातःकाल की आहुति को प्रतिपदा के प्रातः होमपर्यन्त उसी प्रकार होम करके दर्श यज्ञ करे। यज्ञ न हो सके तो आज्य का संस्कार करके स्रुची में घी को चार बार लेकर पुरोनुवाक्या और याज्या से एक-एक प्रधान आहुति का होम करे।

स्मार्ते तु चतुर्गृहीताज्येनाग्नये स्वाहेन्द्राग्निभ्यां स्वाहेति नाम्नैव प्रधानाहुतिद्वयम्। शुक्लपक्षे रात्रौ मरणे सायं होमस्य कृतत्वात्प्रातर्होममात्रमाकृष्य तदैव कुर्यात्। नात्र पौर्णिमान्तानां दर्शान्तानां वा होमानामिष्टिप्रधानपूर्णाहुतीनां वा करणम्। शुक्लपक्षे दिवामरणे तु न कस्यापि होमस्याकर्षणम्। एवं कृष्णपक्षमरणेऽपि दैवात्पूर्णमासेष्ट्यतिक्रमे होमापकर्षप्रधानपूर्णाहुत्यादिकं च कृताकृतमनारब्धत्वादिति भाति।

स्मार्त में तो चार बार लिये गये घी 'अग्नये स्वाहा' 'इन्द्राग्निभ्यां स्वाहा' इस नाम से ही दो प्रधान आहुति दे। शुक्लपक्ष में रात में मरने पर सायंकाल होम हो जाने से प्रातर्होममात्र का आकर्षण कर उसी समय करे। इसमें पौर्णिमान्त या दर्शान्त होमों का अथवा इष्टि प्रधान पूर्णाहुतियों का करना नहीं है। शुक्लपक्ष में दिन में मरने पर तो किसी भी होम का आकर्षण नहीं होता। इसी प्रकार कृष्णपक्ष में मरने में भी दैववश पूर्णमासेष्टि का अतिक्रम हो जाने में होम का अपकर्षण और प्रधान पूर्णाहुति इत्यादि करे या न करे। क्योंकि उनका आरम्भ नहीं हुआ, ऐसा ठीक मालूम होता है।

करणपक्षेऽतिक्रान्तपूर्णाहुतीर्हुत्वा पक्षहोमान्कृत्वा दर्शपूर्णाहुतयः कार्याः।

अग्नावरण्योरारूढे प्रमीयेत पतिर्यदि।
प्रेतं स्पृष्ट्वा मथित्वाग्निं जप्त्वा चोपावरोहणम्॥
घृतं च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रिया।

विच्छिन्नश्रौताग्नेर्मृतौ तु प्रेताधानं कार्यम्। तद्यथा—प्रेतं स्वाम्यालये क्षित्वारणी संनिधाप्य,

यस्याग्नयो जुह्वतो मांसकामाः संकल्पयन्ते यजमानमांसं जायंतु ते हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु॥

इति यजुर्मन्त्रेण मथित्वाग्निमायतने प्रणीय द्वादशगृहीताज्येन तूष्णीं हुत्वा तेन दाहादि कार्यम्।

नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत्।
आहरेदरणिद्वन्द्वं मनोज्योतिरृचा ततः॥ शेषं प्राग्वत्।

करने के पक्ष में अतिक्रान्त पूर्णाहुतियों का होमकर पक्षहोमों को करके दर्शपूर्णाहुतियों को करे। अग्नि और अरणि के मध्य में आरूढ पति मर जाय तो प्रेत का स्पर्श कर अग्नि का मन्थन और जप करके उपावरोहण करे। उस अग्नि में घी को बारह बार लेकर बिना मंत्र का होम कर शव की क्रिया करे। छूटे हुए श्रौताग्नि वाले के मरने में तो प्रेताधान करे। वह इस प्रकार-'यस्याग्नयो

जुह्वतो मांसकामाः संकल्पयन्ते यजमानमांसं जायन्तु ते हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु' इस यजुर्वेद मन्त्र से मथ कर उस अग्नि को होम स्थान में लाकर बारह बार घी लेकर बिना मंत्र का होम कर उससे दाह आदि करे। अग्नि के नष्ट होने या अरणि के नाश होने पर यदि पति मर जाय तो 'मनोज्योति' इस मन्त्र से दो अरणियों का आहरण करे। शेष पूर्व के समान करे।

स्मार्ताग्निमतः स्मार्ताग्निर्यदि विच्छिन्नस्ततो यतो विच्छेदस्तावत्कालगणनया पूर्वार्धोक्तरीत्या प्रायश्चित्तं तदेव कुर्यात्संकल्पयेद्वा। प्रायश्चित्तान्ते होमद्रव्यं स्थालीपाकद्रव्यं च तावत्कालगणनया देयम्। ततोऽरणिपक्षे पूर्ववदरणीमन्थनम्। पक्षान्तरे 'अमुकशर्मणोऽग्निविच्छेदनिमित्तकं दाहायाग्निसिद्ध्यर्थं प्रेताधानं करिष्ये' इति संकल्प्यायतने संभारान्निक्षिप्य लौकिकाग्निं प्रतिष्ठाप्याज्यं संस्कृत्यायाश्चेति मन्त्रेण यस्याग्नय इति पूर्वोक्तमन्त्रेण च हुत्वा व्याहृतिचतुष्टयं जुहुयात्। एवमौपासनः सिद्धो भवति। पत्नीमरणेऽप्येवमेवेति भट्टाः। एवं विधुरस्यापि श्रौताग्निगृह्याग्निपरिग्रहसत्त्वे यथायथं तत्तदग्निभ्यां दाहः। विधुरस्याग्निपरिग्रहोत्तरं तद्विच्छेदे पूर्वोक्तरीतिभ्यां तत्तदग्न्योराधानम्।

स्मार्त अग्नि वाले की यदि स्मार्त अग्नि नष्ट हो जाय तो जब से विच्छेद हुआ हो उतने काल की संख्या से पूर्वार्ध में कही रीति से प्रायश्चित्त उसी समय करे या संकल्प करके दे। प्रायश्चित्त के अन्त में होमद्रव्य और स्थालीपाक द्रव्य उसी काल की गणना से देवे। इसके बाद अरणि पक्ष में पहले के समान अरणि मन्थन करे। दूसरे पक्षमें 'अमुक शर्मा के अग्नि-विच्छेद निमित्त दाहके लिये अग्नि की सिद्धि के लिये प्रेताधान करूंगा' ऐसा संकल्प करके अग्नि-स्थान में सम्भारों को लाकर लौकिकाग्नि की स्थापना करके घी का संस्कार कर 'अयाश्च' इस मन्त्र से 'यस्याग्नये' इस पहले कहे मन्त्र से होम करके चार आहुतियों से होम करे। इस तरह औपासन अग्नि की सिद्धि होती है। स्त्री के मरने में भी इसी प्रकार होता है, ऐसा भट्ट कहते हैं। इसी प्रकार विधुर का भी श्रौताग्नि और गृह्याग्नि के परिग्रह रहते यथायोग्य उन-उन अग्नियों से दाह करे। विधुर के अग्नि परिग्रह के बाद अग्नि के विच्छेद होने पर पहले कही दोनों रीतियों से उन-उन अग्नियों का आधान करे।

अगृहीतगृह्याग्निकयोः सभार्यविधुरयोर्ब्रह्मचारिसमावृत्तयोश्चानुपनीताविवाहितपुत्रकन्ययोश्च निरग्निकभार्याविधवयोश्च [1]कपालाग्निना लौकिकाग्निना वा दाहः। अग्निवर्णकपाले करीषादिनोत्पादितो भूर्भुवः स्वः स्वाहेत्याज्याहुत्या संस्कृतोऽग्निः कपालाग्निः। लौकिकाग्निश्चान्त्यजाग्निपतिताग्निसूतिकाग्निचिताग्न्यमेध्याग्निभिन्नो ग्राह्यः।

गृह्य अग्नि को नहीं ग्रहण करने वाले विधुर और सपत्नीक का, ब्रह्मचारी और समावृत्त का, अनुपनीत तथा अविवाहित पुत्र और कन्या का, निरग्निक स्त्री और विधवा का कपालग्नि से या

---

१. आशौचप्रकाश में क्रतु का वचन है—'विधुरं विधवां चैव कपालस्याग्निना दहेत्। ब्रह्मचारी यती चैव दहेदुत्तपनाग्निना॥ तुषाग्निना च दग्धव्यः कन्यका बाल एव च। अग्निवर्णं कपालं तु कृत्वा तत्र विनिक्षिपेत्॥ करीषादि ततो वह्निर्जातो यः स कपालजः।' स्मृत्यन्तरे—'गृहस्थो ब्रह्मचारी च विधुरो विधवाः स्त्रियः। औपासनश्चोत्तपनस्तुषाग्निस्तु कपालजः॥' उत्तपनस्तु—दर्भाग्निऽग्निं तु प्रज्वाल्य पुनर्दर्भैस्तु संयुतः। पुनर्दर्भैस्तृतीयोऽग्निरेष उत्तपनः स्मृतः॥' इति।

लौकिकाग्नि से दाह करे। अग्निवर्ण के कपाल में करीष ( कँडरा ) आदि से उत्पादित 'भूर्भुवः स्वः स्वाहा' इस घृत की आहुति से संस्कृत अग्नि को कपालाग्नि कहते हैं। लौकिकाग्नि को अन्त्यजाग्नि-पतिताग्नि-सूतिकाग्नि-चिताग्नि-अमेध्याग्नि से भिन्न लेना चाहिये।

यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि वा।
प्रेतत्वं च सदा तस्य शूद्रः पापेन लिप्यते॥

आहिताग्निदम्पत्योः पूर्वं पतिमरणे पत्युः सर्वाग्निभिर्दाहः। पश्चान्मृतभार्यायास्तु निर्मंथ्याग्निना कपालाग्निना वा। 'पूर्वं भार्यामरणे तु तस्या अपि सर्वाग्निभिर्दाहः कार्यः। सर्वपात्राण्यपि तस्यै देयानि। पश्चान्मृतस्य तु पत्युः पुनराधानेन त्रेताग्निसत्त्वे तेन दाहः। आधानाकरणे निर्मंथ्येन लौकिकाग्निना वेति केचित्। याज्ञिकाचारोऽपि प्रायेणैवमेव।

शूद्र जिसकी अग्नि, काठ, तृण और हविष्य को ले आता है उसका प्रेतत्व सदा बना रहता है एवं शूद्र पाप से लिप्त रहता है। आहिताग्नि पति-पत्नी के मध्य में पहले पति के मरने में पति का सब अग्नियों से दाह करे। पीछे मरी स्त्री का तो मन्थन की हुई अग्नि से या कपालाग्नि से दाह करे। पहले पत्नी के मरने पर तो उसका भी सब अग्नियों से दाह करना चाहिये। अग्नि के सभी पात्र भी उसे दे दे। पीछे मरे हुए पति का दाह तो पुनः आधान की अग्नि से त्रेताग्नि के रहते उससे करे। कुछ लोग कहते हैं—आधान नहीं करने पर मन्थन से उत्पन्न अग्नि से या लौकिक अग्नि से करे। याज्ञिकों का आचार भी प्रायः इसी प्रकार का है।

अत्र निर्णयसिन्धुः—साग्नेः पत्नीमृतौ द्वौपक्षौ पुनर्विवाहेच्छायां पूर्वाग्निभिर्भार्यां दग्ध्वा 'पुनर्दारक्रियां कुर्यात्पुनराधानमेव च'इत्येकः पक्षः। 'दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं [2]पतिः'। इत्यादिवचनजातानि पुनर्विवाहेच्छुपराण्येव। पुनर्विवाहाशक्तौ निर्मंथ्याग्निना तां दग्ध्वा पूर्वाग्निष्वेवाग्निहोत्रहोमेष्टचादि चातुर्मास्यादि कार्यं सोमयागो न कार्यः। पूर्वाग्न्येकदेशेन दहेदिति यज्ञपार्श्वदेवयाज्ञिकादयः।

इसमें निर्णयसिन्धु का कथन है कि साग्निक की पत्नी के मरने पर दो पक्ष हैं, पुनः विवाह करने की इच्छा में पूर्व अग्नियों से स्त्री का दाह कर पुनः विवाह करे और पुनः आधान, यह एक

---

१. वृद्धयाज्ञवल्क्यः—'आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः। अनाहिताग्निरेकेन लौकिकेनापरो जनः॥' क्रतुः—'एवं वृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम्। दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित्॥' कारिकायाम्—'पत्नीमपि दहेदेवं भर्तुः पूर्वं मृता यदि। अनग्निकां दहेदेवं कपालेन हविर्भुजाम्॥' छन्दोगपरिशिष्टे—'अनयैवावृता नारी दग्धव्या या व्यवस्थिता। अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः॥' तथा—'अग्निनैव दहेद् भार्यां स्वतन्त्रां पतिता न चेत्। तदुत्तरेण पात्राणि दाहयेत् पृथगन्तिके॥' इति।

२. यह याज्ञवल्क्य का वचन है, इसका उत्तरार्ध है—'आहरेद् विधिवद् दारानग्नींश्चैवाविलम्बयन्॥' इस श्लोक की मिताक्षरा है—'पूर्वोक्तवृत्तवतीमाचारवतीं विपन्नां स्त्रियमग्निहोत्रेण श्रौतेनाग्निना तदभावे स्मार्तेन दाहयित्वा पतिः भर्ता अनुत्पादितपुत्रोऽनिष्टयज्ञो वा आश्रमान्तरेष्वनधिकृतो वा स्त्र्यन्तराभावे पुनर्दारान् अग्नींश्च विधिवदाहरेत्। अविलम्बयन् शीघ्रमेव, 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः' इति दक्षस्मरणात्' इति।

पक्ष है। पति सच्चरित्रा पत्नी का अग्निहोत्र से दाह करा कर, इस आशय के वचन समूह पुनः विवाह करने के लिये ही हैं। पुनः विवाह की असमर्थता में मथित अग्नि से उसका दाह करके पूर्व अग्नियों ही में अग्निहोत्र-होम-इष्टि आदि और चातुर्मास्य आदि करे, सोमयाग नहीं करे। पूर्व अग्नि के एकदेश से दाह करे, यह यज्ञपार्श्वदेव याज्ञिक आदि कहते हैं।

यानि तु तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेदिति श्रुतिस्मृत्यादिवचनानि तानि पूर्वाग्निष्वेवाग्निहोत्रपराणि न त्वपत्नीकस्याधानार्थानि, अपत्नीकस्याधानविधायकमूलवचनाभावात्। दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयमित्यापस्तम्बसूत्रं तु पुनर्विवाहाशक्तौ पूर्वकृतमग्न्याधेयमात्मार्थमेव स्थाप्यं न पत्न्यै दद्यादित्येवं परम्। ब्राह्मणभाष्यापरार्काशार्करामाण्डारादिमतमप्येवमेव। ये त्वपत्नीकस्याधानमाहुस्तदाशयं न विद्म इति। इदं निर्णयसिन्धुमतमेव युक्तं भाति।

'इसलिये पत्नीरहित भी अग्निहोत्र का आहरण करे' ये जो श्रुति स्मृति आदि के वचन हैं वे पूर्वाग्नियों में ही अग्निहोत्र करने के लिये हैं न कि अपत्नीक के आधान के लिये, क्योंकि अपत्नीक के आधान विधायक मूल वचनों का अभाव है। विवाह करने में यदि अशक्त हो तो अपने लिये अग्नि का आधान करे, इस आशय का आपस्तम्बसूत्र तो पुनः विवाह की असमर्थता में पहले किया अग्न्याधेय अपने लिये ही स्थापित करे पत्नी के लिये नहीं दे, इस अभिप्राय का है। ब्राह्मणभाष्य, अपरार्क, आशार्क, रामाण्डार आदि का मत भी ऐसा ही है जो अपत्नीक का आधान कहते हैं उनका आशय हम लोग नहीं जानते। यह निर्णयसिन्धु का मत ही युक्त प्रतीत होता है।

याज्ञिकानामाचारस्त्वन्तर्गूढविवाहेच्छामूलको न प्रामाण्यापादकः। पुनर्विवाहाशया सर्वाग्निदाने पश्चाद्विवाहासम्भवे सिन्धुमते आधानाभावान्निर्मंथ्याग्निरेव शरणम्। केषांचिन्मते पुनराधानम्। अत्र निर्मंथ्यादिना पूर्वमृतभार्यादाहपक्षे पूर्वाग्नीनामुत्सर्गेष्ट्या त्यागं कृत्वा पुनराधानं कृत्वाग्निहोत्रं कार्यमिति केचिदाहुः। एवं स्मार्ताग्निमतः पूर्वं भार्यामरणेऽपि गृह्याग्न्येकदेशेन तां दहेदवशिष्टाग्नौ नित्यहोमस्थालीपाकाग्रयणानि कार्याणि। अत्र सर्वत्र श्रौते स्मार्ते च 'कुशपत्नीविधानेनैवाधानादिकर्माधिकारः।

याज्ञिकों का आचार तो मन में छिपी हुई विवाह की इच्छा मूलक है, प्रमाण का प्रकाशक नहीं। पुनः विवाह की आशा से सब अग्नियों को स्त्री को देने में पीछे विवाह न होने पर निर्णयसिन्धु के मत से आधान के न होने पर मथित अग्नि ही शरण है यानी उससे ही दाह करना होगा। कुछ लोगों के मत में पुनः आधान है। कुछ लोग कहते हैं—इसमें निर्मथ्य आदि से पहले मरी हुई स्त्री के मथित अग्नि से दाहपक्ष में पहली अग्नियों की उत्सर्गेष्टि से त्याग करके पुनः आधान कर

---

१. छन्दोगपरिशिष्टे—'मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत्। उपाधिनाऽपि तत्कर्म यावज्जीवं समाचरेत्॥' उपाधिः = हेमकुशपत्न्यादिः, जैसा अपरार्क में स्मृत्यन्तर का वचन है—'अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः। अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः॥' कात्यायनः—'रामोऽपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम्। ईजे बहुविधैर्यज्ञैः सह भ्रातृभिरच्युतः॥' इति।

अग्निहोत्र करे। इसी प्रकार स्मार्त अग्नि वाले की पहले, स्त्री के मरने में भी गृह्य अग्नि के एकदेश से उसे जलावे बची हुई अग्नि में नित्य होम स्थालीपाक और आग्रयण करे। यहां सब जगह श्रौत और स्मार्त में कुश की पत्नी के विधान से ही आधान आदि कर्म का अधिकार है।

अनेकभार्यस्य ज्येष्ठायां जीवत्यां कनिष्ठभार्यामरणे निर्मथ्यादिना तां दहेद् न श्रौतस्मार्ताग्निभिः। केचित्पूर्वं सर्वाग्निभिः कनिष्ठां दग्ध्वा ज्येष्ठया सह पुनराधानं कार्यमित्याहुस्तदग्निद्वयसंसर्गपरं मतान्तरपरं वा बोध्यम्। दाहकालेऽग्निनाशे तु—

यजमाने चितारूढे पात्रन्यासे कृते सति।
वर्षाद्यभिहते वह्नौ चितादिस्थे कथंचन।
तदार्धदग्धकाष्ठानि तानि निर्मथ्य तं दहेत्॥

अनेक स्त्री वाले को जेठी स्त्री के जीते रहते छोटी स्त्री के मरने पर मथित अग्नि आदि से उसे जलावे, श्रौत और स्मार्त अग्नि से नहीं। कुछ लोग—पहले सब अग्नियों से छोटी स्त्री का दाह करके जेठी पत्नी के साथ पुनः आधान करे—ऐसा कहते हैं। इसे दो अग्नि के संसर्ग वालों के लिये या दूसरे मतवालों के लिये जानना चाहिये। दाह के समय अग्नि के नाश होने पर तो यजमान चिता पर चढ़ गया हो और उसके पास पात्र रख दिये गये हों, किसी प्रकार वर्षा आदि से चिता की अग्नि बुझ जाय तब अधजली लकड़ी के मन्थन से अग्नि उत्पन्न कर उससे दाह करे।

## अथ गृहाच्छ्मशाने शवनयनादिप्रकारः

तत्र 'विप्रप्रेतं नगरपश्चिमद्वारेण शूद्रं दक्षिणद्वारेण निःसार्य सजातीयाः शवं प्रच्छादितमुखं प्राक्शिरसं दाहदेशं नयेयुः। पूर्वोक्तोऽग्निः शवाग्रेऽन्येन नेतव्यः। प्रेताग्न्योर्मध्येऽन्येन न गन्तव्यम्। सर्वे सपिण्डादयोऽधःकृतोपवीता मुक्तकेशा ज्येष्ठपुरःसराः प्रेतमनुगच्छेयुः। प्रेतश्च नग्नो न[२] दग्धव्यः निःशेषतश्च न दाह्यः। शववस्त्रं च श्मशानवासिभ्यो देयम्। प्रेतश्च केशनखादि वापयित्वा संस्नाप्य गन्धपुष्पाद्यैरलंकृत्य दग्धव्यः।

उसमें ब्राह्मण-शव को नगर के पश्चिम द्वार से और शूद्र-शव को दक्षिण द्वार से निकाल कर समान जाति वाले शव का मुँह ढक कर पूर्व की ओर सिर किये मृतक को दाह की जगह ले जाय। पूर्वोक्त अग्नि को शव के आगे-आगे कोई दूसरा पुरुष ले जाय। प्रेत और अग्नि के बीच में दूसरा कोई न जाय। सब सपिण्ड आदि यज्ञोपवीत को कंठ से नीचे किये, बाल खोले बड़ों को आगे करके मृतक के पीछे चलें। प्रेत को नंगा नहीं जलावे और उसे पूरा न जलावे यानी कुछ बचा ले।

---

१. मनुः—'दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। पश्चिमोत्तरपूर्वैस्तु यथासंख्यं द्विजातयः। अपरार्कमें आदिपुराण के वचन से प्रातिलोम्यक्रम कहा है—'पूर्वामुखस्तु नेतव्यो ब्राह्मणो बान्धवैर्गृहात्। उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा॥ दक्षिणाभिमुखः शूद्रो निर्हर्तव्यः स्वबान्धवैः।' इति।

२. प्रचेताः—'स्नानं प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः। नग्नदेहं दहेन्नैव किंचिद्देयं परित्यजेत्॥' ब्राह्मे—'दरिद्रोऽपि न दग्धव्यो नग्नः कस्यांचिदापदि।' तथा—'निःशेषस्तु न दग्धव्यः शेषं किंचित्त्यजेन्नरः।' आश्वलायनसूत्रे—'संस्थिते प्रेतालङ्कारान् कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलिम्पन्ति नलदमालां प्रतिमुञ्चन्ति' इति।

शव का वस्त्र श्मशान में रहने वालों को दे-दे। मृतक का केश नख आदि कटवा कर नहला कर गन्ध-माला आदि से भूषित कर दाह करे।

दिने मृतौ दिवैव दाहो रात्रिमृतस्य रात्रावेव। दिवा वा रात्रौ वा स्थितः शवः [1]पर्युषितः। पर्युषितशवं पञ्चगव्येन स्नापयित्वा प्राजापत्यत्रयं कृत्वा दहेत्। मुखस्थसप्तच्छिद्राणि हिरण्यशकलैराच्छादयेत्। अत्र पात्रन्यासो मन्त्रवद्दाहादिविधिश्च स्वस्वसूत्रानुसारिश्रौतस्मार्तान्त्येष्टिप्रयोगेषु ज्ञेयः। ततो दाहान्ते घटस्फोटादिकं कार्यम्। शिलाविपर्ययेऽपि घटस्फोटस्य नावृत्तिः। ततश्चितामप्रदक्षिणं सर्वे पर्यावृत्य सचैलं स्नात्वाचम्य सगोत्रसपिण्डसमानोदकानां मातामहीमातामहयोराचार्यादेश्च दुहितृभगिन्योश्चावश्यं तिलाञ्जलिं दद्युः।

दिन में मरे हुए का दिनमें और रातमें मरे हुए का रात में ही दाह करे। दिन में या रात में मृतक दाह के विना पड़ा रहे तो वह बासी हो जाता है। बासी मृतक को पञ्चगव्यसे नहला कर तीन प्राजापत्य करके दाह करे। मुख के सात छेदों को सुवर्ण के टुकड़े से ढक दे। इसमें पात्रों का न्यास और मन्त्रसहित दाह आदि की विधि अपने-अपने सूत्र के अनुसार श्रौत-स्मार्त अन्त्येष्टि के प्रयोगों से जानना चाहिये। उसके बाद दाह के अन्त में घटस्फोट आदि करे। शिला के विपर्यय में भी घटस्फोट दुहराया नहीं जाता। तदनन्तर चिता को अप्रदक्षिण क्रम से सब लोग चारो ओर घूम कर सवस्त्र स्नान और आचमन करके सगोत्र, सपिण्ड और समानोदकों को, नानी नाना को, आचार्य आदि को, लड़की और बहिन को अवश्य तिलाञ्जलि देवें।

तद्यथा—वृद्धपूर्वा दक्षिणामुखा अमुकगोत्रनामा प्रेतस्तृप्यत्विति मन्त्रेणाञ्जलिना सकृत्पाषाणे सिञ्चेयुः। अत्र स्नानोदकदानेऽप नः शोशुचदघमिति मन्त्रेण। स्नानमेव तेन मन्त्रेणेत्यन्ये। स्त्रीणां तु मन्त्रो नास्ति। मातुलपितृष्वसृमातृष्वसृस्वस्रीयश्वशुरमित्रयाजकादीनामुदकदानं कृताकृतम्। करणपक्षेऽपि नाश्मन्येवेति नियमः। व्रात्यब्रह्मचारिपतितव्रतिक्लीबचोराश्च नोदकं दद्युः। तत्र व्रात्या यथाकालमुपनयनहीनाः। व्रतिनः प्रकान्तप्रायश्चित्ताः। चोराः सुवर्णं तत्समद्रव्यापहारिणः। ब्रह्मचारिभिर्मातापितृपितामहमातामहगुर्वाचार्यादीनामुदकदानं कार्यम्।

वह इस प्रकार—पहले वृद्ध जन दक्षिणमुख होकर 'अमुक गोत्र नामा तृप्यतु' इस मन्त्र से अञ्जलि से एक बार पत्थर पर सिंचन करें। यहां स्नान तथा उदकदान 'अप नः शोशुचदघं' इस मन्त्र से करे। दूसरे कहते हैं कि उस मंत्र से स्नान ही करे। स्त्रियों को तो मन्त्र नहीं है। मामा, फूआ, मौसी, भानजा, ससुर, मित्र और याजक आदि का जलदान करे या नहीं करे। करने के पक्ष में भी पत्थर पर ही करे ऐसा नियम नहीं है। व्रात्य, ब्रह्मचारी, पतित, व्रती, नपुंसक और चोर को जल नहीं दें। उसमें जिनका समय पर उपनयन नहीं हुआ हो वे व्रात्य हैं। जिन्होंने प्रायश्चित्त प्रारम्भ

---

१. दिन में मरने पर रात्रि तक और रात्रि में मरने पर दिन तक शव यदि पड़ा रह जाय तो उसे गालव ने पर्युषित कहा है—'दिवा वा यदि वा रात्रौ शवस्तिष्ठति कर्हिचित्। तत्पर्युषितमित्याहुर्दहने तस्य का गतिः॥ पञ्चगव्येन संस्नाप्य प्राजापत्यत्रयं चरेत्।' स्मृतिरत्नावली में—'शवं रात्र्युषितं चेत् त्रीन् कृच्छ्रान् कृत्वा दहेत् सुतः।' अङ्गिराः—'ऊर्ध्वोच्छिष्टाधरोच्छिष्टे ह्यन्तरिक्षमृतेऽपि वा। कृच्छ्रत्रयं प्रकुर्वीत आशौचे मरणेऽपि च॥' इति।

किये हों वे व्रती हैं। चोर वे हैं जो सुवर्ण या सुवर्ण के समान दूसरा द्रव्य चुरावें। ब्रह्मचारी को माता-पिता-पितामह-मातामह-गुरु-आचार्य आदि का जलदान करना चाहिये।

प्रकान्तप्रायश्चित्तैस्तु तदन्ते उदकदानं त्रिरात्राशौचं च कार्यम्। [1]व्रात्यादिभिः प्रेतस्पर्शवहनदाहपिण्डादिकमपि न कार्यम्। अन्याभावे ब्रह्मचार्यपि पित्रादेर्दाहमाशौचं कुर्यात्। कर्मलोपस्तु नास्तीत्युक्तम्। इदं चोदकदानमेकवाससाऽपसव्येनैव। उदकदानोत्तरं पुनः स्नात्वा वस्त्राणि निष्पीडच कुलवृद्धाः पुत्रादीन्पूर्वेतिहासैः समाश्वास्य विप्रानुमत्या कनिष्ठानुक्रमेण गृहं गत्वा निम्बपत्राणि शनैर्भक्षयित्वाचम्याग्न्युदकगोमयादीन्[2] स्पृष्ट्वा द्वाराश्मनि पदं निधाय गृहं प्रविशेयुः। निम्बपत्रभक्षणं कृताकृतम्। ततस्तद्दिने उपवसेयुः। उपवासाशक्तावयाचितलब्धेनान्यगृहपक्वेन वैकेनैव हविष्यान्नेन वर्तेरन्।

प्रायश्चित्त प्रारम्भ करने वाले तो प्रायश्चित्त के बाद जलदान और तीन रात का आशौच करें। व्रात्य आदि को प्रेत का स्पर्श, ढोना, दाह और पिण्ड आदि भी न करना चाहिये। दूसरे के न रहने पर ब्रह्मचारी भी पिता आदि का दाह तथा आशौच करे। कर्म का लोप तो नहीं होता, यह कहा है। यह उदकदान एक वस्त्र और अपसव्य से ही करे। जलदान के बाद पुनः स्नान करके वस्त्रों को निचोड़ कर कुल के वृद्ध लोग पुत्र आदि को पुराने इतिहासों से समझा कर ब्राह्मण की अनुमति से छोटों के क्रम से घर जाकर नीम के पत्तों को धीरे-धीरे खाकर आचमन करके आग, जल और गोबर आदि का स्पर्श कर द्वार के पत्थर पर पैर रखके घर में प्रवेश करें। नीम के पत्तों का भक्षण करे या न करे। इसके बाद उस दिन सभी उपवास करें। उपवास करने की शक्ति न रहने पर विना याचना के प्राप्त या दूसरे के घर पके हुए एक ही हविष्य अन्न खाकर रहें।

## अथ आशौचे भोजनादिनियमाः

तत्राशौचमध्ये माषमांसापूपमधुरलवणदुग्धाभ्यङ्गताम्बूलक्षाराणि[3] वर्ज्यानि। क्षाराणि तु—

> तिलमुद्गादृते शैम्ब्यं सस्ये गोधूमकोद्रवौ।
> धान्याकं देवधान्यं च शमीधान्यं तथैव च ॥
> स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः।

केचित्सैन्धवं भक्ष्यमित्याहुः। आदर्शस्त्रीसङ्गद्यूतादिहसनरोदनोच्चासनानि

---

१. मनु ने व्रात्य का लक्षण बतलाया है—'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥' इन्होंने व्रात्य के साथ व्यवहार का त्याग बतलाया है—'नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्। ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सह ॥' इति।

२. यहाँ आदि पद से 'दूर्वाप्रवालमग्निवृषभौ वा' इस शंख की उक्ति से दूर्वाङ्कुर और वृषभ का स्पर्श भी करे। याज्ञवल्क्यः—'इति संश्रुत्य गच्छेयुर्गृहं बालपुरस्सराः। विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्। प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ॥' इति।

३. कारिकायाम्—'लवणक्षीरमाषान्नापूपमांसानि पायसम्। वर्जयेदाहृतान्नेषु बालवृद्धातुरैर्विना ॥ उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत्।' इति।

नित्यं त्यजेयुः। बालवृद्धातुरवर्जं तृणकटास्तीर्णभूमौ[1] पृथक् शयीरन्, न कम्बलाद्यास्तीर्णभूमौ। मार्जनादिरहितमेव स्नानम्। अस्थिसंचयनादूर्ध्वं भार्यापुत्रव्यतिरिक्तानां[2] शय्यासनादिभोगोऽस्त्येव, स्त्रीसंगस्तु नास्ति।

आशौच के मध्य में उर्द, मांस, पूआ, मीठा, नमक, दूध, तैल लगाना, पान खाना और क्षार पदार्थ का त्याग करे। क्षार पदार्थ तो—तिल-मूंगको छोड़ शिम्बीधान्य, सस्य में गेहूँ और कोदो, धनिया, देवधान्य ( यव ), शमी धान्य, स्विन्न धान्य, पण्य, मूल, यह क्षारों का गण कहा है। कुछ लोग सेन्धानमक भक्षण योग्य कहते हैं। दर्पण, स्त्री प्रसङ्ग, जूआ आदि, हँसना, रोना और ऊंचा आसन का प्रतिदिन त्याग करे। बालक, वृद्ध और बीमार को छोड़ कर पुआल या चटाईं बिछी हुई भूमि पर अलग-अलग सोवें, कम्बल आदि बिछाईं भूमि पर नहीं। मार्जन रहित ही स्नान करे। अस्थिसंचयन के बाद स्त्री-पुत्र से अतिरिक्तों को खटिया और आसन आदि का उपयोग होता ही है, स्त्री संगम तो नहीं है।

अस्थिसंचयनं[3] तु समन्त्राग्निदाहदिनादारभ्य प्रथमदिने द्वितीये तृतीये चतुर्थे सप्तमे नवमे वा गोत्रजैः सह स्वस्वसूत्रोक्तप्रकारेण कार्यम्। तत्र द्विपादत्रिपादनक्षत्राणि कर्तुर्जन्मनक्षत्रं च [4]वर्ज्यम्। सम्भवेऽर्कभौममन्दवारा वर्ज्याः। पालाशदाहास्थिदाहयोः सद्यः संचयनम्। अस्थ्नां गङ्गाम्भसि तीर्थान्तरे वा प्रक्षेपः। तद्विधिर्वक्ष्यते। अरण्ये वृक्षमूले निखननं वा। अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत्। दययान्यस्यापि नयने महापुण्यम्। अस्थ्नां श्वसूकरशूद्रादिस्पर्शे पंचगव्यशालग्रामतुलस्युदकैः प्रोक्षणम्। आशौचमध्ये [5]स्वगोत्रजैः सह

---

१. मनुः—'मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ।' बृहस्पतिः—'अधःशय्यासना दीना मलिना भोगवर्जिताः। अक्षारलवणाश्च स्युर्लब्धक्रीताशनास्तथा॥' भोगः = अभ्यङ्गताम्बूलादिः।

२. विष्णुपुराण में कहा है—'शय्यासनोपभोगस्तु सपिण्डानामपीष्यते। अस्थिसंचयनादूर्ध्वं संयोगस्तु न योषिताम्॥' इति।

३. संवर्तः—'प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा। अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह॥' छन्दोगपरिशिष्ट में दूसरे दिन भी अस्थिसंचयन कहा है—'अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेत्।' इति।

४. माधवीय में यम का वचन है—'भौमार्कमन्दवारेषु तिथियुग्मे विवर्जयेत्। वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसंचयम्॥ प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः।' शौनकः—'पालाशेष्वस्थिदाहे च सद्यः संचयनं भवेत्।' नागरखण्डे—'त्रीणि संचयनस्यार्थे तानि वै शृणु साम्प्रतम्। यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं प्रकल्पयेत्॥ एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः। ततः संचयनस्थार्थे तृतीयं श्राद्धमिष्यते॥' इति।

५. मरीचिः—'प्रथमेऽह्नि तृतीये च सप्तमे दशमे तथा। ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम्॥ ब्राह्मे—'आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्।' विष्णुपुराण में दिन में ही भोजन करना कहा है—'दिवा चैव तु भोक्तव्यममांसं मनुजर्षभ।' पारस्कर ने भी कहा है—'क्रीत्वा लब्ध्वा वा दिवाऽन्नमश्नीयुः' इति।

भोक्तव्यं तच्च दिवैव। 'भोजनं मृन्मयेषु पर्णपुटकेषु वा कार्यं न तु धातुपात्रेषु।

अस्थिसंचयन को तो मन्त्रसहित अग्निदाह के दिन से आरम्भ कर पहले, दूसरे, तीसरे चौथे, सातवें, या नौवें दिन गोत्रजों के साथ अपने-अपने सूत्रों में कहे प्रकार से करना चाहिये। उसमें द्विपाद-त्रिपाद-नक्षत्र और कर्ता का जन्मनक्षत्र त्याज्य है। सम्भव हो तो शनि रवि मंगलवार का त्याग करे। पालाशदाह और अस्थिदाह में तुरन्त अस्थिसंचयन करे। अस्थियों को गङ्गाजल में या दूसरे तीर्थ में फेंके। उसकी विधि कहूँगा। अथवा वन में किसी पेड़ की जड़ में खोद कर गाड़ दे। दूसरे कुल की अस्थियों को लाकर चान्द्रायण करे। दया से दूसरे कुल की भी अस्थि लाने में महापुण्य होता है। अस्थियों का कुत्ता, सूअर और शूद्र आदि से स्पर्श होने पर पञ्चगव्य और शालग्राम की तुलसी के जल से प्रोक्षण करे। आशौच के मध्य में अपने गोत्रजों के साथ भोजन करे, वह दिन में ही। भोजन मिट्टी के पात्र में या पत्ते के दोने में करे, धातु के पात्र में नहीं।

## अथ दशाहकृत्यम्

दाहदिनादारभ्य दशपिण्डा दशदिनमध्ये दर्भास्तीर्णभूमावमन्त्रकं देयाः। क्षत्रियादीनां नवपिण्डा नवदिनान्तं दशमपिण्डस्त्वाशौचान्त्यदिने[2]। प्रथमेऽहनि यो देशो यश्च कर्ता यच्च तण्डुलादिद्रव्यं यच्चोत्तरीयशिलापाकपात्रादि [3]तदेव दशाहान्तम्। एतदन्यतमव्यत्यये यतो व्यत्ययस्ततः पुनरावृत्तिः। शिलाविपर्ययेऽपि घटस्फोटादेर्नावृत्तिरित्युक्तेर्लौकिकशिलाग्रहणम्। तेन पिण्डदानतिलाञ्जल्यादिकस्यैवावृत्तिर्न दाहस्य। केचिदाचार्यविपर्ययेऽप्यावृत्तिमाहुः।

दाह के दिन से आरम्भ कर दस पिण्ड दस दिन के बीच में भूमि में कुश बिछा कर विना मन्त्र के देवे। क्षत्रियादि को नौ पिण्ड नौ दिन तक और दसवां पिण्ड तो आशौच के अन्तिम दिन

---

१. मदनरत्न में हारीत का वचन है—'पाणिषु मृन्मयेषु पर्णपुटकेषु वाश्नीरन्' शङ्ख ने आशौच में त्याज्य बतलाया है—'दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च। प्रेतपिण्डक्रियावर्ज्यमाशौचे विनिवर्तते॥' विष्णु ने आशौच के अन्त्य दिन का कर्तव्य बतलाया है—'आशौचान्ते तिलकल्कैः स्नाता गृहं प्रविशेयुः।' आदिपुराणे—'आदौ वस्त्रं च प्रक्षाल्य तेनैवाच्छादितैस्ततः। कर्तव्यं तैः सचैलं तु स्नानं सर्वमलापहम्॥' आश्वलायनः—'सव्यावृतो व्रजन्त्यनीक्षमाणा यत्रोदकमवहद् भवति तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रं नाम गृहीत्वा'। प्रचेता ने प्रतिदिन तीन अंजलिदान बतलाया है—'त्रिः प्रसेकं कुर्युः प्रेतस्तृप्यतु' इति। तथा—'दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात्प्रेतकारणात्। तावद् वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते॥' एकवृद्धित्रिकवृद्धिर्वेत्यर्थः।

२. यद्यपि हेमाद्रि में पारस्कर की उक्ति है—'ब्राह्मणे दश पिण्डास्तु क्षत्रिये द्वादश स्मृताः। वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः॥' फिर भी उन्हीं के—'प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान् दद्याद्दशैव तु।' इस वचन से सभी वर्णों के दस पिण्ड ही हैं। ब्रह्म और पद्मपुराण में—'जात्युक्ताशौचतुल्यांस्तु वर्णानां क्वचिदेव हि। देशधर्मान् पुरस्कृत्य प्रेतपिण्डान् वपन्त्यपि॥' ऐसा कह कर बतलाया है—'देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि। वैश्यानां त्रै पंचदशे देयस्तु दशमस्तथा॥ शूद्रस्य दशमः पिण्डो मासे पूर्णेऽह्नि दीयते।' इति।

३. शुनःपुच्छः—'फलमूलैश्च पयसा शाकेन च गुडेन च। तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत्॥ तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च। शालिनां सक्तुभिर्वाऽपि शाकैर्वाऽप्यथ निर्वपेत्॥ प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्।' इति।

में देना चाहिये। पहले दिन जो देश हो, जो कर्ता हो, जो चावल आदि द्रव्य हो, जो उत्तरीय-शिला-पाकपात्र आदि हो वही सब दशाहपर्यन्त होना चाहिये। इनमें से जो किसी एक के व्यत्यय होने पर जहाँ से व्यत्यय हो वहाँ से फिर आवृत्ति करे। शिला के विपर्यय में भी घटस्फोट आदि की आवृत्ति नहीं होती, इस उक्ति से लौकिक शिला का ग्रहण करे। इससे पिंडदान और तिलाञ्जलि आदि की आवृत्ति होती है, दाह की नहीं। कुछ लोग आचार्य के विपर्यय में भी आवृत्ति कहते हैं।

## अथ मुख्यकर्तृभिन्नेनारब्धे पिण्डादिके विचारः

यत्र पुत्रादिमुख्यकर्तुरसन्निधानादमुख्याधिकारिणा पिण्डदानक्रियाऽऽरब्धा तत्र मध्ये पुत्रादिसन्निधानेऽप्यमुख्यकर्त्रैव दशाहान्ता क्रिया समापनीया। एकादशाहादिकं तु पुत्रादिमुख्येनैव। समन्त्रकदाहमात्रेऽन्येन कृते तु पिण्डदानादिदशाह-कृत्यं सन्निकृष्टमुख्येनैव कार्यमिति मिताक्षरादयः।

जहाँ पुत्र आदि मुख्य कर्ता के समीप में नहीं रहने से मुख्य से भिन्न अधिकारी ने पिण्ड-दान क्रिया का आरम्भ कर दिया हो और इसके बीच में पुत्र आदि के आ जाने पर भी अमुख्य कर्ता ही दस दिन की क्रिया सम्पन्न करे। एकादशाह आदि तो मुख्य पुत्र आदि ही करे। दूसरे ने मन्त्रसहित दाहमात्र किया हो तो पिण्डदान आदि दशाह का कृत्य समीप में वर्तमान मुख्य ही को करना चाहिये, ऐसा मिताक्षरा का कथन है।

अन्ये तु—सगोत्रोऽसगोत्रो वा यः समन्त्रकदाहकर्ता स एव दशाहकृत्यं कुर्यादित्याहुः[1]। पत्न्याः कर्तृत्वे रजोदर्शने जाते सा तदन्ते कुर्यात्। कर्तुरस्वास्थ्येऽन्येन सर्वाः क्रियाः पुनः कार्याः।

दूसरे तो—सगोत्र या असगोत्र जो मन्त्रसहित दाह किया हो वही दशाह करे—ऐसा कहते हैं। स्त्री के कर्ता होने पर उसका रजोधर्म हो जाय तो वह स्त्री रजोधर्म के अन्त में दशाहकृत्य करे। कर्ता की अस्वस्थता में दूसरे को सब क्रिया फिर से करनी चाहिये।

## अथ पिण्डद्रव्यादिविचारः

पिण्डद्रव्येषु तण्डुला मुख्याः, तदभावे फलमूलशाकतिलमिश्रसक्तवोऽपि। प्रेतश्राद्धेषु पितृशब्दस्वधाशब्दानुशब्दाः पुष्पधूपदीपदानादौ मन्त्राश्च न वाच्याः। त्र्यहाशौचे पर्णशरदाहादौ प्रथमे दिने एकः पिण्डः द्वितीये चत्वारः तृतीते पञ्चेति[2] क्रमो बोध्यः।

पिण्ड के द्रव्यों में चावल मुख्य है, उसके न रहने पर फल, मूल, साग और तिलमिश्रित सत्तू भी है। प्रेतश्राद्धों में पितृशब्द, स्वधाशब्द, अनुशब्द और पुष्प-धूप-दीप-दान आदि में मन्त्र नहीं कहे। तीन दिन के आशौच वाले पर्णशरदाह आदि में प्रथम दिन एक पिण्ड, दूसरे दिन चार और तीसरे दिन पांच, यही क्रम जानना चाहिये।

---

१. वायवीये—'असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। यश्चाग्निदाता प्रेतस्य पिण्डं दद्यात् स एव हि॥' इति।

२. सद्यःशौच और त्र्यहाशौच में पिण्डदान का क्रम यों है—'सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा। त्र्यहाशौचे प्रदातव्यः प्रथमेऽह्न्येक एव हि॥ द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि।' शातातपः—'आशौचस्य ह्रासेऽपि पिण्डान् दद्याद्दशैव तु।' इति।

पुत्रेण पर्णशरदाहे कृते तस्य दशाहाशौचात्तेन त्र्यहमध्ये पिण्डसमाप्तिर्न कार्या। [1]शिरस्त्वाद्येनपिण्डेन प्रेतस्य क्रियते सदा। द्वितीयेन तु कर्णाक्षिनासिकाः, तृतीयेन कण्ठस्कन्धभुजवक्षांसि, चतुर्थेन नाभिलिङ्गगुदानि, पञ्चमेन जानुजङ्घ-पादम्, षष्ठेन मर्माणि, सप्तमेन नाड्यः, अष्टमेन दन्तलोमानि, नवमेन वीर्यम्।

दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः।
जलं दशाहमाकाशे स्थाप्यं क्षीरं च मृन्मये॥

प्रेतात्र स्नाहीत्युदकम्, इदं पिबेति च क्षीरम्। इदं च कृताकृतम्।

ततः प्रेतोपकृतये दशरात्रमखण्डितम्।
कुर्यात्प्रदीपं तैलेन वारिपात्रं च मार्तिकम्॥
भोज्याद्भोजनकाले तु भक्तमुष्टिं च निर्वपेत्।
नामगोत्रेण संबुद्ध्या धरित्र्यां पितृयज्ञवत्॥
भूर्लोकात्प्रेतलोकं तु गन्तुं श्राद्धं समाचरेत्।
तत्पाथेयं हि भवति मृतस्य मनुजस्य च॥

पुत्र पर्णशर दाह करे तो उसको दस दिन का आशौच होने से तीन दिन के मध्य में वह पिण्ड की समाप्ति नहीं करे। प्रथम पिण्ड से प्रेत का सिर बनता है। दूसरे से तो कान-आंख-नाक, तीसरे से कण्ठ-कन्धा बाहु-छाती, चौथे से नाभि-लिङ्ग-गुदा, पांचवें से जानु-जङ्घा-पैर, छठे से मर्म, सातवें से नाड़ियाँ, आठवें से दाँत और रोम, नववें से वीर्य बनता है। दसवें से पूर्णत्व, तृप्ति तथा भूख का विनाश होता है। दस दिन तक आकाश में मिट्टी के पात्र में जल और दूध रक्खे हे प्रेत! 'अत्र स्नाहि' यह कह कर जल और 'इदं पिब' यह कहकर दूध दे। इसे करे या नहीं करे। इसके बाद प्रेत के उपकारार्थ दस रात तक तेल का अखंड दीप और मिट्टी के पात्र में जल देवे। भोजन काल में भोज्य से मुठ्ठी भर भात नाम-गोत्र के सम्बोधन से पिण्डपितृयज्ञ के समान भूमि पर रख दे। भूमिलोक से प्रेतलोक में जाने के लिये श्राद्ध करे। वह मृत मनुष्य का राह खर्च होता है।

## अथ दशाहमध्ये दर्शपाते निर्णयः

पिण्डदानादौ प्रारब्धे यदि मध्ये दर्शप्राप्तिस्तदा मातापितृव्यतिरिक्तानां सर्वं दशाहकृत्यमाकृष्य दर्श एव समापनीयम्। मातापितृविषये तु त्र्यहमध्ये दर्शपाते नापकर्षः। त्रिरात्रात्परं दर्शपाते तु पित्रोरपि सर्वं दर्शे एव समापनीयमिति केचित्। अन्ये तु त्रिरात्रोर्ध्वमपि दर्शपाते औरसपुत्रेण पित्रोस्तन्त्रसमाप्तिर्न कार्येत्याहुः। अत्र देशाचाराद् व्यवस्थेति सिन्ध्वादयः। यदि दैवाद्-

१. ब्रह्मपुराणे—'शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा। द्वितीयेन तु कर्णाक्षिनासिकाश्च समासतः॥ गलांसभुजवक्षांसि तृतीयेन यथाक्रमम्। चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च॥ जानू जङ्घे तथा पादौ पञ्चमेन तु सर्वदा। सर्वमर्माणि षष्ठेन सप्तमेन तु नाड्यः॥ दन्तलोमान्यष्टमेन वीर्यं तु नवमेन च। दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः॥' इति।

र्शात्पूर्वं पिण्डदानादि तन्त्रं नारब्धं तदा दाहमात्रे समन्त्रके जातेऽपि न दर्शे तन्त्रसमाप्तिनियम इति भाति ।

पिण्डदान आदि प्रारम्भ होने पर यदि मध्य में दर्श की प्राप्ति हो तब माता-पिता से अतिरिक्तों का दशाह कर्म को घटा करके दर्श को ही समाप्त करे । माता-पिता के विषय में तो तीन दिन के बीच में दर्श पड़े तो अपकर्ष नहीं करे । कोई कहते हैं कि--तीन रात के बाद दर्श पड़े तो माता-पिता का भी सब कृत्य दर्श में ही समाप्त करे । दूसरे तो कहते हैं कि—तीन रात के बाद भी दर्श पड़े तो उसमें औरसपुत्र को माता-पिता के तन्त्र की समाप्ति नहीं करनी चाहिये। इसमें देशाचार से व्यवस्था करने का निर्णयसिन्धु आदि का कथन है। यदि दैववशात् पहले पिण्डदानादि तन्त्र का आरम्भ न किया हो तब मन्त्रसहित दाहमात्र के हो जाने पर भी दर्श में तन्त्र की समाप्ति का नियम नहीं है, ऐसा प्रतीत होता है।

दर्शोत्तरमेव तन्त्रारम्भसमाप्तिसम्भवेन 'द्विरैन्दवे' तु कुर्वाणः पुनः शावं समश्नुते' इत्युक्तदोषाप्रसक्तेः । एवं दर्शेऽपकृष्य तन्त्रसमाप्तावप्यग्निपिण्डदातुर्दशाहमाशौचमस्त्येव । पुत्रादेः सपिण्डस्य तु सुतराम् । दशाहं प्रेतपिण्डान्प्रदायास्नात्वा भुक्तावसपिण्डस्य त्रिरात्रोपवासः सपिण्डस्योपवास एकः, मत्या द्विगुणम् । प्रेतकृत्यं कुर्वता संचयनादर्वाक् स्त्रीसङ्गे कृते चान्द्रायणम् , ऊर्ध्वं कृच्छ्रत्रयम् । अन्येषामाशौचिनां संचयनादर्वाक् त्रिरात्रं तदुत्तरमेकोपवासः ।

दर्श के बाद ही तन्त्र का आरम्भ और समाप्ति होने से दर्श में दो बार श्राद्ध करने वाला पुनः शवकर्म को प्राप्त करता है, इस उक्ति से उक्त दोष की प्रसक्ति नहीं होगी। इसी प्रकार दर्श में भी अपकर्ष से तन्त्र की समाप्ति में भी अग्नि और पिण्ड देने वाले को दस दिन का आशौच है ही। पुत्र आदि सपिण्ड को तो सुतरां दस दिनका आशौच है। दस दिन तक प्रेत को पिण्ड देकर विना स्नान के भोजन करने पर असपिण्ड को तीन रात का उपवास और सपिण्डको एक उपवास है, जानकर भोजन करने में दूना है। प्रेत कृत्य करने वाले को संचयन के पहले स्त्रीप्रसंग करने पर चान्द्रायण और संचयन के बाद तीन कृच्छ्र व्रत करना चाहिये। अन्य आशौच वालों का अस्थि-संचयन के पूर्व त्रिरात्र, उसके बाद एक उपवास है।

## अथ नवश्राद्धम्

प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।
आपस्तम्बाः [2]षडित्याहुर्विभाषा त्वितरेषु हि ॥

---

१. यह पैठीनसि के वचन का उत्तरार्ध है, वचन का पूर्वार्ध यों है---'आद्येन्दावेव कर्तव्या प्रेतपिण्डोदकक्रिया ।' ऋष्यशृङ्गः—'आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् । समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः ॥' गालवः—'पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् । तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात्परम् ॥' कालादर्शे—'दर्शो दशाहमध्ये स्यादूर्ध्वं तन्त्रं समापयेत् । त्रिरात्रादुत्तरं पित्रोर्मृताविति विनिश्चयः ॥' इत्यादि मूल वचन अन्य-निबन्धों में देखें।

२. भविष्य में कहा है—'नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात् । आद्यन्तयोर्वर्णयोश्च षडित्याहुर्मनीषिणः ॥' नागरखण्डे—'पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा । दशमैकादशे चैव नवश्रा-

पञ्चपक्षे एकादशाहे नवश्राद्धं न कार्यम्। एतान्येव विषमश्राद्धानीत्युच्यन्ते। नवश्राद्धानि दशाहान्तर्नवमिश्रं तु वत्सर इत्यन्यत्र।

अकृत्वा तु नवश्राद्धं प्रेतत्वान्नैव मुच्यते।
नवश्राद्धं त्रिपक्षं च षाण्मासं मासिकानि च।
न करोति सुतो यस्तु तस्याधः पितरो गताः॥

जो श्राद्ध पहले, तीसरे, पांचवें, सातवें, नौवें और ग्यारहवें दिन किया जाता है, वह नव श्राद्ध कहलाता है। आश्वलायन शाखा वाले पांच नव श्राद्ध कहते हैं, आपस्तम्ब छ कहते हैं, अन्य के मत में विकल्प है। पांच वाले पक्ष में एकादशाह में नव-श्राद्ध नहीं करे। इन्हें ही विषम श्राद्ध कहते हैं। दस दिन के भीतर नवश्राद्ध और वर्ष में नवमिश्र श्राद्ध होते हैं, ऐसा अन्यत्र कहा है। विना नवश्राद्ध किये प्रेतत्व से मुक्ति नहीं होती। जो पुत्र नव श्राद्ध, त्रिपाक्षिक श्राद्ध, षाण्मासिक श्राद्ध और मासिक श्राद्ध नहीं करता, उसके पितृगण नरक में जाते हैं।

### अथ प्रेतश्राद्धे वर्ज्याः

अर्घ्यहीनमधूपं च गन्धमाल्यविवर्जितम्।
नवश्राद्धममन्त्रं स्यादवनेजनवर्जितम्॥
आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम्।
पितृशब्दः स्वसंबन्धः शर्मशब्दस्तथैव च॥
पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम्।
तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च॥
प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा।
अष्टादशपदार्थाश्च प्रेतश्राद्धे विवर्जयेत्॥

नव-श्राद्ध—अर्घ्य, धूप, गन्ध, माला, मन्त्र और अवनेजनरहित होता है। आशीर्वाद, दुगुने कुश, जप, आशीः, स्वस्तिवाचन, पितृशब्द, अपना सम्बन्ध, शर्मशब्द, पात्रालम्भन, अवगाहन, उल्मुक, उल्लेखन आदि, तृप्तिप्रश्न, विकिर, शेषप्रश्न, प्रदक्षिणा, विसर्जन तथा सीमोल्लङ्घन ये अठारह पदार्थ प्रेतश्राद्ध में त्याज्य हैं।

तिलोसीति मन्त्रे स्वधानमःपितृशब्दा न वाच्याः, किंतु प्रेतशब्दोहेन तूष्णीं वा तिलावपनम्। तूष्णीमर्घ्यदानम्। अमुष्मै स्वाहेति प्रेतनाम्ना पाणिहोमः। बह्वृचानां सर्वैकोद्दिष्टेष्वग्नौकरणमस्त्येव। अन्यशाखिनां तु तन्निषेधः। नाम्नैकः पिण्डः निनयनमन्त्रे ऊहः। अनुमन्त्रणादिकं त्वमन्त्रकम्। अभिरम्यतामिति विसर्जनम्। एवं नवश्राद्धवर्ज्यैकोद्दिष्टेषु। नवश्राद्धं त्वमन्त्रकं सर्वमिति नारायणवृत्तिः।

---

द्धानि तानि च॥' कात्यायनः—'चतुर्थे पञ्चमे चैव नवमैकादशे तथा। यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥' इति।

तिलोसि इस मन्त्र में स्वधा, नमः और पितृशब्द नहीं कहे, किन्तु प्रेत शब्द का ऊह करके मौन होकर तिलावपन करे। विना मन्त्र के अर्घ्यदान करे। अमुष्मै स्वाहा इससे प्रेत के नाम से पाणि-होम करे। बह्वृचों के यहाँ सब एकोद्दिष्टों में अग्नौकरण है ही। दूसरे शाखा वालों को तो उसका निषेध है। नाम से एक पिंड और निनयन मन्त्र में ऊह है। अनुमन्त्रण आदि तो विना मन्त्र का होता है। 'अभिरम्यताम्' इससे विसर्जन होता है। इसी तरह नवश्राद्ध को छोड़कर एकोद्दिष्टों में जाननी चाहिये। नवश्राद्ध तो सम्पूर्ण विना मन्त्र का होता है, ऐसा नारायणवृत्ति में है।

उत्तानं स्थापयेत्पात्रमेकोद्दिष्टे सदा बुधः।
न्युब्जं तु पार्वणे कुर्यात्तस्योपरि कुशान् न्यसेत् ॥

सपिण्डीकरणान्तानि प्रेतश्राद्धानि लौकिकाग्नावित्याश्वलायनमतम्। नवश्राद्धानि संभवेऽन्नेन कुर्यादन्यथामान्नेन। विघ्ने तु [1]'नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत्तत्तदुत्तरश्राद्धेन सहतन्त्रेण कार्यम्। शावे आशौचान्तरप्राप्तौ नवश्राद्धानि कुर्यादेव।

एकोद्दिष्ट श्राद्ध में पात्र सदा उत्तान स्थापित करे। पार्वण में तो न्युब्ज(औंधकर) रक्खे और उसके ऊपर कुश रख दे। आश्वलायन का मत है कि सपिण्डीकरण तक प्रेतश्राद्ध लौकिक अग्नि में करे। नव-श्राद्ध हो सके तो पक्वान्न से करे नहीं तो आमान्न से। विघ्न हो जाने पर तो नव श्राद्ध और मासिक श्राद्ध यदि बीच में छूट जाय तो उन्हें आगे वाले उस-उस श्राद्ध के साथ तन्त्र से करे। मरणाशौच में दूसरे आशौच के प्राप्त होने पर नव-श्राद्धों को करे ही।

सहगमने तु—

नवश्राद्धानि भिन्नानि सपिण्डीकरणं पृथक्।
एक एव वृषोत्सर्गो गौरेका तत्र दीयते ॥

शूद्रस्यामन्त्रकं सर्वं द्विजवन्नाम्नैव कार्यमिति स्मृत्यर्थसारः। अत्र वयोधिकमरणे तत्कनिष्ठानां सपिण्डानां दशमेऽहनि मुण्डनं केचिदाहुः। मातापित्राचार्येषु मृतेषु नियमेन [2]'दशमेऽहनि मुण्डनम्। एवं भर्तरि मृते स्त्रिया अपि मुण्डननियमः।

सहगमन में तो विभिन्न नव श्राद्ध और सपिण्डीकरण पृथक्-पृथक् होते हैं। एक ही वृषोत्सर्ग और उसमें एक गौ दी जाती है। शूद्र का विना मन्त्र के द्विज के समान सब नाम से ही करे, ऐसा स्मृत्यर्थसार में है। कोई कहते हैं कि इसमें अधिक अवस्था वाले के मरने में उससे छोटे सपिण्डों का दसवें दिन मुण्डन करे। माता-पिता और आचार्य के मरने में नियम से दसवें दिन मुण्डन करे। इसी तरह पति के मरने में स्त्री को भी मुण्डन का नियम है।

---

१. निर्णयामृत में कण्व का वचन है—'नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत्। तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥' इति।

२. देवलः—'दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत्। तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥' व्यासः—'आशौचान्त्यदिने क्षौरं जनन्यां च गुरौ मृते।' इति।

पुत्राणां सर्वेषां दाहकर्तुश्च दाहाङ्गभूतं प्रथमदिने दशमदिने च मुण्डनम्। अत्र देशाचाराद् व्यवस्था। अत्र रात्रिमृतस्य रात्रौ दाहेऽपि [1]प्रातरेव मुण्डनमित्युक्तम्। ततो [2]दशमेऽहनि पूर्ववस्त्रशुद्धिं गृहशुद्धिं च कृत्वा गौरसर्षपतिलकल्केन सशिरःस्नानं कृत्वा नववस्त्रे परिधाय परिहितवस्त्राणि प्रेतवस्त्राणि चान्त्यजेभ्य आश्रितेभ्यश्च दत्त्वा सुवर्णादीनि मङ्गलवस्तूनि स्पृष्ट्वा गृहं प्रविशेत्।

सभी पुत्रों और दाहकर्ता को पहले दिन और दसवें दिन दाह का अंगभूत मुण्डन करना चाहिये। इसमें देशाचार से व्यवस्था करे। इसमें रात में मरे का रात में दाह करने पर भी प्रातः काल ही मुण्डन करे, ऐसा पहले कहा है। इसके बाद दसवें दिन पूर्व वस्त्र की शुद्धि और घर की शुद्धि करके पीली सरसो और तिल की खरी से सिरसहित स्नान करके नया वस्त्र पहन कर पहने हुए वस्त्रों तथा मृतक के वस्त्रों को अन्त्यजों और अपने आश्रितों को देकर सुवर्ण आदि मङ्गल वस्तुओं को स्पर्श करके घर में प्रवेश करे।

## अथ अस्थिक्षेपविधिः

तत्रादौ संचयनदिनेऽस्थिस्थापनप्रकारः—

प्रेतस्थाने बलिं दत्त्वा क्षीरेणाभ्युक्ष्य वाग्यतः।
प्रेतस्यास्थीनि गृह्णीयात्प्रधानाङ्गोद्भवानि च॥
पञ्चगव्येन संस्नाप्य क्षौमवस्त्रेण वेष्टय च।
प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे॥
अरण्ये वृक्षमूले वा शुद्धे संस्थापयेदथ।
सूक्ष्माण्यस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत्॥
ततः संमार्जनं भूमेः कर्तव्यं गोमयाम्बुभिः।
पूजां च पुष्पधूपाद्यैर्बलिभिः पूर्ववच्चरेत्॥
तत्स्थानाच्छनकैर्नीत्वा तीर्थे वा जाह्नवीजले।
कश्चिच्च प्रक्षिपेत्पुत्रो दौहित्रो वा सहोदरः॥

---

१. संग्रहे—'रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम्। वपनं नेष्यते रात्रौ श्वस्तनी वापनक्रिया॥' इति।

२. मदनरत्न में विष्णु और हारीत का वचन है—'आशौचान्ते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वा स्नाताः शुक्लवाससो गृहं प्रविशेयुस्तत्र शान्तिकं कृत्वा ब्राह्मणपूजनं कुर्युः'। ब्राह्मे—'यस्य यस्य तु वर्णस्य यद्यस्यात्पश्चिमं त्वहः। स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि॥ समाप्य दशमं पिण्डं प्रेतस्पृष्टे तु वाससी। अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोत्यपि॥ श्मश्रुलोमनखानां च यत्त्याज्यं तज्जहात्यपि। गौरसर्षपकल्केन तिलकल्केन संयुतम्॥ शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः। वृषभं गां सुवर्णं च स्पृष्ट्वा शुद्धो भवेन्नरः॥' प्रेतकृत्य के बाद मनु ने शुद्ध्यर्थ स्पृश्य-पदार्थ बतलाया है—'विप्रः शुद्ध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम्। वैश्यः प्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः॥' इति।

उसमें पहले अस्थिसंचयन के दिन अस्थि रखने का प्रकार यह है—प्रेत के स्थान में बलि देकर दूध से धोकर मौन होकर प्रेत के प्रधान अंगों की अस्थियों को लेकर पञ्चगव्य से नहला कर रेशमी वस्त्र से लपेट कर ढँकने के साथ मिट्टी के नये पात्र में रखकर जंगल में पेड़ के नीचे शुद्ध स्थान में रख दे। छोटी हड्डियां और उनका भस्म लेकर जल में छोड़ दे। इसके बाद गोबर और जल से अस्थि-भूमि को शुद्ध करे और पुष्प धूप आदि तथा बलि से पहले के समान पूजा करे। उस स्थान से धीरे से लेकर तीर्थ में या गङ्गा के जल में कोई पुत्र, दौहित्र या सहोदर फेंक दे।

मातुः कुलं पितृकुलं वर्जयित्वा नराधमः।
अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत् ॥
गङ्गातोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात् ॥
अस्तंगते गुरौ शुक्रे तथा मासे मलिम्लुचे।
गङ्गायामस्थिनिक्षेपं न कुर्यादिति गौतमः ॥
दशाहान्तरस्थिप्रक्षेपे तु नास्तादिदोषः।
दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति।
गङ्गायां मरणं यादृक् तादृक् फलमवाप्नुयात् ॥

मातृकुल और पितृकुल को छोड़कर जो नराधम दूसरे कुल वाले की अस्थि लेकर फेंकता है वह चान्द्रायण करे। जिस शुभकर्मा की अस्थि गङ्गा में फेंकी जाती है, उसका सनातन ब्रह्मलोक से पुनः आगमन नहीं होता। गौतम का कहना है कि गुरु और शुक्र के अस्त में तथा मलमास में अस्थि का गङ्गा में प्रक्षेप न करे। दस दिन के भीतर अस्थि के प्रक्षेप में तो अस्त आदि का दोष नहीं होता। दस दिन के भीतर गङ्गा में जिसकी अस्थि डुबाई जाती है उसको गङ्गा में मरने का जैसा फल है वैसा फल मिलता है।

## अथ तीर्थेऽस्थिक्षेपं कर्तुं तत्पूर्वाङ्गविधिः

यत्रास्थीनि[1] निखातानि तां भूमिं सचैलस्नानपूर्वकं पृथग्गोमूत्रादिभिः प्रोक्षयेत्। तत्र गायत्र्या गोमूत्रेण, गन्धद्वारामिति गोमयेन, आप्यायस्वेति क्षीरेण, दधिक्राव्ण इति दध्ना, घृतं मिमिक्ष इति घृतेन। [2]उपसर्पेति चतसृणामृचां शंखः

१. ब्रह्माण्डपुराणे—'अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये कथंचित्। सद्बान्धवस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥ स्नात्वा ततः पंचगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्यः। ततस्तु मृत्पिण्डपुटे निधाय पश्यन् दिशं प्रेतगणोपरूढाम्। नमोऽस्तु धर्माय वदेत् प्रविश्य जलं स मे प्रीत इति क्षिपेच्च ॥ उत्थाय भास्वन्तमवेक्ष्य सूर्यं स दक्षिणां विप्रमुखाय दद्यात्। एवं कृते प्रेतपुरःस्थितस्य स्वर्गे गतिः स्याच्च महेन्द्रतुल्या ॥' शौनकः—'शौनकोऽहं प्रवक्ष्यामि अस्थिक्षेपविधिं क्रमात्। आदौ ग्रामाद् बहिर्गत्वा स्नानं कुर्यात् सचैलकम् ॥ प्रोक्षयेत् पञ्चगव्येन भुवं मन्त्रैर्विचक्षणः।' इति।

२. शौनकः—'उपसर्पादिभिर्मन्त्रैः प्रार्थनं खननं तथा। मृत्तिकोद्धरणं चास्थ्नां ग्रहणं च यथाक्रमम् ॥' उपसर्पादि चार मन्त्रों से क्रम से भूमिप्रार्थन, भूखनन, मृदुद्धरण और अस्थिग्रहण करे।

पितरस्त्रिष्टुप् भूप्रार्थनखननमृदुद्धरणास्थिग्रहणेषु क्रमेण विनियोगः। ताभिर्ऋग्भिः क्रमेणास्थिग्रहणान्तानि कर्माणि कृत्वा स्वयं जलाशये गृह्योक्तविधिना स्नायात्।

जहाँ अस्थि गाड़ी गयी है उस भूमि को सवस्त्र स्नान करके गोमूत्र आदि से पृथक्-पृथक् प्रोक्षण करे। उसमें गायत्री पढकर गोमूत्र से, 'गन्धद्वारां' यह मन्त्र पढकर गोबर से, 'आप्यायस्व' यह मन्त्र पढकर दूध से, 'दधि क्राव्णो', यह मन्त्र पढकर दही से, 'घृतं मिमिक्षे' यह मन्त्र पढकर घी से प्रोक्षण करे। 'उंपसर्प' इन चार ऋचाओं का शङ्ख पितर देवता, त्रिष्टुप् छन्द, भूमिप्रार्थना, खनन मिट्टी का उद्धरण और अस्थियों के ग्रहण में क्रम से विनियोग है। उन ऋचाओं से क्रम से अस्थि ग्रहण पर्यन्त कर्मों को करके स्वयं जलाशय में गृह्य में कही विधि से स्नान करे।

ततोऽस्थिशुद्धिं[1] कुर्यात्। सा यथा—अस्थीनि स्पृष्ट्वैतोन्विन्द्रमिति त्र्यृचावृत्त्या पञ्चगव्यैः स्नात्वा स्पृष्ट्वैव दशस्नानानि कुर्यात्। तत्र गायत्र्यादिपञ्चमन्त्रैर्गोमूत्रगोमयक्षीरदधिसर्पिःस्नानानि कृत्वा देवस्यत्वेति कुशोदकेन, मानस्तोके इति भस्मना, अश्वक्रान्ते रथक्रान्ते इति मृदा, मधुवाता इति मधुना, आपोहिष्ठेति शुद्धोदकेन च स्नायात्। एवं दशस्नानानि कृत्वाऽस्थ्नां कुशैर्मार्जनं कुर्यात्। तत्र मन्त्रः—अतो देवा इत्यृक्। अथ सप्तसूक्तानि—एतोन्विन्द्रं० ३, शुची वो० ३, नतमंहो न० ८, इति वा इति० १३, स्वादिष्ठया म० १०, ममाग्ने वर्चो० १०, कद्रुद्राय प्र० ९।

इसके बाद अस्थि की शुद्धि करे। वह शुद्धि इस प्रकार है—अस्थि को स्पर्श कर 'एतोन्विन्द्रं' इन तीन ऋचा की आवृत्ति करके पञ्चगव्य से स्नान कर स्पर्श किये हुए ही दस स्नानों को करे। उसमें गायत्री आदि पांच मन्त्रों को पढकर गोमूत्र-गोबर-दूध-दही-घी से स्नानों को करके 'देवस्यत्वा' यह मन्त्र पढकर कुशोदक से, 'मानस्तोके' यह मन्त्र पढकर भस्म से, 'अश्वक्रान्ते रथक्रान्ते' यह मन्त्र पढकर मिट्टी से, 'मधुवाता' यह मन्त्र पढकर मधु से और 'आपोहिष्ठा' यह मन्त्र पढकर शुद्ध जल से नहाये। इस तरह दस स्नानों को करके अस्थियों का कुश से मार्जन करे। उसमें मन्त्र ये हैं—'अतोदेवा' यह ऋचा है। सात सूक्त हैं—एतोन्विन्द्रं० ३, शुची वो० ३, नतमंहो न० ८, इति वा इति० १३, स्वादिष्ठया म० १०, ममाग्ने वर्चो० १०, कद्रुद्राय प्र० ९।

ततो यदीयान्यस्थीनि तस्य कृतसपिण्डीकरणस्य पार्वणविधिना श्राद्धमस्थिप्रक्षेपाङ्गभूतं हिरण्येन कुर्यात् सक्तुना च पिण्डदानम्। दशाहान्तरस्थिप्रक्षेपकरणे एकोद्दिष्टविधिना श्राद्धम्। ततस्तिलतर्पणं कृत्वा पञ्चगव्यपञ्चामृतशुद्धोदकैरस्थीनि प्रक्षाल्य यक्षकर्दमेनालिप्य पुष्पैः प्रपूज्याऽजिनकम्बलदर्भभूर्जपत्रशाणपत्रपट्टवस्त्रताडपत्राणां क्रमेण [2]सप्तधा संवेष्ट्य ताम्रसम्पुटे स्थापयेत्।

---

१. शौनकः—'स्नात्वाऽस्थिशुद्धिं कुर्वीत एतोन्विन्द्रेति सूक्ततः। स्पृष्ट्वा स्पृष्ट्वा ततः स्नानं पञ्चगव्येन शुद्धयति॥ दश स्नानानि कुर्वीत तत्तन्मन्त्रैर्विचक्षणः। गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्॥ भस्म मृन्मधुवारीणि मन्त्रतस्तानि वै दश। कुशैः सम्मार्जयेदस्थीन्यतोदेवेति मन्त्रतः॥ एतोन्विन्द्रं शुचीवेति न.त मंह इतीति च। पावमानीर्ममाग्ने च रुद्रसूक्तं यथाक्रमम्॥ हेमश्राद्धं ततः कुर्यात् पितॄनुद्दिश्य यत्नतः। पिण्डदानं प्रकुर्वीत ततश्च तिलतर्पणम्॥' इति।

२. शौनकः—'अजिनं कम्बलं दर्भा गोकेशाः शाण एव च। भूर्जपत्रं ताडपत्रं सप्तधा

तदनन्तर जिसकी हड्डी है उसका सपिण्डीकरण कर लिया गया हो तो उसके अस्थिप्रक्षेप का अङ्गभूत पार्वण विधि से सुवर्ण से श्राद्ध करे और सत्तू से पिण्डदान। दशाह के भीतर अस्थिप्रक्षेप करने में एकोद्दिष्ट विधि से श्राद्ध करे। इसके बाद तिल से तर्पण करके पञ्चगव्य, पंचामृत तथा शुद्ध जल से अस्थियों का प्रक्षालन और यक्षकर्दम से लेप करके फूलों से पूजकर मृगचर्म, कम्बल, कुश, भोजपत्र, शाणपत्र, पट्टवस्त्र और ताड़पत्र से क्रमशः सात प्रकार से लपेट कर तांबे के सम्पुट में रक्खे।

तत्र यक्षकर्दमलक्षणम्—द्वादशकर्षं चन्दनं कुङ्कुमं च षट्कर्षः कर्पूरश्चतुः-कर्षा कस्तूरी चैतेषां मेलनाद्यक्षकर्दमः। ततोऽस्थिषु हेमरौप्यखण्डानि मौक्तिकप्रवालनीलमणींश्च [1]प्रक्षिप्य स्वसूत्रोक्तविधिना स्थण्डिलाग्निप्रतिष्ठादि कृत्वाऽष्टोत्तरशतं तिलाज्याहुतीर्जुहुयात्। उदीरतां शंखः पितरस्त्रिष्टुप् अस्थिप्रक्षेपाङ्गतिलाज्यहोमे विनियोगः। उदीरतामिति सूक्तस्य चतुर्दशऋग्भिः प्रत्यृचमाहुतिरित्येवं सूक्तस्य सप्तावृत्तिभिरवशिष्टदशाहुतीः प्रथमऋगावृत्त्येत्येवमष्टोत्तरशतं तिलाहुतीरष्टोत्तरशतमाज्याहुतीश्च जुहुयात्। सवेष्टनास्थिसमुच्चययुतं ताम्रसम्पुटमादाय तीर्थं गच्छेत्।

उसमें यक्षकर्दम का लक्षण यह है—चन्दन और कुङ्कुम बारह कर्ष (तोला) छ कर्ष कपूर, चार कर्ष कस्तूरी, इन सबको मिलाने से यक्षकर्दम बनता है। इसके बाद अस्थियों में सोना-चांदी के टुकड़े, मोती-मूँगा-नीलम डाल कर सूत्र में कही विधि से स्थण्डिल में अग्निस्थापन आदि करके एक सौ आठ तिल-घृत की आहुतियों से होम करे। 'उदीरतां' इस सूक्त का शंख-पितर देवता त्रिष्टुप् छन्द अस्थिप्रक्षेप के अङ्ग तिल-घृत के होम में विनियोग है। 'उदीरताम' इस सूक्त की चौदह ऋचाओं से प्रति ऋचा से आहुति होती है, इस तरह सूक्त की सात आवृत्ति से शेष दस आहुतियों को प्रथम ऋचा की आवृत्ति से करे, इस प्रकार एक सौ आठ तिल की आहुतियों से और एक सौ आठ घी की आहुतियों से होम करे। वेष्टनसहित अस्थिराशि से युक्त तामे के सम्पुट को लेकर तीर्थ में जाय।

तत्र नियमाः—मूत्रपुरीषोत्सर्गकाले आचमनकाले च नास्थीनि धारयेत्। शूद्रयवनान्त्यजादिकां स्वहीनजातिमस्थिधारणकाले न स्पृशेदिति काशीखण्डे। ततस्तीर्थं प्राप्य तीर्थप्राप्तिनिमित्तकं स्नानादि विधायास्थीनि स्नापयित्वा 'अमुकगोत्रस्यामुकशर्मणो ब्रह्मलोकादिप्राप्तयेऽमुकतीर्थेऽस्थिप्रक्षेपमहं करिष्ये' इति संकल्प्य पलाशपर्णपुटे पञ्चगव्येनास्थीन्यासिच्य हिरण्यशकलमाल्यघृततिलमिश्रितास्थीनि मृत्पिण्डे निधाय दक्षिणां दिशमवेक्षमाणो नमोस्तु धर्मायेति वदंस्तीर्थे

---

वेष्टनं स्मृतम्॥' व्यासः—'पट्टवस्त्रं च कौशेयं माञ्जिष्ठं श्वेतवस्त्रकम्। कम्बलं शाणपट्टं च अजिनं च तथोत्तरम्॥' इति।

१. शौनकः—'हैमं च मौक्तिकं रौप्यं प्रवालं नीलकं तथा। निक्षिपेदस्थिमध्ये तु शुद्धिर्भवति नान्यथा॥ ततो होमं प्रकुर्वीत तिलाज्येन विचक्षणः। उदीरतेति सूक्तेन हुनेदष्टोत्तरं शतम्॥ ततो गत्वा क्षिपेत्तीर्थे स्पर्शदोषो न विद्यते। मूत्रं पुरीषाचमनं कुर्वान्नास्थीनि धारयेत्॥' इति।

प्रविश्य नाभिमात्रजले स्थित्वा स मे प्रीतोस्त्वित्युक्त्वा तीर्थे क्षिपेत्। ततः स्नात्वा जलाद्बहिरागत्य सूर्यं दृष्ट्वा हरिं स्मृत्वा विप्राय यथाशक्ति रजतं दक्षिणां दद्यात्—'अमुकस्यास्थिक्षेपः कृतस्तत्साङ्गतार्थं रजतमिदं तुभ्यं संप्रददे' इति। इत्यस्थिप्रक्षेपप्रकारः।

उसमें नियम ये हैं—मूत्र-पुरीष के त्याग और आचमन काल में अस्थियों को धारण नहीं करे। अस्थिधारण के समय शूद्र, यवन और अन्त्यज आदि अपने से नीच जाति का स्पर्श नहीं करे, ऐसा काशीखण्ड में है। तदनन्तर तीर्थ में पहुंच कर तीर्थ-प्राप्ति-निमित्तक स्नान आदि करके अस्थियों को नहला कर 'अमुक गोत्र अमुक शर्मा के ब्रह्मलोक आदि प्राप्ति के लिये अमुक तीर्थ में मैं अस्थि का प्रक्षेप करूँगा' ऐसा संकल्प करके पलास के पत्ते के बने दोने में पञ्चगव्य से अस्थियों को सींचकर सोने के टुकड़े-माला-घी-तिलयुक्त अस्थियों को मिट्टी के पिण्ड पर रख कर दक्षिण दिशा की ओर देखता हुआ 'नमोस्तु धर्माय' ऐसा कहता हुआ तीर्थ में प्रवेश कर नाभि पर्यन्त जल में खड़ा होकर 'स मे प्रीतोऽस्तु' ऐसा कहकर तीर्थ में फेंक दे। इसके बाद नहाकर जल से बाहर आकर सूर्य को देखकर हरि का स्मरण कर ब्राह्मण को यथाशक्ति चाँदी की दक्षिणा दे—'अमुक का अस्थिप्रक्षेप किया है उसकी साङ्गता के लिए यह चान्दी की दक्षिणा आपको देता हूँ'। अस्थिप्रक्षेप का प्रकार समाप्त।

## अथैकादशाहकृत्यम्

'एकादशाहे प्रातरुत्थाय गृहानुलेपनं कृत्वा स्पृष्टसर्ववस्त्रक्षालनपूर्वकं सर्वसपिण्डानां सचैलस्नानान्ते संध्यापञ्चमहायज्ञादिकर्मणि शुद्धिः। एकादशाहे सङ्गवकाले स्नानाच्छुद्धिरिति केचित्। एकादशाहे पुत्रादेः कर्तुरपि पञ्चमहायज्ञाद्यधिकारः। सपिण्डानां दर्शवार्षिकश्राद्धेष्वप्यधिकारः। नान्दीश्राद्धमात्रं चतुःपुरुषसपिण्डैः सपिण्डीकरणात्प्राङ् न कार्यम्। ततो दशाहकर्मकारी अमुख्यः कर्ता मुख्यो वा पुत्रादिः कर्ता वृषोत्सर्गाद्येकादशाहिकं सर्वं कर्म कुर्यात्।

ग्यारहवें दिन प्रातःकाल उठकर घर को लीप-पोतकर छुए हुए सब वस्त्रों को धोकर सब सपिण्डों की वस्त्रसहित स्नान के अन्त में संध्या और पञ्चमहायज्ञ कर्म में शुद्धि होती है। कुछ लोग कहते हैं कि एकादशाह में सङ्गव काल में स्नान से शुद्धि होती है। एकादशाह में पुत्र आदि और कर्ता को भी पञ्चमहायज्ञ आदि का अधिकार है। सपिण्डों को दर्श और वार्षिक श्राद्धों में भी अधिकार है। केवल नान्दीश्राद्ध चार पुरुष के सपिण्डों को सपिण्डीकरण से पूर्व नहीं करना चाहिये। इसके बाद दशाह कर्म करने वाला अमुख्य या मुख्य पुत्र आदि कर्ता वृषोत्सर्ग आदि एकादशाह के सब कर्म करे।

---

१. देवलः—'अघाहःसु निवृत्तेषु सुस्नाताः कृतमङ्गलाः। आशौचाद् विप्रमुच्यन्ते ब्राह्मणान् स्वस्ति वाच्य च ॥' क्षत्रियादि को ग्यारहवें दिन आशौच में भी श्राद्ध करना चाहिये, जैसा शंख का वचन है—'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि। कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥' पैठीनसिः—'एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्। चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक् ॥' इति।

## अथ वृषोत्सर्गः

एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

अत्र स्वयमेव सर्वं कुर्यान्न तु काम्यवृषोत्सर्गवदाचार्यवरणम् । अयं [1]गृहे न कार्यः । अयं द्वादशाहेऽप्युक्तः । क्वचिन्मृताहेऽप्युक्तः । विषुवद्द्वितये चैव मृताहे बान्धवस्य चेति ।

वत्सराभ्यन्तरे पित्रोर्वृषस्योत्सर्गकर्मणि ।
वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समारभेत् ॥

एकादशाह में जिस प्रेत के लिये सांढ नहीं छोड़ा जाता उसका प्रेतत्व सैकड़ों श्राद्ध करने पर भी स्थिर रहता है । इसमें स्वयं ही सब कर्म करे, काम्य वृषोत्सर्ग के समान आचार्य का वरण नहीं करे । यह घर में नहीं किया जाता । इसे द्वादशाह में भी करना कहा है । कहीं मृताह में भी कहा है । विषुव संक्रान्तियों में तथा बान्धव के मृताह में भी करे । वर्ष के भीतर माता-पिता के वृषोत्सर्ग कर्म में वृद्धि श्राद्ध नहीं करे, उसे अन्य समय में करे ।

## अथ नीलवृषलक्षणम्

नीलवृषलक्षणं तु—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

अथवा श्वेतवर्णस्य मुखपुच्छादिश्यामत्वे नीलवृषत्वम् । यद्वा सर्वश्यामस्य मुखादिश्वेतत्वे नीलवृषत्वम् । [2]केचिद् वृषाभावे मृद्भिः पिष्टैर्वा वृषं कृत्वा होमादिविधिना वृषोत्सर्गं इत्याहुः । यथोक्तालाभे यथालाभो द्विवर्ष एकवर्षो वा वृषो वर्षाधिकाश्चतस्र एका वा वत्सतरी स्यात् । प्रयोगस्तु स्वस्वसूत्रानुसारी ग्राह्यः ।

---

१. जैसा कालिकापुराण में कहा है—'न गृहे मोचयेन्नीलं कामयन्पुष्कलं फलम् ।' भविष्यपुराण में द्वादशाह में करना बतलाया है—'चैत्र्यां वापि तृतीयायां वैशाख्यां द्वादशेऽह्नि वा ।' मरणतिथि में करना विष्णुधर्म में कहा है—'विषुवद्द्वितये चैव मृताहे बान्धवस्य च ।' इति । देवीपुराण और भविष्यादि में वृषोत्सर्ग करने का फल बतलाया है—'एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितम् । यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिम् ॥ वृषोत्सृष्टः पुनात्येव दशातीतान् दशापरान् ।' इति ।

२. जैसा निर्णयसिन्धु में उद्धृत वचन है—'वृषोत्सर्जनवेलायां वृषाभावे कथंचन । मृद्भिः पिष्टैश्च दर्भैर्वा वृषं कृत्वा विमोचयेत् । न शक्यते वृषोत्सर्गो होमं वा तत्र कारयेत् ।' इस समय त्यक्त वृष का संरक्षणाभाव और दूसरे के खेतों में जाने पर उसके प्रहारादिजन्य दुर्दशा को देखते हुए वर्तमान समय में यही पक्ष उपयुक्त प्रतीत होता है । इन्हीं विषयों पर विचार करके मेरे पूज्य प्रगुरु म० म० श्री शिवकुमार शास्त्रीजी ने वर्तमान समय में इस मत के अनुसार ही पिष्टादि से वृष बनाकर या उसका निष्क्रय देकर वृषोत्सर्ग कृत्य की पूर्ति करने की व्यवस्था दी थी ।

सव्येन पाणिना पुच्छं समादाय वृषस्य तु ।
दक्षिणेनाप आदाय सतिलाः सकुशास्ततः ॥

[1]'प्रेतगोत्रं समुच्चार्यामुकस्मै वृष एष मया दत्तस्तं तारयत्विति वदन् सहेमजलं भूमावुत्सृजेत् ।

विधारयेन्न तं कश्चिन्न च कश्चन वाहयेत् ।
न दोहयेच्च तां धेनुं न च कश्चन बन्धयेत् ॥

नील वृष का लक्षण तो यह है—जिसका वर्ण लाल हो, मुंह तथा पूंछ पाण्डुर वर्ण का हो, खुर और सींग श्वेत हो वह नील वृष कहलाता है । अथवा श्वेत वर्ण के वृषभ का मुंह और पूंछ श्याम वर्ण का हो वह नील वृष कहलाता है । या सब श्याम हो मुंह आदि श्वेत हो तो वह भी नील वृष कहलाता है । कुछ लोग कहते हैं कि वृष के अभाव में मिट्टी या आंटा से वृष बनाकर होम आदि विधि करके वृषोत्सर्ग करे । यथोक्त वृष के अलाभ में दो वर्ष या एक वर्ष का वृष जैसा मिले और एक वर्ष से अधिक अवस्था की चार या एक बछिया हो । प्रयोग तो अपने-अपने सूत्र के अनुसार ग्राह्य है । वाम हाथ से वृष की पूंछ पकड़ कर दाहिने हाथ से जल-तिल तथा कुश के साथ प्रेत के गोत्र का उच्चारण कर अमुक को यह वृष मैंने दिया है उसको यह संसार से पार करे, ऐसा कहता हुआ सुवर्ण और जल के साथ भूमि में छोड़ दे । उस वृष को न कोई रक्खे न कोई लादे या न हल आदि में जोते और उस धेनु को कोई न दूहे न कोई बांधे ।

[2]पतिपुत्रवत्याः सुवासिन्या न वृषोत्सर्गः । सहगमने तु स्त्रीणां वृषोत्सर्गस्थाने गौरेव । वृषोत्सर्गसाङ्गतार्थं तिलोदकुम्भधेनुवस्त्रहिरण्येति पञ्चदानानि । आशौचान्तरं चेदेकादशाहे प्राप्नोति तदा वृषोत्सर्गादिकमाद्यमासिकं [3]शय्यादिदानानि च कुर्यादेव ।

एवं कृते वृषोत्सर्गे फलवाजिमखोदितम् ।
यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिम् ।
वृषोत्सर्गः पुनात्येव दशातीतान् दशापरान् ॥ इति वृषोत्सर्गः ।

पति और पुत्रवाली सौभाग्यवती का वृषोत्सर्ग नहीं करे । सहगमन में तो स्त्रियों के वृषोत्सर्ग के स्थान में गौ ही दे । वृषोत्सर्ग की साङ्गता के लिये तिल,उदकुम्भ, धेनु, वस्त्र और सुवर्ण, ये पांच दान होते हैं । यदि एकादशाह के दिन दूसरा आशौच पड़ जाय तब वृषोत्सर्ग आदि, आद्यमासिक और शय्यादान को करे ही । इस प्रकार वृषोत्सर्ग करने पर अश्वमेध का फल कहा है । जिसके

---

१. पारस्करः—'प्रेतगोत्रं समुच्चार्य अमुकस्मै इति ब्रुवन् । वृष एष मया दत्तस्तं तारयतु सर्वदा ॥ सहेम सतिलं भूमावित्युच्चार्य विनिक्षिपेत् । इसके पूर्व 'सव्येन पाणिना' यह भी पारस्कर का वचन है ।

२. संग्रहे—'पतिपुत्रवती नारी भर्तुरग्रे मृता यदि । वृषोत्सर्गं न कुर्वीत गां तु दद्यात् पयस्विनीम् ॥' इति ।

३. एकादशाह का श्राद्ध आद्यश्राद्ध है इसमें शय्यादान का निर्देश देवयाज्ञिकनिबन्ध में किया है—'एकादशतु विप्रेषु प्रेतमावाह्य भोजयेत् । तत्राद्याय च शय्यादि दद्यादाद्यमिति स्मृतम् ॥' इति ।

उद्देश से नील वृष का उत्सर्ग किया जाता है, वह परम गति को प्राप्त करता है। वृषोत्सर्ग, दस पिछले और दस आगे के पुरुषों को पवित्र करता है। वृषोत्सर्ग समाप्त।

## अथ एकादशाहे महैकोद्दिष्टम्

इदं च महैकोद्दिष्टं षोडशश्राद्धेभ्यो भिन्नमेव। अत एवेदं करिष्यमाणसर्वैकोद्दिष्टप्रकृतिभूतमित्युच्यते। इदं च [1]पाकेनैव। अत्र सति सम्भवे विप्रो भोजयितव्यः। असंभवेऽग्नौ होमः, 'ब्राह्मणं भोजयेदाद्य होतव्यमनलेऽथवा' इत्युक्तेः।

श्मश्रुकर्म तु कर्तव्यं नखच्छेदस्तथैव च।
स्नपनाभ्यञ्जने दद्याद्विप्राय विधिपूर्वकम्॥

ततः क्षणपाद्यार्घ्यासनगन्धपुष्पाच्छादनान्येव दद्यात्। नात्र धूपदीपौ। [2]एकोद्दिष्टं देवहीनमित्युक्तेरेक एव विप्रः दिवैव च निमन्त्रणम्। एकमर्घ्यपात्रम्। स्वधाशब्दनमःशब्दपितृशब्दा न सन्ति। तेन प्रत्तः प्रेत इमाँल्लोकान्प्रीणयाहि न इति मन्त्रोहोऽर्घ्यपात्रे, नाभिश्रवणम्।

यह महा एकोद्दिष्ट सोलह श्राद्धों से भिन्न ही है। इसी लिए इसे किये जाने वाले सब एकोद्दिष्टों का प्रकृतिभूत कहा है। यह पाक से ही होता है। सम्भव हो तो इसमें विप्र को भोजन कराना चाहिये। सम्भव नहीं हो तो अग्नि में होम करे, क्योंकि वचन है कि आद्य श्राद्ध में ब्राह्मण को खिलावे या अग्नि में होम करे। श्मश्रु कर्म और नख कटाना चाहिये। ब्राह्मण को विधिपूर्वक स्नपन और अभ्यंजन दे। इसके बाद क्षण, पाद्य, अर्घ्य, आसन, गन्ध, पुष्प और वस्त्र दे। इसमें धूप और दीप न दे। एकोद्दिष्ट श्राद्ध देवरहित है, इस उक्ति से एक ही ब्राह्मण और दिन में ही निमन्त्रण होता है। इसमें एक अर्घ्य-पात्र रक्खे। स्वधा शब्द, नमः शब्द और पितृ शब्द नहीं है। इससे 'प्रत्तः प्रेत इमाँल्लोकान्प्रीणयाहि नः' इस मन्त्र का ऊह अर्घ्यपात्र में होता है। अभिश्रवण नहीं है।

सर्वं प्राचीनावीतिनैव कार्यम्, देवकार्याभावात्। अग्नौकरणविकल्पः। तत्र च पाणिहोमेऽपि न तस्य भक्षणं किन्त्वग्नौ प्रक्षेपः। एक एव पिण्डः। अनुमन्त्रणादिसर्वममन्त्रकम्। स्वदितमिति तृप्तिप्रश्नः कात्यायनानाम्। अक्षय्यस्थाने उपतिष्ठतामिति वदेत्। अभिरम्यतामिति विसर्जनम्। अभिरताः स्मेति विप्रप्रतिवचनम्। श्राद्धशेषभोजनं नास्ति। अन्ते स्नानम्। नवश्राद्धैकोद्दिष्टे तु सर्वममन्त्रकमित्युक्तम्।

---

१. लघुहारीतः—'एकोद्दिष्टं तु कुर्वीत पाकेनैव सदा स्वयम्। अभावे पाकपात्राणां तदहः समुपोषणम्।' इति।

२. एक उद्दिष्टो यस्मिन् श्राद्धे तदेकोद्दिष्टमिति कर्मनामधेयम्। याज्ञवल्क्यः—'एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम्। आवाहनाग्नौकरणरहितं ह्यपसव्यवत्।' एकोद्दिष्ट का काल मध्याह्न है, जैसा देवल ने कहा है—'पूर्वाह्णे दैविकं कर्म अपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥' इति।

सब कर्म प्राचीनावीती (अपसव्य) से ही करे, क्योंकि इसमें विश्वेदेव कार्य का अभाव है। अग्नौकरण में विकल्प है। उसमें पाणि-होम में भी उसका भक्षण नहीं होता किन्तु अग्नि में प्रक्षेप होता है। एक ही पिण्ड होता है। अनुमन्त्रण आदि सब विना मन्त्र के होता है। कात्यायनों के मत में 'स्वदितं' ऐसा तृप्तिप्रश्न होता है। अक्षय्य के स्थान में 'उपतिष्ठताम्' ऐसा कहे। 'अभिरम्यताम्' इससे विसर्जन करे। ब्राह्मण का प्रतिवचन 'अभिरताः स्म' है। श्राद्ध शेष का भोजन नहीं होता। अन्त में स्नान है। नव श्राद्ध एकोद्दिष्ट में तो सब कर्म मन्त्ररहित होता है, यह कहा है।

विप्राभावे त्वग्नावेकोद्दिष्टं यथा—अग्नौ पायसं श्रपयित्वाज्यभागान्तेऽग्नेरग्रे श्राद्धप्रयोगं कृत्वाग्नौ प्रेतमावाह्य गन्धाद्यैः संपूज्य पृथ्वी ते पात्रमित्यादिनान्नं संकल्प्योदीरतामवर इत्यष्टाभिश्चतुरावृत्ताभिर्ऋग्भिर्द्वात्रिंशदाहुतीर्हुत्वा पिण्डदानादि श्राद्धं समापयेदिति। एवमेतदेकोद्दिष्टं स्त्रीणामपि।

ब्राह्मण के अभाव में तो अग्नि में ही एकोद्दिष्ट करे, जैसे—अग्नि में खीर बनाकर आज्य भाग के अन्त में अग्नि के आगे प्रेत का आवाहन कर गन्ध आदि से पूजन कर 'पृथ्वी ते पात्रं' इत्यादि से अन्न का संकल्प कर 'उदीरतामवर' इन आठ ऋचाओं की चार आवृत्तियों से बत्तिस आहुतियों से होम करके पिण्डदान आदि श्राद्ध को समाप्त करे। इसी प्रकार स्त्रियों का भी यह एकोद्दिष्ट होता है।

## अथाद्यमासिकम्

तस्य मासादौ मासिकं कार्यमिति वचनान्मृताहो मुख्यः कालः। स चाशौचप्रतिबन्धादतिक्रान्त इति तदन्ते एकादशेऽह्नि तत्कार्यम्। अत एव—

ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिह॥

इति प्रथममासिकार्थं द्वितीयावृत्तिरुक्ता। अत्र च द्विरावृत्तिर्भवेदिहेत्युक्तिः षोडशमासिकानां सपिण्डयधिकारार्थमपकृष्य कर्तव्यानां द्वादशाहादौ करणपक्षे योज्या।

मास के आदि में मासिक श्राद्ध करना चाहिये, इस वचन से आद्य मासिक श्राद्ध का मरण दिन मुख्य काल है। वह आशौच के प्रतिबन्ध से व्यतीत हो गया. इससे अन्त में ग्यारहवें दिन उसे करना चाहिये। इसीलिये—आद्य श्राद्ध में ब्राह्मण को भोजन करावे या अग्नि में होम करे। पुनः ब्राह्मणों को भोजन करावे। इस वचन से प्रथम मासिक के लिये दूसरी आवृत्ति कही गई है। और यहाँ 'दो आवृत्ति इसमें हो जाय' यह उक्ति षोडश मासिकों का सपिण्डी के अधिकार के लिये अपकर्ष करके करने योग्य द्वादशाह आदि करने के पक्ष में लगानी चाहिये।

तेषामेकादशाह एव करणपक्षे तु षोडशमासिकानां षोडशावृत्तय एकं महैकोद्दिष्टमिति सप्तदशावृत्त्यापत्त्या द्विरावृत्तिर्भवेदिहेत्युक्तेरसङ्गतेः। तथा च सपिण्डयधिकारार्थापकृष्याणां मासिकानां द्वादशाहे करणे 'एकादशाहे महैकोद्दिष्टो-

त्तरमतिक्रान्तमाद्यमासिकं करिष्ये' इति संकल्प्याद्यमासिकमात्रमन्नेनामेन वा विप्रे दर्भबटौ वा प्रेतमावाह्य कार्यं, न त्वाद्यमासिकस्याग्नौ होमः; पुनश्च भोजयेद्विप्रमिति विशेषवचनात्। इत्थं च महैकोद्दिष्टमेकमाद्यमासिकमेकमित्ये-कोद्दिष्टस्य द्विरावृत्तिः स्पष्टैव। ये त्वाद्यमासिकातिरेकेण महैकोद्दिष्टस्यैव द्विरावृत्ति वदन्ति ते भ्रान्ताः।

उनका जब एकादशाह ही में करने का पक्ष है तो षोडश मासिकों के सोलह आवृत्ति के लिये एक महा एकोद्दिष्ट इस तरह सतरह आवृत्ति की आपत्ति होने से 'द्विरावृत्तिर्भवेदिह' इस उक्ति की असङ्गति होगी। अतः सपिण्डी के अधिकारार्थ अपकर्ष करने योग्य मासिकों का बारहवें दिन करने में 'एकादशाह में महा एकोद्दिष्ट के बाद अतिक्रान्त आद्य मासिक करूँगा' ऐसा संकल्प करके केवल आद्य मासिक पक्वान्न से अथवा आमान्न से ब्राह्मण या कुश बटु में प्रेत का आवाहन करके करे आद्य मासिक का होम अग्नि में नहीं करे, क्योंकि पुनः ब्राह्मण को भोजन करावे, यह विशेष वचन है। इस प्रकार एक महा एकोद्दिष्ट और एक आद्य मासिक इससे एको-द्दिष्ट की आवृत्ति स्पष्ट है। जो आद्य मासिक को छोड़कर महैकोद्दिष्ट ही की दो आवृत्ति करने को कहते हैं, वे भ्रम में हैं।

अत्र केचिदाद्याब्दिकस्यापि मृताह एव काल इति तस्याप्यतिक्रान्तत्वादे-कादशाहे 'आद्यमासिकमाद्याब्दिकं च तन्त्रेण करिष्ये' इति संकल्प्य द्वयमपि तन्त्रेण कार्यमित्याहुः। अन्ये तु 'मासादौ मासिकं कार्यमाब्दिकं वत्सरे गते' इति वचनाद् द्वितीयवर्षारम्भे प्रथमाब्दिकमिति नाब्दिकस्यैकादशाहेऽनुष्ठानमित्याहुः।

इसमें कुछ लोग कहते हैं कि आद्य वार्षिक का भी मृताह ही काल है अतः उसका भी अतिक्रान्त होने से एकादशाह में 'आद्य मासिक और आद्य आब्दिक तन्त्र से करूँगा' ऐसा संकल्प करके दोनों को तन्त्र से करे। दूसरे तो यह कहते हैं कि—'मास के आदि में मासिक तथा वर्ष के बीतने पर आब्दिक' इस आशय के वचन से दूसरे वर्ष के आरम्भ में प्रथमाब्दिक करे, इससे आब्दिक का एकादशाह में अनुष्ठान नहीं होता।

एवं त्रिपक्षे सपिण्डीकरणपक्षे एकादशाहे आद्यमासिकमूनमासे ऊनमासिकं द्वितीयमासारम्भे द्वितीयमासिकं पक्षत्रये त्रैपक्षिकं चैकोद्दिष्टविधिना कृत्वाव-शिष्टद्वादशमासिकान्यपकृष्य तथैव कृत्वा सपिण्डीकरणम्। एवं पक्षान्तरेषूह्यम्। एकादशाहे तन्त्रेण षोडशमासिकापकर्षपक्षे महैकोद्दिष्टोत्तरं देशकालौ संकीर्त्य 'अतिक्रान्तमाद्यमासिकं 'सपिण्डयधिकारार्थमपकृष्योनमासिकादीन्यूनाब्दिका-न्तानि पञ्चदशमासिकानि च तन्त्रेणैकोद्दिष्टेन विधिना करिष्ये' इति संकल्प्य

---

१. गोभिल और लौगाक्षि ने कहा है—'श्राद्धानि षोडशादत्त्वा नैवं कुर्यात् सपिण्डनम्। श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ॥' जैसे षोडश मासिक श्राद्ध नहीं करने पर सपिण्डी श्राद्ध करने का अधिकार नहीं है, उसी तरह नवश्राद्ध नहीं करने पर मासिक श्राद्ध करने का अधिकार नहीं होता—'नवश्राद्धादिश्राद्धानि न कृतानि तु यस्य वै। नाधिकारी भवेत्तत्र मासषाण्मासिका-ब्दिके ॥' इति।

तन्त्रेण षोडशापि कुर्यात् । केचिन्मते त्वतिक्रान्ते आद्यमासिकाद्याब्दिके ऊनमासिकादीनि चेत्यादिसंकल्पः ।

इसी प्रकार त्रिपक्ष में सपिण्डी करने के पक्ष में एकादशाह में आद्य मासिक, ऊनमास में ऊनमासिक, दूसरे मास के आरम्भ में द्वितीय मासिक और तीन पक्ष में त्रैपक्षिक, एकोद्दिष्ट विधि से करके बाकी बचे द्वादश मासिकों का अपकर्ष करके उसी तरह करके सपिण्डीकरण करे। इसी तरह दूसरे पक्ष में भी कल्पना करे। एकादशाह में तन्त्र से षोडश मासिक के अपकर्ष पक्ष में महैकोद्दिष्ट के बाद देश काल कहकर 'व्यतीत आद्यमासिक और सपिण्डी के अधिकारार्थ अपकर्ष करके ऊनमासिक आदि ऊनाब्दिक पर्यन्त पन्द्रह मासिकों को तन्त्र से एकोद्दिष्ट विधि से करूँगा' ऐसा संकल्प करके षोडश श्राद्धों को भी तन्त्र से करे। कुछ के मत में तो अतिक्रान्त आद्यमासिक और आद्य आब्दिक में ऊन मासिक आदि ऐसा संकल्प है।

मासिकानि तु—आद्यमासिकम् १, ऊनमासिकम् २, द्वितीयमासिकम् ३, त्रैपक्षिकम् ४, तृतीयमासिकम् ५, चतुर्थमासिकम् ६, पंचममासिकम् ७, षष्ठम् ८, ऊनषाण्मासिकम् ९, सप्तममासिकम् १०, अष्टमम् ११, नवमम् १२, दशमम् १३, एकादशम् १४, द्वादशम् १५, ¹ऊनाब्दिकम् १६ चेति क्रमेण ज्ञेयानि ।

मासिक तो–आद्य मासिक १, ऊनमासिक २, द्वितीय मासिक ३, त्रैपक्षिक ४, तृतीय मासिक ५, चतुर्थ मासिक ६, पञ्चम मासिक ७, षष्ठ मासिक ८, ऊनषाण्मासिक ९, सप्तम मासिक १०, अष्टम ११, नवम १२, दशम १३, एकादश १४, द्वादश १५, ऊनाब्दिक १६, इस क्रम से जानना चाहिये।

## अथैकादशाहे रुद्रगणश्राद्धम्

तच्चैकादशरुद्रोद्देशेन रुद्ररूपप्रेतोद्देशेन वा । रुद्रोद्देशपक्षे सव्येन रुद्ररूपप्रेतोद्देशे पक्षेऽपसव्येन । वीरभद्रः १, शम्भुः २, गिरीशः ३, अजैकपात् ४, अहिर्बुध्न्यः ५, पिनाकी ६, अपराजितः ७, भुवनाधीश्वरः ८, कपाली ९, स्थाणुः १०, भगः ११, इत्येकादशरुद्राः । अत्र शक्तेनैकैकरुद्रनाम्नैको विप्र इत्येकादशविप्रा भोज्याः । अशक्तेन तु सर्वोद्देशेनैक एव विप्रो भोज्यः । आमान्नान्येकादशैकं वामान्नं देयम् । अत्र श्राद्धे पिण्डदानार्घ्याग्नौकरणविकिराणामभावः ।

रुद्रगण का श्राद्ध ग्यारह रुद्र के उद्देश्य से या रुद्ररूप प्रेत के उद्देश्य से होता है। रुद्रोद्देश पक्ष में सव्य से और रुद्ररूप प्रेत के उद्देश पक्ष में अपसव्य से करे। वीरभद्र १, शम्भु २, गिरीश ३, अजैकपात् ४, अहिर्बुध्न्य ५, पिनाकी ६, अपराजित ७, भुवनाधीश्वर ८, कपाली ९, स्थाणु १०, भग ११, ये ग्यारह रुद्र हैं। इसमें समर्थ पुरुष एक-एक रुद्र के नाम से एक-एक ब्राह्मण, इस प्रकार ग्यारह ब्राह्मण को भोजन करावे। अशक्त हो तो सब के उद्देश से एक ही

---

१. गौतमः—'एकद्वित्रिदिनैरूने त्रिभागेनोन एव वा । श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः ॥' जातूकर्ण्य ने षोडश श्राद्धों का निर्देश यों किया है—'द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा । त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥' यहाँ आद्य, षाण्मासिक और आब्दिक शब्द ऊनमासिक, ऊनषाण्मासिक और ऊनाब्दिक परक है। हेमाद्रि में इस वचन के उत्तरार्ध का पाठान्तर है—'सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशम् ।' विशेष विचार अन्य निबन्धों में देखें।

ब्राह्मण खिलावे। आमान्न ग्यारह या एक आमान्न दे। यहाँ श्राद्ध में पिण्डदान, अर्घ्य, अग्नौकरण और विकिर का अभाव है।

## अथ वसुगणश्राद्धम्

एवमेवाष्टवसुश्राद्धम्। एतच्च कृताकृतम्। वसुनामान्यप्यन्यत्र। एतदेकादशाहकृत्यं त्र्यहाशौचे चतुर्थदिने कर्तव्यम्। द्वितीयदिने प्रथमदिने वास्थिसंचयनम्। पञ्चमदिने सपिण्डीकरणम्।

ऐसे ही आठ वसुओं का श्राद्ध है। इसे करे या नहीं करे। वसुओं के नाम भी अन्यत्र हैं। यह एकादशाह कर्म तीन दिन के आशौच में चौथे दिन करे। दूसरे दिन या प्रथम दिन अस्थिसंचयन होता है। पाचवें दिन सपिण्डीकरण होता है।

## अथ पददानादि

अत्रैकादशाहे द्वादशाहे वा पददानानि कार्याणि। तेन प्रेतस्य मार्गे सुखगतिः।

आसनोपानहच्छत्रं मुद्रिका च कमण्डलुः।
यज्ञोपवीताज्यवस्त्रं भोजनं चान्नभाजनम्॥
दशकं पदमेतत्स्यात्पदान्येवं त्रयोदश।
देयानि वा यथाशक्ति तेनासौ प्रीणितो भवेत्॥
अन्नं चैवोदकुम्भं चोपानहौ च कमण्डलुः।
छत्रं वस्त्रं तथा यष्टिं लोहदण्डं च दापयेत्॥
अग्नीष्टिकां प्रदीपं च तिलांस्ताम्बूलमेव च।
चन्दनं पुष्पमालां चोपदानानि चतुर्दश॥

इसमें ग्यारहवें या बारहवें दिन पददान करे। इससे प्रेत को मार्ग में सुखपूर्वक गति होती है। आसन-जूता-छाता-अंगूठी-कमण्डलु-यज्ञोपवीत-घृत-वस्त्र-भोजन-अन्नपात्र, ये दस पद हैं। इसी प्रकार तेरह पद हैं। या यथाशक्ति दे, इससे प्रेत प्रसन्न होता है। ये चौदह उपपद हैं—अन्न-जल का घड़ा-जूता-कमण्डलु-छाता वस्त्र-छड़ी-लोहे का दण्ड अंगीठी-प्रदीप-तिल ताम्बूल-चन्दन-पुष्पमाला।

वैतरणीधेनूत्क्रान्तिधेनुमोक्षधेन्वादिदानानि गोभूम्यादिदशदानानि तिलपात्रदानादीनि मरणकाले न कृतानि चेदेकादशाहादौ पुत्रादिभिः प्रेतोद्देशेन कार्याणि।

अश्वं रथं गजं धेनुं महिषीं शिबिकादिकम्।
शालग्रामं पुस्तकं च कस्तूरीकुङ्कुमादिकम्॥

---

१. गरुडपुराण में एकादशाह के प्रसंग में कहा है—'तदह्नि दीयते सर्वं द्वादशाहे विशेषतः॥ पदानि सर्ववस्तूनि वरिष्ठानि त्रयोदश। यो ददाति मृतस्येह जीवतोऽप्यात्महेतवे॥ सुखी भूत्वा महामार्गे वैनतेय स गच्छति।' इति।

दासीं रत्नं भूषणादि शय्यां छत्रं च चामरम् ।
दद्याद्वित्तानुसारेण प्रेतस्तत्तत्सुखं लभेत् ॥

वैतरणीधेनु उत्क्रान्तिधेनु-मोक्षधेनु-आदि दानों को, गौ-भूमि-आदि दस दानों और तिलपात्र आदि दानों को मरण समय में न किये हों तो एकादशाह आदि में पुत्र आदि प्रेत के उद्देश से करे। घोड़ा-रथ-हाथी-धेनु भैंस-पालकी-आदि, शालग्राम-पुस्तक-कस्तूरी-कुङ्कुम-आदि, दासी रत्न-भूषण आदि, शय्या-छत्र-चामर ये, सब अपने धन के अनुसार दे, जिससे मृतक उन-उन वस्तुओं का सुखपूर्वक उपभोग करे।

## अथ शय्यादानम्

एकादशाहे[1] शय्याया दाने एष विधिः स्मृतः ।
तेनोपभुक्तं यत्किचिद्वस्त्रवाहनभाजनम् ॥
यद्यदिष्टं च तस्यासीत्तत्सर्वं परिकल्पयेत् ।
प्रेतं च पुरुषं हैमं तस्यां संस्थापयेत्तदा ॥
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ।
तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ॥
दन्तपत्राचितां रम्यां हेमपट्टैरलंकृताम् ।
हंसतूलिप्रतिच्छन्नां शुभगण्डोपधानिकाम् ॥
प्रच्छादनपटीयुक्तां गन्धधूपादिवासिताम् ।
उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् ।

एकादशाह में शय्यादान की यह विधि कही गयी है। उसने जो कुछ वस्त्र, सवारी और पात्र का उपभोग किया है और उसको जो-जो इष्ट था वे सभी चीजें शय्यादान में देवे। शय्या पर सोने का प्रेत-पुरुष रक्खे। मृत की शय्या का पूजन कर जैसा कहा गया है वैसी देनी चाहिये। इसलिये पकी दृढ लकड़ी की शय्या बनवावे। शय्या-हाथी दांत से बनी सुन्दर सोने के पत्र से सुशोभित, हंस के वर्ण की तरह रुई से भरी, तोसक तथा तकिया से भूषित, ऊपर से सफेद चादर बिछी, गन्ध-धूप से वासित एवं सिरहाने की ओर घृत से भरा कलश स्थापित हो।

ताम्बूलकुङ्कुमक्षोदकर्पूरागरुचन्दनम् ।
दीपिकोपानहच्छत्रचामरासनभाजनम् ॥
पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैव हि ।
शयनस्थस्य भवति यदन्यदुपकारकम् ॥
भृङ्गारकरकाद्यं तत्पञ्चवर्णं वितानकम् ।

---

१. मत्स्यपुराणे—'आशौचान्तद्वितीयेह्नि शय्यां दद्यात् सुलक्षणाम्। काञ्चनं पुरुषं तद्वत् फलपुष्पसमन्वितम् ॥ सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः। वृषोत्सर्गश्च कर्तव्यो देया च कपिला शुभा ॥' यहां 'द्विजदाम्पत्यं सम्पूज्य शय्यां दद्यात्' ऐसा अन्वय है। यद्यपि वचन में कपिलादान वृषोत्सर्ग के बाद निर्दिष्ट है फिर भी दान साजात्य से वृषोत्सर्ग के पहले करना चाहिये।

सम्पूज्य द्विजदांपत्यं नानाभरणभूषितम् ॥

उपवेश्य तु शय्यायां मधुपर्कं ततो वदेत् । दानमन्त्रस्तु—

यथा न कृष्णशयनं शून्यं सागरजातया ।

शय्या तस्याप्यशून्यास्तु तथा जन्मनि जन्मनि ॥

यस्मादशून्यशयनं केशवस्य शिवस्य च ।

शय्या तस्याप्यशून्यास्तु तथा जन्मनि जन्मनि ॥

दत्त्वैवं तस्य सकलं प्रणिपत्य विसर्जयेत् । पाद्मे तु—

ताम्बूल-कुङ्कुम-कपूर-चन्दन-अगरु से युक्त, दीपक जूता-छत्र-चामर-आसन-वर्तन और सप्तधान्य को भक्ति से शय्या के बगल में स्थापित करे । शय्या पर स्थित पुरुष का जो-जो उपकारक भृङ्गार ( गडुआ ) करक ( करवा ) आदि और पांच रंग का चँदवा रक्खे । अनेक भूषणों से भूषित कर ब्राह्मण पतिपत्नी का सम्यक् पूजनकर शय्या पर बैठाकर मधुपर्क दे । दान का मन्त्र यह है—जैसे श्रीकृष्ण भगवान् की शय्या लक्ष्मी से शून्य नहीं रहती वैसे ही उस प्रेत की शय्या जन्म-जन्म में शून्य न रहे । जैसे केशव और श्रीशंकर की शय्या अशून्य है वैसे जन्मजन्मान्तर में उस प्रेत की भी शय्या अशून्य रहे । इस प्रकार उस ब्राह्मण को शय्या आदि सम्पूर्ण वस्तु देकर प्रणाम करके विसर्जन करे । पद्मपुराण में तो ऐसा कहा है—

अस्थिललाटकं गृहच सूक्ष्मं कृत्वा सपायसम् ।

भोजयेद् द्विजदाम्पत्यं विधिरेष सनातनः ॥ इत्युक्तम् ।

नैतन्महाराष्ट्रदेशादिशिष्टैराद्रियते । यद्देशे तदाचारस्तत्रास्तु ।

मृत पुरुष के ललाट की हड्डी लेकर उसे खूब महीन पीसकर पायस ( खीर ) में द्विज-दम्पती को भोजन करावे, यह सनातन विधि है । इस विधि का महाराष्ट्र आदि देश के शिष्ट जन आदर नहीं करते । यह आचार जिस देश में हो वहीं रहे ।

स्वर्गे पुरंदरपुरे लोकपालालये तथा ।

सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ।

आभूतसंप्लवं यावत्तिष्ठत्यातङ्कवर्जितः ॥

प्रेतशय्या प्रतिग्राही न भूयः पुरुषो भवेत् ।

गृहीतायां तु तस्यां वै पुनः संस्कारमर्हति ॥

शय्यादान के प्रभाव से यह जीव इन्द्रपुर स्वर्ग में लोकपालों के घर में सुखपूर्वक निवास करता है । निर्भय होकर प्रलयपर्यन्त ठहरता है । प्रेतशय्या लेने वाला पुनः पुरुष नहीं होता । प्रेतशय्या का प्रतिग्रह लेने वाला पुनः संस्कार के योग्य होता है ।

## अथोदकुम्भदानम्

एकादशाहात्प्रभृति [1]घटस्तोयान्नसंयुतः ।

दिने दिने प्रदातव्यो यावत्संवत्सरं सुतैः ॥

---

१. गरुड़पुराण में उदकुम्भ के साथ दीपदान का भी विधान है—'प्रत्यहं दीपको देयो मार्गे तु विषमे नरैः । यावत्संवत्सरं वापि प्रेतस्य सुखलिप्सया ॥' इति ।

यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥
अपि श्राद्धशतैर्दत्तैरुदकुम्भं विना नराः ।
दरिद्रा दुःखिनस्तात भ्रमन्ति च भवार्णवे ॥
यावदब्दं च यो दद्यादुदकुम्भं विमत्सरः ।
प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ॥

इदं चोदकुम्भश्राद्ध[1] सपिण्डीकरणात्प्रागेकोद्दिष्टविधिना । सपिण्डयुत्तरं तु पार्वणविधिना । इदं त्रयोदशदिनादारभ्य कर्तव्यमिति भट्टाः ।

एकादशाह से लेकर वर्षपर्यन्त प्रतिदिन प्रेत के लिये पुत्र जल-अन्न से युक्त घट दे। जिसका वर्ष से पहले सपिण्डीकरण हो जाय उसको भी वर्ष तक मासिक और उदकुम्भ देना चाहिये। उदकुम्भ के विना सैकड़ों श्राद्ध देने से भी पुरुष भवसागर में दरिद्र दुखी होकर भ्रमण करते रहते हैं। मत्सररहित होकर वर्षपर्यन्त जो अन्नसहित उदकुम्भ प्रेत के लिये देता है, वह अश्वमेध का फल पाता है। यह उदकुम्भ श्राद्ध सपिण्डीकरण से पहले एकोद्दिष्ट विधि से करे। सपिण्डी के बाद तो पार्वण विधि से करे। इसे तेरहवें दिन से प्रारम्भ करके करे,ऐसा भट्ट कहते हैं।

अत्र पिण्डदानं कृताकृतम्। देवहीनं चैतत्,
अदैवं पार्वणश्राद्धं सोदकुम्भमधर्मकम् ।
कुर्यात्प्रत्याब्दिकाच्छ्राद्धात्संकल्पविधिनान्वहम् ॥ इति वचनात् ।

प्रायश्चित्ताङ्गविष्णुश्राद्धवदत्र श्राद्धे सर्वे श्राद्धधर्मा न सन्ति किंतु वाचनिकमात्राः । तेन सांकल्पविधिना संकल्पक्षणपाद्यासनगन्धाच्छादनान्तपूजनान्नपरिवेषणान्ते पृथ्वी ते पात्रमित्याद्युक्त्वा एष उदकुम्भ इदमन्नं दत्तं चेत्यादित्यागविधिः । अन्ते ताम्बूलदक्षिणादि । नात्र ब्रह्मचर्यापुनर्भोजनादिनियमाः । वृद्धिनिमित्तेन मासिकापकर्षे उदकुम्भश्राद्धानामप्यपकर्षः, प्रेतश्राद्धत्वात् ।

---

१. याज्ञवल्क्यः—'अर्वाक् सपिण्डीकरणं यस्य संवत्सराद् भवेत् । तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ॥' अर्थात् वर्ष के पूर्व जिसका सपिण्डन कर लिया गया है उसके उद्देश्य से प्रतिदिन या प्रतिमास वर्षपर्यन्त अपनी शक्ति के अनुसार जलपूर्ण घट के सहित अन्न ब्राह्मण को देना चाहिये। देवयाज्ञिकः—'सपिण्डनापकर्षे संवत्सरं यावदुदकुम्भं अर्वागेव दद्याद् नोर्ध्वम्'। स्कान्दे—'अन्नं चैव स्वशक्त्या तु संख्यां कृत्वाऽऽब्दिकावधि। दातव्यं ब्राह्मणे स्कन्द घटादौ निष्क्रयं तु वा ॥ अपि श्राद्धशतैर्दत्तैरुदकुम्भं विना नराः। दरिद्रा दुःखिनस्तात भ्रमन्ति च भवार्णवे ॥ तेनापकृष्य दातव्यं प्रेतस्याप्युदकुम्भकम् ।' मदनरत्न में गौतम का वचन है—'अदैवं पार्वणं श्राद्धं सोदकुम्भमधर्मकम् । कुर्यात् प्रत्याब्दिकाच्छ्राद्धात् संकल्पविधिनाऽन्वहम् ।' अधर्मकं = ब्रह्मचर्यादिनियमरहितम्। इसमें पिण्डदान कृताकृत है, हेमाद्रि में पारस्कर का वचन है—'अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात् पिण्डमप्येके निपृणन्ति'। हारीतः—'मृते पितरि वै पुत्रः पिण्डमब्दं समाचरेत्। अन्नं कुम्भं च विप्राय प्रेतनिर्देशधर्मतः ॥' मत्स्यपुराण में कुम्भदान का महत्त्व—'यावदब्दं च यो दद्यादुदकुम्भं विमत्सरः। प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ॥' इति

इसमें पिण्डदान करे या नहीं करे। यह देवहीन है, क्योंकि वचन है कि—विश्वदेवरहित पार्वण श्राद्ध उदकुम्भसहित श्राद्धधर्म के विना ही प्रतिवार्षिक श्राद्ध से प्रतिदिन संकल्प विधि से करे। प्रायश्चित्ताङ्ग विष्णुश्राद्ध की तरह इस श्राद्ध में सब श्राद्धधर्म नहीं है किन्तु केवल वाचनिक है। इससे संकल्प विधि से संकल्प, क्षण, पाद्य, आसन, गन्ध, वस्त्रान्त पूजन और परिवेषण के अन्त में 'पृथ्वी ते पात्रम्' इत्यादि कहकर यह उदकुम्भ और यह अन्न दे दिया इत्यादि त्याग की विधि है। अन्त में ताम्बूल और दक्षिणा आदि दे। इसमें ब्रह्मचर्य अपुनर्भोजन आदि का नियम नहीं है। वृद्धि के निमित्त से मासिक के अपकर्ष में उदकुम्भ-श्राद्धों का भी अपकर्ष होता है, क्योंकि ये प्रेत श्राद्ध हैं।

## अथ उदकुम्भश्राद्धम्

प्रत्यहं सोदकुम्भान्नदानाशक्तेनाप्येकस्मिन्दिने तावद्भिरामान्नैरुदकुम्भैश्च तावदामान्नोदकुम्भनिष्क्रयेण वापकृष्योदकुम्भश्राद्धानि कार्याणि। अब्दमध्ये प्रत्यहमुदकुम्भश्राद्धं कुर्वतो मध्ये आशौचप्राप्तौ तावच्छ्राद्धानां लोप एव दर्शादिवत्। आशौचोत्तरं प्रतिबन्धादकरणे तदुत्तरोदकुम्भेन सह तन्त्रतयातिक्रान्तोदकुम्भानां प्रयोगः। 'अतिक्रान्तोदकुम्भश्राद्धान्यद्यतनोदकुम्भश्राद्धं च तन्त्रेण करिष्ये' इति संकल्पः।

प्रतिदिन उदकुम्भसहित अन्नदान में असमर्थ को भी एक दिन में उतने आमान्नों और उदकुम्भों से या उतने आमान्नोदक कुम्भ के निष्क्रय से अपकर्ष करके उदकुम्भ श्राद्धों को करना चाहिये। वर्ष के मध्य में प्रतिदिन उदकुम्भ श्राद्ध करते हुए मध्य में आशौच प्राप्त होने पर उतने श्राद्धों का दर्श आदि के समान लोप ही होता है। आशौच के बाद प्रतिबन्ध से नहीं करने पर उसके बाद वाले उदकुम्भ के साथ तन्त्र से बीते हुए उदकुम्भों का प्रयोग करे। 'बीते हुए उदकुम्भ श्राद्धों और आज के उदकुम्भ श्राद्ध को तन्त्र से करूँगा' ऐसा संकल्प करे।

## अथ प्रथमवर्षे दीपदानम्

तथा प्रथमाब्दे दीपदानमुक्तम्—

प्रत्यहं दीपको देयो मार्गे तु विषमे नरैः।
यावत्संवत्सरं वापि प्रेतस्य सुखलिप्सया॥
प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजालये।
कुर्याद्याम्यमुखं पित्र्ये अद्भिः संकल्प्य सुस्थिरम्॥ इति।

उसी प्रकार प्रथम वर्ष में दीपदान कहा है—विषम मार्ग में प्रेत के सुख की लिप्सा से प्रतिदिन वर्षपर्यन्त दीप दे। देवमन्दिर या ब्राह्मण के घर में दीप का मुख पूरब या उत्तर की ओर तथा पितृकृत्य में दक्षिण की ओर करके जल से संकल्प कर स्थिर करे।

## अथ षोडशमासिकानि

द्वादशप्रतिमास्यानि ऊनमासं त्रिपक्षकम्।
ऊनषाण्मासिकं चोनाब्दिकं चापीति षोडश॥

अत्र मतान्तराणि सिन्धौ।

ष्टिमपि पक्षहोमापकर्षपूर्वकमपकृष्य तदैव कुर्यात्। दर्शे चेद्दर्शेष्टिरेव। अथ पौर्णमास्यां दर्शे वा देशकालौ स्मृत्वा 'संन्यासपूर्वाङ्गभूतया 'प्राजापत्येष्ट्या वैश्वानर्येष्ट्या च समानतन्त्रया यक्ष्ये' इति संकल्प्य समुच्चयेनेष्टिद्वयम्। अत्र वैश्वानरो द्वादशकपालः पुरोडाशः। प्राजापत्यश्चरुर्वैष्णवो नवकपालः पुरोडाशः। अथवा केवलप्राजापत्येष्टिः। अत्र प्रयोगः स्वस्वसूत्रानुसारेणोह्यः।

तीनों अग्नियों को प्रज्वलित करके संस्कार किये घृत को स्रुक् में चार बार ग्रहणकर आहवनीय अग्नि में 'ओं स्वाहा परमात्मने इदम्' इससे पूर्णाहुति करे। सायं संन्ध्या और अग्निहोत्र होम के अन्त में उत्तर की ओर गार्हपत्य अग्नि के दो-दो पात्रों को रख आहवनीय अग्नि के दक्षिण ओर कौपीन तथा दण्ड आदि को रक्खे। रात्रिजागरण के बाद प्रातः होम आदि करके पूर्णिमा में ब्रह्मान्वाधान यदि करना हो तो पौर्णमासेष्टि करके दर्शेष्टि भी पक्षहोम के अपकर्षपूर्वक उसी समय अपकर्ष करके करे। यदि दर्श में करना हो तो दर्शेष्टि ही करे। इसके बाद पूर्णिमा में या अमावास्या में देश काल का स्मरण करके 'संन्यास का पूर्वाङ्गस्वरूप प्राजापत्य इष्टि और वैश्वानर इष्टि से समान तन्त्र से यज्ञ करूंगा' यह संकल्प कर समुच्चय से दोनों इष्टि करे। यहाँ इसमें वैश्वानर यज्ञ में द्वादश कपाल पुरोडाश है। प्राजापत्य में वैष्णव चरु एवं नव कपाल पुरोडाश है। या केवल प्राजापत्य इष्टि करे। इसमें प्रयोग की कल्पना अपने-अपने सूत्र के अनुसार करे।

बौधायनसूत्रानुसारेण किंचिदुच्यते—पवनपावनपुण्याहवाचनादिपूर्वाङ्गान्ते केवलवैश्वानरेष्ट्याः केवलप्राजापत्याया वा संकल्पः। व्रीहिमयः पुरोडाशो द्रव्यं पञ्च प्रयाजाः। अग्निर्वैश्वानरः प्रजापतिर्वा देवता पञ्चदश सामिधेन्यः। व्रतग्रहणान्तेऽध्वर्युराज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा पृथिवी होतेत्यादि चतुर्होतृहोमं कूष्माण्डहोमसारस्वतहोमौ च कृत्वा निर्वापादि। वैश्वानरो द्वादशकपालः पुरोडाशः प्राजापत्यश्चरुः। वैश्वानराय प्रतिवेदयाम इति पुरोनुवाक्या। वैश्वानरः पवमानः पवित्रैरिति याज्या। प्राजापत्यायां प्रधानमुपांशुधर्मकं सुभूः स्वयंभूरित्याद्यनुवाक्याः। प्रजापते न त्वदेतानिति याज्या।

बौधायन सूत्र के अनुसार कुछ कहता हूँ—पवन-पावन-पुण्याहवाचनादिरूप पूर्वाङ्ग के अन्त में केवल वैश्वानर इष्टि का या केवल प्राजापत्य का संकल्प है। व्रीहिमय पुरोडाश द्रव्य और पांच प्रयाज हैं। वैश्वानर अग्नि या प्रजापति देवता और पन्द्रह सामिधेनी ऋचायें हैं। व्रत ग्रहण के अन्त में अध्वर्यु घृत का संस्कार करके स्रुक् में चार बार घृत को ग्रहण कर 'पृथिवी होता' इत्यादि चार होता का होम और कूष्माण्डहोम सारस्वतहोम करके निर्वाप आदि करे। वैश्वानर द्वादशकपाल पुरोडाश द्रव्य तथा प्राजापत्य चरु है। 'वैश्वानराय प्रतिवेदयाम' यह पुरोनुवाक्या है। 'वैश्वानरः पवमानः पवित्रैः' यह याज्या है। प्राजापत्येष्टि में प्रधान उपांशुधर्मक 'सुभूः स्वयंभूः' इत्यादि अनुवाक्या हैं। 'प्रजापते न त्वदेतान्' यह याज्या है।

---

१. मनु ने प्राजापत्य यज्ञानुष्ठान के बाद संन्यास ग्रहण कहा है—'प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥' अर्थात् ब्राह्मण सर्वस्व दक्षिणा दिये जाने वाले प्राजापत्य यज्ञ का अनुष्ठान और अपने में अग्नि का समारोप करके संन्यास ग्रहण करे।

अथ स्रुवेणाष्टावुपहोमावुभयत्र—वैश्वानरो न ऊतय आप्रयातु परावतः। अग्निरुक्थेन वाहसा स्वाहा १। वैश्वानरायेदमिति त्यागः सर्वत्र। ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्। अजस्रं घर्ममीमहे स्वाहा २, वैश्वानरस्य दस० ३, पृष्टोदिवि पृष्टो अग्निः ४, जातो यदग्ने० ५, त्वमग्ने शोचिषा० ६, अस्माकमग्ने०७, वैश्वानरस्य सुमतौ० ८। अथैनमुपतिष्ठेत सहस्रशीर्षेति सूक्तेन। ततः स्विष्टकृदादिशेषं समापयेत्। सर्वो वै रुद्रः० विश्वंभूतमिति द्वाभ्यामग्न्युत्सर्गः। आयुर्दा अग्ने इति मन्त्रेण दर्भस्तम्बस्थयजमानभागात्किंचिदादाय सहस्रशीर्षेत्यनुवाकेन प्राश्य ओमिति ब्रह्म ओमितीदं सर्वमित्यनुवाकेन हुतशेषमाहवनीये प्रक्षिपेत्।

इसके बाद स्रुवा से दोनों जगह आठ उपहोम करे—'वैश्वानरो न ऊतय आप्रयातु परावतः। अग्निरुक्थेन वाहसा स्वाहा, वैश्वानरायेदम्। इसी प्रकार सर्वत्र त्याग है। 'ऋतावानं वैश्वानर मृतस्य' इत्यादि शेष सात मन्त्र मूल में देखें। इसके बाद सहस्रशीर्षा सूक्त से इनका उपस्थान करे। इसके अनन्तर स्विष्टकृत् आदि होम शेष की समाप्ति करे। 'सर्वो वै रुद्रः०' और 'विश्वं भूतम्' इन दो मन्त्रों से अग्नि का उत्सर्ग (त्याग) करे। 'आयुर्दा०' इस मन्त्र से कुश स्तम्बस्थित यजमान भाग से कुछ लेकर 'सहस्रशीर्षा' इस अनुवाक से प्राशन कर 'ओमिति ब्रह्म' 'ओमितीदं सर्वम्' इस अनुवाक से हुत शेष का आहवनीय अग्नि में प्रक्षेप करे।

एवं वैश्वानर्याद्यन्यतरामिष्टिं कृत्वौपासनाग्नौ सर्वाधाने दक्षिणाग्नौ प्राणादिहोमादिविरजाहोमान्तं कार्यम्। अन्यत्प्राग्वत्। आहवनीये अरणीमुसलोलूखलातिरिक्तदारुपात्राणां दाहः। तत आत्मन्याहवनीयाग्निसमारोपः पूर्ववत्। अरणीद्वयं गार्हपत्ये प्रक्षिप्य तत्समारोपं कृत्वा दक्षिणाग्नौ मुसलोलूखले हुत्वा दक्षिणाग्नेरपि समारोपः। तत औपासनाग्नेः समारोपः इति क्रमः। अत्र विशेषोऽन्यत्र ज्ञातव्यः। इति साग्निकप्रयोगः। स्नातकं प्रति ब्रह्मान्वाधानविरजाहोमादिरहितो वा प्रयोगोऽग्न्यभावात्।

इसी प्रकार वैश्वानर आदि किसी एक इष्टि को करके औपासन अग्नि में सर्वाधान में दक्षिणाग्नि में प्राणादि होम से विरजा होमपर्यन्त करे। अन्य सब पहले के समान है। आहवनीय अग्नि में अरणी-मुसल, उलूखल से अतिरिक्त काष्ठ पात्रों को जला दे। इसके बाद पूर्ववत् अपने में आहवनीय अग्नि का समावेश करे। दोनों अरणी का गार्हपत्य अग्नि में प्रक्षेप कर तथा उसका समारोप कर दक्षिणाग्नि में मूसर और उखली का होम कर दक्षिणाग्नि का भी समारोप करे। इसके बाद औपासन अग्नि का समारोप करे यह क्रम है। इसमें विशेष अन्य ग्रन्थों से जानना चाहिये। यह साग्निक का प्रयोग है। स्नातक के प्रति ब्रह्मान्वाधान विरजा होमादिरहित प्रयोग उसके अग्नि के अभाव से है।

## अथातुरसंन्यासः

[1]आतुरसंन्यासे संकल्पप्रेषोच्चाराभयदानेति त्रयं प्रधानमवश्यं कार्यम्।

---

१. जाबालश्रुतिः—'आतुराणां च संन्यासे न विधिर्नैव च क्रिया। प्रैषमात्रं च संन्यासं आतुराणां विधीयते॥ उत्पन्ने संकटे घोरे चौरव्याघ्रादिगोचरे। भयभीतस्य संन्यासमङ्गिरा मनुरब्र-

अष्टश्राद्धादिदण्डग्रहणान्तमङ्गभूतं यथासंभवं कार्यम्।

आतुर संन्यास में संकल्प, प्रेषोच्चारण और अभयदान, ये तीन प्रधान हैं, इन्हें अवश्य करे। अष्टश्राद्ध से दण्डग्रहणपर्यन्त संन्यास के अङ्गभूत को यथासंभव करे।

तत्प्रयोगः—मन्त्रस्नानं कृत्वा शुद्धवस्त्रं धृत्वा 'ज्ञानप्राप्तिद्वारा मोक्षसिद्धयर्थमातुरविधिना संन्यासमहं करिष्ये'। पञ्चशिखाकेशानवशेष्य वपनं कृत्वा स्नात्वा संध्याद्यौपासनहोमान्तं यथासंभवं संपाद्यात्मनि समारोपं कुर्यात्। अग्निहोत्री तु प्राजापत्यादिस्थाने पूर्णाहुतिं कृत्वा श्रौताग्निमात्मनि समारोपयेत्। उच्छिन्नाग्नीनां पुनराधानसंभवे समारोपोऽन्यथा तु न समारोपः। विधुरादीनामग्न्यभावादेव समारोपो नावश्यकः।

उसका प्रयोग यह है—मन्त्रस्नान करके शुद्ध वस्त्र धारण कर 'ज्ञान-प्राप्ति द्वारा मोक्ष सिद्धि के लिये आतुर-विधि से मैं संन्यास करूँगा। पांच शिखा के केशों को रखकर मुंडन और स्नान करके सन्ध्या आदि औपासन होम तक यथासम्भव संपादन कर आत्मा में समारोप करे। अग्निहोत्री तो प्राजापत्य आदि के स्थान में पूर्णाहुति करके श्रौत अग्नि को आत्मा में समारोप करे। उच्छिन्न अग्नि वालों का पुनः आधान के सम्भव होने पर समारोप होता है, नहीं तो समारोप नहीं होता। विधुर आदि का अग्नि के अभाव से ही समारोप आवश्यक नहीं है।

ततस्तोयमादायाप्सु जुहोति—एष ह वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वाहा १, आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा २, भूः स्वाहेति जले जलैर्हुत्वा हुतशेषं जलमाशुः शिशान इत्यनुवाकेनाभिमन्त्र्य पुत्रेषणा वित्तेषणा लोकेषणा मया त्यक्ताः स्वाहेति किंचित्पिबेत्। अभयं सर्वभूतेभ्यो मत्तः स्वाहेति द्वितीयं पिबेत्। 'संन्यस्तं मयेति निःशेषं तृतीयम्। ततः पूर्ववत्सावित्रीप्रवेशः। ततः प्राङ्मुख ऊर्ध्वबाहुः प्रेषोच्चारं पूर्ववत्कुर्यात्। अभयं सर्वभूतेभ्यो मत्तः स्वाहेति प्राच्यां जलं क्षिपेत्। शिखामुत्पाट्य यज्ञोपवीतं छित्त्वा भूःस्वाहेत्यप्सु हुत्वा पुत्रगृहे न तिष्ठेत्। अत्यन्तमातुरश्चेत्प्रेषमात्रं वा वदेत्। जीवति चेत्स्वस्थः सन्महावाक्योपदेशदण्डग्रहणादिसर्वं कुर्यात्। एवमातुरविधिना संन्यासे मृतस्य यतिवत्संस्कारः।

---

वीत् ॥ यद्यातुरः स्यान्मनसा वाचा वा संन्यसेद् द्विजः' । अपि च—'आतुराणां च संन्यासे न विधिर्नैव च क्रिया। प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत् ॥ संन्यस्तोऽहमिति ब्रूयात् सवनेषु त्रिषु क्रमात्। त्रिवारं च त्रिलोकात्मा शुभाशुभसुधाद्रवे ॥ यत्किञ्चिद् बाधकं कर्म कृतमज्ञानतो मया। प्रमादालस्यदोषाद्यत्तत्संत्यक्तवानहम् ॥ एवं संत्यज्य भूतेभ्यो दद्यादभयदक्षिणाम्। पद्भ्यां कराभ्यां विहरन्नाहं वाक्कायमानसैः ॥ करिष्ये प्राणिनां हिंसां प्राणिनः सन्तु निर्भयाः।' इति।

१. विष्णुः—'संन्यस्तमिति यो ब्रूयात् प्राणैः कण्ठगतैरपि। न तत्क्रतुशतैः पुण्यं प्राप्तुं शक्नोति मानवः।' अङ्गिराः—षष्टिः कुलान्यतीतानि षष्टीनामधिकानि च। कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥' इति।

इसके बाद जल लेकर जल में होम करे—एष ह वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वाहा, आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा २, भूः स्वाहा' इनसे जल में जलों से होम कर हुतशेष जल को 'आशुः शिशान' इस अनुवाक से अभिमन्त्रित कर 'पुत्रैषणा वित्तैषणा लोकैषणा मया त्यक्ताः स्वाहा' इससे कुछ पिये। 'अभयं सर्वभूतेभ्यो मत्तः स्वाहा' इससे दूसरी बार पिये। 'संन्यस्तं मया' इससे तीसरी बार सब पी जाय। इसके बाद पूर्ववत् सावित्रीप्रवेश करे। इसके बाद पूर्व की ओर मुंह करके ऊपर बाहु उठाये पूर्ववत् प्रैषोच्चार करे। 'अभयं सर्वभूतेभ्यो मत्तः स्वाहा' ऐसा कहकर पूर्व दिशा में जल फेंके। शिखा का उत्पाटन कर और यज्ञोपवीत को तोड़ करके 'भूःस्वाहा' इससे जल में होम करके पुत्र के घर में नहीं ठहरे। अधिक बीमार हो तो प्रैषमात्र का ही उच्चारण करे। स्वस्थ होकर यदि जी जाय तो महावाक्य का उपदेश तथा दण्डग्रहण आदि सब करे। इस प्रकार आतुर विधि से संन्यास लेने में मर जाने पर संन्यासी की तरह संस्कार करे।

## अथ मृतयतिसंस्कारः

पुत्रः शिष्यो वा स्नात्वा वपनं कृच्छ्रत्रयं चाधिकारार्थं कुर्यात्। पुत्रातिरिक्तस्य वपनं कृताकृतम्। देशकालौ स्मृत्वा 'ब्रह्मीभूतस्य यतेः शौनकोक्तविधिना संस्कारं करिष्ये'। नवं कलशं तीर्थेनापूर्य गंगे च यमुने० नारायणः परं ब्रह्म० यच्च किंचिज्जगत्सर्वं० इति मन्त्रैरभिमन्त्र्य रुद्रसूक्तविष्णुसूक्तापोहिष्ठादिभिर्यतेः स्नानं विधाय चन्दनादिभिः कलेवरं संपूज्य माल्यादिभिरलंकृत्य वाद्यघोषादिभिः शुद्धदेशं नयेत्। जले स्थले वा समाहितं कुर्यात्।

पुत्र या शिष्य स्नान करके वपन और तीन कृच्छ्र अधिकार के लिये करे। पुत्र से अतिरिक्त का मुण्डन कृताकृत है। देशकाल का स्मरण कर 'ब्रह्मीभूत यति का शौनकोक्त विधि से संस्कार करूंगा'। नये कलश को तीर्थ का जल भरकर 'गङ्गे च यमुने०, नारायणः परं ब्रह्म०, यच्च किञ्चिज्जगत्सर्वं०' इन मन्त्रों से अभिमन्त्रित करके रुद्रसूक्त, विष्णुसूक्त और 'आपोहिष्ठा' आदि से यति को स्नान कराकर चन्दन आदि से शरीर को पूजकर माला आदि से भूषित कर वाद्यघोष के साथ शुद्ध देश में ले जाय। जल या स्थल में समाधिस्थ कर दे।

स्थलपक्षे गर्तं व्याहृतिप्रोक्षितभुवि दण्डप्रमाणं कृत्वा मध्ये सूक्ष्मगर्तं सार्धहस्तं कृत्वा सप्तव्याहृतिभिः पञ्चगव्येन त्रिः प्रोक्ष्य जलपक्षे नद्यां पञ्चगव्यं प्रक्षिप्य कुशानास्तीर्य सावित्र्या देहं प्रोक्ष्य शङ्खोदकेन पुरुषसूक्तेनाष्टोत्तरशतावृत्तप्रणवैश्च संस्नाप्याष्टाक्षरेण षोडशोपचारैः संपूज्य तुलसीमालाद्यैरलंकृत्य विष्णो हव्यं रक्षस्वेति देहं गर्ते नद्यां वा क्षिपेत्। इदं विष्णुरिति दण्डं त्रेधाभग्नं दक्षिणहस्ते स्थापयेत्।

स्थल पक्ष में व्याहृति से प्रोक्षित भूमि में दण्ड के नाप का गड्ढा करके बीच में डेढ़ हाथ का छोटा गड्ढा बनाकर सात बार व्याहृति को पढ़कर पंचगव्य से तीन बार प्रोक्षण कर और जल पक्ष

---

१. बृहच्छौनकः—'यतिं पुरुषसूक्तेन स्नापयित्वाऽवटं ततः। प्रणवेनाष्टवारं तं प्रोक्षयेदथ सर्वतः। विष्णो हव्यं रक्षस्वेति यजुषा प्रणवेन च। गर्ते प्रेतं विनिक्षिप्य चेदं विष्णुर्विचक्रमे॥ इति मन्त्रेण दण्डं तु दद्याद् दक्षिणहस्तके। मूर्धानं भूर्भुवःस्वश्चेत्युक्त्वा शङ्खेन भेदयेत्। गर्तं पुरुषसूक्तेन लवणेन प्रपूरयेत्। सृगालश्वादिरक्षार्थं सम्यग्गर्तं प्रपूरयेत्॥' इति।

में नदी में पञ्चगव्य छोड़कर कुश बिछाकर सावित्री से देह का प्रोक्षण कर शङ्ख के जल से पुरुषसूक्त और एक सौ आठ बार प्रणव की आवृत्ति करके अच्छी तरह स्नान कराकर 'ॐ नमो नारायणाय' इस अष्टाक्षर मन्त्र से षोडशोपचार पूजन कर तुलसी की माला आदि से अलङ्कृत कर 'विष्णो हव्यं रक्षस्व' ऐसा कहकर देहको गड्ढे या नदी में छोड़ दे। 'इदं विष्णुः' इस मन्त्र से दण्ड का तीन टुकड़ा करके दाहिने हाथ में रख दे।

हंसः शुचिषदिति परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति। वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः॥ इति हृदये जपेत्। पुरुषसूक्तं भ्रुवोर्मध्ये जपेत्। ब्रह्मजज्ञानमिति मूर्धनि। मूर्धानं भूर्भुवःस्वश्चेत्युक्त्वा शङ्खेन भेदयेत्। अथवा भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्मपुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति मन्त्रेण परश्वादिना भेदयेत्। शिरो भेत्तुमशक्तः शिरस्थापितं गुडपिण्डादिकं भिद्यात्। गर्तं पुरुषसूक्तेन लवणेन प्रपूरयेत्। सृगालश्वादिरक्षार्थं सिकतादिभिः प्रपूरयेत्।

'हंसः शुचिषत्' इसे तथा 'परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति। वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतय शुद्धसत्त्वाः' इसे हृदय में जप करे। भौंहों के बीच में पुरुषसूक्त को जपे। 'ब्रह्मजज्ञानं' इसे सिर में जपे। और सिर को 'भूर्भुवःस्वः' ऐसा कहकर शङ्खसे फोड दे। अथवा 'भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्' इस मन्त्र से फरसा आदि से भेदन करे। सिर फोड़ने में असमर्थ हो तो सिर पर रखे गुड पिण्ड आदि का भेदन करे। गड्ढे को पुरुषसूक्त पढकर नमक से भर दे। स्यार और कुत्ते आदि से रक्षा के लिये बालू आदि से भर दे।

नद्यादौ चेच्छिरोभेदनोत्तरं दर्भैराच्छाद्य व्याहृतिभिरभिमन्त्र्य पाषाणं बध्वा ॐ स्वाहेति ह्रदे न्यसेत्। ततोऽग्निनाग्निः स० त्वं ह्यग्ने अग्निना० तं मर्जयंत सुक्रतुं० यज्ञेन यज्ञं० इत्यृक्चतुष्टयेन चित्तिः स्रुगित्यादिभिर्दशहोत्रादिसंज्ञकयजुर्मन्त्रैश्चाभिमन्त्रयेत्। अतो देवा इति जपित्वा पापैर्मुक्ता अश्वमेधादिफलभागिनो वयमिति भावयन्तोऽवभृथबुद्ध्या सर्वेऽनुगामिनः स्नात्वा गन्धादि धृत्वा सोत्सवा गृहं गच्छेयुः।

यदि नदी आदि में हो तो शिरोभेदन के बाद कुशों से ढककर व्याहृतियों से अभिमन्त्रित कर पत्थर बांधकर 'ॐस्वाहा' कह कर तालावमें छोड़ दे। इसके बाद 'अग्निनाग्निः स०, त्वं ह्यग्ने अग्निना०, तं मर्जयंत सुक्रतुं०, यज्ञेन यज्ञं०' इन चार ऋचाओं से 'चित्तिः स्रुक्' इत्यादि दश होत्रादि नामक यजुर्वेद मन्त्रों से अभिमन्त्रित करे। 'अतो देवा' इसे जप कर पापों से मुक्त होकर अश्वमेघ आदि के फलभागी हम लोग हैं ऐसी भावना करते हुए अवभृथ बुद्धि से सब पीछे चलने वाले स्नान कर गन्ध आदि धारण कर उत्सव के साथ घर को जायं।

अत्र परमहंसस्य स्थले समाधिर्मुख्यः, जले मध्यमः;

कुटीचकं तु प्रदहेत्पूरयेच्च बहूदकम्।
हंसो जले तु निक्षेप्यः परमहंसं प्रपूरयेत्। इति वचनात्।

अत्र परमहंसं प्रकीरयेदिति क्वचित्पाठः ।
एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ।
न[1] कुर्याद्वार्षिकादन्यद् ब्रह्मीभूताय भिक्षवे ।
कुटीचकातिरेकेण न दहेद्यतिनं क्वचित् ॥

ततः कर्ता स्नात्वाचम्य 'सिद्धि गतस्य ब्रह्मीभूतभिक्षोस्तृप्त्यर्थं तर्पणं करिष्ये' इति संकल्प्य सव्येन देवतीर्थेनैवात्मानमन्तरात्मानं परमात्मानमिति चतुश्चतुस्तर्पयित्वा शुक्लपक्षे मृतस्य केशवादिद्वादशनामभिः कृष्णपक्षे मृतस्य संकर्षणादिद्वादशनामभिः केशवं तर्पयामीत्येवं द्वितीयान्तैः कुर्यात् । इदं क्षीरेणेति केचित् ।

यहाँ स्थल में परमहंस की समाधि मुख्य है और जल में मध्यम है। क्योंकि वचन है कि कुटीचक को तो जला दे। बहूदक को गाड़ दे। हंस को तो जल में फेंक दे। परमहंस की समाधि कर दे। इसमें 'प्रपूरयेत्' के स्थान में 'प्रकीरयेत्' ऐसा कहीं पाठ है। संन्यासी के ब्रह्मीभूत होने पर एकोद्दिष्ट, जल, पिण्ड, आशौच और प्रेतक्रिया न करे, केवल वार्षिक करे। कुटीचक के अतिरिक्त संन्यासी का दाह न करे। इसके बाद कर्ता आचमन कर 'सिद्धिप्राप्त ब्रह्मीभूत यति की तृप्ति के लिये तर्पण करूँगा' ऐसा संकल्प कर सव्य होकर देवतीर्थ से आत्मा, अन्तरात्मा और परमात्मा का चार-चार अञ्जलि तर्पण कर शुक्ल पक्ष में मरे का केशव आदि बारह नामों से और कृष्ण पक्ष में मरे का संकर्षण आदि बारह नामों से 'केशवं तर्पयामि' इस प्रकार द्वितीयान्त पद से तर्पण करे। यह दूध से करे ऐसा कुछ लोग कहते हैं।

ततः 'सिद्धि गतस्य भिक्षोस्तृप्त्यर्थं नारायणपूजनं बलिदानं घृतदीपदानं च करिष्ये' इति संकल्प्य देवयजनोपरि तीरे वा मृन्मयलिङ्गं कृत्वा पुरुषसूक्तेनाष्टाक्षरेण च षोडशोपचारपूजां कृत्वा घृतमिश्रपायसबलिं दत्त्वा घृतदीपं च समर्प्य पायसबलिं जले क्षिपेत् । ततः ॐ ब्रह्मणे नम इति शङ्खेनाष्टार्घ्यान् दत्त्वा गृहं व्रजेदिति प्रथमदिनकृत्यम् । एवं दशदिनान्तं प्रत्यहं तर्पणं लिङ्गपूजनं पायसबलिदीपदानानि कुर्यात् ।

इसके बाद 'सिद्धिप्राप्त यति की तृप्ति के लिये नारायण पूजन, बलिदान और घृत का दीपदान करूंगा' ऐसा संकल्प कर देवयजन के ऊपर या तटपर मिट्टी का लिङ्ग बनाकर पुरुषसूक्त और अष्टाक्षर मन्त्र से षोडशोपचार पूजा करके घृतमिलित पायस की बलि देकर घी का दीप समर्पण कर खीर की बलि जल में छोड़ दे। इसके बाद 'ओं ब्रह्मणे नमः' कहकर शङ्ख से आठ अर्घ्य देकर घर जाय, यह प्रथम दिन का कृत्य है। इस प्रकार प्रतिदिन दस दिन तक तर्पण, लिङ्गपूजन, पायसबलि और दीपदान करे।

## अथैकादशेऽहनि पार्वणश्राद्धम्

तत्र मध्याह्ने नद्यादौ श्राद्धाङ्गतिलतर्पणं कृत्वा देशकालौ स्मृत्वा प्राचीनावीती 'अमुकगोत्रस्यामुकशर्मणो ब्रह्मीभूतस्यास्मत्पितुः करिष्यमाणदर्शादि सर्वं

१. क्योंकि उशना ने संन्यासी का प्रेतत्वाभाव कहा है—'त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ।' इति ।

श्राद्धाधिकारार्थमद्य पार्वणश्राद्धं करिष्ये' इति पुत्रादिः संकल्पयेत्। शिष्यस्तु ब्रह्मीभूतगुरोः प्रत्यब्दादिश्राद्धाधिकारार्थं तत्पितृसम्बन्धिनामगोत्रोद्देश्यतासिद्धयर्थं च पार्वणश्राद्धमिति संकल्पयेत्। अन्यत्समानम्। पुरूरवार्द्रवसंज्ञका विश्वेदेवाः। पितृपितामहप्रपितामहानां नामगोत्रादिसहितानामुच्चारः। सर्वत्र पितुर्ब्रह्मीभूत इति विशेषणमात्रमधिकम्। शेषं प्रत्यब्दश्राद्धवत्। केचिच्छिष्यः कर्ता चेदात्मान्तरात्मपरमात्मन उद्दिश्य साधुरुरुसंज्ञकदेवयुतं सव्येन देवधर्मकं नान्दीश्राद्धवदेकादशाहे पार्वणश्राद्धं कुर्यादित्याहुः। अत्र सर्वत्र विस्तरस्तोरोकृतसंन्यासपद्धतौ द्रष्टव्यः।

पुत्रादि मध्याह्न में नदी आदि में श्राद्धाङ्ग तिल तर्पण करके देशकाल का स्मरण कर प्राचीनावीती होकर '(अमुक गोत्र अमुक शर्मा ब्रह्मीभूत मेरे पिता का किये जाने वाले दर्श आदि सब श्राद्धों की अधिकार प्राप्ति के लिये आज पार्वण श्राद्ध करूंगा' ऐसा संकल्प करे। शिष्य तो 'ब्रह्मीभूत गुरु का प्रतिवार्षिक आदि श्राद्ध के अधिकार के लिये उनके पितृसम्बन्धी नाम-गोत्र की उद्देश्यता सिद्धि के लिये पार्वण करूंगा ऐसा संकल्प करे। अन्य सब समान है। पुरूरवा और आर्द्रव नाम के विश्वेदेवा हैं। पिता-पितामह-प्रपितामह का नाम गोत्रादिसहित उच्चारण करे। सब जगह पिता का ब्रह्मीभूत यह विशेषणमात्र का उच्चारण अधिक है। बाकी प्रतिवार्षिक श्राद्ध के तुल्य है। कुछ लोगों का कहना है कि यदि कर्मकर्ता शिष्य हो तो आत्मा, अन्तरात्मा, परमात्मा इन तीनों के उद्देश्य से साधुरुरुनामक देवयुक्त एकादशाह में सव्य से नान्दीश्राद्ध की भाँति देवधर्म से पार्वण श्राद्ध करे। यहाँ सब विस्तार तोरोकृत संन्यास पद्धति में देखने योग्य है।

## अथ द्वादशाहे नारायणबलिः

देशादि स्मृत्वा 'सिद्धिं गतस्य भिक्षोः संभावितसर्वपापक्षयपूर्वकं विष्णुलोकावाप्तिद्वारा 'श्रीनारायणप्रीत्यर्थं नारायणबलिं करिष्ये' इति संकल्प्य त्रयोदशयतीन् विप्रान्वा निमन्त्र्य शुक्लपक्षे केशवरूपिगुर्वर्थे त्वया क्षणः कर्तव्य इत्येवं दामोदरान्तकेशवादिद्वादशनामभिः क्षणो देयः। कृष्णे तु संकर्षणादिद्वादशनामभिः त्रयोदशं विप्रं विष्णवर्थं त्वया क्षणः कर्तव्य इति निमन्त्र्य पादान्प्रक्षाल्य प्राङ्मुखानुपदेशयेत्।

देश आदि का स्मरण कर 'सिद्धिप्राप्त यति का संभावित सम्पूर्ण पाप का नाशपूर्वक विष्णुलोक के प्राप्ति द्वारा श्रीनारायण की प्रसन्नता के लिए नारायणबलि करूंगा' ऐसा संकल्प कर तेरह संन्यासी या ब्राह्मणों को निमन्त्रण देकर शुक्ल पक्ष में केशवरूपी गुरु के लिये आप क्षण करें इस प्रकार दामोदरान्त केशवादि बारह नामों से क्षण दे। कृष्ण पक्ष में तो संकर्षण आदि बारह नामों से और तेरहवें ब्राह्मण को विष्णु के लिये आप क्षण करें, ऐसा निमन्त्रण देकर चरणों को धोकर पूर्वाभिमुख बैठावे।

---

१. व्यासः—'नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते। तस्य शुद्धिकरं कर्म तद्भवेन्नेतदन्यथा॥' छागलेयः—'नारायणबलिः कार्यो लोकगर्हाभयान्नरैः। तथा तेषां भवेच्छौचं नान्यथेत्यत्रवीद्यमः॥' इति।

विप्राग्रे स्थण्डिलेऽग्निप्रतिष्ठापनादि। अन्वाधाने चक्षुषी आज्येनेत्यन्तेऽग्निं वायुं सूर्यं प्रजापतिं च व्यस्तसमस्तव्याहृतिभिरेकैकपायसाहुत्या विष्णुमतो देवा इति षड्भिः प्रत्यृचमेकैकपायसाहुत्या नारायणं पुरुषसूक्तेन प्रत्यृचमेकैकपायसाहुत्या शुक्ले केशवादिद्वादशदेवताः कृष्णे संकर्षणादिद्वादशदेवताः एकैकपायसाहुत्या शेषेणेत्यादि। द्विपञ्चाशदधिकशतमुष्टीन्निरूप्य बलिपर्याप्ततण्डुलानोप्याष्टत्रिंशदाहुतिपर्याप्तं पुरुषाहारमितविष्णुनैवेद्यपर्याप्तं च क्षीरे श्रपयित्वाज्यभागान्तेऽग्निपूर्वतः शालग्रामे विष्णुं पुरुषसूक्तेनाष्टाक्षरेण च षोडशोपचारैः संपूज्य स्रुचा हस्तेन वान्वाधानानुसारेण होमत्यागौ विदध्यात्।

विप्र के आगे स्थण्डिल में अग्निस्थापन आदि करे। अन्वाधान में 'चक्षुषी आज्येन' इसके अन्त में वायु, सूर्य और प्रजापति को व्यस्त तथा समस्त व्याहृतियों से एक-एक खीर की आहुति, विष्णु को 'अतो देवा' इत्यादि छ ऋचाओंसे प्रत्येक ऋचा से एक-एक खीर की आहुति, नारायण को पुरुषसूक्त की प्रति ऋचा से एक-एक खीर की आहुति, शुक्ल पक्ष में केशव आदि देवता को और कृष्ण पक्षमें संकर्षण आदि बारह देवता को एक-एक खीर की आहुति दे। फिर शेषेण इत्यादि। बलि के पर्याप्त एक सौ बावन मुट्ठी चावल लेकर अड़तिस आहुति के पर्याप्त पुरुष के आहारयोग्य विष्णु नैवेद्य के पर्याप्त और दूध में पकाकर आज्यभाग के अन्त में अग्नि के पूर्व की ओर शालग्राम में विष्णु को पुरुषसूक्त और अष्टाक्षर मन्त्र से षोडशोपचार पूजन कर स्रुवा से या हाथ से अन्वाधान के अनुसार होम तथा त्याग करे।

एवं शुक्लकृष्णभेदेन केशवादिद्वादशान्ताः संकर्षणाद्यन्ता वाऽष्टत्रिंशदाहुतीर्हुत्वा स्विष्टकृदादि शेषं समाप्य पुनः [1]शालग्रामं संपूज्य विष्णुगायत्र्या विष्णवेऽर्घ्यं दत्त्वा हुतशेषपायसेन विष्णवे बलिं दत्त्वा निमन्त्रितत्रयोदशविप्रान् केशवादिक्रमेण केशवरूपिगुरवे नम इदमासनमित्यादिनासनगन्धपुष्पधूपदीपाच्छादनानि दत्त्वा त्रयोदशे विप्रे पुरुषसूक्तेन प्रत्यृचान्ते विष्णवे नम इत्येवमादिना विष्णुं दीपान्तोपचारैः पूजयेत्।

इसी प्रकार शुक्ल पक्ष कृष्ण पक्ष के भेद से केशवादि बारह या संकर्षणादि बारह देवताओं को अड़तिस आहुति से होमकर स्विष्टकृत् आदि शेष होम समाप्त कर पुनः शालग्राम का पूजन कर विष्णुगायत्री से विष्णु को अर्घ्य देकर होमावशिष्ट खीर से विष्णु को बलि देकर निमन्त्रित तेरह विप्रों को केशवादि क्रम से केशवरूपी गुरु को नमस्कार है, 'इदमासनम्' इत्यादि वाक्य से आसन गन्ध, पुष्प, धूप, दीप और वस्त्र देकर तेरहवें ब्राह्मण में पुरुषसूक्त की प्रति ऋचा के अन्त में 'विष्णवे नमः इत्यादि कह कर विष्णु की दीपान्त उपचार से पूजा करे।

चतुरस्रमण्डलेषु त्रयोदशभोजनपात्राण्यासाद्योपस्तीर्यान्नं परिषिच्य पृथिवी ते पात्रमित्यादिना केशवादिद्वादशोद्देशेन विष्णूद्देशेन चान्नं त्यक्त्वा अतो

१. विष्णुपुराणे—'विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत्। उदङ्मुखान् यथाज्येष्ठं पितृरूपमनुस्मरन्॥ मनो निवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः। आवाहनादि यत्प्रोक्तं देवपूर्वं तदाचरेत्॥' इति।

देवा० ॐ तद्ब्रह्म ॐ तद्वायुर्ब्रह्मार्पणमित्याद्यापोशानादिप्राणाहुत्यन्ते नारायणाद्युपनिषद्भागान्पठेत् । तृप्तिप्रश्नान्ते आचान्तेषु प्रागग्रान्दर्भानास्तीर्याष्टाक्षरेणाक्षतोदकं दत्त्वा केशवरूपिणे गुरवेऽयं पिण्डः स्वाहा नम इत्येवं द्वादशपिण्डान् दद्यात् ।

चतुरस्र मण्डलों में भोजन के लिये तेरह पात्रों को रखकर उपस्तरण कर उस पर अन्न परोस कर 'पृथिवी ते पात्रम्' इत्यादि मंत्र से केशव आदि बारह देवताओं के उद्देश से और विष्णु के उद्देश से अन्नत्याग करके 'अतो देवा०, ओं तद्ब्रह्म, ओं तद्वायुर्ब्रह्मार्पणम्' इत्यादि आपोशन से प्राणाहुतिपर्यन्त कर्म के अन्त में नारायणादि उपनिषद् भागों को पढ़े। तृप्तिप्रश्न के अन्त में विप्रों के आचमन करने के बाद पूर्वाग्र कुशों को बिछाकर अष्टाक्षर मन्त्र से अक्षत-जल देकर 'केशवरूपिणे गुरवे अयं पिण्डः स्वाहा नमः' इस प्रकार बारह पिण्डों को देवे ।

कृष्णे तु संकर्षणादिनामभिरिति सर्वत्र पिण्डेषु विष्णुं संपूज्य पुरुषसूक्तेन स्तुत्वा विसर्जयेत् । विप्रेभ्यस्ताम्बूलदक्षिणादि[1] दत्त्वा त्रयोदशाय विप्राय नाभ्या आसीदित्याद्यृक्त्रयेण फलताम्बूलंदक्षिणां दत्वा नमस्कृत्य तां शालग्राममूर्तिमाचार्याय दद्यात् । इति नारायणबलिविधिः ।

कृष्ण पक्ष में तो संकर्षण आदि नामों से दे, इस प्रकार सब पिण्डों में विष्णु की पूजा कर पुरुषसूक्त से स्तुति कर विसर्जन करे । ब्राह्मणों को ताम्बूल-दक्षिणा आदि देकर तेरहवें विप्र को 'नाभ्या आसीत्' इत्यादि तीन ऋचाओं से फल-ताम्बूल-दक्षिणा देकर नमस्कार करके शालग्राम की मूर्ति आचार्य को दे देवे । नारायणबलि विधि समाप्त ।

## अथाराधनविधिः

अथ द्वादशाहे त्रयोदशाहे वा यथाचारमाराधनम् । तत्र प्रयोगः—देशकालौ स्मृत्वा 'श्रीनारायणप्रीत्यर्थमाराधानं करिष्य'इति संकल्प्य गुर्वर्थे क्षणः कर्तव्यः । एवं परमगुर्वर्थे परमेष्ठिगुर्वर्थे परात्परगुर्वर्थे । एवं विप्रचतुष्टयं निमन्त्र्य शुक्ले केशवादिनामभिः कृष्णे संकर्षणादिनामभिः द्वादश विप्रान्निमन्त्रयेत् । एवं षोडश विप्राः यतयो वा । अशक्तौ यथाशक्ति विप्रान्निमन्त्र्य यथायथं षोडश क्षणा देयाः । षोडशानां पादक्षालनं कृत्वाचम्य पादक्षालनोदकं पात्रान्तरे गृहीत्वा गन्धपुष्पादिभिः पूजयेत् ।

द्वादशाह या त्रयोदशाह में आचारानुसार आराधना करे । देशकाल का स्मरण कर 'श्रीनारायण के प्रीत्यर्थ आराधन करूंगा' ऐसा संकल्प कर गुरु के लिये क्षण करे । इसी प्रकार परमगुरु-परमेष्ठिगुरु-परात्परगुरु के लिये करे । एवं चार विप्रों को निमन्त्रण कर शुक्ल पक्ष में केशव आदि नामों से, कृष्ण पक्ष में संकर्षण आदि नामों से बारह ब्राह्मणों का निमन्त्रण करे । इस प्रकार सोलह ब्राह्मणों या संन्यासियों का निमन्त्रण करे । अशक्ति में यथाशक्ति विप्रों को निमन्त्रण देकर सोलह क्षण दे । सोलहों का पैर धोकर आचमन कर पाद-प्रक्षालित जल को दूसरे पात्र में लेकर गन्ध-पुष्प आदि से पूजा करे ।

---

१. वैष्णवे—'विप्रानाचम्य विधिवद्दक्षिणाभिः समर्चयेत् । एकं वृद्धतमं विप्रं हिरण्येन समर्चयेत् ॥' इति ।

विप्रान्प्राङ्मुखानुदङ्मुखान्वोपवेश्य षोडशोपचारैर्गन्धादिपञ्चोपचारैर्वा सम्पूज्य सपरिकरमन्नं परिविष्य गायत्र्या प्रोक्ष्य गुरवे इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा हव्यं नमम। एवं परमगुर्वादिभ्यः पञ्चदशभ्योऽन्नत्यागं कृत्वा ब्रह्मार्पणमित्यादि। भुक्तेष्वाचान्तेषु ताम्बूलदक्षिणावस्त्रादिभिः पूजयेत्। अत्र केचित्पूर्वस्थापितपादोदकतीर्थपूजां कुर्वन्ति। तद्यथा—तीर्थपात्रं तण्डुलादिकृतमण्डले संस्थाप्य पुरुषसूक्तेन तीर्थराजाय नम इति षोडशोपचारैः संपूज्य तत्पात्रं शिरसि धृत्वा बन्धुभिः सह विप्रान्प्रदक्षिणीकृत्य गुरुर्ब्रह्मा गुरुर्विष्णुरिति नत्वा प्रथमविप्रहस्तात्तत्तीर्थं पिबेत्। तत्र मन्त्रः—

ब्राह्मणों को पूर्वमुख या उत्तरमुख बैठाकर षोडशोपचार से या गन्ध आदि पञ्चोपचार से पूजन कर जलादिसहित अन्न को परोस कर गायत्री से प्रोक्षण कर 'गुरवे इदमन्नं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा हव्यं न मम' ऐसा कहकर अन्न का त्याग करे। इसी प्रकार परमगुरु आदि पन्द्रह ब्राह्मणों के लिये अन्न का त्याग कर 'ब्रह्मार्पणं' इत्यादि मंत्र को पढ़े। भोजन के अनन्तर आचमन करने के बाद ब्राह्मणों को ताम्बूल-दक्षिणा-वस्त्र आदि से पूजन करे। यहाँ कुछ लोग पहले से रक्खे हुए चरणोदक में तीर्थ जल की बुद्धि से पूजा करते हैं। वह जैसे—तीर्थ पात्र को चावल आदि से बने मण्डलों में स्थापित कर पुरुषसूक्त से 'तीर्थराजाय नमः' इससे षोडशोपचार पूजन कर उस पात्र को शिर पर रखकर भाई बन्धुओं के साथ ब्राह्मणों की प्रदक्षिणा कर 'गुरुर्ब्रह्मा गुरुर्विष्णुः' इससे नमस्कार कर प्रथम ब्राह्मण के हाथ से उस तीर्थ जल को पिये। उसमें इ मन्त्र है—

अविद्यामूलशमनं सर्वपापप्रणाशनम्।
पिबामि गुरुपत्तीर्थं पुत्रपौत्रप्रवर्धनम्॥

इति कर्मेश्वरार्पणं कृत्वा सुहृद्युतो भुञ्जीत। वर्षपर्यन्तं प्रतिमासं मृततिथावेवमेवाराधनं कार्यं न तु प्रतिमासिकश्राद्धम्। प्रत्यब्दं तु पार्वणश्राद्धं कृत्वाराधनमपि कार्यम्। ततो दर्शमहालयादिश्राद्धान्यपि सर्वसाधारण्येन कार्याणि न तत्र विशेषः। इत्याराधनविधिः।

अविद्या की जड़ को शमन करने वाले, सब पापों के नाशक तथा पुत्र-पौत्रों को बढ़ाने वाले श्रीगुरु के चरणतीर्थ को पीता हूँ। इस प्रकार कर्म को भगवदर्पण करके मित्रोंसहित भोजन करे। वर्ष भर प्रतिमास की मृत तिथि में ही इसी प्रकार आराधन करे न कि प्रतिमासिक श्राद्ध। प्रतिवर्ष पार्वण श्राद्ध करके आराधन भी करे। इसके बाद सर्व साधारण दर्श और महालयादि श्राद्धों को भी करे। उसमें विशेष नहीं है। आराधनविधि समाप्त।

## अथ नारायणबलिपार्वणश्राद्धादिदिनविचारः

अत्र नारायणबलिपार्वणश्राद्धयोरेकदिनानुष्ठानपक्षे एकादशे द्वादशे वा दिने पूर्वं नारायणबलिं कृत्वा ततः पार्वणश्राद्धं कार्यम्। दिनद्वये करणपक्षे त्वेकादशे पार्वणं द्वादशे नारायणबलिः द्वादशे त्रयोदशे वा दिने आराधनम्। ऊनमासिका-

दिकालेष्वप्याराधनमिति केचित्। प्रतिमाससमाराधनमित्यन्ये । 'पार्वणश्राद्धं त्वेकादशाहप्रत्यब्दयोरेव । तच्च पुत्रादीनामेव नियतं शिष्यादीनां तु नावश्यकम्।

इसमें नारायण बलि और पार्वण श्राद्ध का एक दिन के अनुष्ठान के पक्ष में ग्यारहवें या बारहवें दिन में पहले नारायणबलि करके तब पार्वण श्राद्ध करे। दो दिन करने के पक्ष में तो ग्यारहवें दिन पार्वण, बारहवें दिन नारायण बलि और बारहवें या तेरहवें दिन आराधन करे। कुछ लोग—ऊन मासिक आदि समय में भी आराधन करे—ऐसा कहते हैं। कोई—प्रत्येक मास में आराधन करे—ऐसा कहते हैं। पार्वण श्राद्ध तो एकादशाह और प्रतिवार्षिक में ही करे। और वह पुत्र आदि को ही करना निश्चित है, शिष्य आदि को तो आवश्यक नहीं है।

अपुत्रयतेस्तु शिष्येणापि प्रत्यब्दं पार्वणश्राद्धं कार्यम्। तदर्थं च नामगोत्रोल्लेखाधिकारार्थमेकादशेऽपि शिष्येण पार्वणश्राद्धं कार्यम्। नारायणबल्यादेर्द्वादशाहादावसंभवे शुक्लपक्षस्थद्वादशीश्रवणपञ्चम्यः पूर्णिमामावास्या चेति गौणकालाः। अत्र पूर्वपूर्वः श्रेयान्।

बिना पुत्र वाले संन्यासी का तो शिष्य द्वारा भी प्रतिवर्ष पार्वण श्राद्ध करना चाहिये। इसके लिये नाम-गोत्र के उल्लेख के अधिकारार्थ शिष्य ग्यारहवें दिन भी पार्वण श्राद्ध करे। नारायण बलि आदि बारहवें आदि दिन में न हो सके तो शुक्ल पक्ष की द्वादशी, श्रवण, पञ्चमी, पूर्णिमा और अमावास्या—ये गौण काल हैं। इसमें पूर्व-पूर्व श्रेष्ठ हैं।

## अथ यतिसंस्काराधिकारादिविचारः

भार्याकन्यास्नुषादेः स्त्रियाः यतिसंस्कारकर्तृत्वे तु विधवायाः वपनपूर्वकं कृच्छ्रत्रयाचरणम्। सधवायास्तु कृच्छ्राचरणमेव। देशान्तरस्थपुत्रः पितुर्यतेः सिद्धिवार्तां श्रुत्वा वपनपूर्वकं स्नात्वा क्षीरतर्पणपूजनादिदशाहान्तं कृत्वैकादशाहादौ पार्वणनारायणबल्यादि सर्वमविकृतं कुर्यात्। सन्निहितेन ज्येष्ठेन कृतं चेत्कनिष्ठो न कुर्यात्।

पत्नी-कन्या-पुत्र वधू आदि स्त्री संन्यासी के संस्कार करने वाली हों तो जो इनमें विधवा हो वह मुण्डन करके तीन कृच्छ्र करे। सधवा को तो केवल एक कृच्छ्र ही करना चाहिये। दूसरे देश में रहने वाला पुत्र संन्यासी पिता की सिद्धिवार्ता (मृत्यु) को सुन कर मुण्डनपूर्वक स्नान करके दूध से तर्पण पूजन आदि दशाहपर्यन्त कर्म करके एकादशाह आदि में पार्वण नारायणबलि आदि कर्म को अविकृत पूरा करे। समीप में रहने वाले ज्येष्ठपुत्र ने यदि किया हो तो छोटा पुत्र नहीं करे।

शुक्लकृष्णादिभेदेन केशवादिनामानि मृततिथ्यनुरोधेनैव ग्राह्याणि न तु वार्ताश्रवणतिथ्यनुरोधेन। मृततिथ्यज्ञाने तु वार्ताश्रवणानुरोधेनैव। यतिसंस्कारकरणेऽश्वमेधसहस्रादिफलम्।

---

१. प्रचेता ने कहा है—'एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह। सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा॥' वायुपुराणे—'संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि। महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत्॥' शूलपाणि ने कहा है—'एकादशेऽह्नि पार्वणं तदपि त्रिदण्डिनः। हंसपरमहंसादीनां पार्वणादिकमपि न कार्यम्' इति।

असंस्कृतं विशीर्येत यतेर्यत्र कलेवरम् ।
धर्मलोपो भवेत्तत्र दुर्भिक्षं मरणं तथा ॥
दिवंगते गुरौ शिष्य उपवासं तदाचरेत् ।
न स्नानमाचरेद्भिक्षुः पुत्रादिनिधने श्रुते ।
पितृमातृक्षयं श्रुत्वा स्नानाच्छुद्धचति साम्बरात् ॥

शुक्ल पक्ष कृष्ण पक्ष आदि के भेद से केशव आदि नामों को मृत तिथि के अनुरोध से ही ग्रहण करे न कि वार्ताश्रवण तिथि से। मृत तिथि के अज्ञान में तो वार्ता सुनने के अनुरोधसे ही शुक्ल कृष्ण समझे। संन्यासी के संस्कार करने में हजार अश्वमेध करने का फल होता है। विना संस्कार किये संन्यासी का शरीर पड़ा जहाँ नष्ट हो जाय वहाँ धर्म का लोप दुर्भिक्ष एवं मरण होता है। गुरु के मरने पर शिष्य उपवास करे। संन्यासी अपने पुत्र आदि का मरण सुन कर स्नान न करे। पिता-माता का मरण सुन कर संन्यासी वस्त्रसहित स्नान करके शुद्ध होता है।

## अथ प्रसंगाद्यतिधर्माः

प्रातरुत्थाय ब्रह्मणस्पत इति जपित्वा दण्डादीनि मृदं चादाय मूत्रपुरीषयोर्गृहस्थचतुर्गुणं शौचं कृत्वाचम्य [1]पर्वद्वादशीवर्ज्यं प्रणवेन दन्तधावनं कृत्वा मृदा बहिः कटिं प्रक्षाल्य जलतर्पणवर्ज्यं स्नात्वा पुनर्जङ्घे प्रक्षाल्य वस्त्रादीनि गृहीत्वा प्रणवेन [2]प्राणायाममार्जनादि कृत्वा केशवादिनमोन्तनामभिस्तर्पयित्वा भूस्तर्पयामीत्यादिव्यस्तसमस्तव्याहृतिभिर्महर्जनस्तर्पयामीति तर्पयेत् । अत्र विशेषो माधवादौ विश्वेश्वर्यादौ च ज्ञेयः । सूर्योपस्थानादिकं त्रिकालविष्णुपूजादिकं च सिन्धौ ज्ञेयम् ।

प्रातःकाल उठकर 'ब्रह्मणस्पते' इसे जप कर दण्ड आदि और मिट्टी को लेकर मूत्र और पुरीष में गृहस्थ से चौगुना शुद्धि करके आचमन कर पर्व और द्वादशी को छोड़ कर प्रणव से दतुअन कर मिट्टी से कटि के बाहर प्रक्षालन कर जलतर्पणरहित स्नान कर फिर दोनों जांघ का प्रक्षालन कर वस्त्र आदि लेकर प्रणव से प्राणायाम तथा मार्जन आदि करके केशवादि का 'केशवाय नमः' इस प्रकार नमोन्त नामों से तर्पण कर 'भूस्तर्पयामि' इत्यादि व्यस्त-समस्त व्याहृतियोंसे 'महर्जनस्तर्पयामि' इससे तर्पण करे। इसमें विशेष माधव आदि और विश्वेश्वरी आदि ग्रन्थों से जानना चाहिये। सूर्योपस्थान आदि और तीनों काल में विष्णुपूजा आदि निर्णयसिन्धु से जानना चाहिये।

---

१. चतुर्दशी, अष्टमी, अमावास्या, पूर्णिमा और रविवार के दिन संक्रान्ति,—ये पर्व हैं जैसा पद्मपुराण में कहा है—'चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥' इति।

२. प्राणायाम का वसिष्ठोक्त स्वरूप—'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥' प्राणायाम की मनूक्त प्रशंसा—'प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः। व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥' त्रयः—पूरक-कुम्भक-रेचकसंज्ञकाः। पूरकादि का स्वरूप योगि-याज्ञवल्क्य ने यों बताया है—'नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते। कुम्भको निश्चलश्वासो मुच्यमानस्तु रेचकः ॥' इति। मनुः—'दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः। तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥' अर्थात् अग्नि में तपाने से जिस प्रकार धातुओं के मल जल जाते हैं उसी प्रकार प्राणायाम करने से इन्द्रियों के दोष नष्ट हो जाते हैं।

विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
कालेऽपराह्णभूयिष्ठे नित्यं भिक्षां यतिश्चरेत् ॥

अत्र भिक्षाभेदाः ग्रन्थान्तरे ज्ञेयाः । अत्र विविदिषोर्दण्डिनः माधुकरी मुख्या । दण्डवस्त्रादिपरिग्रहणरहितस्य तु करपात्रं मुख्यम् । अन्ये पक्षाः अशक्तविषयाः । तत्र [1]माधुकरीपक्षे दण्डादि गृहीत्वा पञ्चभ्यः [2]सप्तभ्यो वा गृहेभ्यो भिक्षां याचित्वान्नं प्रोक्ष्य भूः स्वधा नम इत्यादिव्यस्तसमस्तव्याहृतिभिः सूर्यादिदेवेभ्यो भूतेभ्यश्च भूमौ क्षिप्त्वा शेषमन्नं विष्णुनिवेदितं भुञ्जीत । चण्डीविनायकादिनैवेद्यं न भुञ्जीत । भुक्त्वाचम्य षोडशप्राणायामान् कुर्यादिति संक्षेपः ।

संन्यासी जब धुआं समाप्त हो जाय, मूसर का शब्द बन्द हो जाय, अग्नि बुझ जाय, घर के सब प्राणी भोजन कर लें तब अपराह्ण प्रधान काल में नित्य भिक्षाचरण करे । इसमें भिक्षा के भेद दूसरे ग्रन्थों से जानना चाहिये । इसमें ज्ञानाभिलाषी दण्डी को मधुकरी भिक्षा मुख्य है । दण्ड-वस्त्रादि परिग्रह से रहित संन्यासी का तो करपात्र ही मुख्य है । अन्य पक्ष असमर्थों के लिये हैं । उसमें मधुकरी भिक्षा लेने के पक्ष में दण्ड आदि को लेकर पाँच या सात घरों से भिक्षा मांगकर अन्न का प्रोक्षण कर 'भूः स्वधा नमः' इत्यादि व्यस्त-समस्त व्याहृतियों से सूर्य आदि देवताओं और जीवों के लिये भूमि में गिराकर शेष अन्न विष्णु को निवेदन करके भोजन करे । चण्डी और गणेश आदि के नैवेद्य का भोजन न करे । भोजन कर लेने पर आचमन करके सोलह प्राणायाम करे । यति धर्म का यह संक्षेप है ।

यतिहस्ते जलं दद्याद् भिक्षां दद्यात्पुनर्जलम् ।
भैक्ष्यं पर्वतमात्रं स्यात्तज्जलं सागरोपमम् ॥
एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥
अष्टौ मासान्विहारः स्याद्यतीनां संयतात्मनाम् ।
महाक्षेत्रप्रविष्टानां विहारस्तु न विद्यते ॥
भिक्षाटनं जपः स्नानं ध्यानं शौचं सुरार्चनम् ।
कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत् ॥

---

१. जैसे मधुकर ( मधुमक्खी ) एक फूल से दूसरे फूल पर जाकर मधु इकट्ठा करता है, वैसे भिन्न-भिन्न पाँच-सात घरों से संन्यासियों की प्राप्त भिक्षा मधुकरी कहलाती है ।

२. वसिष्ठ ने कहा है—'सप्तागाराण्यसंकल्पितानि चरेत भैक्षम् ।' संवर्तः—'अष्टौ भिक्षाः समादाय मुनिः सप्त च पञ्च च । अद्भिः प्रक्षाल्य ताः सर्वास्ततोऽश्नीयाच्च वाग्यतः ॥' भिक्षा के न मिलने पर विषाद या मिलने पर हर्ष का त्याग मनु ने बताया है—'अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् । प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥' मनु ने सामान्यतः भिक्षापात्रों और उनकी शुद्धि का निर्देश किया है—'अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च । तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥' इति ।

संन्यासी के हाथ में जल दे और भिक्षा दे तथा पुनः जल दे। यह भिक्षा पर्वत के समान और वह जल समुद्र के तुल्य है। वर्षाकाल से भिन्न काल में संन्यासी गांव में एक रात और शहर में पांच रात निवास करे। वर्षाकाल में तो चार मास एक ही स्थान में रहे। जितेन्द्रिय यतियों का विहार आठ महीने का होता है। काशी आदि महाक्षेत्र में प्रविष्ट यतियों का विहार नहीं है। भिक्षाटन-जप-स्नान-शौच-ध्यान-देवपूजन—ये छ सब प्रकार से नृपदण्ड के समान करे।

मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च।
दिवास्वापश्च यानं च यतीनां पतनानि षट्॥
वृथाजल्पं पात्रलोभं संचयं शिष्यसंग्रहम्।
हव्यं कव्यं तथान्नं च वर्जयेच्च सदा यतिः॥
यतिपात्राणि[1] मृद्वेणुदार्वलाबुमयानि च।
न तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत्॥

एतद्वेदार्थभिन्नपरम्[2]। एते संक्षेपतो यतिधर्माः। अन्येऽपि माधवीयमिताक्षरादौ ज्ञेयाः।

खटिया, सफेद वस्त्र, स्त्रियों की कथा, चंचलता, दिन का सोना, सवारी—ये छ यतियों को पतित कर देते हैं। व्यर्थ बोलना, पात्र का लोभ, संचय, शिष्य का संग्रह, हव्य, कव्य और अन्न—इन्हें यति सदा त्याग दे। संन्यासी के पात्र—मिट्टी, बांस, लकड़ी और तुमडी के होते हैं। यति सदा तीर्थवास न करे, न उपवास करे। और न अध्ययन शील हो, न व्याख्यान में तत्पर हो। यह वचन वेदार्थ से भिन्न व्याख्यान के लिये है। ये संक्षेप से यतियों के धर्म हैं। अन्य भी यति धर्म माधवीय एवं मिताक्षरा आदि से ज्ञेय हैं।

## अथ ग्रन्थोपसंहारः

प्रथमेऽत्र परिच्छेदे कालसामान्यनिर्णयः।
द्वितीयेऽथ परिच्छेदे विशेषात्कालनिर्णयः॥ १॥
तृतीयस्य च पूर्वार्धे गर्भाधानादिसंस्क्रियाः।
आह्निकं च प्रकीर्णार्थो आधानाद्याः सविस्तराः॥ २॥
देवप्रतिष्ठाशान्त्यादि नित्यं नैमित्तिकं तथा।
तार्तीयकोत्तरार्धेऽस्मिन् जीवत्पितृकनिर्णयः॥ ३॥

---

१. मनु ने भी भिक्षाचरण का पात्र कहा है—'अलाबु दारुपात्रं च मृन्मयं वैदलं तथा। एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत्॥' याज्ञवल्क्यः—'यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च। सलिलं शुद्धिस्तेषां गोवालैश्चावघर्षणम्॥' इति।

२. वाष्कल ने कहा है—'कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः। केशान् यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः। संन्यासी के लिये वेदार्थचिन्तन तो परमावश्यक है, जैसा मनु ने कहा है—'अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च। आध्यात्मिकं च सततं वेदान्ताभिहितं च यत्। इदं शरणमज्ञानामिदमेव विजानताम्। इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम्॥' इति।

श्राद्धाधिकारकालादेर्निर्णयः श्राद्धपद्धतिः ।
सूतकादेर्निर्णयश्च निर्णयो दुर्मृतावपि ॥ ४ ॥
अन्त्येष्टिसंस्कारविधिः संन्यासः सहविस्तरः ।
प्रायश्चित्तं व्यवहृतिं सर्वदानविधिं विना ॥ ५ ॥
कृत्स्नोऽपि धर्मशास्त्रार्थः संक्षेपेणात्र निर्मितः ।
विबुधानां च बालानां तुष्टये कष्टहानये ॥ ६ ॥

इस प्रथम परिच्छेद में सामान्यतः काल का निर्णय किया है और दूसरे परिच्छेद में काल का विशेष निर्णय किया है । तीसरे परिच्छेद के पूर्वार्ध में गर्भाधान आदि संस्कार, आह्निक कृत्य एवं प्रकीर्ण विषय, अग्न्याधान आदि विस्तार के साथ कहे गये हैं। देवता की प्रतिष्ठा, शान्ति आदि, नित्य और नैमित्तिक कर्म बतलाये हैं। इस तृतीय परिच्छेद के उत्तरार्ध में जीवत्पितृक का निर्णय एवं श्राद्ध के अधिकार काल आदि का निर्णय और श्राद्ध के प्रयोग कहे गये हैं। सूतक आदि का निर्णय तथा दुर्मरण में भी कर्तव्य का निर्णय कहा है। अन्त्येष्टि संस्कार की विधि तथा विस्तृत संन्यास और प्रायश्चित्त एवं सर्वदान के विना व्यवहार, सम्पूर्ण धर्मशास्त्र का प्रयोजन संक्षेप से इसमें निर्मित है। यह निर्माण विद्वानों की तुष्टि और बालकों के कष्ट की हानि के लिए कहे गये हैं ॥ १-६ ॥

मूलभूतानि पद्यानि विकृतानि क्वचित्क्वचित् ।
निर्विकाराण्यपि नवान्यप्युक्तान्यत्र कानिचित् ॥ ७ ॥
मीमांसाधर्मशास्त्रज्ञाः सुधिजोऽनलसा बुधाः ।
कृतकार्याः प्राङ्निबन्धैस्तदर्थं नायमुद्यमः ॥ ८ ॥
ये पुनर्मन्दमतयोऽलसा अज्ञाश्च निर्णयम् ।
धर्मे वेदितुमिच्छन्ति रचितस्तदपेक्षया ॥ ९ ॥
निबन्धोऽयं धर्मसिन्धुसारनामा सुबोधनः ।
अमुना प्रीयतां श्रीमद्विट्ठलो भक्तवत्सलः ॥ १० ॥

इसमें मूल श्लोक और कहीं-कहीं विकृत कहीं अविकृत और नवीन पद्य भी कहे गये हैं। मीमांसा एवं धर्मशास्त्र के जानने वाले, आलस्यरहित अच्छी बुद्धि वाले विद्वज्जन पहले के निबन्धों से कृतकृत्य हैं, उनके लिये यह प्रयास नहीं है, यह तो उनके लिये है जो मन्दबुद्धि, आलसी और नहीं जानने वाले हैं और धर्म के निर्णय को जानना चाहते हैं उन्हीं के लिये इसकी रचना की गई है। यह धर्मसिन्धुसार नामक निबन्ध सुखपूर्वक ज्ञानप्राप्ति के लिये बनाया है। इससे भक्तप्रिय श्रीमान् विट्ठल भगवान् प्रसन्न हों ॥ ७-१० ॥

प्रेम्णा सद्भिर्ग्रन्थः सेव्यः शब्दार्थतः सदोषोऽपि ।
संशोध्य वापि हरिणा 'सुदाममुनिसतुषपृथुकमुष्टिरिव ॥ ११ ॥

---

१. जैसे भगवान् श्रीकृष्ण ने सुहृद्वर श्री सुदामसुनि के तुषयुक्त चिउड़ा को प्रेमपूर्वक स्वीकार किया वैसे सज्जन-गण सुदामा मिश्र कृत मेरी इस सुधाविवृति को अपनावें और सम्भावित दोषों का संशोधन करें।

श्रीकाश्युपाध्यायवरो महात्मा बभूव विद्वद्द्विजराजराजः ।
तस्मादुपाध्यायकुलावतंसौ यज्ञेश्वरोऽनन्त इमावभूताम् ॥ १२ ॥
यज्ञेश्वरो यज्ञविधानदक्षो दैवज्ञवेदाङ्गसुशास्त्रशिक्षः ।
भक्तोत्तमोऽनन्तगुणैकधामानन्ताह्वयोऽनन्तकलावतारः ॥ १३ ॥
एषोऽत्यजज्जन्मभुवं स्वकीयां तां कौङ्कणाख्यां सुविरक्तिशाली ।
श्रीपाण्डुरङ्गे वसतिं विधाय भीमातटे मुक्तिमगात्सुभक्त्या ॥ १४ ॥
तस्यानन्ताभिधानस्योपाध्यायस्य सुतः कृती ।
काशीनाथाभिधो धर्मसिन्धुसारं समातनोत् ॥ १५ ॥

इति श्रीमत्काश्युपाध्यायसूरिसूनुयज्ञेश्वरोपाध्यायानुजानन्तोपाध्याय-
सूरिसुत-काशीनाथोपाध्यायविरचिते धर्मसिन्धुसारे
तृतीयपरिच्छेदोत्तरार्धं समाप्तम् ।
समाप्तोऽयं धर्मसिन्धुः ।

शब्द और अर्थ से दोषयुक्त भी यह ग्रन्थ सज्जनों द्वारा प्रेम से संशोधन कर सेवनीय है जैसे भगवान् श्रीकृष्ण जी ने सुदामा मुनि के तुषयुक्त एक मुट्ठी चिउड़ा को सेवन किया था। विद्वान् द्विजराज के राजा श्री काशी उपाध्याय श्रेष्ठ महात्मा हुए थे उनसे उपाध्याय कुलभूषण यज्ञेश्वर एवं अनन्त नामक दो पुत्र हुए। यज्ञेश्वर जी यज्ञ विधान में निपुण और वेदाङ्ग ज्यौतिष शास्त्र में सुशिक्षित अनन्त गुणवान् उत्तम भक्त हुए। दूसरे अनन्त नामक पुत्र अनन्त गुणों के एक स्थान एवं अनन्त कला के अवतार यह वैराग्यशाली अपनी उस कौङ्कण नामक जन्मभूमि को त्याग कर भीमा नदी के तट पर श्रीपाण्डुरङ्ग में निवास कर अतिशय भक्ति से मुक्ति प्राप्त किये। उस श्री अनन्त उपाध्याय के कुशल पुत्र श्री काशीनाथ उपाध्याय ने धर्मसिन्धुसार नामक इस ग्रन्थ को बनाया है।

इति देवरियामण्डलान्तर्गत-मध्यपल्लीनरेशगुरुणा बलियामण्डलान्तर्गतमुनिछपरा-
ग्रामनिवासिना काशीहिन्दूविश्वविद्यालयस्य भूतपूर्वधर्मशास्त्र-
प्राध्यापकेन श्रीवशिष्ठदत्तमिश्रधर्मशास्त्राचार्येण
विरचिता 'धर्मदीपिका' व्याख्या समाप्ता

१. स्वार्थ में अण् प्रत्यय करने पर कोङ्कण से कौङ्कण बना है। सह्याद्रि और समुद्र के मध्यवर्ती भूखण्ड का नाम 'कोङ्कण' है।

इति मुजफ्फरपुरमण्डलान्तर्गत-लालगंज-नगरस्थित-श्रीविहारिशुक्लसंस्कृतविद्यालयस्य
प्रधानाध्यापकेन रायबरेलीमण्डलान्तर्गतटेकारीराज्यस्य श्रीचन्द्रभानुपाठशालाया
भूतपूर्वप्रधानाध्यापकेन उक्तराजभवने अनुष्ठेय-देवपितृकार्येषु
प्राप्ताचार्यकेण टेकारीराज्यचन्द्रभानुट्रस्टमन्त्रिणा
श्रीसुदामामिश्रशास्त्रिणा विरचिता
सुधाविवृतिः समाप्ता